॥ श्रीविश्वेश्वरो जयति ॥

# ॥ मनोरमा शब्दरत्नसंवलिता ॥

॥ काश्यां विद्योदयनाम्नि यन्त्रालये मुद्रयितुमुपक्रान्ता ॥

॥ विद्योदयो निराकुर्य्यादविद्यातिमिरं सदा ॥

सं० १९३० ॥ सहस्रांशुरिवाशेषं मुद्राकिरणराजिभिः ॥ भाद्र० कृ० १० रवौ

म॰ श॰ श्रीगणेशाय नमः ॥ श्रीमद्दाशरथिं प्रणौमि ॥ शेषविभूषणमीडे शेषाशेषार्थलाभाय ॥ शान्तु सकलमभीष्टफलमाशेषयन्त्रुपादृष्टिः ॥१॥ ध्यायमिति । ध्यात्वाध्यात्वेत्यर्थः ।
1 णमुलन्तमेतत् । परं सर्वजगदुपादानम् । कार्यब्रह्म हिरण्यगर्भस्तावृत्तयइदम् । ध्यानं चिन्तापरपर्यायस्मृत्यनुकूलव्यापाररूपं । स्मरणं तु तज्जन्यमिति विशेषः । गुरोरि
त्येकवचनेन सर्वविद्यालाभ एकस्मादेव गुरोरिति सूचितम् । प्रौढानां मनोरमयतीत्यर्थिकां मनोरमां प्रौढत्वं च सकलदर्शनार्थज्ञानपूर्वकमहाभाष्यगूढार्थज्ञानवत्त्वम् ।
इण्ग्रहणेष्विति । नन्विदं न्यूनमम् ग्रहणेपि ग्रहणात् । फलं तु बहुपुम् कहित्वा हेत्यादौ पुमः खय्यमिति रुत्वम् । गवित्ययमाहेत्यादिषट्पदान्तत्वात् ककारादेर्नञ्रुत्वमिति

श्रीः ॥ ध्यायं ध्यायं परं ब्रह्म स्मारं स्मारं गुरोर्गिरः । सिद्धान्तकौमुदीव्याख्यां कुर्मः प्रौढमनोरमाम् ॥१॥ हयवरट् । हकारोपदेशः अट् अश् हश् इण्ग्रहणेषु
हकारग्रहणार्थः । अर्हेण । अड्व्यवायेपीति णत्वम् । देवा हसन्ति । भोभगो रिति रोर्यत्वम् । देवौ हसति । हशि चेत्युत्वम् । लिलिहिढ्वे । लिलिढ्ढ्वे । विभाषेट इति वा ढः ।
हल् । इदं सूत्रं वल् रल् झल् यल् शल् षु हकारग्रहणार्थम् । रुदिहि स्वपिहि । रुदादिभ्यः सार्वधातुक इति वलादिलक्षण इट् । स्निहित्वा । रलो व्युपधादिति वा
कित्त्वम् । अदाग्धाम् । झलो झलीति सकारलोपः । अलिक्षत् । शल इगुपधादिति क्सः ॥ स्नेहित्वा

चेन्न । सुट्तिथोरित्यादाविकाराद्युच्चारणेन शास्त्राबोधिताजव्यवहितहल्समुदायस्यासाधुत्वबोधनात् । अत एवौत्वैरुदात इति सूत्रे भाष्यम् । न पुनरन्तरेणाचं व्यञ्जनस्योच्चार
णमपि भवतीति । स्कोरित्यादिस्तु सौत्रः प्रयोगः । अत एवात्र हि हकारप्रयोजनकथनावसरे भाष्ये शश्छोटीत्युपन्यस्य तदुदाहरणं नोपन्यस्तम् । हकारपरशकारासम्भवेन शश्छोटीति प्रस
क्तेर्वारितमिति वकैयटेन व्याख्यातम् । अमिहकारप्रयोजनमिति च भाष्येनोक्तमिति दिक् । इदं सूत्रमिति । वलादिप्रत्याहारान्तरे फणैव सन्तु हल्न्त्यमित्यन्यान्योन्याश्रयपरिहारस्तु रन्त्वं हरि राम:
तिन्यासेनावृत्याहर् प्रत्याहारबोधकसूत्रसमुदायान्त्यमिदि इत्यर्थेन वा सुकर इति भावः । ग्रहणार्थमिति । शषसहरित्येव तु नोक्तम् । स्वरिहकारग्रहणपक्षे तो हरिर्हरतीत्यादौ विसर्गापत्तेः ॥ 1

सप्तमीति। अधिकरणकारकस्यकर्त्राद्यन्वयद्वाराक्रियान्वयादस्तिसामर्थ्यमितिभावः। अस्ययोगविभागस्यभाष्येऽदर्शनादाह। सुप्सुपेतीति। अनेनापिसाधनस्यागतिक
गतित्वादाह। यद्वेति। हलोहलितिसूत्रस्यान्त्यमितिविग्रहइतिभावः। षष्ठीस्थानइत्यस्यचोदुपधायागोहइत्यादाविवगुणानांचपरार्थत्वादितिन्यायेनवाप्रवृत्तिरितिबो
ध्यम्।तन्त्रावृत्त्येकशेषान्यतममस्त्विति। यद्यपीदृशेविषयेउच्चारयितुस्तन्त्रैकशेषान्यतरेणोच्चारणंबोद्धुस्त्वावृत्त्याबोधइत्येवानुभवसिद्धंतथापिव्यवस्थितेवान्यत
मस्त्वानेनबोध्यतइतिनदोषः। एकशेषश्चप्रत्याख्यातोऽसहविवक्षायामपिशास्त्रमात्रप्रक्रियोपयोगीत्याशयेनपृथगुक्तः॥ सामीप्यंषष्ठ्यर्थइति। षष्ठीस्थानइ
त्यस्यगुणानाञ्चपरार्थत्वादितिन्यायेनाप्रवृत्तिः। नचेकोगुणवृद्धीइतिसूत्रेतच्छेषशब्देनपरिभाषयोरपिगुणगुणिभावउक्तइतिवाच्यम्। सार्वधातुकार्धधातुकयो

हलन्त्यम्। सूत्रेन्त्यमिति। हलिअन्त्यमितिविग्रहेसप्तमीतियोगविभागात्सुप्सुपेतिवासमासइतिभावः। यद्वा। षष्ठीतत्पुरुषोयम्। स्यादेतत्। हलि
त्येकदेशस्यैवतन्त्रावृत्त्येकशेषान्यतममस्तु । हस्यलइतिचव्याख्यास्यते। सामीप्यंषष्ठ्यर्थः। यद्वामास्तुतन्त्रादि। अस्तुसमाहारद्वन्द्वोहल्चल्
चेति। लकारस्यसंयोगान्तलोपइतिचेन्नैवम्। आद्येसमासस्यक्लिष्टत्वात्। नहिब्राह्मणस्यकम्बलइत्यादौब्राह्मणसमीपवर्तीअन्यदीयःकम्बलःप्रतीयते॥

रलोन्त्यस्येकोगुणवृद्धीतिसूत्रेयस्यलक्ष्यसंस्कारकमहावाक्येविशेष्यविशेषणभावमादायैवतच्छेषव्यवहारोनतुगुणगुणिभावेपरस्परापेक्षत्वेनवेतिकैयटेन
स्पष्टमुक्तेरेतन्मूलकतयैवतत्सत्त्वासंभवस्यतेनोक्तेश्चेतिभावः। क्लिष्टत्वादिति। ब्राह्मणस्यकम्बलइत्यादावसत्यपिप्रकरणादौस्वस्वामिभावादिप्रतीतिवदनन्तरस
मीपादिशब्दप्रयोगमन्तरेणसामीप्याद्यप्रतीतेःतस्यषष्ठ्यर्थत्वाभावात्तत्प्रयोगेत्वसामर्थ्यात्षष्ठीसमासाप्राप्तिरिति। मध्यमपदलोपिसमासेसौत्रेवातत्रसमासस्य
क्लिष्टत्वमितिभाव स्तदेतदाह। नहीत्यादिनातत्रानिष्टइत्यन्तेन ॥

चित्रगवीणामिति। कुमतिचेतिणत्वम्। दन्त्यपाठस्तु लेखकप्रमादात्। एवं स्त्रीगवीणामित्येकशेषप्रकरणान्तस्थके यट प्रयोगेपिबोध्यम्। अस्तेरनन्तरे समीपेवेत्यादि भाष्यंत्वनन्तरादिपदाध्याहारेणतन्निरूपितसंबन्धार्थिकास्थानपदाध्याहारेणतन्निरूपितसंबन्धार्थिकावाषष्ठीत्यभिप्रायकरा। अतएवमतुप्सूत्रे कैयटेनगावोस्य सन्त्यनन्तरादूत्यर्थेमतुप्प्राङ्क्षापरभाष्यव्याख्यावसरेआनन्तर्यमस्त्यर्थवत्प्रकृत्यर्थोपाधिरित्युक्तम्। नतुतस्यषष्ठ्यर्थत्वेनप्रत्ययार्थत्वमुक्तम्। भाष्यकृताचासामर्थ्यान्त नस्त्यभावउक्तः। षष्ठ्यर्थत्वेतुप्रत्ययार्थत्वात्कासामर्थ्यम्। तस्माद्यत्रषष्ठ्यन्तमात्रप्रयोगेआनन्तर्यादिप्रतीतिस्तत्रानन्तरादिपदाध्याहारएवबोध्यः। तत्रास्तिग्रहणाभावेन सान्यफलकत्वेवासूत्रानुपात्तास्त्यर्थान्तर्भावेणमत्वर्थीयवद्बहुव्रीहिवच्चतथाभूतानन्तर्याद्यर्थान्तर्भावेणचित्रागावोस्यसन्त्यनन्तरारस्याद्यर्थेबहुव्रीहिमत्वर्थीयोनभ

नवाचित्रगुशब्दाच्चित्रगवीणांसमीपवर्तीरथादिः प्रतीयते। अतएवानन्तरादिषुनसमासोनभिधानादितिस्पष्टमा करे। किंबहुना ब्राह्मणस्यकम्बलश्चित्रागावोस्येतिव्यस्तप्रयोगोपितत्रानिष्टः। द्वितीयेपिसंयोगान्तलोपोदुर्लभो यणः प्रतिषेधा रम्भात्। तत्रत्वत्याख्यानपक्षेपिझलोझलीत्यतोझल्ग्रहणमपकृष्यसंयोगान्तस्यझलोलोपविधानाच्च . ॥

क्तोनभिधानादितिमतुप्सूत्रेभाष्येस्पष्टम्। अनन्तरादेरिदमर्थत्वेतस्येदमितिशैषिकोप्यनभिधानान्नेविति तस्येदमित्यत्रभाष्ये। तदुक्तमनन्तरादिषुनसमासोनभिधानादितिस्पष्टमाकरइति। तत्रसमासग्रहणंतद्धितवृत्तेरप्युपलक्षणम्। अनन्तरादिशब्दैः षष्ठीतत्पुरुषादिस्तुभवत्येव। ग्रामकूपोगङ्गातीरमित्यादौसमीपएवाव येयत्वारोपेणसमासः। स्पष्टाचेयमितिमपर्यन्तस्येतिसूत्रेकैयटे। किंचहस्यलित्यर्थेहलिलिलेखनइतिधातोर्लस्येत्वापत्तिः। नचफलाभावोदेवदत्तहलित्यादौडित्व सामर्थ्यादभस्यापिटेर्लोपवज्झित्वसामर्थ्यात्प्रत्ययात्पूर्वत्वाभावेपिवित्वरस्यैवफलत्वंवक्तुंशक्यमित्यपिबोध्यम्। यद्यपिहलसीरादितिनिर्देशेनतस्यनेत्वमितिक त्ययितुंशक्यम्। तथापिज्ञापकस्वीकारापेक्ष्यासूत्रांरत्तिरेवलघीयसीविदिक्। झलोलोपेति। सौत्रलोपाश्रयणेतुमूलोक्तमेवलघु ॥

असंभवादिति। नचाद्यन्तौ टकितावित्यादौ यथासंख्यमन्वयेऽपि प्रथमतः साहित्यावच्छिन्ने साहित्यावच्छिन्नान्वयमात्रेण सह विवक्षामाश्रित्य यथा द्वन्द्वसाधुत्वं तथेहापि
प्रथमतो लकारो हल्पदवाच्यश्चेदिति सामान्यतो बोधं कल्पितमादाय द्वन्द्वसाधुत्वं ततो विशेषजिज्ञासायामादिरन्त्येनेत्येकवाक्यतया विशेषतो वाक्यार्थो लक्ष्यसंस्कारकः। किं
च सह विवक्षा सहैव वक्तुं वक्तुरिच्छा, सा च सूत्रप्रणयनानुपपत्त्या पाणिनेस्ततः पूर्वमपि हल्पदार्थज्ञानादस्त्येव, बोध्यबोधस्तु क्रमेणैवेति वाच्यम्। आद्यन्तावित्यादौ यथासंख्यसू
त्रारम्भसामर्थ्येन मन्यासाधुत्वाङ्गीकारेऽप्यन्यप्रकारेण तस्य धुंसोत्वकल्पने मानाभावात्। किं च श्रोतॄणां सहबोधो भवत्वितीच्छया सह वक्तुमिच्छाया एव सहविवक्षात्वेन श्रोतॄणा
मपि सहबोध एवोचितः। मा दृशेच्छया तेषां तादृशबोधाजनकशब्दप्रयोगे तु पाणिनेर्भ्रान्तत्वापत्तिः। सुखनयनं पश्येत्यादौ तु न दोषः। उभयज्ञत्वेन ज्ञातं प्रत्येव तादृशशब्दप्रयोगात्
तेन रूपेण ज्ञानं भ्रमः प्रमा वेत्यन्यदेतत्। किं च पाणिनेः पूर्वं हल्पदार्थज्ञानेऽपि तदभिप्रायेण न प्रयोगः। अन्यथा व्याख्यातृपरम्परावगतवक्तृतात्पर्यानुपपत्त्या लट्स्मे इति सूत्रस्थकैयटोक्तरी
किं च पदार्थबोधं विना वाक्यार्थबोधासंभवेन हल्प्रत्याहारसिद्धेः प्रागेतत्सूत्रार्थाबोधे प्रसक्ते तद्द्वारार्थोपपत्तेः। अस्यां चावस्थायां हल्शब्दार्थाप्रसिद्धेर्द्वन्द्व एव दुर्ल
भः। सह विवक्षा च असंभवात्। तस्माद्यथोक्तमेव न्याय्यम्॥ ७ स्यालक्षणया तन्त्रान्तरीयप्रथमादिव्यवहारेण प्रथमादिपदानामिव शक्त्यनुमानाद्वा ततः श्रोतॄणां बोधसंभवेनेतरेतरा
श्रयस्येवाभावेन तदाशङ्कालेशोऽपि न वक्तव्यमित्यादिसमाधानपरभाष्यासङ्गत्यापत्तेः। न चैवमजादिव्यवहारस्यापि लक्षणादिनैवोपपत्तावादिरन्त्येनेति सूत्रं वैयर्थ्यम्। क्वचिल्लक्षणादिना बोधदर्शनेऽपि सर्व
त्र लक्षणाद्याश्रयणमेवेति नियमाभावात्। नासूया कर्तव्या यत्रानुगमः क्रियत इति पङ्क्तिविंशतीति सूत्रे भाष्योक्तेः। तस्मात्करिष्यमाणशक्तिग्रहोपायकपदस्य तदभिप्रायेणाचार्यस्य पूर्वमप्रयोग इत्येव
तत्सन्नाप्त्यायमी। ध्वनिनश्चायमर्थोनाऽज्झलावितिसूत्रेऽष्टादशानां ग्रहणाभावाय वर्णानामुपदे[शा]स्तावत् उपदेशोत्तरकाले त्संज्ञा इत्संज्ञोत्तरकालः प्रत्याहारः प्रत्याहारोत्तरकाला सवर्णसंज्ञा तदुत्तरका
लमणुदित्सवर्णस्य चाप्रत्यय इति सवर्णग्राहकमित्येतेन समुदितेनान्यत्र सवर्णानां ग्रहणं भवति न स्वस्मिन्नपि स्वाङ्ग इत्येवं वाक्यपरिसमाप्तिप्रतिपादकभाष्येणापि। अन्यथा तत्तच्छास्त्रप्रणयनानुपपत्त्या पाणिनेस्तथाज्ञा ८८
नस्य पूर्वमपि सत्त्वेनाचार्येण तथा प्रयोगे बोद्धॄणामपि क्रमेण तथा बोधे उपपन्ने किं तेन कृतं स्यात्। कथं वा नाज्झलावित्यत्राष्टादशादीनां ग्रहणवारणं भाष्योक्तं सङ्गतं स्यादिति विभाव्यतां तदाह। तस्मा

म॰ शा॰ आद्यन्ताभ्यामिति। अवयवत्वेन बोधकाद्यन्तशब्दाभ्यामित्यर्थः। तस्य समुदायस्य। तयोः पारार्थ्येति। सञ्ज्ञास्वरूपबोधकतया शक्तिग्रहकालं एव तयोः पारार्थ्यनिर्णयादित्यर्थः। परामर्शि
३ त्वादिति। वस्तुतो ज्ञापकादिनाऽप्यापि न सञ्ज्ञाकार्यमाद्यन्तशब्दाभ्यामाद्यन्तघटितसमुदायस्याक्षेपेणान्येषामिव तयोः प्राप्तायाः सञ्ज्ञायाः प्रकारान्तरेणाशक्यवारणत्वात्। स्वशब्दानु
वृत्तेश्च न फलम्। भाष्येऽपि एतत्फलितार्थकथनमेव। स्वस्य च रूपस्येति। सञ्ज्ञास्वरूपत्वविशिष्टस्यास्तु प्रत्येकं स्वबोध्यत्वं चास्तु को विरोधः। यथाच्च घेरित्यादौ गुणदर्शनेन घिश
ब्दस्यापि घिसञ्ज्ञाबोध्यत्वं तद्वदेवमजादिसञ्ज्ञास्वसञ्ज्ञिघटकेकारादिषिवाकारचकारयोरपि प्राप्नोत्येव। किंच स्वशब्देन केवलान्त्यपरामर्शासंभवेऽपि विशिष्टपरामर्शे
न बाधकं तत्र समुदाये फलाभावादवयवयोर्विश्रान्तिं प्राप्स्यति। तस्मात् ज्ञापकादिनैवान्त्यस्य तत्कार्यं वारणीयमित्यलम्। भाष्येति। तत्र हि उपदेश इति किमभ्रआँ अपः

मध्यगानामिति। आद्यन्ताभ्यामवयवाभ्यामवयवी समुदाय आक्षिप्यते। तस्य च युगपल्लक्ष्ये प्रयोगाभावात्तदवयवे अवतरन्ती सञ्ज्ञा मध्यमेषु विश्राम्यति। न त्वाद्यन्तयोः। संज्ञास्वरूपान्तर्भावेण तयोः परार्थ्यनिर्णयादिति भावः। स्वस्य चेति। स्वं रूपमित्यनुवृत्तेः स्वरूपं चादेरेव गृह्यते नान्त्यस्य। अन्त्येनेत्यप्रधानतृतीयानिर्देशात्। सर्वनाम्नामुत्सर्गतः प्रधानपरामर्शित्वात्। आद्योच्चारणमिति। यद्यप्युपदिश्यतेऽनेनेति करणव्युत्पत्त्या शास्त्रमुपदेश इति भाष्यवृत्त्यादिषु व्याख्यातं तथापि तत्प्रौढिवादमात्रम्। करणे घञो दुर्लभत्वात्। ल्युटा बाधात् ॥ ७ प्रत्यस्तमाख्यानमुपदेशो गुणैः प्रापणमुद्देश इति नासावुपदेश इत्युक्तोपदेशोद्देशयोर्लौकव्यवहारेण
संकीर्णत्वमाशङ्क्योपदेशेऽजनुनासिक इति वार्त्तिककृद्दर्शितन्यासस्य खण्डनायोपदेश इति करणे घञुपदिश्यतेऽनेनेत्युक्तं तच्च शास्त्रं शासनं करणं प्रत्यासत्त्यै तच्छा
स्त्रीयधात्वागमप्रातिपदिकप्रत्याहारसूत्रप्रत्ययादेशरूपम्। प्रौढिवादमात्रमिति। वार्त्तिककृदुक्तन्यासीयार्थस्य कथंचित्सूत्रतोऽपि लाभसंभवात् न्यासान्तरप्रवृत्तिस्ते
ष्टैवेति प्रौढ्या बोधयितुमेवं वाद इति भावः। घञ इति। अकर्त्तरि चेत्यत्र सञ्ज्ञायामित्यस्य प्रायिकत्वात्तत्प्राप्तिरिति भावः। बाधादिति। वासरूपविधिस्तु क्तल्युट्तुमुन्खलर्थेषु प्रति राम॰
षिद्धः। न च तत्र साहचर्येण भावल्युट एव ग्रहणमिति वाच्यम्। ईषत्पानः सोमो भवतेत्यत्र कर्मणि खल्नेति भाष्यादिप्रामाण्येनात्र साहचर्यानाश्रयणादिति भावः ॥ ३

क्लिष्टत्वादिति।गुणप्रधानसन्निपाते प्रधानस्य विशेषणे साकाङ्क्षत्वेऽ इतरान्वयस्तस्यायुक्त इति क्लेशादिति भावस्तदाह। नहीत्यादिना।भाष्यकृतेति। अस्यार्थस्येति शेषः।एवं चोभय
प्राप्तौ कर्मणीति नियमान्न कर्तरि षष्ठीति बोध्यम्।अवहेलनाच्चेति।चोहेतौ।यतोऽवहेलनमतः क्लिष्टत्वमित्यर्थः। घापवाद इति।ल्युडपवाद इत्यपि बोध्यम्।तत्रापि सञ्ज्ञायामि
त्यनुवृत्तेरिति भावः।अगतिकगतिरिति॥ नचखनो घ चेति घविधानमन्यतोपीत्यर्थमित्याकरे स्पष्टं तेनात्र घेसिद्ध्यतीति वाच्यम्।तस्यापि अगतिकगतित्वात्।भगः पदमित्यादे
स्तत्रापि त्वफलं तन्नैव तत्प्रवृत्तेश्च॥ पदस्य घञर्थकेन सिद्धेर्नैतदुदाहरणं किंतु काचित्कं वा कथं तत्।किंचोच्चार्य वर्णानाहोपदिष्टाइमे वर्णा इत्यादिभाष्यादुपदेशशब्दस्योच्चारणार्थ
त्वस्य निर्णयेन संकीर्णलोकव्यवहारस्य लक्षणयाप्युपपत्त्या नावघञिबाधकाभावः।किंचोपदेशशब्दस्य प्रत्ययादिपरत्वे तस्यैव हलन्तत्वमित्यन्नान्वयेनयत्किंचित्समुदा

नच घः।असञ्ज्ञात्वात्।प्रायेण सञ्ज्ञायामिति व्याख्यानस्य क्लिष्टत्वात्।नह्युपाधेरुपाधिर्भवतीत्यादिना भाष्यकृतावहेलनाच्च।अतएव घापवादो हलश्चेति घञपी
हना।बाहुलकं त्वगतिकगतिः।अतएव प्रक्रियन्ते शब्दा याभिरिति करणव्युत्पत्तिरपि परास्ता।तथाच वार्त्तिकम्।अजब्भ्यां स्त्रीखलनाः स्त्रियाः खलनौ विप्रतिषेधेने
ति।अस्मिभावे एव प्रत्ययो न्याय्य इति भावः।यत्तु धातुसूत्रेत्यादि पठन्ति।यच्च व्याचक्षते।करणव्युत्पत्त्या पूर्वार्धोपात्तानामुपदेशत्वम्।कर्मव्युत्पत्त्या त्वागमादीनाम्।
वर्णादिलिङ्गानुशासनयोरपि सूत्रत्वात्सिद्धे पृथगुपादानं गोबलीवर्दन्यायेन।एवं गणत्वादेव सिद्धे धातोरपीत्यादि।अत्रेदं वक्तव्यम्।किमेषामुपदेशसञ्ज्ञा उत योगमात्रम्।

यान्त्यस्य वारणं संभवेतदर्थमन्त्यग्रहणसामर्थ्यादिवर्णनक्लेशो भाष्यकृतोऽप्यर्थस्यादिति बोध्यम्।उद्देशाश्च प्रातिपदिकानां नोपदेश इत्यादेश्च उपदेशोऽ इति सूत्रे च भाष्ये भावघञन्तस्यैव तस्या
ङ्गीकाराच्चेति दिक्। धातुसूत्रेत्यादीति। धातुसूत्रगणोणादिवाक्यलिङ्गानुशासनम्।आगमप्रत्ययादेशा उपदेशाः प्रकीर्तिता इतीत्यर्थः॥ उपदेशत्वमिति।उपदेशशब्दव्यवहार
इत्यर्थः।धातोरपीति।प्रत्ययेभ्य उणादेरपीत्यपिशब्दार्थः।वाक्यशब्देन वार्तिकं शीङ्‌ लण् चोरट् उण् आचारे क्वगल्भ धृट् अण् अनङ्‌ इत्युदाहरणानि।उपदेशसञ्ज्ञेति।उपदेशपदं योगरूढमेषामिति भावः।

म. प्र. नु संज्ञाशब्देन व्यवहार एवाभिमतोऽत आह। आमइत्यादि॥ नचाकारोच्चारणं व्यर्थम्। तेनास्मत्पक्षज्ञापनस्यैवौचित्यादितिभावः। आदिनायकारादीचुञ्जुपूचणपावि
४ त्यादिसंग्रहः॥ उपदेशाभावादिति॥ आदेशस्योपदेशाभावादित्यर्थः॥ ततोधातुसंज्ञेति॥ लूशब्दएवधातुसंज्ञः केवलमसौञित्कार्यंलभतइतिभावः॥ नन्वत्रसूत्रसाहचर्या
त्सूत्रागमप्रदेशपादिशब्देनतद्बोधकपाणिन्यादिपठितानुपूर्वीकाणांग्रहणम्॥ तेषांधात्वादिव्यवहारस्तुभाविसंज्ञाविषयघटितत्वेनधातुपाठइत्यादिव्यवहारवदि
तिचेन्नोपदेशोच्चारणविषयाणामित्येवसिद्धेएतस्यानुपयोगात्॥ अतएवचारुचेराह॥ अपिचेति॥ अलोन्त्यात्सूत्रेति। उपधासंज्ञासूत्रेत्यर्थः। विरुद्ध्येतेति॥ तत्रहिलोप

नाद्यः। संज्ञा याः शास्त्रकारैरनुक्तेः। असंज्ञात्वात्घप्रत्ययोनेतिभाष्योक्तेश्च। अस्मदादिकृतसंज्ञायाः शास्त्रव्यवस्थापकत्वेऽतिप्रसङ्गाच्च। आमोमित्वमदन्तत्वा
दितिस्वपरग्रन्थविरोधाच्च। नह्युत्सृष्टानुबन्धस्यामोनप्रत्ययत्वंयेनमित्त्वंनभवेत्। किंचैवंप्रत्ययविधौपञ्चम्याः प्रकल्पकत्वेसनः सनेवआदेशोस्त्वित्याशङ्कोपष्ठी
देशाभावादित्संज्ञानस्यादितिभाष्यकैयटोक्तंव्याकुप्येत। किंचनधातुलोपइतिसूत्रेधातुग्रहणंकिं लूञ् लविता पूञ् पवितेतिभाष्यमुपदेशएवानुबन्ध
लोपेकृतेऽततोधातुसंज्ञेत्येवंपरः कैयटग्रन्थश्चविरुद्ध्येत। अपिचघ्वसोरेद्धावितिसूत्रेलोपश्चेतिद्विशकारकोनिर्देशः। द्वितीयः शकारइदितिअलोन्त्यसूत्रस्य
भाष्यकैयटादिकमपिविरुद्ध्येत। नद्वितीयः। योगस्यैवपुरस्कारेपरिगणनस्यव्यर्थत्वात्। धात्वादिषुकरणव्युत्पत्तिरागमादिषुनेतिवैषम्यस्यदुरुपपादत्वाच्च ॥

शितिभिन्नंपदंशितिच॥ पूर्वस्यश्रुतत्वेनशः। असंदेहायझल्परसंयोगादित्वेपिस्कोरित्यस्यनप्रवृत्तिः। झलांजशित्यादौजश्त्वस्यैव॥ शकारस्यधात्वाद्यन्तत्वाभावः स्पष्टएवेतिभा
वः। किंचनमोवरिवश्चित्रङ इत्यस्यासंग्रहोत्रपक्षेइत्यपिबोध्यम्। एषेतस्ययोगरूढिरित्युक्तेः परिगणनतायाएवलाभात्॥ योगस्यैवेति। नतुरूढेरित्यर्थः। परिगणनस्ये राम: ४
ति। धात्वादिगणनस्येत्यर्थः। वैषम्येति। भाष्यरीत्याकरणव्युत्पत्त्यैवसर्वसंग्रहादितिभावः ॥

उपदेशताप्रयोजकेति। योगमात्रस्वीकारे उपदेशताउपदेशकरणतानहितत्प्रयोजकं धातुत्वादिभवतीतिनद्विरोधः। सञ्ज्ञात्वे तु उपदेशताउपदेशशब्दत्वम्। उपदेशशब्दस्य शब्दपरत्वा नोलदवच्छिन्नस्यप्रयोजकं तु रूढ्यर्थतावच्छेदकतया धातुत्वादिवक्तुं शक्यमिति भावः॥ शकारस्येति॥ नह्यनेन किंचिदुपदिश्यतइति भावः॥ ननूपदिश्यतेज्ञाप्यते। नेनेतितदर्थः। धात्वादिभिर्हि प्रयोगोज्ञाप्यते तद्द्वदनेनापिश कारेण सर्वादेशत्वंज्ञाप्यतेइत्यरुचेराह॥ आदेचइति॥ सर्वेति। भाष्यकारादीत्यर्थः॥ यत्र तु करणल्युटस्तस्यैवार्थसंगतिस्तत्रागत्यास्तु कृत्यल्युटइति बाहुलकान्ल्युडभावः। यथायथं निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्तावित्यादावितिदिक्॥ नासिकामनुगतइति। नासिकामभिहत्यवायुनाऽभिव्यञ्जितइत्यर्थः॥ प्रातिशाख्यशिक्षादौलोके कृतव्यवहारस्य तथैवोपपादनमावश्यकमितितात्पर्यम्। अतएवमुखग्रहणप्रत्याख्यानभाष्यध्वनितोयमानुस्वारयोरनुनासिकव्यवहारः सूत्रमतेसंगच्छते॥ यदोनुनासिकइत्यादौस्वरूप उपदेशताप्रयोजकधातुत्वादिरूपोपाध्यवच्छिन्नसमुदायान्त्यहलिदित्यर्थइतिस्वग्रन्थविरोधाच्चापसइयेपिलिङ्गानुशासनस्य प्रकृतानुपयोगात्। लोपश्चेतिश कारस्यासंग्रहाच्च। आदेचउपदेशे उपदेशेत्वतइत्यादावायोच्चारणस्यैवउपदेशपदार्थतायाः सर्वसंमतत्वाच्चेतिदिक्। उपदेशेजनुनासिकइत्॥ यद्यप्यत्रोपजीव्यत्वा-दनुनासिकसञ्ज्ञाप्रथमंवक्तुमुचिता तथापि नासिकामनुगतइति योगाश्रयणेनैवगतार्थत्वादनुनासिकसञ्ज्ञासूत्रंमन्दप्रयोजनमितिध्वनयितुंनेहोपन्यस्तम्। उपदेशेकिम्। अभ्रआँअपः। यद्यपीह उञ्ऊँइत्यत्रेववविधानसामर्थ्यान्नेत्वमितिसुवचम् तथाप्युत्तरार्थमवश्यंकर्तव्यमुपदेशग्रहणंस्पष्टप्रतिपत्तयेइहैवकृतम्। अच् किम् ...निनोमकारस्यमाभूत्॥ ७ ग्रहणाभावस्तु पशुरपत्यमित्यादिवदितिद्येयम्। मन्दप्रयोजनमिति॥ मन्देषुप्रयोजनमस्येतिबहुव्रीहिः। एवंविधयोगलोकप्रातिशाख्याद्यनभिज्ञपुरुषप्रयोजनमित्यर्थः॥ अभ्रआँअपइति। अत्रेत्सञ्ज्ञायांलोपस्यादितिभावः। विधानेति॥ इदितिवक्तव्ये अनुनासिकविधानसामर्थ्यादित्यर्थः। नेत्वमिति॥ तत्फललोपस्यसामर्थ्यादभावे इत्त्वमपिफलाभावान्नेत्यर्थः॥ नन्वभ्रआँअ दितइत्यत्रानेकान्ताअनुबन्धाइतिपक्षे आदितश्चेतीट्प्रतिषेधः फलम्। नचलोपाभावेइदितिमहासञ्ज्ञाकरणात्सञ्ज्ञापिनेतिवाच्यम्। महासञ्ज्ञयैवलोपसिद्धान्तस्यलोपइत्यस्यवैयर्थ्यापत्तेः। इकइत्यादौककारादिश्रवणानापत्तेश्चेतिचेन्न। अनुबन्धानामेकान्तत्वमेवेतिमुख्यपक्षेदोषाभावइत्याशयात्। तदाहिमुख्येवयविन्यन्यपदार्थे

प्रतिज्ञेति। प्रतिज्ञानविषयइत्यर्थः। प्रातिज्ञाशब्दस्येति॥ भावाङन्तस्येत्यर्थः॥ क्लिष्टेति॥ शक्तिग्राहकव्याकरणसत्वाच्छक्त्यैवतदर्थबोधसंभवेलक्षणाश्रयणंक्लेशइतिभावः॥ लक्षणं॥ वि
विनेवेति॥ अत्रलक्षणयाव्याख्यानंकुर्वतापितत्रलक्षणांविनामदुक्तरीत्यैवव्याख्यातमेवंचपूर्वापरविरोधस्तस्येतिभावः। नचोभयोर्विधानेपिलाघवाद्दोवेशक्तिःकर्मणिलक्षणाअनुशास
नमपिलाक्षणिकार्थानुशासनमेवेतिवाच्यम्। लः कर्मणीत्यादीनामपितथात्वापत्तौतिङांकर्त्रादौशक्तिरितिसिद्धान्तासङ्गत्यापत्तेः। व्याकरणस्याभियुक्तोक्तशक्तिग्राहकत्वस्यभङ्गापत्तेश्च॥
प्रतिज्ञोपन्नइतिप्रतिज्ञा। आतश्चोपसर्गइतिकर्मण्यङ्। प्रतिज्ञाआनुनासिक्यंयेषामितिविग्रहः। एवंचप्रतिज्ञासमधिगम्येप्रतिज्ञाशब्दस्यलक्षणेतिक्लिष्टंव्याख्या
नं [illegible] पणीयम्। पाणिन्युपज्ञंव्याकरणमित्यादिष्विवलक्षणांविनैवनिर्वाहात्। यद्यपिसूत्रकारकृतोनुनासिकपाठइदानींपरिभ्रष्टस्तथापिवृत्तिकारादिव्यवहा
रबलेनचपक्षकार्यंप्राक्स्थितइत्यनुमीयतइतिभावः। ननुरलयोरितिन्यूनम्। टकारस्यापिमध्यगत्वादित्यतआह। प्रत्याहारेष्विति। व्यवह्रीयन्तइति। प्रत्याह्रीयन्तेसं
क्षिप्यन्तेवर्णायत्रेतिबाहुलकादधिकरणेघञ्। यद्यपियोगमात्रमकारादिसञ्ज्ञा स्वतिप्रसक्तंतथापियोगरूढिरितिभावः। प्रत्याहाराश्चैकचत्वारिंशदितिप्राञ्चः। च
तुर्दशसूत्रीस्थैर्हलमिरिट्किताअष्टाध्याय्यांव्यवहृताएकचत्वारिंशदितितस्यार्थः। तेनसुप्तिङादीनांप्रत्याहारस्यचयोद्वितीयादिनिवार्त्तिकस्य चयप्रत्याहारस्य
चाधिक्येप्यदोषः। यत्तुयमन्तादइतियमिर्यमन्नेषानिडेकइष्यतइतिचयम् वार्त्तिककृताव्यवहृतइत्याहुः; तद्भ्रमसामिधानम्। आद्यस्योणादिसूत्रत्वात् द्वितीयस्यव्याघ्र
भूतिकारिकास्थत्वादित्यसंतावत। एषचसंख्यानियमोनातीवोपयुज्यतइत्युपेक्षितः। ऊकालोज्। ह्रस्वदीर्घप्लुतइतिसमाहारद्वन्द्वः। सौत्रंपुंस्त्वम् ॥
टकारस्यापीति। अत्रयद्वक्तव्यंतदन्यत्रोक्तम्। बाहुलकादिति। भावघञन्तादर्शआद्यजित्यपिबाहुलकाद्विशिष्टमितिभावः। एकचत्वारिंशदिति॥ एकस्मान्ङञणवटाद्वाभ्यांष
स्त्रिभ्यस्वकणमाः स्युः॥ ज्ञेयौचयौचतुर्भ्योरः पञ्चभ्यः शलौषड्भ्यइतितदुक्तेरितिभावः॥ सौत्रंपुंस्त्वमिति। यद्यपिइतरेतरयोगेपिसौत्रमेकवचनंवक्तुंशक्यंतथापिलिङ्गमशिष्यं साम:
लोकाश्रयत्वाल्लिङ्गस्येतितत्रतत्रवार्त्तिकोक्तेर्लिङ्गस्यलौकिकत्वात्तद्व्यत्ययकल्पनमेवोचितंनतुशास्त्रीयवचनव्यत्ययकल्पनमितिभावः ॥ ५

ऋ.श. स्वतन्त्रोदात्तापेक्षयेति। श्लोके उदात्तादिति स्वतन्त्रोदात्तादित्यर्थकमिति भावः। एवकार इति॥ तच्छाखायां दीर्घादिष्वपि समांशोदात्तकस्वरितस्यैव पाठादिति भावः। एतेनैतं
पूर्णमि... स्यकावित्यपास्तं वा शब्दस्तु पादपूरणायेति बोध्यम्। अप्राकृत इति। स्वरितविशेष इत्यर्थः। स्वार इति॥ स्वर एव स्वारः स्वार्थेण। स्वरितोदात्ताभ्यां पूर्ववर्णग इत्यर्थः।
लक्ष्यते ...। तदुक्तं भाष्ये। अर्द्धह्रस्वशब्दोऽर्द्धमात्रायाम् ... इति। हरिरप्याह। प्रमाणमेव ह्रस्वादावनुपात्तं प्रतीयइति। अनुपात्तमपि अर्द्धमात्रारूपं प्रमाणमेवोपलक्ष्यत इ

... ः। पूर्वयोरुदात्तानुदात्तत्वयोरेकत्र समावेशे सति स्वरितो बोद्ध्यः। तस्य स्वरितस्य स्वतन्त्रोदात्तापेक्षयोदात्ततरार्द्धमात्रा बोद्ध्येति। क्व वोऽश्वा इत्यादि ह्र
स्वाभिप्रायमा अर्द्धं वेति दीर्घाभिप्रायम्। अनेनैव ह्रस्वस्यापि संग्रहाद्व्यापकत्वादिदमेवादर्तव्यमिति सूचयितुमेवकारः। अनुदात्त इत्यादि परिशेषसिद्धार्थ
कथनं सः शेषे उदात्तश्रुतिः स्यात्। किमविशेषेणेत्याह। न चेत्यादि। उदात्तस्वरितपरं विहायेत्यर्थः। शाकल्योप्याह। अप्राकृतस्तु यः स्वारः स्वरितोदात्तपूर्व
गः। उदात्तादार्द्धमस्याथशिष्टं निघ्नन्ति कम्पितमिति। उदात्तादय उदात्तं कृत्वा अर्द्धह्रस्वशब्देन अर्द्धमात्रा लक्ष्यत इति हरदत्तादिग्रन्थास्तु मतान्तरपरतया कथं
चिन्नेयाः। क्वेति। किमोत् इति स्वरितम्। व इति। अनुदात्तं सर्वमपादादावित्यपिकारादनुदात्तम्। अश्वा इति। अशेः क्वनिनिनित्स्वरेणाद्युदात्तं संहितायां त्वे
कोदेश उदात्तेनोदात्त इत्येकार उदात्तः। ये अरा इति। इयमपि फिट्सूत्रेणान्तोदात्तम्। एकादेशस्तु परस्य स्वरितः। स्वरितो वानुदात्ते पदादावित्युक्तेः। मुखं च ना
सिका चेति विग्रहे प्राण्यङ्गत्वादेकवद्भावे मुखनासिकमिति स्यादत आह। मुखसहितेनेति॥ तुल्यास्य॥ आस्ये भवमास्यं शरीरावयवाद्यदित्यभिप्रेत्याह। ताल्वादीति ॥

सवर्णसंज्ञं स्यादेलाराज आह। एवं च लोके न्यशाखासु च दीर्घादिष्वर्धमात्रैवोदात्तेति भावः। मतान्तरेति। प्रातिशाख्योक्तमतापेक्षयेतरवेदलोकसाधारणमतान्तरेत्यर्थः। कथंचि
दिति। लक्ष्यते इत्यंशपरमिदं भाष्यतो रूढिशक्तेरेव प्रतीतेरिति भावः। इत्युक्तेरिति। नोदात्तस्वरितोदयमिति निषेधस्तु उदात्तादनुदात्तस्येत्यस्यैवानन्तरस्येति न्यायादिति भावः॥ आस्यश

राम: ६

प्रशब्दबलादिति॥ प्रकृष्टो यत्नः प्रयत्नः प्रकर्षश्च वर्णोत्पत्त्यव्यवहितप्राक्कालिकत्वरूप इति भावः॥ चकारेणेति॥ अत्र यथा नासिकायाः स्थानत्वं तथान्यत्र निरूपितम्। प्लुतकालेति॥ एषां शिक्षायुक्तार्थानुवादत्वेनात्र शास्त्रप्रवृत्त्यभावादिति भावः॥ नासिद्धं स्यादिति॥ ननु ग्मो घुङ् मानित्यादौ घत्व जश्त्वानुनासिके षु अष्भावे न स्यात्। न चातिदेशान्तरवद् स्थापि त्रिपाद्यां प्रवृत्तौ न दोषः। सपादसप्ताध्याय्यामपि पूर्वं प्रति परासिद्धत्वापत्तेः॥ मध्ये पाठस्य विप्रतिषेधसूत्रस्य च सामर्थ्यात्तत्र पणे तु विनिगमनावि

आभ्यन्तरे॥ एतच्च प्रशब्दबलाल्लभ्यते। तुल्यास्यं किम्। तञ्॥ अत्र पकारस्य तकारे परे झरो झरीति लोपो मा भूत्। प्रयत्नग्रहणं किम्। चाकुच्योतति। शस्य लोपो न। ञमङणनानामिति। नासिका चेति चकारेण स्वस्ववर्गानुकूलं ताल्वादि समुच्चीयते। अनुस्वारोत्तमा अनुनासिका इति तैत्तिरीयाणां प्रातिशाख्यम्। यमानुस्वारनासिक्यवर्णा नासिका अनुनासिकाश्चोत्तमा इति कात्यायनप्रातिशाख्यम्। वर्गोत्तमा ञमङणना अनुनासिका भवन्ति च शब्दात्स्वस्थानाद्यपरित्यागेन नासिकाप्यनंहितीयमेषामित्यर्थ इति तद्भाष्यं च। एदैतोरित्यादौ तपरत्वमसंदेहार्थं न तु तत्कालग्रहणार्थम्। तेन प्लुतस्यापि संग्रहः॥ पूर्वत्रासिद्धम्। अयं स्वतन्त्रो विधिः स्यात् न हि त्रिपादी पूर्वं प्रत्यसिद्धा इत्येव लभ्येत त्रैपादिकं तु पूर्वं प्रति परं नासिद्धं स्यादत आह। अधिकारोऽयमिति। यद्यत्र कोऽपि विधिः स्यात्तर्हि पूर्वत्रासिद्धमिति सूत्रे रषाभ्यामित्यादौ णत्वं न स्यात्। परत्वाद्रो रीत्यस्य प्रसङ्गात् ॥

...यामपि अप्रवृत्त्यापत्तिरिति भावः॥ रोरीत्यस्य प्रसङ्गादिति॥ सिद्धे सिद्धत्वारोपात् सूत्रोदाहरणसंपत्त्यै परत्वाल्लक्ष्ये कार्यप्रवृत्तेरावश्यकतया परत्वा-त्पाक्षिके कार्ये जाते तत्राभावप्रतियोगित्वारोपेऽपि देवदत्तहन्तृहतन्यायेन स्यानिभूतरोरभावाद् द्विरुचेत्यस्याप्राप्तिरिति भावः॥ स्पष्टं चेदं प्रकृतसूत्रे अचः परस्मि-न्नित्यत्र स्वतु कोरित्यत्र च भाष्ये ॥

तयोर्वर्णयोरिति।पूरणगुणेतिनिषेधस्तुषष्ठीसमासस्यनतुकर्मधारयस्यबहुलग्रहणेनतदभावेभाष्योदाहृतविषयएवनान्यत्रेतिभावः।प्रथमान्तेनेति।प्रथमोपस्थितत्वादितिभावः।अयंपक्षोऽनेक
मन्यपदार्थेतिसूत्रेभाष्येपरिनिष्ठितेति।अतएवैकविभक्तिचापूर्वनिपातइतिज्ञापकम्।अन्यथामालामतिक्रान्तइतिविग्रहेऽतिपदस्यापिनियतविभक्त्यन्तत्वेनैकविभक्तीत्यस्यप्रवृत्त्यालाभः।एक
त्वानियतविभक्तित्वेहितदुदाहरणायैकविभक्तीतिसार्थकंपरिनिष्ठितविभक्त्यासमासेत्वतिक्रान्तमनिक्रान्तेनेत्यादिक्रमेणानस्यानियतविभक्तिकत्वंस्पष्टमेव।अतएवतत्पुरुषेतुल्यार्थेतिसूत्रेभाष्ये
परमेकारकेपरमेणकारकेणेत्यादावतिप्रसङ्गमाशङ्क्यप्रतिपदोक्तपरिभाषयासमाहितमितिभावः॥अत्रचेति।सूत्रेइत्यर्थः।प्रश्लेषे।आकारप्रश्लेषेनिर्देशःलिङ्गमित्यन्वयः।निर्देशेनाकार
हकारयोःसावर्ण्याभावबोधकात्रमानिकवचनकल्पनापेक्षयाप्रश्लेषेएवतात्पर्यकल्पनंलघीयइतिभावः॥व्याख्यानादिति॥एवंव्याख्यानेनानंतुप्रयत्नभेदेननाज्झलावित्यनेनतत्रत्याख्यानपरंभा
ष्यंनतत्ध्वनयन्त्वस्येतिसूत्रेभाष्येस्थितमिति॥शीतलशब्देइति॥शस्यईकारेपरेदधीतीकारस्यशकारेपरेचेत्यर्थः।नचशीङआकारोच्चारणेनतच्छकारस्येकारेनदीर्घइतिवाच्यम्।शीतला

तयोर्वर्णयोरितिप्रथमान्तेनपरिनिष्ठितविभक्त्यावाविग्रहइतिसिद्धान्तात्।ऋत्यकइतिप्रकृतिभावः।नाज्झलौ।आकारसहितइति।अत्रचकालसमयवेलास्वित्यादिनिर्देशःप्रश्लेषेलिङ्ग
मानौ[illegible]यासोऽस्यदैत्यगुरोरनूनइतिप्लुतादाकारात्परस्यसनःसस्यषत्वंस्यादेवेतिवाच्यम्।आङ्ग्रआङ्ग्रेतिहूंहूंसवर्णदीर्घेणदीर्घात्परत्रप्लुतोऽपिप्रश्लिष्यतइतिव्याख्यानात्।यणादि
शीतलशब्देसवर्णदीर्घआदिशब्दार्थः।अत्रेति।अत्रैवेत्यर्थः॥ढ्रेशीङोभावात्।किंतुश्यायातोःश्यङ्द्रवमूर्तिस्पर्शयोःश्यइत्यनेनसंप्रसारणेश्योऽस्पर्शेइतिनत्वाभावेचनिष्पन्नाच्छीतप्रा
[illegible]शीतलशब्दइत्यदोषात्।शीतशब्दोहि[illegible]आदिषुगणरत्नेऽन्तेव्युत्पद्यते।किंचनेनापूर्ववचनकल्पनापेक्षयासूत्रोदाहरणत्वमेवतस्ययुक्तमितिभावः।अत्रैवेति।ग्राहकसूत्रस्येत्यर्थः।
दितिसूत्रेतपरत्वमानमनन्दिबुरादिण्यन्तात्कर्तरिलुङ्यचीकृतदित्यत्रदीर्घऋकारस्यस्थानेह्रस्वएवयथास्यादित्यर्थम्।पूर्वेणात्राण्ग्रहणेतुहेस्येनविधेयेनचऋकारेणानण्त्वाद्धिन
ग्रहणेननतस्यस्थानित्वंनवाआदेशत्वंप्रसक्तमितिव्यर्थंनत्यात्।नचतपरसूत्रेणलकारग्रहणार्थंतत्।स्थानेऽन्तरतमपरिभाषयाऋकारस्थानेतस्यवारणेनतद्ग्रहणेफलाभावात्।नचैवमनापिते
पिभाव्यमानत्वात्सवर्णग्रहणाप्रसक्तेस्तद्वैयर्थ्यम्।नपरत्वाभावेऽपिआदेशान्तरनिवृत्त्यर्थत्वेनस्वरूपाभ्यनुज्ञानार्थतयापूर्ववैद्ध्यत्वाभावेन।विधेयत्वात्।कृतेतुतपरत्वेभाव्यमानतापीत्यन्यदेतत्॥

हिरुगित्यादि।एषांक्रियासमानाधिकरणत्वाल्लिङ्गाद्यनन्वयित्वाच्चतदर्थस्यक्रियात्वमित्यभिमानः।एषामव्ययेषुपाठस्तुअप्रातिपदिकत्वेप्यकजर्थःस्यात्।एतेनतेषुपाठसामर्थ्या
त्पुत्वाभावइत्यपास्तम्।नन्वेषांक्रियाकाङ्क्षादर्शनेननक्रियावाचकत्वमतआह॥शिष्येइति॥कालोपिधात्वर्थएवेतिनक्रियावाचकत्वहानिस्तस्यचधातुत्वेआदेचउपदेशेइत्यात्वं
स्यात्तद्भिन्नेमितिकंधातुत्वनिमित्तकंचेतिस्पष्टमेव।अत्रप्रत्ययस्यैवधातुत्वापत्तिर्बोध्या।तिङन्तस्यतूपदेशाभावान्नात्वप्रसक्तिरित्याहुः॥ननुषष्ठेप्रकृतसूत्रेधातुग्रहणासंब
न्धउक्तोभाष्येइतिनतद्धातुत्वनिमित्तकम्।किंचाशितीतिप्रसज्यप्रतिषेधोपिशित्परत्वयोग्यस्यैवात्वविधानान्नात्वप्रसक्तिरपि।वस्तुतःइष्यमन्यानाभिहितक्रियावाचकत्वे
नेतिनदोषोतआह॥चेति॥सूत्रशेषभाष्योक्तेष्वाणवयतिभट्टयतीत्यादिषुचधातुत्वेशास्त्रविषयतयासाधुत्वापत्तिरितितद्व्यावृत्तयेतदितिभावः॥उदित्करणेनेति॥इदमुपलक्षणम्।
भ्वादयःकिम्।हिरुक्पृथगित्याद्यव्ययानांशिष्येइतिभावार्थःतिङन्तस्यचमाभूत्।स्तम्भ्वादीनामुदित्करणेनसौत्राणामपिधातुत्वंज्ञाप्यते।चुलुम्पादीनांतुबहुलमे
वंनिर्देशनमितिगणसूत्रेणसंग्रहः।चादयः।अद्रव्यार्थाःकिम्।पशुः।लिङ्गसंख्यान्वितंद्रव्यम्।इहतुस्यादेव।लोधंनयन्तिपशुमन्यमानाः।पशुइतिसम्यग्
...उपसर्गाः।निस्दुस्इतिसान्तौ।निसस्तपतावितिनिर्देशात्।अयोगवाहानामविशेषेणेतिप्रकरणेनिष्कृतंदुष्कृतमित्युदाहरणद्वयंइदुदुपधस्य...स्यविसर्ज
नः...कारोक्तेश्च।उपसर्गस्यायमतावितिसूत्रेवामनोप्येवम्।निरःकुषःसुदुरोरधिकरणेइतिनिर्देशाद्दूकान्तावपीतितत्रैवसूत्रेहरदत्तः॥इतिसंज्ञाप्रकरणम्॥ *
तत्प्रकृतेकवचत्यनुवादेनाङ्विधानेनसार्वधातुकेयक्...णविधानेनचधातुत्वम्।जुचंक्रम्येत्यत्रपठितजोःजपजभेत्यत्रपठितपसःऋतिप्रभृतीनांचकेषांचिद्धात्वधिका
रविहितकार्यादर्शनात्तद्दोलम्।एतेषुस्थितस्यतेषांपाठस्यभ्रंशोनुमीयतेइतिभावः।मैत्रेयाद्यन्यसंमतंसमाधिमाह।बहुलमिति।सम्यगर्थेइति॥नखलुअधमर्षिनयन्तिपशुमन्य
मानाइतिनिरुक्तेपशुमितिसानुस्वारपाठात्तत्रपश्वितिलुप्तविभक्तिकंसत्ववाचीतिवाच्यम्।लोपमित्यनवगतमितितद्भाष्योक्त्यातन्मात्रनिर्णायकेनिरुक्तेपशुशब्दांशेन्यथापाठेप्रमा
णाभावात्।स्पष्टंचेदंप्रकृतसूत्रेहरदत्तग्रन्थेदशधातौमाधवग्रन्थेचेतिदिक्।वामनोप्येवमिति।तत्रहिदुःसान्तइतितेनोक्तम्॥इतिसंज्ञाप्रकरणम्॥

योजनयेति॥यद्यपितदनुवृत्त्यैवसिद्धेसामर्थ्याच्छब्दव्यापाराश्रयणेनलभ्यतेमूलोक्तार्थस्तथापिमन्दबुद्धिसाधारण्येनस्फुटत्वायैवमेवोक्तम्।सइति॥अत्रनैवस्यादितिभावः॥इ
गमिति॥अत्रेकारस्यैवस्यानत्वन्त्यस्येतिभावः।सोर्लुगिति॥अतएवदीर्घोनेतिभावः॥तच्चेति॥इकइतिपदंचेत्यर्थः॥अनेनात्रसूत्रेपदोपस्थितिपक्षइतिसूचयति॥अचोञ्णितिऔ
गुणइत्यत्रतुलिङ्गस्यश्रुत्यपेक्षयादुर्बलत्वेनप्रथमतःश्रौतान्तपदार्थादिघटितवाक्यार्थबोधेवृत्तेनिर्दिष्टस्यानिकत्वेनोपस्थितस्यापिइक्पदस्यवाक्यार्थेऽनन्वयः।सार्व
धातुकेत्यादौतुतदुपस्थितिंविनास्यान्याकाङ्क्षाशान्त्यभावेनबोधएवनेतिविशेषः।एवंचपदश्रुतिनिमित्तैषापदैकवाक्यतयान्वयवत्यन्तरङ्गा॥स्यानषष्ठीत्वनिर्णयेउपस्थिता
लोन्त्यपरिभाषाय अनन्त्यस्यगुणाव्यावृत्तयेवाक्यैकवाक्यतयान्वयइतिबहिरङ्गसातदाह॥इगन्ताङ्गस्येत्यादि॥मृज्योरवयवस्येति॥एवंचस्यानषष्ठीत्वाभावनिर्णयेना
इकोगुणवृद्धी॥गुणवृद्धिशब्दाभ्यामिति।एतच्चपूर्वसूत्राभ्यांगुणवृद्धिपदेअनुवर्त्यगुणोवृद्धिरितियेगुणवृद्धीइतियोजनयालभ्यते।तेनेद्धन।द्वि
औत।द्यौः।त्यदादीनामः।सइममा।षष्ठ्यन्तप्रति।सूत्रेषष्ठ्यन्तस्यानुकरणात्स्वशब्दस्वरूपपरतयानपुंसकात्सोर्लुगितिभावः।पूदमिति।तद्धसंभवतिसामाना
धिकरण्येइगन्तस्याङ्गस्येत्यादिक्रमेणसंबध्यते।मिदेर्गुणः।मृजेर्वृद्धिरित्यादौतुसामानाधिकरण्यासंभवान्मृदिमृज्योरवयवस्येकइतिसंबध्यते।यत्तुइकएवस्था
नेस्तइतिप्राचामाख्यातंतच्चतट्टीकाकृतोक्तमनियमप्रसङ्गेनियमार्थमिदमित्यादितत्सर्वभाष्यविरोधादुपेक्ष्यम्।तच्छेषपक्षंदूषयित्वापदोपस्थितिपक्षस्यैवभाष्येस
मर्थितत्वादित्याहुः॥ लोन्त्यस्येत्यस्यप्रवृत्तिरेवनेतिभावः॥नियमार्थमिदमिति॥ततद्विधायकैर्विहितयोर्गुणवृद्ध्योरलोन्त्यस्येतिवदिदमपिस्यान्निनियमार्थमितितदाशयः॥त
त्सर्वभाष्येति॥द्वयोर्नियमयोःसार्वधातुकेत्यादावविरोधेनेग्रूपस्यान्त्यस्येत्यर्थोवाच्यः॥अन्त्यस्येकइतिवा।उभयथापिद्वयोर्विशेषणविशेष्यभावसत्त्वात्तच्छेषपक्षेपर्यव
सानम्।सःअलोन्त्यस्येतिनियमःशेषोविशेषणमस्येतितदर्थः।तस्यालोन्त्यस्येत्यस्यविशेषणमितिवा।एवंचमिदेर्गुणइत्यादौपरस्परविरोधादनयोःस्वस्मेसर्वादेशगु णमः
णापत्त्यातद्विरोधइतिभावस्तदाह॥तच्छेषपक्षमिति ॥

दूषणोद्धारस्त्विति॥मिदेरित्यत्रमिदइर्मिदिस्तस्येतिव्याख्यानान्नदोषः॥पुगन्तेत्यत्रपुक्यन्तोलघ्वीउपधेतिव्याख्येयमित्यादिभाष्योक्तदूषणोद्धारस्त्वित्यर्थः।नत्र्यप्रत्य
तिज्ञापयतीत्यादौदोषः॥गुणेकृतेरद्व्यारूपसिद्धेः।अतएवसमयाच्चयापनायामितिनिर्देशः संगच्छतेनदाह॥कौस्तुभेस्पष्टीकृतमिति॥नन्वेवंतर्हिकिमर्थंप्राचापस्उ
पेक्षितइतिचेल्लुणुगलघूपधांशेइक्परिभाषानुपस्थितावनिग्लक्षणत्वाद्विन्नमित्यादौगुणनिषेधानापत्तिभियासउपेक्षितइति।क्नोः कित्वस्यानिग्लक्षणत्वेपिगुणनिषेधप्रवृ
त्तिज्ञापकत्वाश्रयणेतुतंस्यपदोपस्थितिपक्षज्ञापकत्वमेवोचितमितिदिक्॥इस्तादाविति॥आदिनाझलन्तलक्षणोनुमइदितोनुमित्यादिच॥अचोः संभवादिति॥नुमोमित्वेतुज्ञा
नाचीत्यादौचरितार्थमितिमुचादावन्त्यस्यैवस्यादितिभावः॥दीर्घः सिद्धइति॥तच्छब्देनयस्यविहितःसमुदायःपरामृश्यतेइतिभावः।यद्यपितस्यान्त्यावइतिव्याख्यानेपिभवितेत्या

तच्छपक्षेपिदूषणोद्धारस्तुशब्दकौस्तुभेस्पष्टीकृतोस्माभिः।अचांमध्यइतियत्तुप्राचोक्तमन्त्यादचः परइति।तन्न।शेमुचादीनामित्यादावन्त्यस्याचोसं
भवात्।तस्यैवान्तावयवइति।तेनत्रपुणीत्यादौअङ्गस्यनान्तत्वेनदीर्घः सिद्धः।पदादित्वेसनसिद्ध्येत्।अभक्तत्वेतुवहंलिहइत्यत्रवहाभ्रेलिहइतिव
शिअलिङ्गुपदितिमुमिमोनुस्वारोनस्यात्।अपदान्तत्वात्।यत्त्वभक्तत्वेत्रपुणीतिदीर्घोनस्यादितितन्नदादिग्रहणंस्यादिनुमर्थमित्यङ्गसञ्ज्ञायांतस्यवार्ति
केनैवदूषितप्रायम्।स्थानेयोगेति।स्थानेनयोगोस्यादितिविग्रहः।निपातनादेत्वम्।अनेकविधमिति ॥

दैतासदेवचेटौलघूपधाङ्गावयवत्वेनप्राप्तस्यगुणस्यदीधीवेवीटामितिनिषेधारम्भेपालोकव्यवहारेणचावयवावस्यसमुदायावयवत्वाङ्गीकारादत्रनदोषः।तथापितथा
व्याख्यानंपञ्चारत्नीनीत्यादौपदस्यविभज्यान्वाख्यानेउत्तरपदस्यापिनान्तत्वापत्ताविगन्तेतिस्वरानापत्तेरितिस्पष्टंभाष्यादौ॥त्रपूणीत्युपलक्षणंतातापिण्डानामितिनलो
पसिद्धेः।तानितानीत्यर्थःछन्दसीतिशेर्लोपेतदुदाहरणम्॥स्थानेनेति।स्थानशब्दार्थेनेत्यर्थः।तन्निरूपितसंबन्धः षष्ठ्यर्थोनतुतद्रूपः सबन्धस्तदर्थइतिअनेनध्वनयति
॥एत्वमिति॥अधिकरणबहुव्रीहिरप्यतएवेतिबोध्यम् ॥

वप

गुणप्रमाणेति॥प्रमाणस्य ह्रस्वत्वादेर्गुणत्वेपि ब्राह्मणवसिष्ठन्यायेन पृथग्युक्तिः।गुणशब्देनोक्तत्रितयातिरिक्तधर्ममात्रं तेनानान्तर्यमेवैतयोरान्तर्यमित्यादिस्थानेन्तरतमसूत्रस्थभाष्येण न विरोधः।अन्तरतमाभाव एव गुणविधौ ऋकाराकारयोः सादृश्यमिति तदर्थः॥बाह्यानां विवारादीनां साक्षाद्वर्णावृत्तित्वेप्यौपचारिकं गुणत्वं बोध्यम्।अनुकरणमिति॥अचीत्यादिसप्तम्यन्तार्थकस्य स्वतन्त्रतच्छब्दस्य निर्देशो न स्वरूपपरं व्याख्यानाद्बहुलस्य संस्कारानुरोधाच्च।सप्तमी तु सप्तम्यन्तानामेव तच्छब्दार्थत्वमिति बोधनाय।तद्बोध्यार्थस्य निर्दिष्ट इत्यनेन सामानाधिकरण्याय चेति भावः।शब्दार्थैकत्वेन त्वनुकरणत्वव्यवहार इति बोध्यम्।दिशिरुच्चारणेति॥अतएव जनपदे लुबित्यादौ न दोषः।न ह्यर्थ उच्चारितो नापि शब्दस्य निरन्तर इति भावः॥अविमणिसुक्तेइति॥अचि उपश्लिष्टस्य यणि युक्ते इत्यर्थः।इदं च संहितायामिति सूत्रे भाष्ये स्पष्टम्।फलितेति॥सप्तम्यन्तार्थेऽव्यवहिते षष्ठ्यन्तार्थोप्यव्यवहित एवेति भावः॥नसूत्रितमिति॥स्वरूपमित्यतः प्रागिति स्थानार्थगुणप्रमाणकृतमित्यर्थः।बलीय इति।तेन चेतास्तोतेत्यत्र प्रमाणत आन्तर्यवानकारो नेति भावः।तस्मिन्निति।सप्तम्यन्तानामनुकरणम्।निःशब्दो नैरन्तर्यपरः।दिशिरुच्चारणक्रियः।अचि यणि स्युनौ व्यवहिते।व्यवहिते च सति प्राप्तम् अव्यवहित एवेति,पूर्वस्य परस्य च प्राप्तं पूर्वस्यैवेति च नियम्यते।अव्यवहितस्येति तु फलितार्थकथनम्।परस्य यदिति।तस्मादित्युत्तरस्यादेरिति तु न सूत्रितम्।आदेरित्यंशस्य सर्वादेशबाधकत्वापत्तेः।सिद्धान्ते तु परत्वात्सर्वादेशत्वं बाधकमित्यनुपदमेव वक्ष्यति।अनेकाल्शित उदाहरणमिदमदस इत्तु।यत्तु वृत्तिकृता जश्शसोः शिरित्युदाहृतं तन्न।सर्वादेशतायाः प्राक्शित्वस्यैवालाभात्।तत्र हि डाणलोरिवानुपूर्व्यादनेकाल्त्वेनैव सर्वादेशत्वमिति सिद्धान्तः॥शेषः।तत्रादेरिति पृथग्वाक्यं नत्वोत्तरस्येत्यनुवर्त्य स्थानषष्ठीयं पञ्चमीनिर्देशेन यत्कार्यं तदुत्तरसंबन्धि उत्तरस्य स्थाने विधीयमानं चादेर्बोध्यमिति वाक्यार्थ इयं वाक्यभेदसामर्थ्याच्चादेरित्यंशं विनापि क्वचिदंशान्तरप्रवृत्तिः।आदेरित्यंशस्त्वनुवृत्तोत्तरस्येत्यस्याकृत्स्नपरत्वबोधकशब्देन यत्र विधानं तत्रैवेति निरस्तं ङित इत्यादौ न प्रवर्तत इति भावः॥वक्ष्यतीति॥न चानेकालित्यतः पूर्वमेव तस्मिन्निति निर्दिष्टे पूर्वस्य तस्मादित्युत्तरस्यादेरिति सूत्रे कृते न पठितेति वाच्यम्।आदेरित्यंशे षष्ठी स्थाने इत्यस्यासंबन्धे आङ्जसेरसुगित्यादावपि तस्य प्रवृत्त्यापत्तेः संबन्धे मध्ये तस्मिन्निति तस्मादित्यनयोरपि तत्संबन्धे तयोरप्यागमविषयेऽप्रवृत्त्यापत्तेरिति दिक्॥डाणलोरिवेति॥आदेशानां प्रत्ययाधिकारे पाठेपि वाक्यार्थबोधोत्तरमेव प्रत्ययत्वज्ञानेनोपदेशे णकारे इत्वाप्रवृत्तेस्तदुत्तरं लस्य प्रवृत्तिकाले इत्वेप्यनेकाल्त्वासत्तेरिति भावः ॥

प्रवर्तनएवेति॥उपपादितमेनत्॥शब्दान्तरप्राप्त्येति॥यद्व्यक्ति संबन्धितयापूर्वं प्रवृत्तिस्तद्व्यक्तिसंबन्धितयैवपुनःप्रवृत्तौकृताकृतप्रसङ्गित्वंप्रसिद्धमितिभावः॥कृताकृतेति।व्यक्तिविशे
षानाश्रयणेनेत्यर्थः॥वृद्धौसत्यांवृद्ध्येत्यस्यतन्त्रमप्राप्तिः।साहचर्येणविभक्तिनिमित्तानामेववृद्ध्यादीनान्तत्रग्रहणात्।नित्यत्वेनैवसिद्धेवाचनिकपूर्वविप्रतिषेधाश्रयणेफलाभावाच्चेतिदि
क्॥अन्तरङ्गत्वादिति॥भाष्येत्वयस्मृत्ययान्तरंनतुतयवादेशः।उभयीत्यत्रङीप्मात्रजितिप्रत्याहाराश्रयणेनसाधितः।एवंचोभयशब्देविकल्पस्यप्राप्तिरेवनेतिउक्तम्।अन्तरङ्गस्यबलवत्त्वेत्वा
इत्यादाविति।आदिशब्देनातोभिसऐसइतिगृह्यते।परत्वादिति।अतएवादेःपरस्येतिपृथक्क्रियतेइत्युक्तम्।उत्तरसेत्यंशस्तुऔशैसोरपिप्रवर्ततएव।यत्तुप्राचा।आदेरितिसूत्रंविफलंवेति।
मञ्चमीनिर्देशेनेत्याद्युक्तंतदसंबद्धमितिस्पष्टमेव।परनित्येति।परान्नित्यंयथा।तुदति।रुणद्धि।परमपिलघूपधगुणंबाधित्वाशश्नमौ।तथारधेर्णिच्।रन्धयति।परामप्युपधावृद्धिंबा
धित्वारधिजभोरचीतिनुम्।नचसोपिशब्दान्तरप्राप्त्यानित्यइतिवाच्यम्।कृताकृतप्रसङ्गमात्रेणापिक्वचिन्नित्यताभ्युपगमात्।अन्तरङ्गंयथा।उभयेदेवमनुष्याः।इहप्रथमचरमेति
परमपिविकल्पंबाधित्वासर्वादीनीतिसर्वनामसञ्ज्ञाविभक्तिरनपेक्षत्वेनान्तरङ्गत्वात्।अपवादोपियद्यन्यत्रचरितार्थस्तर्ह्यन्तरङ्गेणगुणेनबाध्यतएव।तद्यथा।अयजेइन्द्रं
ग्रामेइहसर्वेइत्यत्रअन्तरङ्गेणगुणेनसवर्णदीर्घोबाध्यते।सचयद्यपियणगुणयोरपवादस्तथापिसमानाश्रयेचरितार्थः।तथाचवार्त्तिकम्।इणङिशीनामादेशःसवर्णदीर्घ
त्वादिति।असिद्धमिति।तेनपचावेदमित्यादावेतएत्वंन।अकृतव्यूहाइति।यद्यपिकृतमपिवानिवर्त्तयन्तीतिपरिभाषान्तरंपठ्यतेफलंचतुल्यम्।तथाप्यकृतेत्येवलघुप्रक्षा
लनाद्धिपङ्कस्यदूरादस्पर्शनंवरमितिन्यायादितिभावः।नकुर्वन्तीति।यथानिषेदुषीमित्यादौक्वसोरिटमन्तरङ्गत्वात्प्राप्तमपिभाविनासंप्रसारणेनवलादित्वंनङ्क्ष्यतीत्यालोच्यनकुर्वन्तीत्यर्थः।इति
परिभाषाप्रकरणम्॥एकमन्यत्रप्रपञ्चितम्।बाध्यतएवेति॥निरवकाशत्वरूपस्यबलवत्त्वबीजस्याभावात्॥तेनेति॥पूर्वान्तुअन्तरङ्गबहिरङ्गयोर्युगपत्प्राप्तावेवेतिभावः॥नकुर्वन्तीत्यर्थइति॥यदि
तुसेदुषइत्यादौपदावधिकेनाख्यानेसेदुसअसितिस्थितेइट्संप्रसारणयोःप्राप्तौप्रतिपदविधित्वेनशीघ्रोपस्थितिकत्वात्पूर्वंसंप्रसारणेवलादित्वाभावादिटःप्राप्तिरेवनलक्ष्यानुरोधाद्वा
[illegible]मेवान्च।स्यानमितितत्सिद्धिरित्युच्यतेतदैषापरिभाषानिष्फलेतिबोध्यम्।अतएवभाष्येनक्वापिव्यवहृतेत्यन्यत्रविस्तरेणनिरूपितम्॥इतिपरिभाषाप्रकरणम्॥

स्थानेन्तरतमसूत्रेणैवेति॥ व्यक्तिपक्षेव्यक्तीनामानन्त्येन संख्याज्ञानाभावाद्यथासंख्यासंभवान्नस्यासिद्धिश्चेतिभावः। परेतुव्यक्तिपक्षेझलादिप्रत्याहारसूत्रेषुसर्वेझकारादीनांग्र
हणंदुरुपपादम्।नहितत्रलक्षणावक्तुंशक्या।लक्ष्यतावच्छेदकाग्रहात्।एवंचतत्रप्रत्याहारसूत्रेषुजातिनिर्देशेनैवनिर्वाहोनान्यथा।एवंचाद्उणित्यादावपिजातिनिर्देशएवोचितः।
अर्द्धजरतीयस्यानौचित्यात्।अतएवाणुदित्सूत्रेभाष्येप्रत्याहारेषस्वच्चावित्यादौचउक्तामनुपपत्तिमाशङ्क्य जात्याश्रयणमेवकृतम्। यथासंख्यसूत्रंचव्यक्तिसाम्यइवधर्मसाम्येपि
प्रवर्तते।स्पतासीलृलुटोरित्यादौयथा।नाप्यत्रपक्षेऋकारादौलकारसत्त्वापत्तिः।लृत्वादिजातेर्ऋकारादावभावात्।नचजातिपक्षेऽणुदित्सूत्रेऽण्ग्रहणप्रत्याख्यानेऽपसर्गादृतीत्यादौ
ऋकारेणलकारग्रहणायसावर्ण्यवचनस्थानेलृवर्णस्यऋवदतिदेशाल्लकारेरेफापत्तिरितिवाच्यम्।क्लृप्तशिखार्थंतस्यातिदेशस्यानित्यत्वावश्यकत्वात्।तत्पक्षेऽण्ग्रहणप्रत्या
. एवमपितृतीयचतुर्थाभ्यामृकारलृकाराभ्यांप्रत्येकंत्रिंशदुपस्थितौलृवर्णानांरेफादेशस्यऋवर्णानांलादेशस्यचप्रसङ्गात्।तस्मादिहस्थानेन्तरतमसूत्रेणैवेष्टसि
द्धिरित्यभिप्रेत्याहस्थानतआन्तर्यादिति।अनचिचाद्वित्वेति।यरोनुनासिकइतिसूत्राद्वाग्रहणमनुवर्ततइतिनाज्झलावितिसूत्रेकैयटः।एवंचसवर्णेत्रेशाकल्यस्येतिसू
त्रंतत्प्रपञ्चभूतंपूर्वोत्तरसूत्रद्वयंचनारम्भणीयमितिभावः ॥ ७ स्थानेप्यप्रत्ययइत्यंशोवाक्यभेदेनविधीयमानेजातिग्रहणप्राप्तसवर्णग्रहणनिषेधकस्तत्परसूत्रे
वदितित्यदादीनामइत्यादौनदोषः।एवंचात्रयण्पदेनजात्याश्रयणेनापिनसवर्णबोधनमितिसौजस्सित्यादौअनुनासिकस्थानेपिनिरनुनासिकएव।अतएवस्थानेन्तरतमसूत्रे
भाष्येःस्यतदुदाहरणसमाशङ्क्य यथासंख्यमित्यनेनापिसिद्धमित्युक्तंतेनात्रतयोःफलाविशेषउक्तः।उञइतिसूत्रेनव्यानांप्रमादएव।नचझलादिषुझकारादिभीरूपसादृश्येन
सर्वेझकारादिप्रतीतिरितिवाच्यम्॥अगादिष्वपिकिंचित्सादृश्यमाश्रित्यदीर्घादीनामपिग्रहणोपपत्तेः।ल्वादिभ्यइतिनिर्देशानामीषत्सादृश्येनापिग्रहणमित्यर्थज्ञापकतायायुक्त
त्वात्।तदयुक्तमइउणसूत्रेभाष्येरूपसामान्याद्वासिद्धमिति।अणुदित्सूत्रेऽण्ग्रहणंतुप्रत्याहारादवर्गेषुणकारादिभिश्चिह्नैःप्रत्याहारसूत्रस्यायमितिप्रत्यभिज्ञासत्त्वादुपाया
न्तरपरमाचार्याःकृत्वाननिवर्तन्तइतिन्यायादिदमेवाभिप्रेत्यतत्रत्यमण्ग्रहणंप्रत्याख्यातंभाष्यइत्याहुरितिदिक् ॥

अव्ययस्येति। अत्रत्वस्येव दोषत्वमितिभावः। नन्वव्ययस्याङ्गत्वेफलाभावेनप्रत्ययस्यलुकालुप्तत्वेनचतद्प्राप्ताःकथंतेनाव्ययसंग्रहोतआह। पदेति। तत्वंचततःपरस्य[illegible] भावश्यकंप्रत्ययलक्षणेनसुबन्तत्वाच्चतत्त्वमितिभावः॥ सिद्धत्वाच्चेति। अतएवात्रतुक्। नचसर्वेसर्वपदादेशाइतिन्यायेनप्रस्तुत्वाद्लस्यस्थानेप्रस्तुत्यइत्यादेशेनतस्याव्ययत्वसिद्धिरितिशत्याणायइतिवाच्यम्। अर्थवत्येवस्थानिवत्त्वमिति तात्पर्येणक्त्वोऽप्यर्थवत्त्वेनतादृशस्यान्यादेशभावकल्पनेमानाभावादितिदिक्। अनल्विधाविति किमिति॥ विधिग्रहणविशिष्टंकिमर्थमितिप्रश्नः॥ णत्वंप्राप्तमिति॥ नचसकारेस्वतोऽड्भिन्नत्वसत्त्वात् अड्भिन्नव्यवायेनेतिनिषेधात्कथंणत्वप्राप्तिरितिवाच्यम्। अतिदिश्यमानधर्मविरुद्धस्वाश्रयधर्मप्रयुक्तकार्याभावस्यातिदेशस्वभावसिद्धत्वात्। इदंचासिद्धवत्सूत्रेकैयटेस्पष्टम्॥ लुकामइति॥ यद्यपिवत्वंहल्त्वाद्यपेक्ष्याविशेषधर्मस्तथाप्येतद्वाक्योपप्लुतेवकारवनोन्त्यः। अव्ययस्याङ्गपदाभ्यांपृथग्ग्रहणवैयर्थ्यात्। प्रस्तुत्येतिवृत्तिकारोक्तंतदुदाहरणमपिमन्दम्। क्त्वामात्रस्थानव्ययत्वात्। क्त्वेनसिद्धत्वाच्चेत्याशयेनाह। आदेशइति। अनल्विधाविति किम्। तेनतस्मात्। तस्यतस्मिंश्चविधौमाभूत्। तत्रअलाविधौयथा। व्यूढोरस्केन। अत्रसंकारस्यस्थानिवत्त्वेनविसर्गवद्रूपमाश्रित्यढ्रुवायेदितिणत्वंप्राप्तम्। अलःपरस्य। द्यौः। पन्थाः। हल्ङ्यादिलोपेन। अलोविधौ। द्युकामः। वलिलोपेन। अलिविधौ। यजेःक्तः। कद्दृष्टः। हशिचेत्युत्वंन। अल्त्वेहस्थान्यवयवएवगृह्यते। तेनरामायेत्यादौसुपिचेतिदीर्घःसिद्धः। नहिधौहियजादित्वमाश्रितंयजादेशावयवोनतुस्थान्यवयवइतितदेतत्सकलमभिप्रेत्याह। नतुस्थान्यलाश्रयइति। आश्रयणंचेहयथाकथंचिन्नतुप्राधान्येनैवेत्याग्रहः। तेनप्रपठ्येत्यत्रवलादिलक्षणइण्न। ७) टुकारइतिवाक्येउपात्तधर्मापेक्ष्यानतस्यतत्त्वम्। सूत्रकृत्त्वस्थान्यादेशभावमादायैवैतत्कृतवाक्योपपन्नत्वादितिभावः॥ कद्दृष्टइति॥ यद्यपीदंरूपमुत्वेगुणेऽवादेशेपाक्षिकलोपेनसिद्ध्यतितथापिपक्षेकविष्टइतिस्यात्। कयिष्टइतिचेष्यतेइतिभावः॥ स्थान्यवयवएवेति॥ उपलक्षणमेतत्स्थानिरूपापीतिबोद्ध्यम्। अतएवादेशिन्यल्याश्रीयमाणेप्रतिषेधइतिभाष्येउक्तम्। नतुस्थान्यवयवमवइति॥ अतःप्रत्ययत्वंस्थानिवत्त्वेनभवत्येवेतिभावः। अग्रहीदित्यादौग्रहोलिटीत्यनेनेटएवदीर्घविधा[illegible]नतस्यस्थानितेतितद्धतीट्त्वाश्रयस्यसिचोलोपस्यसिद्धिरितिबोद्ध्यम्। यथाकथंचिदिति॥ व्याख्यानादितिभावः ॥

अनुत्पादादिति॥ अत एव तस्याः श्रवणं न। अभेदविवक्षापदार्थस्यार्थवत्सूत्रे निरूपयिष्यते। न च लिङ्ग सर्वनामनपुंसकताभ्युपगमे नोत्पन्नाया विभक्तेर्लुक्प्रसक्त्यापत्तेः। न च सुप्सुपेति समा
सेन निर्वाहः। इति शब्दस्य शब्दस्वरूपपरतातात्पर्यग्राहकत्वेन तेनैकार्थीभावरूपसामर्थ्यस्य दुरुपपादत्वात्। न च गोभ्यां गाः क्षीरमित्याद्येकदेशगोशब्दानुकरणे ऋलृक्सूत्रभाष्यो
क्तेन प्रकृतिवदनुकरणमित्यतिदेशेन पदत्वं सुलभमिति वाच्यम्। सियोर्न्यादिति सूत्रभाष्योक्तेन तदतिदेशानित्यत्वेन तदप्रवृत्तिमाश्रित्यापि सुसाधत्वेनासाधारणप्रयोजनत्वाभावादि
ति भावः। एतदर्थमेवेति। एतदर्थमपीत्यर्थः। अनितेः क्विपि संबुद्धावान्विनो पीत्यत्र नश्छवीति रुत्वे त्रानुनासिक इति पूर्वस्यानुनासिके यदेतन्नान्विनो षिकमलें आँन्विनो पीत्यत्रापि फलसत्त्वा
त्प्रकृतिच नपदम्। अनुकार्यानुकरणयोरभेदविवक्षया अर्थवत्त्वाभावेन विभक्तेरनुत्पादात्। उञः। निपात एकाजिति प्राप्ते विभाषेयम्। ऊँ। अनुनासिक इति। तेनास्मिन्पक्षे यरोऽनुना
सिक इति विकल्पः। यदेतनुँ इति पठसि यदेतदूँ इति वा तद्दीर्घमित्यादि। एतदर्थमेव तत्रानुनासिकग्रहणम्। अन्यथा यरोऽजमिञम्वेत्येवावक्ष्यत्। मय उञो वो वा। मयः परस्येति। प
रादिति तु प्राचः प्रमादः। षष्ठीनिर्दिष्टस्य हि आदेशा उच्यन्त इति भाष्यात्। आदेशविधौ स्थानिनः षष्ठ्या एव न्याय्यत्वाच्च। असिद्धत्वादिति। अत एवेदं वत्वं त्रिपाद्यां विधीयते। प्रकृति
भावमात्रबाधनार्थं त्वेहि इकोयणचीत्यनन्तरं मय उञो वेत्येवावक्ष्यत्। यणं वान्ववर्तयिष्यत्। इह मय उञ इतौ परे अष्टाविंशतिरूपाणि। तथाहि। उञ इति प्रगृह्यत्वे किमु इति। वत्वपक्षे
किम्विति। ऊँ आदेशे किमूँ इति। आदेशस्य स्थानिवत्त्वेन मय उञ इति प्रकृतिभावापवादभूते आन्तरतम्यादनुनासिके वकारे किम्वँिति ॥ ७ तु। अवक्ष्यदिति। न चैवं न्यासे यथासं
ख्यापत्तिः। तस्या सार्वत्रिकत्वात्। आन्महत इत्यादिनिर्देशाच्चेति भावः। पूर्वोक्ते कमलाँ श्विनोपीत्यत्र लत्वं नकारापत्तिवारणाय विधेयकोटावनुनासिक इति॥ विधेयकोटौ यकार
मारभ्य प्रत्याहारे तु विधेयविषये सवर्णग्रहणाभावेन पूर्वोक्ते निरनुनासिकत्वस्यैवापत्तिरिति यथान्यासमेव साधु॥ इत्येवावक्ष्यदिति। न चात्रापि न्यासे सन्निपातपरिभाषयानुस्वाराप्राप्तिरि
ति वाच्यम्। त्रिपाद्यां न यापारे न सन्निपातपरिभाषा। नित्यत्वस्यापि चाप्रवृत्तेरिति भावः॥ अनुनासिके वकारे इति। इदं चैयरानुरोधेन। मय उञ इत्यत्र विधीयमानस्य सवर्णाग्राहकत्वेनानेन
सानुनासिकविधानः। भाते नकयस्त्रिप्तः। अन्यथेदं सोमस्यानुनासिकोऽकारः स्यात्। अत एवेह शो विषये गुणानामभेदकत्वपक्षानाश्रयणामिति चिन्त्यम् ॥*॥ इति स्वरसन्धिः॥*

विनापि तद्योगमिति॥ सा हि स्थं च योग्युक्ति यायाम्। स्मदिति॥ संयोगमद्धिकृत दर्थः। तत्स्वाभा मेनिवन्निर्दे श-संयोगमात्राव्यवहित योरेवेति चितं कट्टैनेत्यमित्यादौ न दोषः। यथासंख्यमिति॥ तथाद्ध
नेत्यादेरप्यनादित्वयात माद्य परस्मैपदानां णलित्यादौ सू त्रान्तरस्य क्रमेणैव यथासंख्यमिति भावः। त्वादिशब्दे स्थानादि सिद्ध लोक प्रसिद्ध क्रमेणैवोपस्थितिरिति तात्पर्यम्। ननु तज्ज्ञानमित्य
अनुनासिका अनुनासिक योर्यकारयोर्मयोयण इति हिलस्य मकारस्य निचितेति द्वित्वस्य च विकल्पेन वल पक्षे रूपाष्टकम्। तदभावे द्वयमिति दशकम्। प्रगृह्य सञ्ज्ञा विरह प
क्षे मयउञ इति त्वस्यासिद्धत्वादिको यणचीति यणेव। तस्यासिद्धत्वान्मोनुस्वारे वा पदान्तस्येति परसवर्णपक्षे अनुनासिकाननुनासिक वकारद्वयोपेतमेकादशं रूप
म्॥ अनुनासिकस्य द्वित्वे हलोयमामिति लोपस्य वैकल्पिकत्वादकरणे त्रिवकारं द्वादशं रूपम्। परसवर्णाभावपक्षे अनुस्वारस्य यत्वात्पाक्षिके द्वित्वे द्वे संकलनया चतुर्द
श इति शब्देकारस्य अ गो प्रगृह्यस्येत्यनुनासिक विकल्पादष्टाविंशतिरिति॥ इत्यच्सन्धिः॥ स्तोश्चुना॥ स्तोरिति समाहारद्वन्द्वः॥ सौत्रं पुंस्त्वम्। श्चुनेति॥ सहयुक्ते ति सू
त्रे विनापि तद्योगं तृतीयेति वक्ष्यते। योग इत्येतदध्याहारलभ्यम्। अत्रस्थान्यादेशयोर्यथासंख्यं निमित्तकार्यिणोस्तु न॥ शादिति ज्ञापकात्। अल्पाच्तरमित्यादौ तु
सौत्रत्वात् श्चुत्वं न। तज्ज्ञानमित्यादौ तु भवत्येव। स्तोश्श्चुरिति सुवचम्। न च तस्मिन्निति निर्दिष्ट इति परिभाषोपस्थानेन यत्नः याञ्चा इत्यादि न सिद्ध्येत्। शादिति लिङ्ग
ेन तस्य इहानुपस्थानाभ्युपगमात्। ष्टुना॥ इहापि कार्यिनिमित्तयोर्यथासंख्यं न। तोष्षि इति ज्ञापकात्। ष्टेष्टुरिति सुवचम्। ईड्डे ईट्टे इत्यादौ न पदान्तादिति ज्ञापकान्न दो
षः। सर्पिष्टममिति॥ ह्रस्वात्तादाविति षत्वम्। प्रत्यये भाषायामिति। यत्तु प्राचामयटि नित्यमिति पठितम्। यच्च हलन्तप्रकरणे षण्णां षड्नामित्युदाहृतम्। य
च्च प्ररोनुनासिक इति वानुनासिक इति तत्र व्याख्यातं तत्सर्वं भाष्यविरोधादुपेक्ष्यम् ॥ ७ दोष्श्चुयोगाभावान्न स्यादत आह॥ तज्ज्ञानमिति॥ जञयोगे तयोश्चा
रणमात्रं न तु विद्वर्णान्तरमिति भावः॥ अनुपस्थानेति॥ पूर्वत्वांशानुपस्थानेत्यर्थः। तेन चितमित्यादौ न दोषः॥ षत्वमिति॥ न च षस्य पदान्ते जश्त्वं भविष्यतीति तद्व्यर्थमि रामः
तिवाच्यम्। षत्वस्यासिद्धत्वे नास्य जश्त्वाभावात्॥ भाष्येति॥ प्रत्यय इत्येव तत्र पाठादिति भावः ॥ २५

द्वकारमिति॥चर्त्वेनेतिभावः।मृच्छब्दस्ययवादिगणेपाठेनमानमितितत्रभ्रमइतिवस्तेमद्वानित्येवेतितात्पर्यम्इतिकेचित्तन्न मन्मानितितुक्काचित्कोऽसांप्रदायिकः पाठः।ननुसव
र्णसंज्ञाधिकं परसवर्णेत्यत्रैकार्थीभावापन्नस्यान्यत्रसंबन्धोवक्तुमशक्यः।नचपूर्वस्येत्यस्यसंबन्ध्याकाङ्क्षायांयत्किंचित्संबन्धिकल्पनापेक्षयापूर्वत्रोपस्थितार्थवाचकपदाध्याहारोवि
त्यात्तल्लाभः । कुटूदूत्वादादादेरप्येवमेवसंबन्धोपपत्तौतत्रतत्रस्वरितत्वप्रतिज्ञायावैयर्थ्यापत्तेः।ननस्वरितत्वप्रतिज्ञासामर्थ्यादेकदेशानुवृत्तिः।तोर्लीत्यत्रसमुदायानुवृत्त्यातस्या
स्वरितार्थ्यादित्यतआह।अनुस्वारस्येत्यादि।एकदेशेइतिच।पकारमात्रेस्वरितत्वप्रतिज्ञयैवतोर्लीत्यादावनुवृत्तिसिद्धौपुनःसकारांशेनतत्प्रतिज्ञयातावतोऽयंशस्यउत्तरत्रानुवृत्तिरितिभावः॥
नदितिरभसादिति॥चयोःभावात्दीर्घादाचार्याणामित्युत्तरमनुस्वारस्ययपिवापदान्तस्य।तोर्लि।उदस्था।भयोहो।शश्छोटीतिषट्सूत्रीपाठोतरं झलांजशझशि।अभ्यासेचर्चस्वरिचावावसाने।अणो
प्रगृह्यमणाद्वृत्यै॥यचिभंतसौमत्वर्थइतिसंहितयापाठेनसाधितितात्पूर्वदकारंप्रश्लिष्यभत्वेनाप्येनत्समाधातुंशक्यम्।उदस्था॥अनुस्वारस्ययपीत्यत्रसमस्तमपिसवर्णग्रहणमिह
निष्कृष्यसंबध्यते॥एकदेशेस्वरितत्वप्रतिज्ञानादित्याशयेनाह॥पूर्वसवर्णःस्यादिति॥अघोषस्येत्यादि॥एतेनसस्यतकारइतिप्राचांग्रन्थाःप्रत्युक्ताः॥यद्पीहचयोर्द्वितीयाःशरि
यस्योपन्यसनंतदतिरभसात्।तच्छिवइति।यत्तुप्राचाततृशिवइत्यत्रजश्त्वेकृतेरखरिचेत्युक्तम्।तन्न।तदोदान्तत्वेनजश्त्वोपन्यासवैयर्थ्यात्।यत्तुतत्त्वौत्रेणोक्तंतदोवाव
सानइतिचर्त्वेकृतेपश्चाच्छिवइत्यनेनसंबन्धेझलांजशोन्तइतिजश्त्वेखरिचेतिचर्त्वमितितदतिस्थवीयः।जश्त्वंप्रतिअवसानेचर्त्वस्यअपवादत्वात्॥ ७ प्रगृह्यस्येतिपञ्चसूत्र्याः
पाठेभाष्यसंमतेयद्यपिचर्त्वेविपितस्यासिद्धत्वाच्छशर्परत्वाभावाच्चेतिभावः॥चर्त्वमिति॥ततश्चुत्वेशश्छोटीतिप्रक्रियेतिभावः॥चर्त्वापवादत्वादिति॥एवंचतत्रकृतेजश्त्वाप्रवृत्तिरितिभावः।नच
जश्त्वेकृतेचर्त्वस्यचारितार्थ्येननस्यासिद्धत्वाद्पवादत्वेनमानमितिवाच्यम्॥तत्कालेऽवश्यंप्राप्तत्वेनयेननाप्राप्तिन्यायेनापवादत्वस्यसुलभतयोक्तरीतेरसंभवात्।एतदेवाभिप्रेत्यमिदचोन्त्या
त्सञ्जेभाष्येउक्तम्॥सत्यपिसंभवेबाधनंभवतीति।अन्यथाकौण्डिन्यायतक्रमित्यनेनब्राह्मणेभ्योदधीतिप्राप्तदधिदानस्यापिबाधोनस्यात्।तद्दानोत्तरंतत्पूर्वंवानद्दानस्यचारितार्थ्यात्।अतए
वाजादेर्द्वितीयस्येतिसूत्रेप्रथमद्विर्वचनोत्तरमस्यचारितार्थ्येनप्रथमद्विर्वचनस्यानेनबाधोनस्यादित्याशङ्क्यसत्यपिसंभवेइतिन्यायेनबाधकत्वमुक्तंभाष्ये।एवंचदयतेर्दिगीतिसूत्रस्यकैयटादिग्रन्थाअ

संभवेप्रवक्ताभक्तेतिवाक्यविरोधःकिमुत्प्रगृह्यस्यानेकस्वरितस्येति
तिरोद्योत्यमिति भावः॥

प्र.शा. केनवार्यतामिति॥एवंचेदृशविषयेवाक्यसंस्कारपक्षेणैवसाधुत्वान्वाख्यानमितिस्वीकृत्याकृतव्यूहपरिभाषात्याज्येतिचेद्दिष्टापत्तिरितिबोध्यम्।अन्येतुपदसंस्कारेहरिःअस्तीतिसविसर्गम
२६ पिसाध्वेवसत्यभिधानेपरिभाषायाभाष्येऽदर्शनादित्याहुः॥प्रमाणाभावादिति॥योगविभागस्यभाष्येऽदर्शनेनाप्रामाणिकत्वाच्चेत्यपिबोध्यम्।यथासंख्यस्येति॥स्थानेकदेशेनसूत्रस्यग्रहणं
बोध्यम्।परत्वादिति॥तस्मिन्नितिसूत्रापेक्षयातस्मादित्यस्यपरत्वादित्यर्थः।डकारान्तस्कारेधुडित्यर्थेतस्मिन्नित्यस्यप्रवृत्तावुपस्थितडकारस्यागमित्वंतस्मादित्यस्यप्रवृत्तावुपस्थितसस्य
जश्त्वेशिवशब्दानपेक्षणाच्च।भाविन्यवसानभङ्गेवावसानइत्यस्यपूर्वमप्रवृत्तेश्च।प्रवृत्तस्यवानिवृत्तिसंभवात्।उक्तंचअकृतव्यूहाःपाणिनीया इतिकृतम
पिशास्त्रनिवर्तयन्तीतिच।अन्यथाहरिरयमित्यत्रापित्वदुक्तरीत्याप्रवृत्तोविसर्गःकेनापकर्ष्यताम्॥अथतनोतीतितदितिक्विबन्तंब्रूषेएवमपिजश्त्वेनदका
रोस्तुचर्त्वेकृतेस्तुत्वमितितुनन्याय्यम्।स्तुत्वंप्रतिचर्त्वस्यासिद्धत्वात्।यत्तुनमुनेइत्यत्रनेतियोगविभज्यासिद्धत्वमिहनेत्याहुः।तदपिन।असिद्धत्वेपिरूपसि
द्धौनिर्बाधायांयोगविभागस्यागतिकगतिभूतस्येहाश्रयणेप्रमाणाभावात्।आङ्कस्यतइति।आङ् उद्गमनइतितङ् स्तुक्रमोरितिनेट्।समर्सबन्धीविधिरिति।
यमकर्मकंविधानमितितुनोक्तम्।अनुवाद्ययोरपियथासंख्यस्येष्टत्वात्।समूलाकृतजीवेषुहन्कृञ्ग्रह इत्यत्रयथा॥ङ्णोः॥कुक्टुकोःपूर्वान्तत्वा
त्प्राङ्क्सायेत्यत्रसात्पदाद्योरितिषत्वंन।सुगण्सायेत्यत्रनपदान्तादितिष्टुत्वंन।पुष्करेतीर्थविशेषेसीदतीतिपुष्करसत्।तस्यापत्यंपौष्करसादिरचा
र्थः।बाह्वादित्वादिञ्।अनुशतिकादित्वादुभयपदवृद्धिः।डः सिधुट्।उभयनिर्देशेपञ्चमीनिर्देशोबलीयान्परत्वादित्यभिप्रेत्याह।सस्येति।सीतिसप्तमी
निर्देशस्तुलाघवार्थः।षट्सन्तइति।धुटःचर्त्वेनतकारः।यत्वाहुः।चयोद्वितीयाइतिपक्षेनस्थइतितन्न।चर्त्वस्यासिद्धत्वात् ॥
त्व मित्यसंभवरूपविरोधेपरत्वेनव्यवस्थेतिसस्यागमित्वनिर्णयइतिभावः।स्पष्टंचेदंतस्मिन्नितिसूत्रेभाष्ये।लाघवार्थइति । षष्ठ्याःप्रयोगएवकर्त्तव्यइत्यर्थः॥ रामः
चर्त्वस्यासिद्धत्वादिति॥अतएवतुडितिनोक्तम् ॥ २६

अत एव चर्त्वस्यासिद्धत्वादेव। ननु धुक् डः सीत्यत्र तु सप्तमी च यथाश्रुतैव, ड इति च षष्ठ्यन्तं, परमार्थतो वाक्यशक्त्या ङ्कारेण पूर्वान्तत्वे परादित्वे वा न शक्ततावच्छेदकभेदो त आह॥ धुटः परादित्वमिति। श्चोततिरुपदेशे सादिः। श्चुत्वस्य धुटि सिद्धत्वेपि तु क्यासिद्धत्वात् सन् श्चोततीत्यत्र तु ग्नेति बोध्यम्॥ षष्ठीं कल्पयतीति॥ न च शीति सप्तमीनिर्देशो लाघवार्थः।

अत एव धुडभावे षट् सन्त इत्यत्र टस्य ठो न। टकारनकारविसर्गाणां द्वित्वविकल्पात् षोडश। खयः शर इति सकारद्वित्वे द्वात्रिंशत्। न च तत्र चर्त्वस्यासिद्धत्वं शङ्क्यम्। पूर्वत्रासिद्धीयमद्वित्व इत्युक्तेः। न च शरोऽचीति द्वित्वनिषेधः शङ्क्यः। तस्य सौत्रद्वित्वमात्रविषयत्वात्। अत एव शरः खय इति वार्तिकस्य वत्सरः अप्सराः इत्युदाहरणं भाष्ये स्थितम्। धुटः परादित्वं न पदान्तादिति ष्टुत्वनिषेधार्थम्। अत एव वक्ष्यमाणस्तुगिहैव न कृतः। यत्त्वाहुः। एवमपि प्रक्रियालाघवार्थं तु डेव कर्तुमुचितम् इति तन्न। चयो द्वितीया इति पक्षे धकारापत्तेः। श्चुत्वं धुटि सिद्धं वाच्यम्। अटतीत्य इह श्चोतति। इह धुण् ना। शि तुक्। शीति सप्तमी पूर्वत्र कृतार्थायान इति पञ्चम्याः षष्ठीं कल्पयतीत्याह। नस्येति। ननु प्रकृतो धुडेवास्तु किं तुका। मैवम्। शश्छोटीत्यस्य हि पदान्ताज्झयः परस्य शस्य छ इत्यर्थ आकरे स्थितः। एवं च धुटः परादित्वात् सञ्छम्भुरित्यत्र छो न स्यात्। विपूर्वादुपेरौणादिके शप्रत्यये मध्यश्चोतन्त्यमिति। विरप्शमित्यादौ यथा। अतः पूर्वान्तस्तुक् कृतः। नन्वेवं कुर्वञ्शेते इत्यत्र पदान्तस्येति णत्वनिषेधो न स्यादिति चेन्न। कार्यकालपक्षे बहिरङ्गत्वेन तुको सिद्धत्वात्। यथोद्देशपक्षे स्तोः श्चुनेति योगो विभज्यते नेति वर्तते ण इति च। स्तोः श्चुना योगे णत्वं न स्यात् नकारार्थमिदम्। सकारग्रहणं वर्गग्रहणं चोत्तरार्थम्। ततश्चुरिति पूर्वमनुवर्तते। एवं नश्चेति सूत्रे कुर्वन्त्सीदतीत्यत्र पदान्तस्येति णत्वप्रतिषेधो धुटः परादित्वे प्रयोजनमिति प्राचां ग्रन्थोपि यथोद्देशपक्षे बोध्यः ॥ ५॥ इयोरचरितार्थत्वेन लाघवेनान्यविभक्त्युच्चारणं युक्तं न त्वन्यथेत्याशंयात् धुडेवास्त्विति। शीति च षष्ठ्यर्थे इति भावः॥ विरप्शमिति। छान्दसार्थमपि बहुशः सूत्रकृतो यत्नदर्शनादिति भावः॥ णत्वं न स्यादिति॥ एतदृष्ट्या श्चुत्वस्यासिद्धत्वं तु नुवचनसामर्थ्यादिति भावः। त्रिपाद्यां सत्र्यपरिभाषाप्रवृत्तेः पक्षद्वयेपीदमेव समाधानम्॥ यथोद्देशपक्षे इति॥ कार्यकाले तु असिद्धत्वान्न दोषः पूर्वान्तत्वेपीति भावः ॥

म॰ श॰ संज्ञायाम्। ङमिति प्रत्याहाररूपं ग्राम्॥ विकल्पेहूयस्यमद्योद्य इति॥ विभाषामद्धेच ये विधयस्ते नित्या इति पूङः क्त्वा चेति सूत्रभाष्योक्तेरिति भावः। नच तन्मद्ये पाठेन नित्यत्व
२॰ कल्पनेतन्मध्यपतितानां न परेन इत्यादीनामपि नित्यत्वापत्तिः। स्वरितत्वबलादनुवृत्तस्य पुनर्वाग्रहणान्निवृत्तौ कल्प्यमानायां स्वानन्तर एव तत्कल्पनेनोपपत्तावन्यत्र तत्कल्पनेम
नाभावात्। तस्मादुत्तरत्र वाग्रहणसामर्थ्यात्पूर्वसूत्रे एव वाग्रहणस्य निवृत्तिरिति भावः॥ तन्निषेधादिति॥ तस्य दोषइत्यस्य तु न प्राप्तिः। लत्वसाहचर्येण आदेशणत्वस्यैव ग्रहणा
यत्तु वदन्ति। इदं प्रयोजनं बहिरङ्गपरिभाषयागतार्थत्वात्त्वयुक्तमिति तन्नासिकम्। त्रिपादिस्थे न्तरङ्गे बहिरङ्गपरिभाषेयं न प्रवर्ततइति सुद्ध्युपास्य इत्यु दाहर
णेस्वोक्त्यासहेविरुद्धं चेत्यास्तां तावत्। सञ्चक्रमुरिति। इह स्नुत्वतु कोरसिद्धतामाश्रित्य नश्छवीति रुत्वं न शङ्क्यम्। रुत्वस्यासिद्धत्वात्। ङमोह्रस्वात्। ङम्प्रत्याहा
रः। संज्ञायां च कृतं टित्त्वसामर्थ्यात् संज्ञिभिः संबद्ध्यते। तेन यथासंख्यं ङ् इणुट् नुट् प्रवर्तन्ते॥ नित्यग्रहणं विस्पष्टार्थम्। हेमपर इति मयउञोवेइति च विकल्पइ यस्य
मद्ध्ये पाठादेव नित्यत्वलाभात्। सुगण्णीश इति। णपद्धोपैनस्यानिवत्पूर्वत्रासिद्धे निषेधात्। ङमुटः परादित्वं कुर्वन् आस्ते इत्यत्र णत्वप्रतिषेधार्थम्। अतएव ङमोह्रस्वा
दचि हे इति नास्ति। पर्रं णत्वं प्रतिपूर्वं स्यादित्वस्य सिद्धतया णत्वापत्तेरिति प्राञ्चः। यत्वाहुः। बहिरङ्गपरिभाषयागतार्थत्वादुभयमप्यसङ्गतमिति। तदपि
न्यासिकम्। राज्ञ इत्यत्रैव यथोद्देशे त्रैपादिकेन्तरङ्गेपरिभाषाविरहस्योक्तत्वेन प्राचां ग्रन्थस्य सौष्ठवात्। ॥
त्। पञ्चमीसमासस्यानित्यत्वाच्चेत्यपि बोद्ध्यम्। परादित्वमिति। ततः परस्याच इति व्याख्यानेनेत्यर्थः। ङमइत्यस्य षष्ठ्यन्तत्वमाश्रित्य ङमन्तपदावयवस्य ह्रस्वात्प
रस्य ङमो ङमुडजादौ पदे इत्यर्थेन पूर्वादित्वमेव कुतो न कृतम्। पदस्येति च मादुपधाया इत्यादाविवावयवषष्ठी। अजादौ पदे इत्युक्ते र्मा अभ्यासे इत्यतः शतरिम्नि
त्यादावनन्त्यस्यनेति भावः॥ बहिरङ्गपरिभाषयेति॥ नुटो बहिरङ्गतया सिद्धत्वादित्यर्थः॥ उभयम्। ङमुटः परादित्वं हे इति सूत्रकरणं च। पासिकम्। कार्यका राम॰
लसंबन्धि ॥ २७

दिगिति॥ दिगर्थस्तु तत्परिभाषायास्त्रिपाद्यामभाव एव। किंच यदि पदागमादिति न्यायेनागमानामागमिधर्मवैशिष्ट्यमपि बोध्यते इति। तेन नकारव्यवायवनस्यापि पदान्तत्वाण्णत्वनिषेधसिद्धिरित्युच्यते तर्हि ह्रस्वात्परस्य ङमन्तपदस्याचिपरे ङमुडित्येवार्थस्तथा सति स्यान्न प्रागुक्तमिति महदनिष्टमिति स्पष्टं चेदं सर्वं भाष्ये॥ प्रत्ययलक्षणप्रतिषेधादिति॥ इदं च प्रकृतसूत्रभाष्ये स्पष्टम्। अनुसर्त्तव्यत्वादिति॥ यदि तु स निषेधोऽपदादिविधाविति पर्युदासेन पदान्तत्वनिमित्तके विधावेवेतिन

{कथमन्यथा द्वियं त्रियं च स्वयमेवोक्तमिति दिक्। ननु परमदण्डिनावित्यादौ अन्तर्वर्तिविभक्त्या पदत्वान्नुट् स्यादिति चेन्न। उत्तरपदत्वे चापदादिविधाविति प्रत्ययलक्षणप्रतिषेधात्। अत एव परमवाचौ परमगोदुहौ परमलिहावित्यादौ कुत्वघत्वढत्वादीनि न। यत्तु प्राचा उञि च पदे इत्यतः पदे इत्यनुवर्त्याजादेः पदस्येति व्याख्यानान्नुट् इत्युक्तं तदनेन प्रत्युक्तम्। इहैवन लोपं वारयितुमुक्तरीतेरेव तेनाप्यनुसर्तव्यत्वात्। समः सुटि। यद्यपि मोऽनुस्वारेण सिद्धं तथाप्यनुनासिकत्वत्रिसकारत्वसिद्ध्यर्थमिदम्। अत्रानुनासिकः। अयमधिकारो विधिर्वेति द्वैतम्। आद्येऽत्रग्रहणमनर्थकम्। अधिकारादेव रुप्रकरणलाभात्। तु शब्दस्त्वधिकारपक्षे परस्मात्कार्यिणो विशेषद्योतनार्थः परस्य नित्यं रुत्वं पूर्वस्य तु वानुनासिक इति। विधिपक्षे व्यर्थः॥

लुमते निसूत्रभाष्ये स्पष्टम्॥ किंचोत्तरपदस्य कार्यित्वे एव तत्प्रवृत्तिरत एव माषकुम्भवापेनेत्यादौ पदव्यवायेपीति निषेधसिद्धिरित्युच्यते तदा प्राचीनोक्तमजादेः पदस्येति व्याख्यानमेव शरणम्। स्पष्टं चैवं व्याख्यानं प्रकृतसूत्रे उञि च पदे इत्यत्र च भाष्ये। तेन निषेधेन सिद्धमिति प्रकृतसूत्रभाष्योक्तिस्त्वेकदेशिन इत्यास्तां तावत्। त्रिसकारकत्वेति॥ न च पुनर्द्वित्वेन तदपि सिद्धम्। लस्येलक्षणस्येति न्यायात्। अत्र चेदमेव ज्ञापकं बोध्यम्। अनर्थकमिति। इदमुपलक्षणं प्रतिसूत्रमावृत्तौ गौरवं चेत्यपि बोध्यम्।

स्पष्टार्थमिति॥ अनेनतुग्रहणमधिकारपक्षेपिपरस्यरुस्ततःपूर्वस्यानुनासिकइत्यर्थस्यस्पष्टंबोधनार्थंवाशब्दवदितिसूचितम्।विधिपक्षेत्रग्रहणंतुएतद्प्रकरणेइत्यर्थलाभा
र्थम्॥वस्तुतोत्राधिकारत्वमेवोचितम्।मतुवसोरुरितिसूत्रेकृतयोर्वनउपसंख्यानंविभाषाभवदित्यनयोरुदाहरणेभाष्येऽनुनासिकाद्यनुच्चारणात्।विधित्वेतुतत्रप्रवृत्तिर्दुर्वारैव।
अधिकारत्वेतूत्तरत्रैवप्रवृत्तिःस्पष्टंचेदंवृत्तावितितत्त्वम्।ल्यब्लोपेइति॥दिग्योगलक्षणातुन।अत्रानुस्वारपूरानुनासिकःपूर्वस्यतुवेतिन्यासेनसिद्धावनुनासिकात्परइत्यस्यवैय

वाग्रहणंस्पष्टार्थम्।अनुनासिकात्परइतिज्ञापकादेवसिद्धेः।नहिविकल्पंविनाऽनुनासिकाभावपक्षइतिसंभवति।इदमेवध्वनयितुंवृत्तौतुवेतिशब्दौनोक्तौ।अ
नुनासिकात्।ल्यब्लोपेपञ्चमीत्याह।अनुनासिकंविहायेति।एवंचसंसर्गवद्विप्रयोगस्यापिविशेषावगतिहेतुत्वाद्वत्सा ॥ नीयतामित्यत्रेवसंभावितानुनासि
कगुणकएवउपस्थितत्वादाकाङ्क्षितत्वाच्चावधित्वेनसंबध्यतइत्यभिप्रेत्याह।रोःपूर्वस्मादिति।अनुस्वारागमइति।आगमत्वंचपरशब्देनैवलभ्यतेपूर्वौतुताभ्या
मैजित्यत्रपूर्वशब्देनेचोरिवेतिभावः।विसर्जनीयस्य।खरीति।एतच्चमण्डूकप्लुत्याखरवसानयोरितिसूत्रादनुवर्तते।नन्वनुस्वारस्यानच्त्वात्ततःपरस्यद्वित्वंनस्या
द्वैत्यतआह।अनुस्वारविसर्गेत्यादि।अकारोपरीति।यदित्विकारोपरिपठ्येरन्तर्हिपयःसुयशःसुइत्यादौइणःपरस्येतिषत्वंस्यादितिभावः।अच्त्वादिति।नचैवं
हरिःकर्त्ताहरिंस्मरेदित्यादौयणादिप्रसङ्गः।त्रिपादीस्थत्वेनविसर्गादीनामसिद्धत्वात्।अनुस्वारस्यापिद्वित्वइति।अपिशब्दात्ककारस्य॥ ॥र्थ्यापत्तेरितिभावः॥परशब्देनैवे

ति॥प्रसिद्धावेवकारः॥मण्डूकेति॥एकदेशेस्वरितत्वप्रतिज्ञयेत्यपिबोध्यम्।अतएवावसानेनसः।पूर्वेणसंनिकर्षरूपासंहितात्ववसानेप्यस्त्येव।अतएवसंहिताधिकारेऽवसानकार्य
पाठःसंगच्छते॥षत्वंस्यादिति।अतएवपुंस्वित्यादावुकारंनिमित्तीकृत्यानुस्वारव्यवधानेषत्वमाशङ्क्यनुम्स्थानिकानुस्वारस्यैवनुम्विसर्जनीयेतिसूत्रेग्रहणान्नेतिभाष्यंसंगच्छते।इका
राद्युत्तरंपाठेहिअनुस्वारमिणंगृहीत्वाषत्वंदुर्वारंस्यादितिभावः॥यणादीति।पूर्वसवर्णदीर्घ आदिशब्दार्थः।अयंपाठोऽनित्यः।अट्कुप्विति सूत्रेनुस्वारोपलक्षणनुम्ग्रहणात्।अतएवहरिं

जयतीत्यादौ भस्लां जयः श्रीतिनेति वेद्यामिति ॥ कछिङ्नेत ॥

म. श. अत्र चेति॥ख्यातेः सार्वधातुकमात्रविषयत्वेइत्यर्थः॥ सज्ञेति॥ एवं च नदुनरभावप्रत्ययेन सस्थानशब्द उच्यते। तेन स्ववाच्यो जिह्वामूलीयो वार्त्तिके लक्ष्यते। कुत्वं कस्मान्न भवती
२९ त्यत्रैवेति भावः। कृशादीति पाठे प्रयोगेवर्त्वप्रवृत्तिरिति भावः॥ इत्युक्तत्वादिति॥ एवं च माधवेनेष्टापत्तिं कर्तुमर्हइत्यर्थः॥ अनभिधानस्येवेति। खशादेरनभिधानस्येत्यर्थः॥ गौ
रवेति। खशादित्वस्वीकृत्यानभिधानस्वीकारापेक्षया तदस्वीकृत्यैव ख्यातेरार्धधातुकेऽनभिधानस्यैव स्वीकारे लाघवमिति भावः। रुत्वमित्युपलक्षणं जिह्वामूलीयस्य षत्वस्य च॥
अत्र चेत्सस्थानत्वं नमः ख्यात्रे इत्युत्तरवार्त्तिकं प्रमाणम्। सस्थान इति जिह्वामूलीयस्य प्राचां सज्ञा। सइहना शर्परे विसर्जनीयं इत्यस्य प्रवृत्तेरिति भावः। यदि स्व
तन्त्रोपि धातुरार्धधातुकेइष्येत तदा जिह्वामूलीयस्य दुर्वारतया इदं वार्त्तिकमसंगतं स्यात्। यत्तु हरदत्तमाधवादिभिरुक्तं ख्याधातुरपि खशादिर्यत्वविधिरप्युभय
साधारण इति। तच्चिन्त्यम्। भाष्ये चासिद्धउपक्रमात् सार्वधातुकेपि खशादिप्रयोगापत्तेश्च। न चेष्टापत्तिः। माधवेनार्धधातुके चेवायं खशादिरित्युक्तत्वात्। सार्वधातुके
ऽनभिधानस्यैव शरणीकर्तव्यत्वापत्त्या गौरवग्रस्तत्वाच्चेत्यास्तां तावत्। स्यादेतत्। बहवः पुमांसोस्मिन्कुले बहुपुमस्ख्यातीत्यत्र रुत्वं स्यात्। उरः प्रभृतिषु पुमशब्दस्ये
कवचनान्तस्यैव पाठान्नेकप्। सार्वधातुके च ख्यातेः प्रयोगो निर्बाध एवेति चेत्। इष्टापत्तेः। संहितायामविवक्षायां तु रुत्वं नेति स्पष्टमेव। यत्तु प्राचा ख्याधातौ नेति केचि
दित्युक्तं तत्र यदि ख्याआदेश इत्यर्थस्तर्हि केचिदित्यनुचितम्। स्वतन्त्रे धातौ चेत्तर्हि सार्वधातुकविषयेपि निषेधः स्यात्। न चेष्टापतिः निर्मूलत्वात्। चक्षीङ्ख्याञ्स्वेति। यत्तु प्राचा
त्राहीत्युक्तं तत्र परस्मैपदमयुक्तम्। त्रायतेर्ङित्त्वात्। त्रायत इति त्राः सद्वाचरतीत्यर्थेकर्तरि क्विबन्तादाचारक्विपि वा बोध्यम्। प्रशानिति। प्रपूर्वाच्छाम्यतेः क्विप् ॥
नमः ख्यात्रिति। ख्याती स्वादौ॥ त्रायतेर्ङित्त्वादिति॥ अत्र त्रायेतेइत्युक्त्या सत्यपि परस्मैपदे त्रायेत्यस्य प्राप्त्या त्राहीत्यस्यासिद्धिः सूचिता॥ आचारक्विपि वेति॥ नामधातौ मूलधातोर्ङि
त्त्वादाश्रित्यानुदात्तङित इत्यादेः प्रवृत्तिर्नेत्यभिमानः। अत एव त्राहि मां पुण्डरीकाक्षेति संगच्छत इति भावः। आर्षं तत्र तदित्यन्ये॥ शाम्यतेरिति॥ ननु शानन्नेजनेइत्यतः तस्य पदान्तेन लोपेन रा.म.
नान्तत्वासंभवादिति भावः। न चाप्रशानिति पर्युदासेन नान्तग्रहणे सिद्धेन इति व्यर्थमिति वाच्यम्। अस्य लक्षणवशसंपन्ननान्तत्वेन पर्युदासेनापि लक्षणवशसंपन्ननकारान्तानामेवाप्तेः॥ २९

ननु कुप्वोरित्यत्र जिह्वामूलीयस्य खर्त्वाद्विसर्गे तस्य सत्वे समश्रयणापत्तिरत आह॥ सूत्रे इत्यादि। शर्त्वादित्यन्तेन विसर्गलोपश्च सत्वापवादः। एवं च सूत्रे निर्विसर्गपाठ इति भावः। सविस
र्गपाठे त्वाह॥ वा शरीति॥ स च सत्वापवादः। खर्पर इति चनैकल्पिकमिति भावः॥ उच्चारणार्थाविति॥ तयोरुच्चारणस्य तौ विनाऽसंभवेनान्तरीयकतयोरुच्चारणं न तु तयोर्विधेयत्वम्।
किं तु तन्मात्रेण तयोर्लक्षणव्याख्यानादिति भावः॥ चाद्विकल्प इति॥ निपातानामनेकार्थत्वाच्चशब्दो विकल्पार्थ इति तदाशयः॥ सत्वप्रसङ्गादिति॥ चानुकृष्टविसर्गस्तु सत्वापवा
अनुनासिकस्येति दीर्घः। मो नो धातोरिति नः। तस्यासिद्धत्वान्नलोपो न। नॄन्पे। पकारो पर्यकार उच्चारणार्थः। तेन नॄः पुनातीत्यादि सिद्धम्। उभयथर्क्ष्विति। उभय
थेत्यनुवृत्तेर्विकल्पः फलित इत्याशयेनाह। रुः स्याद्वेति। कुप्वोः। सूत्रे खर्परत्वाद्विसर्गः। जिह्वामूलीयस्य खर्त्वात्। खर्परे शरीति विसर्गस्य लोपः। जिह्वामूलीयस्य श
र्त्वात्। वा शरीति विसर्ग एव वा। आदेशयोः कपावुच्चारणार्थौ। चाद्विसर्ग इति। यत्तु प्राचा चाद्विकल्प इत्युक्तं तन्न। ᳵकᳶपाभ्यामुक्ते विसर्गस्य सत्वप्रसङ्गात्। कानाम्रेडि
ते। को[illegible] आम्रेडितग्रहणं यत्र द्विरुक्तिस्तत्रैव यथा स्यादिह मा भूत्। कान्कान्पश्यसि। अत्रैकः किंशब्दः प्रश्ने द्वितीयः क्षेपे। कान्कुत्सितान्पश्यसीत्य
र्थः। कस्कादिषु च। अत्र प्राचा विसर्जनीयस्य ᳵकᳶपौ नेत्युक्तं नासौ सूत्रार्थः। ᳵकᳶपयोरस्वरितत्वात्। अनभ्यासप्रकृतत्वात्। किं त्वार्थिकार्थकथनं तदिति ध्वनयन्नाह। ᳵ
कᳶपयोरिति। कौतस्कुत इति। कुतः कुत आगत इत्यर्थे अव्ययात्यप्प्राप्ते गणपाठसामर्थ्यादण्। सर्पिष्कुण्डिकेति। नित्यं समास इत्येव सिद्धे इह पाठस्य प्रयोजनं तु तत्रै
व वक्ष्यते। सेनासुरेति। यदि हि कुस्य तुक् स्यात्तर्हि कुस्य चत्वे सति चद्वयं स्यात्। सन्निपातपरिभाषया चत्वाप्रवृत्तौ तु छकारोपरि चकारः श्रूयेतेति भावः॥ इति हल्सन्धिः॥
द इति नास्माकं दोष इति भावः॥ गणपाठसामर्थ्यादिति॥ एतेन पञ्चम्यन्तात्स्वार्थे तसिल्विधानेनाव्ययादुत्सर्गतः प्रथमैकवचनोत्पादेन पञ्चम्यन्तत्वाभावात्तत आगत इत्यर्थे कथ
मणित्यपास्तम्। अव्ययानामिति टिलोपः। संनिपातेनेति॥ असिद्धविषयेपि सा प्रवर्तते। यद्वा पूर्वत्र कर्तव्येऽसिद्धत्वेपि तत्र कृते उत्तरस्यासिद्धत्वे मानाभाव इति नासिद्धत्वेन सन्निपा
तपरिभाषाप्रवृत्तिप्रतिबन्धः शङ्क्य इति भावः। वैकल्पिकेष्वपि भावानुष्ठानस्यैवौचित्यं फलाधिक्यायेति तात्पर्यम्॥ इति हल्सन्धिः॥

म·श· नैत्येवोच्येतेति॥कुप्वोरित्यत्रापि नेनसत्वं नेत्येवानुकृष्यमिति भावः॥स्यातामिति॥सत्वनिषेधे खरवसानयोरिति विहितविसर्गस्य सत्वादिति भावः।विकारमात्रमिति॥तत्सामर्थ्या
२० च्चेनतेत्येव प्रत्यापत्तावपि नतावितिभावः।एतेनैतद्धि हितस्यस्थानेपि तौ स्यातां।किंचास्यैवतौस्यातां खरवसानयोरिति विहितस्यत्वेतयोरसिद्धत्वाद्विसर्जनीयस्येति सत्वमेवस्यादि
त्यपास्तम्।उत्तराधिकारेण खरवसानयोरिति विहितविसर्गस्यैवादेशश्च।विसर्जनीयस्य सः शर्परे इति तु न सूत्रं कृतम्।वा शरीत्यनेन सत्वविकल्पेन सिद्धावपि कुप्वोरित्यत्र शर्परे इ
त्यनुवृत्त्यानयोः शर्परे प्रवृत्तावपि कुप्वोरिति सूत्रेवाद्विसर्गलाभानापत्तेः।व्यत्ययेनेति॥सोत्रत्वादिति भावः।इति क्लेश इति॥किंच पूर्वत्रेत्यादौ षत्वादिवारणाय कुप्वोरित्यनुवर्त्य
शर्परे।सत्वादेरयमपवादः।यदि तु शर्परे नेत्येवोच्येत तर्हि प्रकृते सत्वे निषिद्धेपि कुप्वोः ᳲकᳳपौ स्याताम्।वासःक्षौममद्भिः प्सातमिति।विसर्जनीयवचनात्तु वि
कारमात्रं बाध्यते इत्याशयेनाह।नत्वन्यदिति।तदेव स्फुटयति।इहेति।सोपदादौ।अपदाद्योरिति।सूत्रे तु व्यत्ययेनैकवचनम्।यदि तु खरविशेष्यतेः पदा
दौ खरीति सन्देहस्य यथाश्रुतं साधु।किं तु खरीति षष्ठ्यन्तकृत्यानुवर्त्यमिति क्लेशः।नचानुवृत्तेरुत्तरत्राप्यावश्यकता।खरं विनाविसर्गस्य दुर्लभत्वेन तदनुवृत्तेर्निष्फ
लत्वात्।पाशकल्पककाम्येष्विति।वृत्तिः।संभवदर्शनमेतन्नतु परिगणनम्।अन्यस्यासम्भवात्।प्रातःकल्पमिति।अधिकरणशक्तिप्रधानस्यापि प्रातःशब्दस्ये
ह वृत्तिविषये शक्तिमत्परत्वम्।दोषाभूतमहः दिवाभूता रात्रिरितिवत्।गीःकाम्यतीति।इहेणः षइति षत्वं न।तत्रापि काम्येगेरेवेत्यस्यानुवृत्तेः।यदि
तु तत्रैवेदं पठ्येत तर्हि षत्वमात्रप्रतिषेधेपि पूर्वेण सत्वं स्यात्॥ ७ तदन्तर्गते खरीति व्याख्याने सुतरां क्लेश इत्यपि बोध्यम्॥अन्यस्यासंभवादिति।अयं
भावः।अपदे इत्येव कुप्वोरित्यनुवर्त्य यस्मिन्विधिरिति परिभाषया कपवर्गादौ अपदे इत्यर्थेन सिद्धे आदिग्रहणमपदस्यैवादिरित्यर्थलाभार्थं तेनोरःकाम्यतीति विग्र
हे सुब्लुक्तेः पूर्वं समासे पुरःकेणेत्यादौ न सत्वम्।आदिग्रहणसामर्थ्येन तत्सन्ध्यावधारणेन च पदत्वयोग्यप्रातिपदिकानवयवस्यैव ग्रहणादिति॥शक्तिमत्परत्वमिति॥ रा.म.
अव्ययत्वं तु भूतपूर्वगत्या बोध्यमिति भावः॥षत्वं नेति॥सत्वं नेत्यपि बोध्यम्॥तत्रापि।षत्वविधावपि।एवं चात्र पाठात्तत्रानुवृत्तेश्चोभयमपि नेति बोध्यम्॥ ३०

म॰श॰ नैप्रवर्ततइति। अतएवतिरश्चेत्यादौ सस्यषुत्वसिद्धिः। एतच्चेष्टानुरोधेनसंयोगादिलोपलक्षणत्वातिरिक्तविषयं तेन तत्र स्थानिवत्त्वं भवत्येवेति नस्य दोषइत्याद्यपि न वाचनिक
३२ मितिभावः॥ मातुः कार्यमिति॥ सिद्धान्तव्याख्यानेप्यत्रदोषः। तथाहि। सकारसन्निधावकारोनैवप्रत्ययः समुदायनिवेशित्वात्प्रत्ययत्वस्येति तदादेशस्योरः प्रत्ययत्वाभा
वेनविसर्गस्य तत्संबन्धित्वाभावात्। यस्तूत्वेकृते वशिष्टः सकारः प्रत्ययसञ्ज्ञकः सलुप्तएवानचान्तादिवच्चेत्यस्य पूर्वस्य परस्य समुदायस्यान्तादिभ्यां वर्णाभ्यां पृथग
वस्थिताभ्यां येव्यवहाराः प्रत्ययत्वादयस्तेएकादेशविशिष्टस्यापीत्यर्थादुरसित्यत्र प्रत्ययत्वस्य सुलभतया एकदेशविकृतन्यायेनोरित्यस्य प्रत्ययतया न दोषइतिवा
च्यम्। त्रिपाद्या असिद्धत्वेन तत्रान्तवत्त्वाप्रवृत्तेः। स्थानिवत्त्वेन तु न निर्वाहः। उपात्तस्य स्थानिनोऽकारस्य प्रत्ययत्वाभावात्। प्रत्ययसंबन्धित्वं तु न स्थानिवत्त्वलभ्यमशा

ज्ञापकं चविशेष्यपेक्षम्। तेनाचः परस्मिन्निति पाद्यां न प्रवर्तते। एवंचपूर्वत्रासिद्धेनस्थानिवदितिसिद्धान्तउक्तयुक्तिमूलको न तु वाचनिक इति प्रपञ्चितं शब्दकौ
स्तुभेस्माभिः। नन्वेवं मातुःकार्यमित्यादौ षत्वं स्यादिति चेन्न कस्कादिषु भ्रातुष्पुत्रशब्दस्य पाठेन ङसिङसोरत उकारात्परस्य सस्य षत्वं नेति ज्ञापनात् ॥

स्थानीयत्वात्। सर्वे सर्वपदादेशा इतिन्यायेन मातृअसित्यस्य स्थानित्वे ऽप्यसित्यस्य स्थानित्वालाभे नोरित्यस्य प्रत्ययत्वमलभ्यमिति। एतदेवाभिप्रेत्य प्रकृतसूत्रे
उरण्रपर इतिसूत्रेच भाष्ये उक्तमिहकस्मान्न भवति पितुः करोति अप्रत्ययस्येति षत्वं प्राप्नोति अप्रत्ययविसर्जनीयस्येत्युच्यते प्रत्ययविसर्जनीयश्चायं लुप्यते त्र प्र
त्ययविसर्जनीयोरात्तस्येति। लुप्यते त्रेत्यादेरयमर्थः। प्रत्ययविसर्जनीयत्वेन यस्त्वयाभिमतः सलुप्यते न दृश्यते स्थानिनः प्रत्ययस्यैव लोपादिति बोध्यम्। ज्ञापनादिति॥ त्रिपा रामः
द्यामप्यन्तवत्त्वप्रवृत्तिज्ञापनद्वारेतिभावः। अतएवामीस्सीरपेयेत्यादौ मीत्वणत्वे सिद्धान्तः। अत्रैकारस्यादसंबन्धित्वं पेइत्यस्यैकाजुत्तरपदत्वं चान्तवद्भावाधीनमिति बोध्यम्॥ २१

अधिकरणमेवेति॥प्रत्ययस्यसंबन्धीयोविसर्गस्तस्यनेत्यर्थइतितद्भावः।अगत्याचवाक्यभेदासमर्थसमासवैयधिकरण्यान्वयरूपदोषत्रयसहनमितितदभिमानः॥नातीवेति॥वैयधि
करण्यान्वयफलस्यकविभिःकृतमित्यादेःप्रत्ययसंबन्धिभिन्नस्यविसर्गस्येत्येवंलक्षणयासामानाधिकरण्येनापिसंग्रहसंभवादितिभावः।व्याख्यादर्शोक्तसामानाधिकरण्येतुलेशतोपि
तदद्राभावादतीवेत्यसंगतमेवस्यादिति।अनेनोक्तव्याख्यायाएवस्वाभिमतत्वंसूचितवानित्यलम्॥परम्परयेति॥एकादेशशास्त्रसंपन्नरेफस्थानिकत्वेनविसर्गस्यैकादेशशास्त्रनिमित्त
कत्वमितिभावः॥प्रचुरःपाठइति॥ओषधीस्कृधीत्यादौशसैकादेशेकःकरत्करतिकृधीतिषत्वनिवृत्तिश्चतत्फलमुक्तम्।मूलेतुतस्यफलस्यछान्दसत्वाच्छन्दसिवाप्रेत्यतद्गणःपदस्यत्वनि
वृत्त्याःदोषाच्चषष्ठ्यन्तमेवपठितमितिदिक्॥प्रामादिकमिति॥पदादित्वेनसोपदादावित्यस्याप्राप्तिरितिभावः।साहचर्यमिति॥नवरामलक्ष्मणावित्यादौदृष्टसाहचर्यसंबन्धस्याभि

एवंचाप्रत्ययस्येत्येतदपिव्यधिकरणमेवेतिहरदत्तेनोक्तंनातीवादर्तव्यम्।मातुरिति।अत्रहिऋतउदित्येकादेशशास्त्रंविसर्गंप्रतिपरम्परयाप्रयोजकम्।आ
करेत्वेकादेशशास्त्रनिमित्तादितिप्रचुरःपाठः।तत्रएकादेशशास्त्रंनिमित्तंयस्यउकारस्यतस्मादित्यर्थः।मुहुःकामेति।इहकुपो ᳲकᳲपावितिप्रवर्तते।वृत्तौमु
हुस्कामेतिसकारःक्वचित्पठ्यतेतत्प्रामादिकमितिहरदत्तः।द्विस्त्रिश्चतुरिति।इहहित्रिभ्यांसुजन्ताभ्यांसाहचर्यात्चतुःशब्दोपिसुजन्तएवग्रहीष्यते।कृत्वो
र्थग्रहणंज्ञापकम्।साहचर्येणनसर्वत्रव्यवस्थापकमिति ॥ ७ धानियामकत्वंदृष्टम्।नचैषांक्वापिसाहचर्यसंबन्धोगृहीतइतिकथमेतदितिवाच्यम्।पञ्चम्य

पाङ्परिभिरित्यनेनलक्षणादिद्योतकपरियोगेपञ्चमीशङ्कायांयद्यप्ययंपरिर्दृष्टापचारोवर्जनेचावर्जनेचायंस्वल्पशब्दोःदृष्टापचारोवर्जनार्थएवकर्मप्रवचनीय
स्तस्यकःसहायोभवितुमर्हतिअन्योवर्जनार्थात्।यथास्यमोःसहायेनार्थइतिगौरेवानीयतेनाश्वोनगर्दभइतिकर्मप्रवचनीययुक्तइतिसूत्रस्यभाष्येणसदृशानामेव
प्रयोगेसहायत्वमित्यर्थस्यप्रतिपादनेनासक्तेः।परिभाषायांसहचरितशब्देनसदृशस्यैवग्रहणंसहचरस्यभावःसाहचर्यम्।सहचरणंचसदृशयोरेवेतिसाहचर्यशब्देनसा
दृश्यमुच्यते।सदृशयोरेवसहविवक्षातयोरेवचसहप्रयोगः।रामलक्ष्मणावित्यादावपिसादृश्यमेवनियामकमितिदिक् ,॥

म.श. अर्थवतश्चेति॥प्रतिपदोक्तस्यचेत्यपिबोद्धव्यम्॥नित्यंषइति॥भाष्यप्रामाण्येनाव्युत्पत्तिपक्षस्यैवाङ्गीकारेणव्युत्पत्तिपक्षेप्रत्ययसंबन्धित्वात्कथंषत्वमितिनशङ्क्यम्।अतएव
२२ चतुष्पाद्योढ त्रित्यादिनिर्देशसंगतिः॥इसर्थइति॥अप्रत्ययन्तत्वपूर्वस्सूचितम्॥तद्भाष्येति॥अनुत्तरपदस्थस्येतिकिं परमसर्पिः कुण्डिकेतिनित्यंसमासेइतिसूत्रस्यभाष्येइत्य
र्थः।आवन्तप्रयोगस्सूचितमर्थस्फुटप्रतिपत्तयेआह॥नलयस्य इत्यादि॥इतिविसर्गसन्धिः॥तस्यप्रत्ययविधौति॥अतएवयेनविधिरितिसूत्रेभाष्येप्रत्ययविधिभिन्नेवृत्ति
तेनदीधीवेवीटामित्यत्रधातुसाहचर्येपिआगमस्येटोग्रहणम्।उभयत्रविभाषाचेयम्।चतुरित्यस्येदुदुपधस्येतिप्राप्तेरितरयोस्त्वप्राप्तेः।नचतयोरपिइसुसोःसाम
र्थ्यइत्यनेनसिद्धिःशङ्क्या।इसः प्रत्ययस्यअर्थवतश्चतत्रग्रहणात्।चतुष्कपालइति।इदुदुपधस्येतिनित्यंषः।व्यपेक्षाविरहेपीति।तिष्ठतुसर्पिष्कुण्डिकामानयेत्या
दावित्यर्थः।व्यपेक्षायामिति।इदंसर्पिष्कुण्डिकायामित्यत्रेत्यर्थः।यत्तुपारायणिकाआहुः।कस्कादिषुसर्पिष्कुण्डिकादीनांपाठउत्तरपदस्थत्वेपिषत्वार्थइतितद्भाष्य
विरोधादुपेक्ष्यम्।अयःसहितेतिनत्वयसोविकारःजानपदेतिङीषप्रसङ्गात्।अयस्कर्णीति।अयइवकर्णौयस्याः।नासिकोदरौष्ठेत्यादिनाङीष्।अधःशिरसी॥
एतयोरिति।सूत्रेतुषष्ठ्याःस्थानेप्रथमाबोद्ध्या।अधस्पदमिति।मयूरव्यंसकादित्वात्समासः।शिरस्पदमिति।षष्ठीसमासः॥इतिविसर्गसन्धिः॥ससजुषोरुः।पदस्ये
त्यनुवृत्तंससजूभ्यांविशेष्यतेविशेषणेनतदन्तविधिः।नचसजूःशब्दांशेग्रहणवताप्रातिपदिकेनतदन्तविधिर्नास्तीतिनिषेधःशङ्क्यः।तस्यप्रत्ययविधिविषयत्वात्।
सान्तंसजूष्शब्दान्तंचयत्पदंतस्यरुःस्यात्सचालोन्त्यस्य।एवंस्थितेफलितमाह।पदान्तस्येति।सजूष्शब्दस्येति।तदन्तस्यपदस्येत्यर्थः ॥
त्वादेगृह्यमाणप्रातिपदिकेनापितदन्तविधिप्रतिपादनेस्वसापरमस्वसेत्युदाहृतंचसंगच्छते।अस्यसमासप्रत्ययविधाविति निषेधानुवादकतायाएवयुक्तत्वाच्च।यत्त्व
सज्ञापर्वकस्यपूर्वाच्चेतिसूत्रम्।अन्यथापूर्वादिनिरित्यत्रतदन्तविधिनैवसिद्धेकिंतेनतस्मात्प्रत्ययविधौप्रतिषेधइत्यस्यैवज्ञापकमितिवक्तुंशक्यम्।अतएवतदन्तविधि शम:
सूत्रभाष्येसमासेत्यादिनिषेधवदस्यनकथनमितिबोद्धव्यम् ॥ ३२

प्रत्याख्यातत्वादिति॥ फलाभावात्सूत्रान्तात् कृदन्तात् इत्यादावन्तग्रहणसामर्थ्येन व्यपदेशिवद्भावाप्रवृत्तेरिति भावः॥ नन्वेकगोपूर्वादित्यस्य केवलैकशब्दगोशब्दयो
रप्रवृत्त्यर्थत्वादावश्यकी सूत्रान्ताद्दशान्तादित्यर्थे॥ तत्रान्तग्रहणं तु प्रत्ययविधौ तदन्तग्रहणनिषेधात्तदन्ते प्रवृत्त्यर्थमावश्यकमिति न तत्सामर्थ्याद्व्यपदेशिवद्भावाप्रवृत्ति
र्वक्तुं शक्या। नच भयाद्यपदेशिवत्सूत्रान्तादित्यादौ विशेषणविशेष्यभावव्यत्यासेन सिद्धेऽन्तग्रहणसामर्थ्यसूपपादमिति कौस्तुभोक्तरीत्या निर्वाहः। समासप्रत्ययविधावित्या
दीयानां सूत्रशब्दादेर्विशेष्यत्वेन तात्पर्यग्राहकस्य सत्त्वेन विपरीतस्य तस्य वक्तुमशक्यत्वात्। नचास्यां मानाभावः। पूर्वात्पूर्वादिनिरित्येकयोग एव कर्तव्ये पृथग्योगकरणस्य मान
त्वात्। नचेष्टादिभ्य इत्यत्रानुवृत्त्यर्थं तथापाठः। अत एवानिष्टीत्यादिसिद्धिरिति वाच्यम्। ज्ञापकपरभाष्यप्रामाण्येनानिष्टीत्यादिप्रयोगाणाममनिष्टत्वात्। एकयोगेऽपि तन्त्रेण स्व
त्वेन सजुषइत्यादौ नातिप्रसङ्गः। नच सजूरित्यत्राव्याप्तिः। व्यपदेशिवद्भावोऽप्रातिपदिकेनेति निषेधादिति वाच्यम्। येन विधिरिति सूत्रे शब्दकौस्तुभे
स्य प्रत्याख्यातत्वात्। व्यपदेशिवद्भावोऽप्रातिपदिकेनेति ग्रहणवता चेति च परिभाषाद्वयमपि प्रत्ययविधिविषयकमिति दिव उदिति सूत्रे कैयटहर
दत्ताभ्यामुक्तत्वाच्च। एवं च परमसजूर्भ्यामित्याद्यपि निर्बाधम्। एवं स्थिते इह सजुषशब्देन तदन्तविधिर्नेति प्राचामुक्तिरापाततः इत्यवधेयम्॥ भो
भगो॥ असंधिः सौत्रः इति। भगोअघोशब्दयोरोकारस्याकारस्य च पूर्वरूपं सौत्रत्वान्नेत्यर्थः ॥

रितत्त्वबलेन नान्तत एवोत्तरत्रानुवृत्तौ बाधकाभावाच्च। व्यपदेशिवद्भावस्य प्रातिपदिके निषेधस्वीकारादेव नान्तादसंख्यादेरिति चरितार्थम्। अन्यथा पञ्चम इत्यादा
पि व्यपदेशिवद्भावेन संख्यादित्वात्तद्वैयर्थ्यं स्पष्टमेवेत्यरुचेराह॥ व्यपदेशिवद्भाव इत्यादि॥ दिव उत्सूत्रे इति। दिव उत्सूत्रं यत्रेति बहुव्रीहिणा तत्सूत्रघटिते पादे इत्यर्थः
एवं च दिव उदिति सूत्रे हरदत्तेनेन्दुं चेति सूत्रे कैयटेनोक्तमिति भावः॥ येन विधिरिति सूत्रे कैयटेन सूत्रोपात्तनान्तादिशब्दविषयतास्येति वदतास्पष्टमेव प्रत्ययविधिवि
षयतोक्ता। असमासे निष्कादिभ्य इति सूत्रे भाष्ये कैयटे च स्पष्टमनयोः प्रत्ययविधिविषयतोक्तेति दिक्॥ इत्याद्यपीति॥ आदिना सजूर्भ्यामिति ॥

ननु सान्तानुकरणे विभाषा भवदिति वार्त्तिकनिष्पन्नानां ग्रहणं न स्यादत आह॥ रान्तं वेति॥ कृतरुत्वानुकरणमित्यर्थः॥ अलोन्त्यस्येति॥ न च भो राजसे इत्यादौ रोरीति लोपे कृते एकदेशविकृतन्यायेन भोःशब्दत्वादन्त्यस्यौकारस्य यत्वापत्तिरिति वाच्यम्। तेषामभिधानेऽप्यर्थं रोः पूर्वस्य च रोरिति व्याख्यानेनादोषो बोध्यः। अत्र पक्षे भोशब्दान्तद्वन्द्वेष छ्याः सौ त्रो लुक् बोध्यः॥ अवधेयमिति॥ यदि ग्रहोलिटीति सूत्रे इटः स्थानित्वेन निर्देशादिति तत्रानलाश्रयणं प्रकृते तु विसर्गे रेफस्यैव स्थानित्वादेष प्यमल्विधावित्यस्यस्थान्यल्वृत्तिधर्माश्र

यदि तु भोसू भगोस् अघोस् इति सान्तं रान्तं वा अनुकृत्य भो इत्यादीनां ग्रहणमलोन्त्यस्य यः स्यादपूर्वस्य रोश्चेति व्याख्यायते तर्हि असन्धिर्न्याय्य एव। युक्तं चैतत्। अन्यथा विभो रिदं सुप्रभा गौर्यस्य स सुप्रभगुस्तस्य ——— सुप्र भगोरिदं रघोरिदमित्यत्रापि यत्वापत्तेः। भवति हि यं भोशब्दादिपूर्वो रुः। न चात्र भोशब्दादेर्लाक्षणिकत्वाद् ग्रहणम्। विभाषा भवद्भगवदघवतामोच्चावस्येति वार्त्तिकेन निष्पन्नानां भवदादिप्रकृतिकानां भोशब्दादीनामपि लाक्षणिकत्वाविशेषात्। अनर्थकत्वमप्युभयत्र तुल्यम्। रु विशिष्टानामेवार्थवत्त्वात्। ननु रोरुकारस्यानुबन्धकत्वाद्रेफमात्रं विसर्गस्य स्थानि तथा चानल्विधाविति स्थानिवद्भावो न स्यादित्याशङ्क्याह। नह्ययमिति। यथा ग्रहीदित्यत्र ग्रहोलिटीति दीर्घस्य स्थानिवद्भावेनेट् त्वादिट ईटीति प्रवर्त्तते। एवमिहापि विसर्गस्य रुत्वाद्यत्वं प्रवर्त्ततेतिभावः। तथा च स्थानिवत्सूत्रे भाष्यम्। विशिष्टमेषोह्यनलमाश्रयते इटं नामेति। इतोपि हेतोर्धात्वङ्गे त्यापभरिगणनमशुद्धमित्यवधेयम्। निपाताइति। भोमगोइतिसूत्रे निर्दिष्टत्वादेराकृतिगणत्वात्तत्र बोध्याः ॥ ॐ येस्थानिसंबन्ध्यल्वृत्ति धर्माश्रयेचनेत्यर्थस्तत्रस्थान्यल्त्वेरेफवृत्तिरुत्वं स्थानिवत्त्वेन दुर्लभमल्विधित्वात्स्पष्टं चेदं प्रकृतसूत्रे भाष्ये इत्युच्यते वदापयः स्वित्यत्र यत्ववारणाय शीति। तत्र हि रोः सुपीति विसर्गः नियमशास्त्रयाणां च विधिमुखेनैव प्रवृत्तिरिति तत्र रुर्विशिष्टः स्थानीति तद्वृत्तिरुत्वस्य स्थानिवत्त्वेन लाभः सुकरः। यदि तु रोः सुपीत्यत्रापि रिइत्यनुवर्त्य रोरेफस्यैव तेन विसर्गस्तदा शिग्रहणमुत्तरार्थं सत्स्पष्टार्थमिहैव कृतमित्यवधेयम्॥ तत्रेति॥ चादिष्वित्यर्थः ॥

वार्त्तिकं नाश्रयणीयमिति॥भो इत्यादिप्रयोगाणां निपातैरेव सिद्धेर्निपातानामपि संबोधनान्तभवदादिसमानार्थकत्वात्संबोधनविभक्त्यन्तत्वेनामन्त्रितत्वमस्तिभवदादीत्यत्रभोःशब्द
स्याप्यादिनाग्रहणात्तत्रभो इत्यादिसिद्धिरितिभावः॥अन्यथा॥साधारणनामभावे॥भोविद्वद्वन्देति॥नपुंसकेसोर्लुकालुप्तत्वेनवार्त्तिकाप्रवृत्तेरितिभावः॥भोगङ्गेति॥विभक्तौलिङ्गवि
शिष्टाग्रहणान्ङीपाव्यवधानाद्भवतः संबुद्धिपरत्वाभावेनेतिभावः॥स्युःस्यादित्यस्यनिपातमात्राङ्गीकारे इत्यादिः॥ननुनिपातोप्ययंभवच्छब्दसमानार्थएवेतिहोभो इत्यस्यनासंगतिरत

तथाचविभाषाभवद्भगवदितिवार्त्तिकंनाश्रयणीयम्।अन्यथापुल्लिङ्गैकवचनमात्रेभोहरे इत्यादिसिद्धावपिभोहरीहरयोभोविद्वद्वन्द्भोगङ्गेत्यादिनसिद्ध्येदि
तिभावः।एतच्चवृत्तिहरदत्तादिमतेनोक्तम्।भाष्यस्वरसरीत्यातु विभाषेत्यादिवार्त्तिकमारब्धव्यमेव।किंतुनिपातोपिभोःशब्दोस्तितेनद्विवचनादौस्त्रीनपुं
सकयोश्चनदोषः।युक्तंचैतत्।हेभवन्नितिवत्हेभो इतिप्रयोगस्याप्यिष्टत्वात्।तस्माच्चवार्त्तिकारम्भएवसिद्धेः।स्युःप्याट्पाडङ्गहेहैभोरित्यमरोक्तानांसंबो
धनार्थानांनिपातानांसहप्रयोगायोगात्।किंचात्रभवान्हरिस्तत्रभवान्ततोभवान्इतिवत्तत्रभो इत्याद्यपिवार्त्तिकेसत्येवसिद्ध्यति।इतराभ्योपिदृश्यन्ते
इतिसर्वविभक्त्यन्तात्त्रितसोर्भवदादियोगएवेष्टत्वात्।किंचामन्त्रितस्यपदात्परस्याष्टमिकनिघातः।आमन्त्रितंपूर्वमविद्यमानवद्भावः।आमएका
न्तरमितिविधिः वाक्यादेरामन्त्रितस्येतिद्विर्भावः सुबामन्त्रितइतिपराङ्गवद्भावश्चेत्यादिसर्वंसिद्ध्यतिनत्वन्यथेतिदिक्॥

एवंभाष्यकैयटयोर्वार्त्तिकसिद्धविभक्त्यन्तप्रतिरूपकमव्ययमित्युक्तंविभक्त्यन्तप्रतिरूपकत्वंचशब्दतोर्थतश्चेत्यन्यत्रस्पष्टम्।किंचमतिलुनीतइत्यादिवदेतयोरपिसहप्रयो
गसंभवइत्यरुचेराह॥किंचेति॥पदात्परस्येति॥इदंचनभोःशब्देफलमुभयोरपिभोःशब्दयोःसंबोधनार्थत्वेनसंबोधनप्रथमान्तत्वेनामन्त्रितत्वात्।किंतुतिष्ठसिभगोतिष्ठसि
अघोइत्यादौभगवन्अघवन्तिष्ठसीत्यर्थकेआमन्त्रितस्येतिनिघातसिद्धिः।निपातयोस्तुतयोःसंबोधनेशक्तौमानाभावेनसंबोधनप्रथमान्तत्वाभावेनामन्त्रितत्वाभा
वात्।भगोतिष्ठसीत्यादौअविद्यमानत्वम्।अंभगोदेवदत्तेत्यादौएकान्तरता।भगोआगच्छेत्यादौद्विर्भावःअनेनभगोइत्यादौपराङ्गत्वमितिभावः॥

म॰ श॰ ३४ यदि प्रामाणिकाविति॥ यदीत्यनेनेदं सूचितं तौ न प्रामाणिकौ। अत एव भाष्ये विभाषाभवदिति व्याख्याय भो ब्राह्मणीत्यस्यैवासिद्धिमाशङ्क्याव्ययमेष भोःशब्दो विभक्तिप्रतिरूपकत्वादित्येवोक्तम्। एवं च भगो हरिहरावित्याद्यसाध्वेव। तदतिरभसादिति॥ भोभगोमतुवसोरिति सूत्रयोरस्यार्थस्य भाष्ये स्पष्टत्वादिति भावः॥ उभयग्रहणादिति॥ वार्तिकबोधितसाधुत्वानामपि कुलटायावेत्यादौ कार्यान्तरबोधनाय सूत्रकृतानुवादस्य करणादिति भावः। हरदत्तेति॥ एवं चानित्यत्वात्तदप्रवृत्तौ उभयोर्ग्रहणसिद्धि

भगोअघोइति निपातावपि यदि प्रामाणिकौ तर्हि स्तां नाम। आमन्त्रितकार्यसिद्धिस्तु वार्तिकाद्यत्नेनैवेति सुधीभिराकलनीयम्। यत्तु वदन्ति। सकारान्तानेवैतान्निपातानास्थाय रुत्वे भाष्ये प्रत्याख्याते इति। तदतिरभसात्। स्यादेतत्॥ निपातानामव्युत्पन्नत्वविधौ न एव गृह्येरन् प्रतिपदोक्तत्वात्। न तु संबुद्ध्यन्ताः लाक्षणिकत्वात् इति चेन्मैवम्। स्वरितेनाधिकार इत्यत्राधिकः कारोऽधिकार इति व्याख्यानमाश्रित्य लक्ष्यानुरोधेन स्वरितत्वमाश्रित्योभयग्रहणात्। भुवश्च महाव्याहृतेरिति सूत्रे महाव्याहृतिग्रहणं लक्षणप्रतिपदोक्तपरिभाषाया अनित्यत्वज्ञापनार्थमिति हरदत्ताद्युक्तेश्च। न चैवमपि प्रभोरित्यादावतिव्याप्तिः। परस्परसाहचर्येण निपातानां वार्तिकोक्तानां च ग्रहणेऽप्यन्येषामग्रहणात्। व्योर्लघु। लघुप्रयत्नतरः लघूच्चारणतरः स चान्तरतम्याद्ध्रस्वो मस्यवदृक्षाह। वयाविति ॥

रिति भावः। विभाषाभवदिति वार्तिके भो ब्राह्मणा भो ब्राह्मणीत्यसिद्ध्याशङ्कायामव्ययमेष भोःशब्द इति सिद्धान्तेनोभयोरत्र ग्रहणलाभादिति बोध्यम्॥ परस्परसाहचर्येणेति॥ तेन चार्थवतामेव ग्रहणमिति भावः। अर्थवत्परिभाषयैतल्लपि बोध्यम्॥ अन्येषाम्। अनर्थकानां सान्तरान्तान्यतरानुकरणमिति पक्षे प्रसिद्धा भो इत्यादिपूर्वकरेफान्तानामेवार्थवतां ग्रहणस्य न्याय्यतया भो इत्याद्योकारान्तानुकरणपक्षेऽपि वार्तिकनिष्पन्नानां निपातानां चैकदेशभूतभोशब्दादीनामेव ग्रहणमिति भावः। अ राम: वेदन्तत्वं रान्तानामेवानुकरणं सूत्रे सन्ध्यभावोऽन्याय्य एवेति भाष्यस्वरसः। लघूच्चारणतरो लघुतरोच्चारणः ॥ ३४

हलो विशेषणादिति ॥ स्पष्टं चेदं भाष्ये ॥ इत्याहुरिति ॥ हरदत्तादयः। वकारलोपे सति तस्य दर्शनानवगतेरित्यर्थः। एवं च कर्मण्याद्यपरे तिनन एव लोपेन भविष्यतीत्यशाह लो विशेष
णं व्यर्थमिति सूचितं भाष्यमपि तदेकदेश्युक्तिरेवान पदान्ताः परे ऽणः सन्तीति लण्सूत्रस्य भाष्यविरोधाच्च। इड्भावे ढत्वं चेति ॥ चेन नलोपसंग्रहः ॥ ढलोपादिति ॥ ढो ढे लोप

ओतो गार्ग्यस्य। ओकारादिति। यत्त्वोकारान्तादङ्गादिति प्राचा व्याख्यातं तन्न। अङ्गस्याप्रकृतत्वात्। असंभवाच्च। न ह्युदाहरणेष्वोकारान्तमङ्गमस्ति। हलि सर्वेषा
म्। यकारस्येति। वकारस्तु नानुवर्तते। भोभगोअघोपूर्वस्यासंभवात्। अपूर्वस्तु यद्यपि संभवति वृक्षव् करोतीति तथापि तत्र लोपाप्रसङ्गः। अशीत्यनुवर्त्याशाह हलो वि
शेषणात्। वृक्षवृहसतीत्यादि तु अनभिधानादसाध्वित्याहुः। गव्यमित्यत्र तु पदान्तत्वं नास्ति। भव्रूतिरित्यत्र तु वकारप्रश्लेषान्न वलोप इत्युक्तम्। ननु देवानस्याइ
त्यादौ लोपो व्योरित्येव सिद्धे। मैवम्। तं प्रति यत्वस्यासिद्धत्वात्। देवायान्तीत्यत्र वल्परत्वाभावाच्च। अहोरात्र इति। रात्राह्नाहाइति पुंस्त्वम्। अहरादीनामिति। उभय
त्राप्यादिशब्दः प्रकारे। तेन स्वर्चक्षारथिनः सत्यम्पुष्पविप्रः कविः काव्येनास्वर्चनादित्यादि ग्राह्यम्। तढोढ इति। उदित्त्वेन वेट्कत्वाद्यस्य विभाषेति निष्ठायां नेट्।
ढत्वधत्वष्टुत्वढलोपाः। यत्तु प्राचा प्रत्युदाहृतं दृढ इति तन्न। तत्र ढलोपस्यैवाभावात्। तथाहि। दृढः स्थूलबलयोरिति सूत्रे दृंहेर्नकारहकारयोर्लोपः। तकारस्य
ढत्वं च निपात्यते। न च सिद्धकाण्डस्थढत्वस्येह प्रवृत्तिः। दादेर्धातोरिति घत्वेन बाधात्। न च इड्भावो ढत्वं च निपात्यतां धत्वष्टुत्वढलोपास्तु भविष्यन्त्येवेति वा
च्यम्। तथा सति परिवृढय्येत्यत्र ल्यपि लघुपूर्वादिति णेरयादेशो न स्यात्। पारिदृढीकन्येत्यत्र प्राणिजोरिति ष्यङ् न स्यात्। ढलोपस्यासिद्धत्वेन गुरूपोत्त
मत्वादिति भाष्ये स्थितम् ॥

इत्येतद्दृष्ट्या ष्टुत्वं तु नासिद्धं सामर्थ्यादिति भावः ॥ भाष्ये स्थितमिति ॥ दृढः स्थूलेति सूत्रे इति शेषः ॥

म.श. दृष्टव्यमितीति॥ ष्यङि णेरयाभावे चेष्टापत्तिरितिभावः॥ उभयोर्ग्रमि॥ त्यद्वलम्बभूतेनवृत्तिकृतेतिशेषः। तदाह वामन इति॥ अत्रारुचिबीजं तु दृंहेर्नकारहकारलोपार्थमिति
३५ भाष्यविरोधः। अनिदितां दृंहेस्तु दृहितमित्येव स्यान इति कैयटविरोधश्चेति। किंच प्रसादेकरीत्या दृंहेरपि इडभावढत्वयोः सिद्धावपि निषेधप्रकरणे दृढ इति निपातनस्य
४४ व्यर्थत्वमित्यलम्। अभावादुत्तरस्येति। आहार्याभावारोपादित्यर्थः। लिङ्गमिति। विहितविशेषणेतद्वैयर्थ्यं स्पष्टमेवेतिभावः। सास्माअरमिति। सोस्माअरमितिसन्धावपि पा

मतुप्राचामस्यातं दृंहेर्वेदं निपातनं दृहदृह्यावितितु प्रकृत्यन्तरम्। तस्यनिष्ठायामागमशास्त्रस्यानित्यत्वादिडभावे वा दुहेस्यत्रवेतियोगविभागात् पक्षेघत्वाभावे ढलोपे
च वृत्युदाहरणमिदं दृढमितितित। तन्न। उभयोरपिनिपातनाभ्युपगमात्। तदाह वामनः। अपरहिः प्रकृत्यन्तरमस्तितस्यापितन्निपातनं नलोपवर्ज मिति। युक्तं चैतत्। अ
न्यथाहि अस्मायेर पनस्याव ष्यङ् च स्यात्। ढत्वमेवेति। सिद्धासिद्धयोरतुल्यबलत्वेन विप्रतिषेधेपरत्वस्याप्रवृत्तौ निष्प्रतिपक्षत्वादुत्वमेव भवतीत्यर्थः। तदुक्तम्। पूर्वत्रासि
द्धेनास्ति विप्रतिषेधोभावादुत्तरस्येति। एतेन विभक्तिकार्यं प्राक्पश्चादुत्वमतेरुत्वादिव्याख्यानम्। सूत्रेसुइतिटयकृपदं लुप्तषष्ठीकमित्याह। एतत्तदोर्यः सुरिति। एतत्तदर्थगत
संख्याभिधायीयः सुस्तस्येत्यर्थः। एतत्तदोर्विहितइतिव्याख्यानेतुपरमसइदाति परमैपददातीत्यादौनस्यात्। अर्थद्वारकसंबन्धाश्रयणेलिङ्गत्वनञ्समासइतिबोध्यम्। अकोः
किमिति। साकक्कयोः शब्दान्तरत्वादप्रसङ्ग इतिप्रश्नः। एषकइति। अकोरितिप्रतिषेधएवतन्मध्यपतितस्तद्ग्रहणेनगृह्यतेइतिपरिभाषांज्ञापयतीतिभावः। बहुल
ग्रहणेति। अतएवलोपंविनापादपूरणेपिक्वचिद्भवति। सास्म। अयः सः। असैदितिच्छेदः॥ * इतिस्वादिसन्धिः ॥ * ॥ श्रीसंकटाभैरवाभ्यांनमः। श्रीगुरुचरणाभ्यांनमः। शम:

दपूर्तेः। नचैवं प्रकृत्यान्तः पादमितिपूर्वरूपस्याभावेननपादपूर्तिः सोयमामादित्यादाविव अत्रापिप्रातिशाख्येनसिद्धेः। एवञ्चावधारणपरतयानव्याख्येयम्। सोहमाजन्मेत्यादौ बहुल ३५
ग्रहणेनक्वचिदप्रवृत्त्यापिसिद्धेरितितात्पर्यम्॥ ॥ इतिदीक्षितभट्टोजिपौत्रदीक्षितहरिकृतेमनोरमाव्याख्यानेलघुशब्दरत्नेपञ्चसन्धिप्रकरणम् ॥ नमोब्रह्मणे॥ ४४

श्रीगणेशाय नमः ॥ अर्थवत्स्यादिति ॥ न चास्याप्यलमिरित्यादौ प्रत्ययलक्षणप्रयुक्तनिषेधबाधनेन तच्चरितार्थम्। अअसिद्धत्ववस्थायां प्रवृत्तसंज्ञाया एकदेशावि
कृतन्यायेन सुलभत्वात्। एकार्थीभावेनेति ॥ न चैतत्प्रत्ययमात्रस्य तन्मात्रे एकार्थीभावाभावादिति भावः। एकार्थीभावश्चायमस्य प्रातिपदिकसंज्ञाचिकीर्षितात
मात्रवृत्तिरेव ग्राह्यः। तेन पञ्चनावप्रिय इति समासघटक पञ्चनावेत्यस्य तद्धितान्तत्वसमासत्वयोरपि न प्रातिपदिकत्वम्। प्रियशब्दान्त एव तत्रैकार्थी

श्रीगणेशाय नमः ॥ अर्थवद्धातुः। प्रत्ययं प्रत्ययान्तं चेति। सूत्रे तन्मात्रादिना उभयं विवक्षितमिति भावः। तथा हि। प्रत्ययस्यैव
पर्युदासे कृत्तद्धितेति सूत्रेण तद्धितान्तस्य संज्ञाविधानं व्यर्थं स्यात्। न च तत्रापि तदन्तं न ग्राह्यमिति वाच्यम्। अर्थवदित्यनुवृत्तिसाम
र्थ्यात्तदन्तग्रहणात्। प्रशंसायां हि मतुप्। एकार्थीभावेन लौकिके प्रयोगे प्रसिद्धत्वं च प्रशंसामूलम्। न च अर्थवदित्यस्य पूर्वसूत्रे चरिता
र्थता धातुप्रत्ययपर्युदासेनैव तल्लाभात्। तस्मात्प्रत्ययान्तं च वर्जयित्वेत्युचितमेव। यदि तु प्रत्ययो न पर्युदस्येत नर्हि सास्यदाद्योरिति
सूत्रे सादिग्रहणं व्यर्थं स्यात्। अर्थवदिति किम्। धनं वनमित्यादौ प्रतिवर्णं संज्ञा माभूत्। तस्यां च सत्यां स्वादयः स्युः। ननु संख्याकर्मा
देरभावान्न भविष्यन्तीति चेन्न। एकवचनमुत्सर्गतः करिष्यत इति सिद्धान्तात् ॥

भवो न तु तन्मात्रं इत्यदोषात्। न च क्विबन्ते दोषः तत्र धातोरेव विशिष्टार्थबोधकत्वेन अर्थवद्द्वितीयाभावेन पृथगर्थानामेकोपस्थितिजनकत्वरूपैकार्थीभा
वाभावादिति वाच्यम्। अलौकिके वाक्ये कल्पितैकार्थीभावस्य तत्राप्यारोपेणादोषात् ॥ व्यर्थं स्यादिति ॥ अनेन प्रत्ययपर्युदासे मानमुक्तम्। सातेः प्रातिपदिकत्वे
हित्तत औत्सर्गिकैकवचनेन तस्यापि सुबन्तत्वेन पदत्वे पदादित्वादेव निषेधसिद्धेस्तद्व्यर्थमिति भावः ॥

म. प्र. सोऽर्हुर्वीरस्यादिति॥ तस्य च समुदायप्रातिपदिकत्वेन तदवयवत्वाल्लुक् समुदायसंज्ञायान्तरङ्गत्वादवयवेभ्यः प्रातिपदिकैकत्वात्सुपि च सति प्रवर्त्तत इति तस्य
४५ तदवयवत्वमस्तं पचति ध्वनतीत्यादेनावयवानां सा। धातुप्रत्ययान्तपदयोस्तदवयवपरत्वेन तत्र तन्निषेधात् तस्मादव्युत्पन्नप्रातिपदिकावयवेभ्यस्तदुत्पत्ति
रापाद्या। धनशब्दस्य धिनोतेर्धनमिति व्युत्पत्तिपक्षे तु वनाद्युदाहरणं बोध्यम्। ध्वनितं चेदं भाष्यकैयटयोः। तस्मान्नलोपाद्यापत्तिर्दोषः। इदमव्ययेभ्य इव तेभ्योऽपि सु
प एकवचनाभ्युपगमेन। यदि तु तदुत्पत्तिः सत्येव गमके। यथाव्ययेभ्य उत्पत्तावव्ययादाप्सुप इति गमकम्। नान्यत्र एकवचनमिति महासंज्ञाकरणात् प्रकृते तु न
तथा गमकम् तएव ङ्याबिति सूत्रे प्रातिपदिकाधिकाराभावे तिङन्तेभ्यस्तदुत्पत्तिमाशङ्क्य कत्वादीनामुक्तत्वान्नेति समाहितं भाष्ये तु द्वित्वौत्सर्गिकमेकव

ङ्फडादिभ्य इव सोऽर्हुर्वीरस्यात्। न च अर्थवद्ग्रहणपरिभाषया ऽनर्थकेन स्यादिति वाच्यम्। तस्याविशिष्टरूपोपादानविषयत्वात्। अथानुरि
त्यादिपदसमुदायस्य वत्वेन यस्यार्थवत्त्वं कल्प्यते व्यापि उत्तरार्थं तदित्युक्तम्। एतच्च सुप्तिङन्तमिति सूत्रे भाष्ये ध्वनितम्॥

चनं दुर्वारमेव। अत एवाग्रे भाष्येऽर्थवत्सदृशदाडिमानीत्यादिपदसमुदायो निरर्थको व्यावर्त्यत्वेन प्रदर्शितस्तत्र हि सुपो धातु इत्यस्य प्राप्तिरि
ति तदेवास्य मुख्यं व्यावर्त्यम्। पचतः कल्पमित्यादौ तत्र वृत्तौ रूपसूत्रस्थं भाष्यं गमकम्। समासग्रहणकृतनियमस्तु अर्थवत्समुदायविषयक इति भाष्ये
स्पष्टमिति न तेनास्य व्यावृत्तिरिति दिक्॥ यद्यप्यर्थवत्त्वमिति॥ व्याख्यानादर्थवत्त्वेनैव सादृश्यं गृह्यत इति भावः॥ उक्तमिति॥ एतेनेदमुक्तमेव पुनर्दो
षोऽयमनत इति सूचितम्। भाष्ये इति॥ एवं हि तत्र भाष्यं। अर्थवदिति वर्त्तते कृत्तद्धितान्तं चैवार्थवन्न केवलाः कृतस्तद्धिता वेति कृत्तद्धितान्तसूत्रेऽन्तग्रह प्र.मः
णं न कार्यमिति। अर्थवद्ग्रहणानुवृत्तिसामर्थ्यादेव चेदृशार्थलाभ इति कैयटः॥ ४५

समुदायार्थारोपादिति॥ तेन तन्मात्रस्य क्रियावाचित्वनिबन्धनधातुत्वसिद्धिरिति भावः॥ तत् क्रियावाचकत्वम्। तत्तदर्थविभागश्चेति। तस्य तस्येति कृतद्विर्वचनेन ष
ष्ठीसमासे सस्तोर्थविभाग इति कर्मधारये वा विभक्तिलुकि इदं साधु। एतेनान्यान्यप्रादुर्भावादिति भपादाने पञ्चमी। तिसूत्रस्य भाष्यप्रयोगोपि व्याख्यातः। सुबन्तत्वमपि
द्विः प्रयोगपक्षइव स्थाने द्विर्वचनपक्षेप्याद्यान्यशब्दे प्रकृतित्वबुद्ध्यान्त्यस्य शब्दे प्रत्ययत्वबुद्ध्यासूपपादम्॥ सर्व इति। धातूपसर्गविभागो वृत्तिविषयेकार्थीभावश्चेव मे वेतिभ

मत्वाहुः। पर्युदासो नार्थवत्त्वं गमयति। अनर्थकयोरपि धातुप्रत्यययोर्दर्शनात्। अधीते यावक इति। अधिपूर्वस्येवेङः प्रयोगात् विशिष्ट एव अर्थवान् नतु
केवल इङ् अध्ययन इत्यादौ यन्निर्देशस्तु अवयवे समुदायार्थारोपात्। एवं कन्नप्यनर्थकः। यावशब्दादपि तदर्थप्रतीतेः। ओषधेश्च विभक्तावप्रथमायाम कर्तृ
रि च कारक इति विभक्तिकारकग्रहणाभ्यां नञिव युक्तन्यायस्यानित्यत्वकल्पना चेति। अत्रेदं वक्तव्यम्। धातुरनर्थक इति तावद्व्याहतम्। क्रियावाचकत्ववि
ना धातुत्वायोगात्। आरोपितं तदिति चेत्। सत्यम्। तावतैवेष्टसिद्धेः। प्रकृतिप्रत्ययविभागः तत्तदर्थविभागश्च सर्वः कल्पित एव। परमार्थतस्तु स्फोट एवार्थवानिति सि
द्धान्तात्। उक्तं च हरिणा। उपायाः शिक्षमाणानां बालानामुपलालनाः। असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहत इति। कथमन्यथा इङो द्विर्वचनमडादयश्च स्युः। तथा
च प्रत्याहाराह्निके अर्थवन्तो वर्णा इति प्रघट्टके अध्येति अधीत इत्यत्रेकारोऽर्थवानिति भाष्ये स्पष्टमेवोक्तम्। एवं कन्प्रत्ययोप्यर्थवानेव। स्वार्थिकानां प्रकृत्यर्थेनैवार्थवत्त्वात्।

कः॥ स्फोट एवेति॥ पदरूपो वाक्यरूपो वेत्यर्थः। लौकिकानां तत्रैव शक्तिग्रहेण बोधादिति भावः। अत एव तस्य परमार्थत्वं लोके बोधजनकत्वात्। शास्त्रेण प्रकृतिप्रत्ययविभागस्तु त्या
द्नेन विशिष्टपदस्यैव तत्तदर्थबोधनद्वारा विशिष्टे पदे विशिष्टार्थबोधकत्वमेव बोध्यते। उपलालना इत्यस्य भवन्तीति शेषः। नतु वास्तवा इति भावस्तदाह असत्ये इति। आरो
पिते इत्यर्थः। लोकानां तत्तच्छब्दजन्यबोधानुपयोगित्वात्तत्त्वमाः सत्यम्। विशिष्टशक्त्या बोधकं पदादीत्यर्थः॥ स्युरिति। अधिजगेऽध्यगीष्टेत्यादौ। अर्थवत्त्वादिति। आरोपितार्थवत्त्वादि

शास्त्रकृत्। भाष्यकृदादिः॥ संमतेति॥ तद्धितविषयेइतिशेषः। औत्सर्गिकप्रवृत्तौहेतुमाह॥ इष्टस्य लेपीति॥ चः पञ्चम्यर्थेहेतुत्वानुवादकः॥ कथंचिदिति॥ अनेनतद्
नावश्यकत्वमेवेतिध्वनयति। ननूत्तरत्रचरितार्थस्यकथंज्ञापकत्वमतआह॥ उत्तरार्थस्यापीति॥ इकोचीतिसूत्रेच्ग्रहणस्योत्तरार्थतामुक्त्वाभाष्येउक्तमिहकिंचित्रयो
इति। नलुमतेतिनिषेधानित्यत्वज्ञापनद्वाराऽत्रयोइत्यत्रगुणः फलमितितदर्थः॥ इत्थंसतीति॥ अधुनानेनैवानित्यत्वज्ञापनमाश्रित्यन्यायानुसरणेनतयोः प्रत्याख्यानसं
भवइतिभावः॥ नलोपइति॥ सुबुत्पत्तिस्तुनोक्ताभूवादयइत्यस्यलविधौतिबादिविधौचोपस्थितेर्निरवकाशतयाऽपवादैस्तिबादिभिर्बाधात्॥ कार्यकालपक्षेइति।

कल्पनामात्रमिदमितिचेन्न। उक्तोत्तरत्वात्। नैयाकस्यनाशास्त्रकृत्त्वंमतेतिचेन्न। द्वितीयतृतीयचतुर्थतुर्याणिइतिसूत्रेपूरणात्स्वार्थेः न प्र
त्ययःस्यपूरणार्थत्वमा भाष्यकारैरेवोक्तत्वात्। प्रत्ययइतिमहासंज्ञांकुर्वतः सूत्रकृतोपिसंमतमेवेत्यु। यदपिओषधेश्चेत्यादितदपिन। अनित्यत्वेप्योत्स
र्गिकप्रवृत्त्याइष्टसिद्धेः इष्टस्यलेपप्रवृत्तौन्यायस्यनिर्विषयत्वापातात्। अनित्यत्वज्ञापनस्यकथंचिदावश्यकत्वेअर्थवद्ग्रहणस्यैवज्ञापकत्वसंभवा
च्च। उत्तरार्थस्यापिइहकिंचित्रयोइतिन्यायेनइहकरणस्यसफलत्वौचित्यात्। औषधेश्चेत्यादौविभक्तिकारकग्रहणयोरेवेत्थंसतिप्रत्याख्यान
संभवाच्चेतिदिक्। अधातुरितिकिम्। अहन्। नलोपोमाभूत्। नचकार्यकालपक्षेप्रत्ययान्तत्वेनपर्युदासोस्त्वितिवाच्यम् ॥

नचयथोद्देशेपिप्रत्ययान्तस्यभावित्वेनाकृतव्यूहपरिभाषयाफलाभावेनचसंज्ञायाअप्रवृत्तिरितिवाच्यम्। अकृतव्यूहपरिभाषायाअनित्यत्वाद सत्वाच्च। भवि
ष्यतिकिंचित्फलमित्यभिसन्धिमात्रेणतत्रपक्षेसंज्ञायाः प्रवृत्तेः प्रगृह्यसंज्ञाप्रकरणेकैयटेनोक्तत्वाच्च। यथोद्देशपक्षेणपर्युदासेलक्ष्यसिद्धेः शङ्कासमाधानेचनिर्द्दि
ष्टे॥ नहिव्यवस्थितयोः पक्षयोरन्यतरेणलक्ष्यसिद्धेपक्षान्तरेणशङ्काप्युचितेत्यर्थस्यप्रगृह्यसंज्ञाप्रकरणेभाष्येध्वनितत्वादितिकश्चित् ॥ 

कथमन्यथेति। नच राजेत्यादौ कृदन्तत्वात्प्रवृत्तिः। तत्राप्यप्रत्ययद्त्वसंबन्धात्। अत एव दासीदित्यादौ परादिवद्भावेन न सुपो लुक्। नच सुब्लो
पविषयमेवज्ञापकम्। असति बाधके प्रमाणानां सामान्ये पक्षपातदित्यर्थस्यापि ज्ञापनादन्यथा सूत्रोपस्थितङि संबुद्धिमात्रविषयत्वा स्यादिति राजपु
रुषादिसिद्धिः। स्पष्टा चेयं रीतिः सार्वधातुकमपिदित्यत्र भाष्ये। प्रकृतसूत्रभाष्ये चेदं स्पष्टम्॥ अत्र सुप्तिसिपोरिति॥ तयोः प्रातिपदिकत्वे तत्सामर्थ्यादौत्स
र्गिकैकवचनेतच्छ्रवणापत्तिः। विभक्त्यर्थस्य लिङ्गं प्रतिस्वरूपायोग्यत्वेन न नपुंसकत्वाश्रयो विभक्तिलुक्। तत्सत्वे तु पदादित्वेन षत्वनिषेधापत्ति

प्रत्ययलक्षणेनोक्तमर्थं दासाप्रवृत्तेर्नङिसंबुद्ध्योरिति निषेधेन ज्ञापितत्वात्। कथमन्यथा राजेत्यादौ नलो
पः स्यात्। अप्रत्ययः किम्। हरिषु। करोषि। अत्र सुप्तिपोर्मा भूत्। अप्रपान्तः किम्। तत्रैव विभक्तिविशिष्टयोर्मा
भूत्। नचान्तवद्भावेन का... इत्यादौ प्रातिपदिकत्वं स्यादेव। तथाच ह्रस्वो नपुंसक इति ह्रस्वत्वं सोः लुक् च
स्यादिति वाच्यम्। कार्यकालपक्षेणेष्टसिद्धेः। यथोद्देशेपि विभक्त्यैकदेशोनान्तवत्। सप्तम्यधिकरणे चेत्यादिनिर्देशात् ॥

इ ष्यद्‌ इति भावः। नयेति। अत्राप्यौत्सर्गिकैकवचनापत्तिः सुपो धात्विति लुगापत्तिश्च परेरन्नित्यादौ नलोपापत्तिश्चेति भावः। स्यादेवेति। पूर्वविभक्त्युत्प
त्तेर्जातत्वादतिदेशेन विभक्त्यन्तत्वबुद्धिरिति भावः। यथोद्देशेपीति। अपिना कार्यकालपक्षेपि। नहि तत्र पक्षे उपदेशेनैवैकवाक्यता नातिदेशेनेत्यत्रमान
मस्ति स्यतिदेशैकवाक्यतयैवन्त्वप्राप्तिः सुवचत्वात् ॥

म॰ प्र॰ प्रातिपदिकग्रहणं वेति। नपुंसकत्वस्य प्रातिपदिकधर्मत्वान्नपुंसके वर्त्तमानस्येत्यर्थे नैव प्रातिपदिकलाभे सिद्धे तस्य व्यर्थत्वादिति भावः। उ
४७ क्तेर्थे। विभक्त्येकादेशस्यान्तवत्वाभावे। सामान्यापेक्षमिति। अन्यथा ह्रस्व एव न स्यात् क्वाचुत्पत्तिस्तु स्यादेवेति भावः। यद्यपीदं प्रातिपदिकग्रहणं सत्त्व
प्रधानप्रातिपदिकग्रहणार्थं तेनात्र न ह्रस्वः। मूलोक्तार्थे ज्ञापिते चारितार्थ्यं दुर्निरूपं संख्याकर्माद्ययोगात्क्वाचुत्पत्तिरपि न, औत्सर्गिकमेकवचन

ह्रस्वो नपुंसक इति सूत्रे प्रातिपदिकग्रहणं स्वाउक्तेर्थे सामान्यापेक्षं ज्ञापकमस्तु। यत्तु वदन्ति।
प्रत्ययपर्युदासो न कर्त्तव्यः प्रत्ययान्तपर्युदासेनैवगतार्थत्वात्। व्यपदेशिवद्भावेन तस्यापि प्रत्य
यान्तत्वादिति। तन्न। प्रत्ययग्रहणे यस्मात्स विहितः तदादेर्ग्रहणात्। केवलस्य च अतथात्वा
त्। अन्यथा स्वदुकरीत्यासुप्तिङोरपि वदन्तत्वात् पदत्वं स्यात्। तथा च हरिषु करोषि इत्यादौ
षत्वं न स्यात् ॥ ॥

स्यपि न गमकं विना तदनुस्मृतेः। सुपो धातु इति लुगपि न, आनुसाहचर्येण सुप्तिङिःतरसमभिव्याहृतस्यैव तेन लुग्विधानात्। एवं च प्रत्ययान्तपर्युदासो
न कर्तव्य इति सूत्रशेषे भाष्ये ध्वनितम्। पचेरन्सर्वस्मिन्नित्यादेर्नकारोच्चारणसामर्थ्यान्न नलोपस्तथाप्येतावत्क्लिष्टकल्पनापेक्षया लाघवात्प्रत्ययान्तपर्युदा प्रमः
स एवोचित इति भावः। अतथात्वादिति। यस्माद्विहितस्तदादित्वस्याशास्त्रीयत्वेन व्यपदेशिवद्भावालभ्यत्वादिति भावः ॥ ४७

निषेधादिति। यद्यप्यपदेशिवद्भावेनैकाच्त्वादेरिवास्याप्यशास्त्रीयस्यातिदेशेन लाभसंभवो तत एव भवतीत्यादौ भवतेः शब्निरूपिताङ्गत्वसिद्धिर्यतिसेद्त्यादौ सेद्त्वस्य पदत्वसिद्धिश्च ह्वरित्यादौ कार्यकालपक्षे तद्धितान्तत्वनिबन्धनं प्रातिपदिकत्वसिद्धिश्च युवापत्ये तत इञन्तत्वनिबन्धनफक्सिद्धिश्च। तथाप्यसहाय एव व्यपदेशिवद्भावो न तु ससहाये तेनेतरावयवे तदप्रवृत्तिः। स्पष्टा चेयं रीतिरादेच उपदेश इत्यत्र कैयटे। अतएव सभासंनयने व्यपदेशिवद्भावेनाकारस्य नादित्वं दरिद्राधातावकारस्य नान्तत्वं तथा सति वहुल प्रयुक्तः कृद्वर्णान्तत्वप्रयुक्तो च प्रत्ययश्च स्यात्। ततोऽत्र न किंचिद्दूषणम्। लोकेऽपि वहुपुत्रसत्त्वे नैकस्मिन् ज्येष्ठकनिष्ठादिव्यवहारो विजातीयकन्यादिसत्त्वे त्वेकस्मिन्नपि तथा व्यवहारो भवत्येवेति बोध्यम्। अत एव हरिषित्यादौ सोः पदत्वं न। निजौ

सास्पदाद्योरिति निषेधात्। अधातुप्रत्ययावित्युभयविशेषणेन अद्दसोपादानं स्पष्टार्थम्। महासंज्ञाकरणं त्वन्वर्थात्। तयोश्चाथर्वणे पठ्यते। कोधातुः किं प्रातिपदिकं कः प्रत्यय इति। डित्थादीन्यव्युत्पन्नानीहोदाहरणम्। अव्युत्पत्तिपक्षस्य चेदमेव ज्ञापकमिति प्राञ्चः। यत्तु व्युत्पत्तिपक्षेऽपि निपातार्थमनुकरणार्थं चेदमिति हरदत्तेनोक्तम्। तच्चिन्त्यम्। तत्रापि प्रकृत्यादिकल्पनसंभवात् ॥

चत्वार एकाच इति भाष्यं त्वेकस्मिन्नित्यस्य पर्यालोचनयैकदेशयुक्तिरिति तात्पर्यम्। वस्तुतस्तु पर्युदासेनैवार्थवत्त्वे लब्धे अर्थवद्ग्रहणादत्र सूत्रेऽपि प्रि-[illegible]नतरानपेक्षार्थबोधकत्वं समर्थकत्वं गृह्यते। एकार्थीभावेन लौकिके प्रयोगे प्रसिद्धत्वमिवेदमप्यलौकिके आरोपितमस्तीति दिक्। असत्यवस्थायां प्रातिपदिकत्वापत्तिः। तदा प्रत्ययस्य प्राप्तिरेव नेति केवलप्रत्ययपर्युदासो व्यर्थः। ध्वनितं चेदं प्रत्ययपर्युदासानुवृत्त्या भाष्ये॥ सुप्तिङन्तमितिसूत्रस्य भाष्यकैयटयोरप्येवं तात्पर्यमिति बोध्यम् ॥

अन्तरङ्गस्यापीति।सुलभत्वादिति।यथोद्देशइदं। यदिवस्यनिषेधस्यप्रत्ययग्रहणपरिभाषाशेषत्वमेवंचयथासाप्रत्ययग्रहणेएवनतुप्रत्ययाप्रत्ययग्रहण
वृत्तिउगितश्चेतिसूत्रेभाष्येस्पष्टं तथायंनिषेधोपिस्त्रीप्रत्ययमात्रग्रहणेनतुस्त्रीप्रत्ययास्त्रीप्रत्ययग्रहणेइत्युच्यते।तदानदोषः।समुदायस्यप्रत्ययान्तत्वाभावा
दितिदिक्।असमर्थसमासेइति।असूर्यंपश्यादावित्यर्थः।धर्मिग्राहकेति।प्रातिपदिकसंज्ञाधर्मस्तद्धर्मीअसमर्थसमासःग्राहकंमानंखश्प्रत्ययविधायकम्।अ
न्यथापरस्परमसंबन्धेनैकार्थीभावाभावात्समासोदुर्लभःस्यात्।असूर्यशब्दइति॥तत्रकृतिकेसुबन्तइत्यर्थः।सुपीत्यधिकारात्।उपपदमितिमहासंज्ञाकरणा

अन्तरङ्गस्यापिहल्ङ्यादिलोपस्यलुग्विषयेऽप्रवृत्त्याश्रूयमाणएवसुपिसमासप्रवृत्तेः।तत्रचाप्रत्ययान्तत्वेनप्रवृत्तायाःसंज्ञायाएकदेशविकृतन्या
येनविभक्तिलुकर्यपिसुलभत्वात्।अतएवगोमत्प्रियइत्यादौनुमाद्येन।लुकःप्रागन्तरङ्गप्रवृत्तौतुस्युरेव।नन्वेवमपिअसमर्थसमासेइष्यदादि
मादिवदनर्थकेविधानमस्त्विति चेन्न।अर्थवदित्यस्यानुवृत्तेरुक्तत्वात्।कथंतर्हिअसमर्थसमासेसंज्ञेतिचेद्धर्मिग्राहकमानादेवेतिगृहाण।असू
र्यललाटयोरितिहिअसूर्यशब्देउपपदेखश्विधीयते।उपोच्चारितंपदंचोपपदम्।पदंचसुप्तिङन्तमिति।नियमशरीरमाह।यत्रसंघातेइत्यादि।पू
र्वभागइत्युपलक्षणम्।उत्तरस्तुप्रत्ययोनेत्यपिबोध्यम्।अन्यथाजन्मवानित्यादौसंज्ञानस्यात्तद्धितग्रहणस्यऔपगवादौकृतार्थत्वात् ॥

त्वात्तदेतदाह।पदंचेत्यादि॥यथाभूङ्गादिपदानांचबोद्धेतस्मिन्शक्तिरितिनतदर्थमपिसमासग्रहणमितिबोध्यम्।यत्रसंघातेइतीति।अर्थवतीतिशेषः।सजातीयापे
क्षनियमस्यौचित्यादितिबोध्यम्।प्रत्ययोनेत्यस्यपूर्वभागप्रकृतिकप्रत्ययोनेत्यर्थः।तेनराजाइत्यानित्यादौनदोषः।जन्मवानित्यादाविति।तत्रपूर्वभागस्यपदत्वादितिभा
वः।ननुतद्धितग्रहणसामर्थ्यंतत्राह।तद्धितेति।तत्रपूर्वभागस्यभत्वात्पूर्वोभागःपदमित्यत्रचपदशब्देनपदसंज्ञकग्रहणमितिभावः ॥

नन्वत्र पक्षे गवित्ययमाहेत्यादौ दोषः। गोइत्यादीनां सुबन्तत्वाभावेन पदत्वाभावात्। एवमेव सुरित्यादिसमासे पूर्वभागस्य भत्वेन तत्साजात्येन पूर्वो भागः पदमित्यर्थलाभासंभवश्चेत्यत आह। यद्वेति। प्रकृतसूत्रे भाष्ये तु अर्थवत्समुदायानां समासग्रहणं नियमार्थमित्युक्तम्। अत्र तन्त्रेण षष्ठीतत्पुरुषः कर्मधारयश्च, तत्र षष्ठीसमासे अर्थवदित्यस्य स्वातन्त्र्येणापि प्रयोगार्हार्थवदित्यर्थः। गवित्ययमित्यादावनुकरणस्यानितिपरस्यापि प्रयोगसत्त्वेन तत्त्वमस्त्येव। प्रकृतिप्रत्ययसमुदायस्य तु नन्यावृत्तिः प्रत्ययस्य स्वातन्त्र्येण प्रयोगार्हार्थवत्त्वाभावात्। सरूपसूत्रे भाष्ये सुबन्तानामित्यनेनेदमेवोपलक्ष्यते

पूर्वो भागः पदमिति किम्। बहुज्विशिष्टस्य प्रातिपदिकसंज्ञा यथा स्यात्। तेन बहुपटु बहुत्यत्र प्रथमजसो लुकि बहुपटुशब्दस्य चित्स्वरे पुनर्जसि उपोत्तमोदात्तत्वं सिध्यति। यद्वा। प्रकृतिप्रत्ययभावानापन्नसंघातविषयको नियमोऽस्तु। न चाद्यपक्षे राजपुरुषावित्यादौ पुरुषावित्यादेः संज्ञा स्यादिति वाच्यम्। अर्थवत्त्वेनैव वारणात्। प्रत्ययार्थो हि विशिष्टएवान्वेति न तूत्तरपदार्थमात्रे। येन पुरुषावित्यस्यार्थवत्त्वं स्यात्। नियमफलमाह। तेनेत्यादि। नन्वेवमपि मूलकेनोपदंशमित्यादौ वाक्यस्य संज्ञा दुर्वारा। कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणात् इति चेन्नैवम् ॥

इति स्पष्टमेव कैयटेनोक्तमिति बोध्यम्। पुरुषावित्यादेरिति तत्पूर्वभागस्योत्तरपदत्वे चेति निषेधेनापदत्वात्। परस्य तत्प्रकृतिकप्रत्ययत्वाभावादिति भावः। अर्थवत्त्वेनैवेति। उत्तरपदस्य कार्यित्वाभावेन तन्निषेधाप्रवृत्तेश्चेत्यपि बोध्यम्। वाक्यस्येति। कृदन्तत्वादिति भावस्तदाह। कृदिति। नचास्य भुजौकरणस्येनोपदंशं प्रति न कारकत्वं। मूलकस्योपदंशकर्मत्वेनान्वयो विभक्तिस्तु प्रधानानुरोधिकरणत्वकृतात् तृतीयैवेति तं प्रत्यपि कारकत्वमित्याशयात् ॥

परत्वाद्बाधादिति।नियमस्यार्थतोनिषेधेपितात्पर्येणार्थवत्सूत्रापवादस्यास्यपरत्वेनकृदन्तत्वप्रयुक्तस्यापिनिषेधेतात्पर्यादितिभावः।निषेधानांबलवत्त्वाच्चेत्यपिबोध्यम्।निष्फलत्वादिति।स्पष्टंचेदंपुंयोगादितिसूत्रेभाष्यकैयटयोः।नचसमासेइति।नापिवाक्येइतिबोध्यम्।एकार्थीभावेति।एकोपस्थितिनियामिकासमुच्चयशक्तिरेवैकार्थीभावइतिभावः।एवंसमासेवृत्तिःसिद्धा।वाक्येपिशक्तिरस्तिविशेषणविशेष्यभावांशेनव्युत्पत्तेरर्थवत्सूत्रभाष्यादावुक्तत्वात्।लक्षणे

तुसमासग्रहणकृतनियमेनपरत्वाद्बाधात्।एवंचकृत्तद्धितेतिसूत्रेकृद्ग्रहणपरिभाषानोपतिष्ठतएवनिष्फलत्वादितिनत्वम्।यत्तुवदन्ति।समासग्रहणंननियमार्थंकिंतुविध्यर्थमेव।अर्थवत्त्वंहिवृत्तिमत्त्वम्।वृत्तिश्चद्विधा।शक्तिर्लक्षणाच।नचसाऽसमासेऽस्तीति।अत्रेदंवक्तव्यम्।सिद्धान्तेतावदेकार्थीभावाभ्युपगमाद्वृत्तिर्नास्तीतिबाधितमेव।मीमांसकमतेपिलक्षणास्त्येव।यदुक्तः।सर्वत्रैवहिवाक्यार्थोलक्ष्यएवेतिवाचस्पतिमतमिति।अथनैय्यायिकदृशोच्येत।तदपिन।बहुपटवइत्यादावसिद्धेः।तद्धितग्रहणंतद्धितशिष्टपरमितिचेत्न।पचतकीत्यादावतिव्याप्तेः।किंचैवंकृद्ग्रहणपरिभाषयामूलकेनोपदंशमित्यादावतिव्याप्तिर्दुर्वारैवेत्यास्तांतावत्।चकारोऽनुक्तसमुच्चयार्थः।तेननिपातस्यानर्थकस्यप्रातिपदिकसंज्ञावक्तव्येतिगतार्थम्।येषांद्योत्योप्यर्थोनास्तितदर्थमिदम् ॥

ति॥वृत्तौवाक्येचेतिभावः।असिद्धेरिति।समासइवतद्धितेपिशक्तिलक्षणयोरभावादितिभावः।पचतकीत्यादाविति।रच्पूर्ववर्तित्वोत्तरवर्तित्वाभ्यामेववैशिष्ट्यंनिवेशनीयम्।विनिगमनाविरहेणमध्यवर्तित्वस्यापिग्रहणापत्तेरित्याशयात्।किंचबहुपटवस्तिष्ठन्तीतिवाक्यस्यापिसंज्ञापत्तिः।एवम्।समासग्रहणस्यनियमार्थत्वाभावे।नचात्रार्थवत्त्वाभावाद्वारणं,न्यायनयेउत्तरसूत्रेतदसंबन्धात्।तृतीयाप्रभृतीनीतितुस्वरेविशेषार्थम् ॥

अभेदविवक्षायामिति। सादृश्यमूलाभेदविवक्षायामित्यर्थः। अनुकरणं चस्वसादृश्येनानुकार्यमुपस्थापयति तस्योपस्थितस्य शाब्देन्वयप्रतियोगित्वं व्युत्पत्तिवैचित्र्यात्। एवं च वृत्त्यार्थबोधकत्वरूपार्थवत्त्वाभाव इति भावः। अत एव भूसत्तायामित्यादिनिर्देशाः सङ्गच्छन्ते तदाह। भूइति। अपदं न प्रयुञ्जीतेत्यस्यापरिनिष्ठितमित्यर्थः। अस्य चासाधुत्वलिङ्गात्परिनिष्ठितत्वम्। भेदविवक्षायामिति। अर्थवत्त्वं द्वेपि वृत्तिविषयेस्त्वेव तस्य स इति भावः। अयं पक्षो मतौ छः सूक्तेति सूत्रे भाष्ये। अनयोश्च लक्ष्यानुरोधाद्व्यवस्थेति दिक्। विशिष्टस्यापीत्यर्थ इति। प्रातिपदिकत्वतद्व्याप्यधर्माणां लिङ्गप्रत्ययविशिष्टे ऽतिदेशादिति भावः। स्पष्टं चेदं बहुव्रीहे रूधस इत्यत्र भाष्ये। इयं च प्रातिपदिकसामान्यग्रहणे तद्विशेषग्रहणे च तत्स्वनयन्नाह। अयस्कुम्भीति। किंचेत्यादि। उत्तरपदेष्विति। अत्र च ङ्यन्तमुत्तरपदमिति भा

अवद्यति। अनुकरणे तु अनुकार्येण सहाभेदविवक्षायामर्थवत्त्वाभावादेव न प्रातिपदिकत्वम्। भूसत्तायामिति यथा। भेदविवक्षायां तु संज्ञा स्यादेव। गवो ऽवुगिति यथा। लिङ्गविशिष्टस्येति। लिङ्गबोधकप्रत्ययविशिष्टस्यापीत्यर्थः। परिभाषायाः प्रयोजनं तु। अयस्कुम्भी। अतः कृकमीति सत्वम्। तद्धितसादिषूत्तरपदेषु विधीयते। किंच कुमारीमाचष्टे कुमारयति। णाविष्टवदिति टिलोपः। एवं यामिनयतीत्यादौ। इत्यत्र आचारे क्विबपि फलम् ॥

वः। टिलोप इति। इदमुपलक्षणं पुंवत्त्वस्य णिचश्च। सामान्यग्रहणेपि प्रवृत्तेरेवानया परिभाषया ङ्याब्ग्रहणवैयर्थ्यं भाष्ये शङ्कितम्। न च दृष्टामालाह दृष्टागौरीति समुदाये ऽनुपसर्जनस्त्रीप्रत्यये तदादिनियमाभावात् ङ्याबन्तत्वेन ततः सुबुत्पत्त्यर्थं तदस्तु। लिङ्गविशिष्टपरिभाषया तु नात्र सिद्धिः ङ्याब्रहितस्य दृष्टमाला इत्यादेः समुदायस्य प्रातिपदिकत्वाभावेन तदतिदेशाप्रवृत्तेरेवं चाम् दृष्टमालादेवदत्तेत्यादावेकपदान्तरितत्वे नैकान्तस्तापत्तिरिति वाच्यम्। एतद्भाष्यप्रामाण्येन प्रातिपदिकसाहचर्येण चष्टयगर्थोपस्थापकविभक्त्यन्तानवयवकङ्याबन्तस्यैव ग्रहणेनादोषात्। प्रत्येकमपि पदत्वसत्त्वे नैकान्तरत्वाभावाच्च। उत्तरसंज्ञायाः पूर्वसंज्ञाया बाध

कुत्साद्यर्थकस्वार्थिकानांकुत्सितइतिसूत्रस्थभाष्योक्तरीत्याङ्यानन्तादुत्पत्तेः सिद्धत्वादत्यन्तस्वार्थिके फलमाह।तथाहीत्यादिना।स्वार्थिकत्वेन।अत्यन्तस्वार्थिकत्वे
ना।परत्वेनेत्यभ्युच्चयः।एवंचलोहिताल्लिङ्गबाधनंवेतिनवक्तव्यमितिभावः।विकल्पः सिद्ध्यतीति।अन्यथाऽऽर्यशब्दात्कनिसमुदायोत्तरटापिवलिङ्गसंबन्धबोधन
समर्थसुबादेरन्तर्द्विर्वचनन्यायेनसमुदायादेवटापिकनः पूर्वंटाबभावेअतःस्थानिकत्वाभावादिकत्वासिद्धिरितिभावः।ङीप्प्रसङ्गादिति।अन्यपदार्थस्यस्त्रीत्वादि
तिभावः।अकृतएवेति।इद्गोण्योरितिसूत्रेभाष्येस्पष्टम्।समासान्ताइत्यत्रतादर्थ्यात्ताच्छब्द्यमितिहितत्रभाष्यम्।अलौकिकेप्रक्रियावाक्येएवेत्यस्यप्रवर्त्ततइत्यनेना
ड्योबभ्यांप्रागिति।तेनलोहिनिकाआर्यकाचसिद्ध्यति।तथाहि।स्वार्थिकत्वेनान्तरङ्गः परत्वलोहितान्मणाविति कन् ङीपंबाधेत।ततः लोहिति
केत्येवस्यादित्युभयम्।ङीब्ग्रहणसामर्थ्यात्तुङ्यन्तात्कनिरूपद्वयंसिद्धम्।वर्णादनुदात्तादित्यस्यवैकल्पिकत्वात्।आर्यशब्दात्तुनसामित्र
चनइत्यत्रज्ञापयिष्यमाणेऽत्यन्तस्वार्थिकोपिकन् आब्ग्रहणसामर्थ्यात्पूर्वंनप्रवर्त्तते।तेनउदीचामातः स्थानेयकपूर्वायाइतिइत्वविकल्पः सि
ध्यति।स्यादेतत्।एवंसतिबहुगोमत्केतिनसिध्येत्।बहुगोमच्छब्दात्कपः प्रागुगित्लक्षणङीप्प्रसङ्गादितिचेन्नैवम्।अकृतएवसमासेऽलौकि
कप्रक्रियावाक्येएवउत्तरपदस्यावयवीभूयसमासान्तः प्रवर्ततेइति वक्ष्यमाणत्वात्।सचविभक्तेः पुरस्तादित्येके ॥
न्वयः। क्वप्रवर्त्ततेतत्राह।उत्तरपदस्येति।अनन्तरमितिशेषः।अवयवीभूयेत्यस्यप्रक्रियावाक्यस्येत्यादिः।एतत्स्वमतेनकथनम्।अवयवत्वेप्रमाणमाह।समा
सान्तइति।तच्छब्दवाच्यत्वादितिभावः।समासस्यैवायमन्तावयवइत्यन्तइतिसूत्रेभाष्येस्पष्टम्।इत्येकेइति।अत्रारुचिबीजन्तुसमासार्थवाक्यस्यान्तइतिगो
स्त्रियोरितिसूत्रस्थभाष्यस्वारस्यार्थविरोधः।नहिसुब्रहितंसमासार्थंकिंतुतद्विशिष्टमेव।किंचततः पूर्वंकपितःसमासस्याःसुब्लुकिटापिबहुचर्मिके
त्यादावापः सुपः परत्वादित्वानापत्तिः।नचविभक्त्यन्तेन्यपदार्थबोधकत्वारोपेणस्त्रीत्वबोधकत्वस्यतदन्तेसत्त्वात्सुब्लुकः पूर्वंकबन्तात्टाबिति वक्तुमशक्यमिति ॥

परस्तादितिपक्षेत्विति। नचविशिष्टस्यसुबन्तत्वाभावेनसुबन्तात्तद्धितइतिसिद्धान्तविरोधः। तेषामतिरिक्तार्थाभावेनपरिपूर्णमर्थं दर्शितिन्यायाविषयतयातस्य
सिद्धान्तस्यसमासान्तविषयेऽभावात्। एवंचसमासान्तेषुङ्याप्प्रातिपदिकादित्यस्यासंबन्धएव। तस्यामवस्थायांवाक्यस्यप्रातिपदिकत्वाभावादितिभावः। तद्धि
तान्तत्वादिति। प्रातिपदिकत्वेनेतिशेषः। पुनःसुपिचाकृतेइति। प्रत्ययलक्षणेनसुबन्तत्वात्समाससंज्ञा॥ कपदार्थैकावयवत्वेनतद्ग्रहणेनतद्
न्तस्यग्रहणम्। सुपिचकृतेइतिक्वाचित्कःपाठःप्रामादिकः। + यद्यपितत्रपाठेऽलौकिकविग्रहवाक्येपिअन्यपदार्थान्तर्भावेणएकार्थीभावरूपात्
सामर्थ्यसत्वेनपूर्वंटापितत:सुपिआपःसुपःपरत्वाभावाद्धर्मिकेत्यत्रेत्वसिद्धिरस्तितथापितदुत्पत्तिपर्यन्तंसमाससंज्ञायाअप्रवृत्तौमानाभावात्। न

परस्तादितिपक्षेतुतद्धितान्तत्वात्सुबन्तत्वं किंपुनःसुपिचाकृतेसमासइतिसिद्धान्तः। तस्मादन्तरङ्गादपितद्धिता
त्वाङ्ङ्याप्पोःप्रकृत्यर्थंङ्याब्ग्रहणमितिस्थितम्। यत्त्वाहुः। आब्ग्रहणंस्पष्टार्थमिति। तदनेनप्रत्युक्तम्। व
स्तुतस्तुङ्याप्पोर्ग्रहणमास्तुसुबन्तात्तद्धितोत्पत्तिरितिनिष्कर्षः सुपःप्रागेवचङ्याप्पोप्रवर्तेते ॥

चसुबन्तत्वाभावः। अनेनसुपासमुदायस्यसुबन्तत्वेपिउत्तरपदमात्रस्यतत्वाभावात्। पूर्वपदस्यसुबन्ततायाःप्रत्ययलक्षणेनैवोपपाद्यत्वात्। एवंचपूर्व
तत्वस्यैपुनाभावः। बहिर्भूतसङ्ख्याकारकसापेक्षसुपस्तस्यामवस्थायांतदनभिव्यक्त्याऽप्रवृत्तेश्च। वस्तुतस्तुतद्धितान्तत्वनिमित्तप्रातिपदिकसं
ज्ञासमकालमेवविरोधाभावेनतत्पूर्वभागस्यसमाससंज्ञेतिबोध्यम्। यौगपद्यासंभवएवशास्त्राणांक्रमप्रवृत्त्यङ्गीकारादितिदिक्। यत्त्वाहुरिति। ङ्याप्
ग्रहणन्तुलोहिनिकेत्यर्थमितितद्भावः। अनेनेति। आर्यकेत्यस्यासाधनेनेत्यर्थः ॥

सुबन्तात्तद्धितोत्पत्तौ प्रागेवङ्याप्योः प्रवृत्तौ च बीजमाह। स्वार्थादीति। स्वार्थद्रव्यलिङ्गसङ्ख्याकारकेत्यर्थः। स्वार्थः प्रवृत्तिनिमित्तं। विशिष्टबुद्धौ विशेषणज्ञानस्य
कारणत्वात्पूर्वं जात्यादिज्ञानं। ततो धर्मित्वेन प्रधानत्वाल्लिङ्गादिभिरप्याकाङ्क्षितत्वात्तदाश्रयज्ञानं। ततः स्वमात्रापेक्षत्वाल्लिङ्गस्य ज्ञानं। ततो विजातीयक्रियाका
रकापेक्षया सजातीयपदार्थापेक्षसङ्ख्यायाः प्रथममुपस्थित्या तज्ज्ञानं। ततः कारकरूपविभक्त्यर्थाकाङ्क्षा तन्निवृत्तौ हि बहिर्भूतकुत्सादियोग इति कुत्सित इति
सूत्रे भाष्ये स्पष्टम्। एवं च ज्ञानक्रमानुरोधेनैव तत्तत्प्रयुक्तकार्यप्रवृत्तेरौचित्येन क्रमिकत्वं स्पष्टमेव। यद्यपि लोकानां बोधे न क्रमेण तथापि शास्त्रप्रक्रियायां स्वा

स्वार्थादिप्रयुक्तकार्याणां क्रमिकत्वस्वीकारादित्यवधेयम्। सुट्‌स्योरिति। सोरुकारोऽवर्णत्वसावित्यत्र विशेषणार्थः। असीत्युक्ते ह्यस्तकारादप्रत्य
र्थः स्यात्। तथा च वानवर्वत्तु पयउस्त्रियासु इति न सिद्ध्येत्। ङ्सेरिकारो युष्मदस्मद्भ्यां ङ्सोऽशित्यत्र अस्य ग्रहणं माभूदिति। यद्वि तु एकवचनस्यैवेत्यत्रप
ञ्चम्यादित्यनुवृत्तेः परिशेषादन्यस्य ङ्सोऽत्र ग्रहणं भविष्यतीत्युच्यते तर्हि टाङ्सिङ्सामित्येतदर्थः। अत्र सोर्जकारशकारौ जसः शीनस्मात्कसोनंदू
त्यनयोर्विषयविभागार्थौ। अन्यतरस्य निरनुबन्धकत्वमेवास्तु इति चेन्न। जसो जकाराभावे औ इत्यस्मात् स्यात्। ततश्च प्रत्ययस्य वकारान्ततापि सम्भाव्येत।

स्वकृतकल्पितोऽयं क्रमः। अर्थवदुद्देशेन प्रातिपदिकत्वविधानात्। प्रातिपदिकोद्देशेन लिङ्गादौ ङीबादिविधानादिति बोध्यम्। अत एव घकालतनेषु इति चरितार्थ
म्। स्पष्टं चेदमचः परस्मिन्नित्यत्र भाष्यकैयटयोः। एवं चैतन्न्यायसिद्धार्थानुवाद एव ङ्याप्ग्रहणम्। अत्यन्तस्वार्थिकानां [illegible]त्वस्य निवृत्ते कृत्[illegible]विषयाभावा
च समासान्तेषु न दोषः। अत्यन्तस्वार्थिके कन्यार्थिके त्येव यद्यभिधानमस्ति। लोहितिके त्येतत्सिद्ध्यर्थं च लोहितात् लिङ्गबाधनं वेति कार्यमेवेति भावः। स्पष्टं चेदं सूत्रशेषे भा
ष्ये इत्यन्यत्र विस्तरः। पञ्चम्या इत्यनुवृत्तेरिति। तृतीयाव्यावृत्तये इति भावः। टाङ्सीति। तत्रेकारानुच्चारणे ह्रस्वयथासङ्ख्यानापत्तिरिति भावः ॥

ङि·त्वमिति। ततश्चटिलोपः स्यादितिभावः। विशेषणार्थइति। तत्फलन्तु सुपां सुलुगिति सूत्रेणाकारादेशे इनादेशाभावः। घेर्ङिती ति। नन्वघेः सुपि गुण इत्येवास्तु

एवं शसः षकाराभावे औटो ङित्वं सम्भाव्येत। अतो असन्देहार्थं तत्करणमौचित्यत्। औट इकारः सुडिति प्रत्याहारार्थः। टाङकारस्तु टाङसीति विशेषणार्थः। ङे प्रभृतीनां ङकारो घेर्ङितीति विशेषणार्थः। पकारस्तु प्रत्याहारार्थः। एवं च सर्वेषां फलत्वेपि संज्ञार्था इति प्राचो ग्रन्थोऽसङ्गत एव। सम्यग् ज्ञानं संज्ञा तदर्थाः विशेषणार्था इति यावत्। इति भङ्ग्या व्याख्याने पि क्लिष्टत्वमेवेत्युपेक्षितम्। सुपः॥ तिङस्त्रीणि त्रीणि इति सूत्रात् त्रीणि त्रीणि इति पदं तान्येकवचनेत्यादि सूत्रं च संपूर्णमनुवर्तत इति व्याचष्टे सुपस्त्रीणि त्रीणीत्यादिना। एकश इति। एकैकमित्यर्थः। सङ्ख्यैकवचनाच्चेति वीप्सायां प्रथमान्तात् शस्। यत्तु प्राचा एकैकश इत्युक्तं तदयुक्तम्। शसैव वीप्साया उक्तत्वेन द्विर्वचनायोगात्। येन नाप्राप्तिन्यायेन द्विर्वचनापवादः शस् इति सिद्धान्तात्। यत्त्वाहुः। सर्वस्य द्वे इत्यत्र एकैकशो ददातीति भाष्यप्रयोगात् तान्येकेति सूत्रे एकश इति सूत्रकारनिर्देशाच्चोभयं साध्विति। तन्न। उदाहृतभाष्यस्यान्यविषयत्वात्। यत्र तद्धितेनानुक्ता वीप्सा भवति तत्र द्विर्वचनं इत्युपक्रम्य हि। तद्यथा। एकैकशो ददातीति भाष्ये उदाहृतम् ॥

जसि चेति नियमात्तु नाडितिप्रवृत्तिरिति वाच्यम्। एतयद इत्यर्थं जसि चेत्यस्यावश्यकत्वात्। तान्येकेति। तत्रानुवृत्तानीत्यस्य लभ्यव्याकरणान्तरोक्त एम: ५२
प्रथमादिसंज्ञानीत्यर्थः ॥

म· रत्वात्ते इत्यस्य निघातः। मद्यो दात्तं पदम्। किं इत्यत्र इहजात पूर्वमिति पूर्वसूत्रात् पूर्वग्रहणमनुवर्त्तते तद्व्याचष्टे अविद्यमानेति। तेनेह न। देवदत्तः
११ किं चित्त्वविति। मान्येरिति। यदिहन्तीत्यादिभिरित्यर्थः। उत्तरवाक्ययोरिति। दिवो वा पार्थिवाद् धि इन्द्रं महो वा रजसः। इत्येतयोरित्यर्थः। इन्द्रं प्रति सा तिस्व स्वरः
नदानं अधीमहे। आ चिकिन्नयो कामदि। वैदिकनिघण्टौ याच्ञाकर्म सु ईमहे इति पाठात्। कस्माल्लोकादित्याकाङ्क्षायामाह। इतो स्मात्पार्थिवात् वा दिवो
वा महो महतः। प्रौढाद्रजसो रञ्जकात्। अन्तरिक्षलोकादिति मन्त्रार्थः। ननु श्रुतस्यैव तिङन्तस्योत्तरत्रानुषङ्गः तत्कथं प्राप्यम्यमिति चेत् अनुषक्तस्या
पि औपाधिकभेदं पुरस्कृत्य प्राप्यम्यार्थं यणेन निघातनिषेधस्य छन्दसि बहुशो दृष्टत्वात्। एतद्वेदैवमन्त्रे नियममुष्टिहत्ययेति मन्त्रे च वेदभाष्ये स्पष्ट
त्वात्। इन्द्र वाजेषिति। अवेतितिङन्तस्यैव निघातः। निघातभावस्तु उदाहरणान्तरं बोध्यम्। यद्वृत्तान्नित्यम्। यद्वृत्तात्परमिति अव्युत्पधानां शास्तुने हा
पिस्ते। तेन यो जात एव पर्यभूषत् इत्यादौ निघातनिषेधः सिध्यति। अत्र प्रमाणं तु पूजनात्पूजितमिति सूत्रे पूजितग्रहणं ज्ञापयतीत्याह। पूजनात् पू
जितमनुदात्तमिति सूत्रेण काष्ठाध्यापकः दारुणाध्यापकः परमाध्यापक इत्यादौ अनुदात्तता विधीयते तत्र काष्ठादिभ्य इति वार्त्तिकम्। वृत्तिकृता
सूत्रावयवत्वेन पठितम्। उदाहरणेषु मयूरव्यंसकादित्वात्समास इति वृत्तिमतम्। असमासे त्वविक्रियाविशेषणीभूतानां दारुणमित्यादीनां मलोपो
निपात्यत इति भाष्यवार्त्तिकयोः स्वरसः। ——— कैयटाद्यो प्येवम्। उभयथापि पूजनादित्येव पूजितपरिग्रहे सिद्धे पूजितग्रहणम
नन्तरप्रतिपत्त्यर्थं सत् ज्ञापयति। इह प्रकरणे पञ्चमीनिर्देशे प्यानन्तर्यं नाश्रीयत इति॥ इति तिङन्तस्वरनिरूपणप्रकरणं पञ्चमम्॥ संहितायामिति
ति। तयोर्य्वावचि संहितायामिति सूत्रे संहिताग्रहणस्याशास्त्रसमाप्तेरधिकृतत्वात्। स्वरितविधेस्तु तदन्तर्भूतत्वादिति भावः। नन्वसंहितायां कालव रामः
व्यवायादेव स्वरितो न भविष्यति तत्किमुक्तेन संहिताधिकारेणेति चेत्। मैवम्। संहिताधिकारबहिर्भूतानां कालव्यवायेपि प्रवृत्तिज्ञापयितुं तद्धार ११

ष्टिहत्यमेति। मुष्ट्याहननं मुष्टिहत्या। हनस्तचेति सुबन्त उपपदे क्यप्। कृदुत्तरपदस्वरोऽत्र प्राप्तः। क्विबक इति। बहुव्रीहित्वात्पूर्वपदप्रकृतिस्वरः प्रा
प्तः। विश्वायुरिति। विश्वमायुर्यस्मिन्नन्ने इति बहुव्रीहिः विश्वशब्दः क्वन्प्रत्ययान्तः। पूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वमिह प्राप्तम्॥ इति समासस्व
रप्रकरणम्॥ तिङ्ङतिङः। अतिङः किम्। पचति भवति। पाको भवतीत्यर्थः। वस्तुतस्तु अतिङ्ग्रहणं व्यर्थम्। समानवाक्याधिकारस्यैकान्तिकत्वा
वश्यकत्वात्। निपातैः। यदित्यादीनां यत्रेत्यन्तानां द्वन्द्वे तृतीयायाः सौत्रो लुक्। न तु युक्तशब्देन समासः। निपातैरिति विशेषणस्यानर्थकत्वापत्तेः।
यद्यपदार्थे च हेतौ च विचारे यदि चेत्त्वणः। हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः। क्वचित्प्रश्ने नेन्निषेधे प्रशंसायाङ्कुवित्स्मृतः। यत्रेत्याधारे तत्र
मूलेऽकेचिदुदाहृताः। अन्येऽप्यूह्याः। यथा। हन्त करोति। कथन्तर्हि हन्ताहं ———— पृथिवीमिमां निदधानीह वेह वा। अग्ने दूतोऽमीतिति तिङन्तस्य निपात
निषेधः प्राप्नोति। सत्यं बाहुलकान्नि घातः। एतेन हन्तो नु किमाससे इति व्याख्यातम्। हन्तो इत्यखण्डनिपातो न्यायबोध्यः। तथैव पदकारैः पाठात्। नेच्चे
च्छन्दौ तु निपातसमाहारात्मकौ नेदेवमायुजन्नत्र देवाः। अन्यश्चेन्नाभिगच्छति। अत्र नञ् वाभ्यां विच्छिद्य इच्छन्दस्य पदकालेऽपाठात्। चणिति। चेद
र्थ एव णित्। समुच्चयादौ त्वणित्। इन्द्रश्च मृळयाति नः। इन्द्रश्चेद् स्मात्सुखयेदित्यर्थः। त्वञ्च सोम नो वशो जीवातुन्न मरामहे। हे सोम त्वञ्चेन्नो जीवातुं
वशः। वश्यः कामयेथा इत्यर्थः। निपातैः किम्। यत्कूजति शकटम्। एति ति यत्। इणः शतरि। इणो यणिति यण्। ननु प्रतिपदोक्तत्वाद्यदादिभिः साह
चर्याच्च निपात एव ग्रहीष्यते सत्यम्। ज्ञापनार्थमिदम्। अत्र प्रकरणे उक्तरीत्या सङ्कोचो नेति तेन याव यथाभ्यामिति सूत्रे यत्तदेतेभ्य इतिवत्त्वन्तो
पि पावच्छन्दो गृह्यते। तेन याच प्रयुज्यते। तावदुषो राधो अस्मभ्यं रास्व यावत्स्तोतृभ्यो अरदो गृणाना। अत्रारद इत्यट्स्वरेणाद्युदात्तम्। यत्नग्रहणं किम्।
अभ्यान्विते माभूत्। यत्रेत्कामेत मनो दशं हृथस उत्तरम्। इह यत्रेत्यस्योत्तरमित्यनेन साक्षात्संबन्धः इत्यवधारणे अनुदात्तेन। भोस्य स इति। अदुपदेशात्त

॥ इति शब्दरत्नसंवलितमनोरमा समाप्ता ॥

स्मात्। तेनाम्नाविस्पृ इत्यस्माविस्पृ इत्यादाववग्रहेपि आनडादयः पदविभागे वत्स — सादयः। अग्निमीळ इत्यत्रपदविभागेपि निपातस्वसिद्ध
तासंहिताधिकारस्थनुपणादिकं स्वरितप्रचयादिकं नचेति विवेकः। नन्वेवं पुरः अहितम् इति विग्रहे हि शब्दस्यस्वरितत्वं बहुचैः पठ्यमानन्न
सिद्ध्येदिति चेन्न् मैवमानदीयप्रातिशाख्ये विशिष्य विधानात्। उक्तं हि मध्यास्वम्धीयमानानामनेकीभवतांस्वरः। उपदिष्टस्तथाविग्रादक्षराणाम
विग्रह इति। नन्वेवमुपह्न त्वैअन्वेतवा इत्यादीनामवग्रहे उत्तरखण्डाद्यवर्णस्य प्रचयः स्यादिति चेन्न। पद्यादांस्तु द्युदात्तानामसंहितवदुत्तरा
निति विशेषवचनात्। एवं रत्नधातमम्। अललाभवन्तीरित्यादीनाक्रमकाले इति शब्दोत्तरभागे प्रचयो न प्रवर्त्तते। परिग्रहेत्वनार्षान्ताक्रेनवेत्यंगीका
स्वीकृतात्। परेषांन्यासमावारं भ्यालिस्तोचेत्त्वरोपराविति वचनात्। इत्यमन्यत्रापि मुनित्रयवचांसितत्तत्प्रातिशाख्यानि तद्व्याख्याता गिरो नि
रुक्तादिग्रन्थांश्च पर्यालोच्य तत्वनिर्णयम्। उदाहाय यथाशास्त्रमुन्नेयमिति। अखण्डमपि यत्सर्वं कृत तद्धितपरं परम्। अशेषशास्त्रसंवेद्यमस्तु
रन्तडुपास्महे॥१॥ सिद्धान्तकौमुदीव्याख्यायेयंप्रौढमनोरमा॥ भट्टोजीदीक्षितकृतिर्भूयाद्विश्वेशतुष्टये॥२॥ इतिपदवाक्यप्रमाणज्ञश्रीलक्ष्मी
धरसूरेः सूनुनाभट्टोजिदीक्षितेन रचितायां प्रौढमनोरमायामुत्तरार्द्धं समाप्तम् ॥

॥ संवत् १९२० ॥ ॥ विद्योदयो निराकुर्यादविद्यातिमिरं सदा ॥ ॥ शुभं भूयात् ॥
॥ सहस्रांशुरिवाशेषसुद्रा किरणराजिभिः ॥

वीप्सायांद्विर्वचनेइति। शसः कारकाद्विधानेनमङ्गलामङ्गलारूपार्थापेक्षणेनचबहिरङ्गतयाद्विर्वचनेकृतेशसितिभावः। यद्यपिक्वचिदुक्तार्थानामपिप्रयोगोभवति तथापियत्रतद्धितेनानुक्तावीप्साभवतितत्रद्विर्वचनम्। यथैकैकशोददातीत्यादिभाष्योक्त्याल्पार्थकैकशब्दाद्वीप्सायांद्विर्वचनेबह्वल्पार्थादितिशसितिकैकशस्त्वं चप्रकृतेतदुक्तमशक्यम्। नचैवमृषिसहस्रमेकांकपिलामेकैकशः सहस्रकृत्वोदद्यात्तयानेसर्वेसहस्रदक्षिणाःसंपन्नाइत्यद्दुणसूत्रस्थभाष्येकैकशइति प्रयोगासङ्गतिरितिवाच्यम्। एकेतिप्रधानार्थकसंबोधनस्थलेनेकशद्रूपस्य प्रत्येकमित्यर्थकत्वेनादोषात्। एतद्भाष्यप्रामाण्येनस्वार्थिकद्विर्वचनकल्प

व्याख्यातंचकैय्यटेन अल्पार्थोप्येकशब्दोऽस्ति तस्यवीप्सायान्द्विर्वचनेबह्वल्पार्थादितिशस्प्रत्ययइति। नचैषोर्थः प्रकृतेसंभवतीत्यास्तान्तावत्। रामइति सञ्ज्ञाशब्दोयमव्युत्पन्नइतिपक्षेऽर्थवत्सूत्रेणप्रातिपदिकसञ्ज्ञा। करणाधिकरणयोश्चेत्यधिकारेघापवादेनहलश्चेतिघञा रमन्तेस्मिन्नितिव्युत्पादनेतुकृत्तद्धितेतिसूत्रेणेतिविवेकः। सरूपाणामेकशेषएकविभक्तौ। एकविभक्तौयानीति। विभक्तिःसारूप्येउपलक्षणंनत्वेकशेषेनिमित्तम्। एवंचानैमित्तिकत्वेनान्तरङ्गोयमेकशेषः सुबुत्पत्तेःप्रागेवप्रवर्तते। यद्येतन्नारभ्येत तर्हिप्रत्येकंविभक्तिःस्यात् द्वन्द्वश्चप्रवर्तेत। आरब्धेत्वेकशेषे नेकसुबन्तविरहाद्द्वन्द्वस्याप्राप्तिरेवफलिताभवतीतिभावः ॥

नापेक्षयामदुक्तस्यैवन्याय्यत्वात्। किंचनायंभाष्यप्रयोगः किंतुगौण्यप्युत्तरासंख्यापूर्वांसंख्यांबोधतेइत्यत्रश्रौतोवास्मार्तोवायंव्यवहारोदृष्टान्तत्वेनोक्तोभगवतेतितत्रछान्दसत्वान्नदोषएकैकशःपितृसंयुक्तानित्यादिवदितिदिक्। रमन्तेऽस्मिन्निति। योगिनइतिशेषः। द्वन्द्वाभावइति तावतैवद्वन्द्वापवादएकशेषइतिव्यवहारइतिभावः। एतेनैकशेषारम्भफलमपिनिरूपितंद्वन्द्वनिवृत्तिरूपम् ॥

उत्तरसूत्रस्यसे ति। वृद्धो यूनेतीत्यर्थः। अनुकर्षणादिति। अनुपश्चात्कर्षणात् आकर्षणादित्यर्थः। क्वचिदपकर्षणादित्यपि पाठः। नैकशेषइति। भ्यामादावपी त्यर्थः। भ्यामित्स्त्रीपुंसयोस्ताभ्यामित्यनुप्रयोगस्यसमत्वात्। एतेनानुप्रयोगविरोधादत्र नैकशेषइत्यपास्तम्। पुमान्स्त्रियेत्येकशेषोपिनतत्राप्येकविभक्तौ सरूपाण्ये वेत्यनुवृत्तेः। अतएव प्रातिपदिकैकशेषे मातृमात्रोः प्रतिषेधो वक्तव्यइतिवार्तिककृतोक्तम्। ननु वार्तिके प्रातिपदिकैकशेषइत्युक्तम्। विभक्त्यन्तानामेकशेषे पिजननीमातृधान्यमात्रर्थके मातृभ्यांदेहि मातृभ्यांचेत्यत्र प्रतिषेध आवश्यकः। नचतत्सत्त्वइष्टापत्तिः। किमुच्यते प्रातिपदिकानामेकशेषइति नपुनर्यस्यापि विभ क्त्यन्तानामेकशेषस्तेनापि प्रतिषेधो वक्तव्यस्तस्यापि ह्येतानि कानिचिद्विभक्त्यन्तानि सरूपाणि मातृभ्यांमातृभ्यां चेति। अथमतमेतद्विभक्त्यन्तानां सारूप्ये भवितव्यमे

सरूपाण्येवेति। एतच्चोत्तरसूत्रस्थस्यैवकारस्येहानुकर्षाल्लभ्यते। तेन मातृशब्दयोर्जननीवाचिपरिच्छेतृवाचिनोर्नैकशेषः। मातृभ्यामि त्यादौ सारूप्येपि जसादिषु वैरूप्यात् ॥

कशेषेणेति भाष्योक्तेरिति वाच्यम्। सूत्रव्याख्यानपक्षभेदेनैकलक्ष्यस्य साधुत्वासाधुत्वयोरनौ चित्यात्। अतएवाथमतमेतदिति प्रतीकमुपादायाभ्युपगमवादेनत्वेतदुच्यतइति कैयटादिभिर्व्याख्यातमिति चेन्न। ईदृशाविरुद्धमभ्युपेत्यैव वार्तिकेत दुक्तेः। अतएव तदुत्तरमेवं च कृत्वा चोद्यतेइत्युक्तं भाष्ये। अस्य प्रातिपदिकानामेकशेषइत्यादौ तिशेषः। अनेन चास्य पूर्वपक्षवार्तिकत्वं स्फुटमेवोक्तम्। तत्र मा तृ शब्दयोर्विभक्तौ विरूपाणामुपलक्षणम्। अयं च पूर्वपक्षः प्रातिपदिकैकशेषस्यैकविभक्ताविति पदाभावे एवोपपत्तिं मत्वा कृतः। तदभावे हि यानि सरूपा णि तेषामेकशेषएवेत्यर्थ एव प्राप्नोति प्रयोगमात्रावच्छेदेन सारूप्यस्य हरिणहरितप्रकृतिकहरिणीशब्दादौ तद्धितैर्वैरूप्येणासंभवात्प्रयोगसामानाधिकरण्ये नैव सारूप्यस्य ग्राह्यतया तस्यात्रापि सत्वात्प्राप्तस्य स निषेधः। अतएवाग्रे विभक्तेः सारूप्ये उलक्षणत्वमाश्रित्य तत्पक्षस्थापनेन तत्खण्डनं कृतमित्येवकारापकर्षो

तं विना तावन्मात्रेण तत्खण्डनायोगात्। एतेनैकविभक्ताविस्यावर्त्यैकविभक्तौ सरूपाणामेकविभक्तौ विवक्षितायामेकशेष इत्यर्थे यस्यां विभक्तावेकशेषस्तस्यां
विभक्तौ सरूपाणामित्यर्थस्य प्रत्यासत्त्या लाभेन भ्यामादावेकशेषो नौजसादाविति वार्तिकं व्यर्थमिति तदाशय इत्यपास्तम्। वार्तिकमते भ्यामादावपि तद्भावस्य प्रा
प्तत्वाच्चेति दिक्। एतच्चेति। एकशेषविधायकं चेत्यर्थः। ध्वनितं चेदं पृथक्सर्वेषां विभक्तिपराणामेकशेष इति पक्षे विभक्त्यन्तानामेकशेष इति पक्षे च द्वन्द्वप्रतिषेधो व
क्तव्य इत्याशङ्क्य नवकाश एकशेषो द्वन्द्वं बाधिष्यत इति ग्रन्थेन भाष्ये। इतरेतरेति। एकवद्भावस्यान्यतरस्यामित्यनेनैकशेषविषय पदानां समाहारः वृत्तिबोधना

एक एवेति। एतच्च समूहविवक्षायामेव प्रवर्तते। इतरेतरयोगद्वन्द्वस्य विषय इति यावत्। यत्र ह्यनेकस्यार्थस्य मिलितस्येतरान्वयः स तथाभूतोऽस्य
विषयः। इदं च इदि तोनुम्धातोरिति लिङ्गाल्लभ्यते न्यायाच्चातथा हि। यः शिष्यते स लुप्यमानार्थाभिधायीति स्थिते श्रूयमाणैकशब्दोपस्थितं सर्वमवि
शेषादेकरूपेणैवान्वेतुमर्हति। यद्वा पूर्वसूत्राद्द्वन्द्व इत्यनुवर्त्य द्वन्द्वे प्रसक्ते सतीति व्याख्येयम्। स्यादेतत्। द्वन्द्वे कृते सतीत्यर्थोऽस्तु। मैवम्। पन्था
नौ। पन्थानवस्त्राद्दैसमासान्तापत्तेः। कौ। कराद्इत्यादौ एकवद्भावापत्तेः। सर्वे। सर्वेषामित्यादौ द्वन्द्वे च विभाषा जसीत्यनयोरापत्तेश्चेति दिक्॥ यत्तु प्रा
या यमराम औदिति स्थिते इत्युक्तं एक एव शिष्यते एकविभक्तौ परत इति चात्रैस्य मुक्तिसंभवः। रामराम इत्यत्र अवयवयोरिव समुदायस्यापि प्रातिपदिक
संज्ञास्ति मिलितेनार्थवत्त्वात्॥

ॐ दिति भावः। इतरान्वय इति। एकरूपेणैकरूपावच्छिन्ने इतरत्रान्वय इत्यर्थः। इदि तदिति। अत्र ह्यनेनेदेन परस्परान्वयाद्भेदघटितसाहि
त्यनिमित्तैकशेषाप्रवृत्तिरिति भावः। एकरूपेणैवेति। पुष्पवन्त पद इवेति भावः। द्वन्द्वे प्रसक्ते इति। विभक्त्युत्पत्तौ सत्यामन्तप्रसक्तिर्बोध्या। एकवद्भावापत्तेरिति। एवं चेतरेतरयोग
विषयाभावेनैकशेषानामप्रवृत्तिरिति भावः। इत्यनयोरिति। जसः शीत्यत्रवेति वक्तव्ये विभाषा जसीति तु द्रूतावयवभेदविवक्षया बहुवचने एकशेषद्वन्द्वयोः सावकाशत्र विकल्पवार
णायोत्तरार्थं चेति भावः।

सजातीयेति। स्वातन्त्र्येण प्रयोगार्हत्वेन साजात्येपि न दोषः। एतत्पूर्वभागस्य विभक्त्युत्पत्तिमनपेक्ष्य स्वातन्त्र्येण प्रयोगानर्हत्वात्। अनुग्रहसंभवादिति। अत एव न प्रत्येकं तदुत्पत्तिः। बाधादिति। अन्यथा द्वन्द्वोच्छेदो नलोपाद्यसिद्धिश्चेति भावः। यानि सरूपाण्येवेति। तेषामेकविभक्तौ परत एकशेष इति शेषः। मानाभावादिति। भाष्येऽनुक्तत्वादिति भावः। किंचावृत्तौ प्रत्यासत्तिन्यायेन यस्यां विभक्तावेकशेषस्तस्यां विभक्तौ यानि सरूपाण्येव तेषामित्यर्थापत्त्या भ्यामादावेकशेषापत्तिः। प्रातिपदिके

न चार्थवत्त्वेपि समासग्रहणस्य नियमार्थत्वान्नैवमिति वाच्यम्। यत्र समुदाये पूर्वभागः पदं तद्विषयको नियम इत्युक्तत्वात्। बहुपटव इत्याद्यनुरोधेन नियमस्य सजातीयविषयताया औचित्याच्च। तथा चैकाज्द्विर्वचनन्यायेन समुदायप्रातिपदिकादेव द्विवचनाद्युत्पत्तिः ताव तापन्त्वपदार्थानामेकस्यान्वयेनानुग्रहसंभवात्। नन्वेवं रामकृष्णावित्यादिष्वपि द्वन्द्वं विनैव समुदायाद्विभक्तिः स्यादिति चेन्नैवम्। द्वन्द्वविधानवैयर्थ्यापत्तेः। अनित्यस्यानुवृत्त्या एकाज्द्विर्वचनन्यायस्य बाधादिति दिक्। इत्थमुक्तिसंभवे सत्यपि समुदायादेकविभक्तौ परत इति पक्षः किमर्थमुपेक्षित इति चेत्। शृणु। अस्मिन्पक्षे मातृमातारौ इत्यादावप्येकशेषः स्यात्। नन्वेकविभक्तावित्याव र्त्य एवकारं चानुकृष्य एकविभक्तौ यानि सरूपाण्येवेति व्याख्येयमिति चेन्न। आवृत्तौ मानाभावात्। विभक्तेरेकशेषस्य विशेषणत्वे फलाभावाच्च। न च पयः पयो जरयतीत्यादिव्यावृत्तिः फलं, सहविवक्षायामि त्यस्यावश्यकत्वात्। अन्यथा पयः पयो नयतीत्यत्र गौणमुख्यकर्मणोरेकशेषापत्तेः ॥ (९) कशेषे मातृमात्रोः प्रतिषेधो वक्तव्य इति वार्त्तिके न भ्यामादावपि तद्

भावस्यैवेष्टत्वानुमानात्। फलमिति। समुदायादेकविभक्तेरभावाद्विभक्तेर्लुकालुप्तत्वाच्चेति भावः। सहविवक्षायामिति। सा च समुदायस्यैकार्थनिरूपितैककारकावेश एव भवतीति भावः। गौणमुख्यकर्मणोरिति। उभयोरपि कर्मत्वेन तत्र समुदायादेकविभक्तेः कर्तुमशक्यत्वेन विभक्तिपदेन व्यावर्त्यासंभवेन सहविवक्षायामित्यावश्यकमिति भावः।

म॰श॰ ५५ युगपदधिकरणेति। युगपदधिकरणानां द्रव्याणां वचनं यैः पदैस्तद्भावस्तदर्थस्तदाह। एकैकमित्यादि। अलौकिके इति। तत्रैव द्वन्द्वादिप्रवृत्तिसत्वात्। तत्रापि तत्क
ल्पनादिति भावः। रामकृष्णावित्यादौ विरूपाणामपीत्येकशेषस्तु न। द्वन्द्व विधानसामर्थ्येन तत्राकालिकस्यैव समानार्थत्वस्य तत्र निमित्तत्वात्। एवं चैकस्य विभक्त्या
न्तस्य निवृत्तावपरस्य तद्विशिष्टस्य श्रवणमिति भावः। पक्षान्तरेपीति। अयं भावः। अलौकिके तत्कल्पनेपि प्रत्येकं सुबुत्पत्त्यनन्तरमेव तत्कल्पनात्तदनन्तरमे

यत्तु प्राचा व्याख्यात्रा पक्षान्तरमुपन्यस्तं सविभक्तिकानामेकशेषवृत्तिः। तन्न। निवर्तमानानां विभक्त्या सहैव निवृत्तावपि
शिष्यमाणे एकवचनश्रवणप्रसङ्गात्। अथोच्येत युगपदधिकरणवचनतायां द्विवचनबहुवचनान्तानामेकशेषः द्वन्द्वोप्येवमात
[illegible]हितत्वार्थायां वृत्तौ एकैकमनेकार्थाभिधायि परस्परसमभिव्याहारात्। तथा च अलौकिके द्वन्द्वैकशेषयोः प्रक्रियावा
[illegible] द्विवचनबहुवचनयोरेव प्रवेशाद् विभक्त्यन्तानामेकशेष इति पक्षो निर्बाध एवेति। तदपि न। जहत्स्वार्थायां वृत्तौ त
दयोगात्। पक्षान्तरेपि प्रथमप्रवृत्तस्यैकवचनस्य त्यागायोगात्। अन्यथा षष्ठीतत्पुरुषादुच्छेदापत्तेः। तत्रापि पूर्वपद
स्य उत्तरपदार्थे उपसंक्रमेण षष्ठ्याद्ययोगात् ॥

वतत्कल्पकद्वन्द्वैकशेषयोः प्रवृत्तेः एवं चान्तरङ्गत्वादुत्पन्नैकवचनत्यागेन द्विवचनाद्युत्पत्तौ मानाभाव इति॥ उत्तरपदार्थे उपसंक्रमेणेति। उपसंक्रमश्च तदालिङ्ग
तस्यैव स्वार्थस्योपस्थितिः सा च विभक्त्यर्थसंबन्धाद्यन्तर्भावेणैवेति तस्योक्ततया तदनापत्तौ तदुच्छेद इति भावः। दुःखाचेति। वृद्धव्यवहारस्य शब्दार्थनिर्णयहे
तुत्वं न च प्लक्षस्य न्यग्रोधाभिधायित्वं वृद्धव्यवहारे दृश्यते। न्यग्रोधशब्देन तल्लाभाच्च न लक्षणापि। प्लक्षन्यग्रोधावित्यादौ बोधास्त्यननुभवाच्च ॥ रामः ५५

दुरुपपादा चेति। न च द्विवचनाद्यनुपपत्तिस्तदुपपादिका। समासस्योद्भूतावयवभेदसमुदायाभिधानशक्तिमत्त्वाद्द्विवचनादिसिद्ध्या तदनुपपत्तेस्तदुपपादकत्वा भावात्। समुच्चयान्वयस्य समासस्य सामर्थ्येनैव वारयिष्यमाणतया न तदापत्तिरेतदुपपादिका। न चान्यत्रोपपादयितुमशक्यत्वेऽपि एकशेषे एकस्य शेषः द्वन्द्वत्वत्रवि निगमकाभावात्तत्रैवैको सर्वार्थत्वमावश्यकम्। तथा सत्येकशेषस्यैव वैयर्थ्यापत्तेः। तस्मादेकशेषज्ञानोत्तरं शास्त्रवासनावतां न वृत्तिर्नानन्तुततः प्रागपीति न दोषः। आकृत्यविनाभूतेति॥ नियमेनाकृतिसंबद्धेऽस्यर्थः। ब्राह्मणशब्देनैवेतिभावः। नहि तत्रैकशेषः॥ तावद् ब्राह्मणशब्दतानां संभवात्तस्याकृतजातिपक्षेण तन्त्रेणैवयथा निर्वाहस्तथा

तथा च भाष्यम् असेयं युगपदधिकरणवचनता दुःखा च दुरुपपादा चेति। यदपि व्याचख्युः। व्यक्तिपक्षे यावद्व्यक्ति तत्तच्छब्दप्रयोगे प्राप्ते एकस्यैव प्रयो गेण सर्वोदिति सूत्रम्। आकृतिपक्षे तु एकेनैवाकृत्यविनाभूतानेकव्यक्तिलाभादस्वर्थकमिति। तन्न। व्यक्तिपक्षेऽपि न ब्राह्मणहन्यादित्यत्र ब्राह्मणशब्देने वैकेनापि अनेकेषां तन्त्रेण सुवचत्वात्। अन्यथा जातिपक्षेऽपि वासेनं सम्यकृत्समये प्रतस्मिन् दृत्यादिना नार्थानुरोधेन सूत्रं विना निर्वाहात्। तस्मा जातिव्यक्तिपक्षयोरुभयोरपि तन्त्रेण प्रयोगनिर्वाहेऽपि सर्वत्र तन्त्रेणैव बोधनीयमिति नियामकाभावात्साक्षिको द्वन्द्वः सूत्रं विना दुर्वारः ॥

न्यत्रापीतिभावः। न ब्राह्मणमित्येकवचनं त्वार्षम्। तन्त्रेण सुवचत्वादिति॥ अयं भावः। भाष्येऽर्थावर्थौ प्रतियदर्थानर्थान्प्रति वयचदपि प्रत्यर्थमेवेत्युक्तम्। एवं चै केनानेकार्थबोधनमपि प्रत्यर्थमेवेति एकेनैव ब्राह्मणपदेनानेकार्थबोधनं तत्र। अन्यथा विद्यमानायाः शक्तेरेकशेषशास्त्रसहस्रेणापि उपपादयितुमशक्य तया बोधानुपपत्तिरेव स्यात्। तन्त्रं चात्रार्थतन्त्रम्। एकत्रैव शब्देनेकार्थानां सत्त्वात्। शब्दस्य पर्यायपरिवृत्तिसहतयार्थतन्त्रमेवैतत्। अक्षादृत्वादौ तु तद सहतया शब्दतन्त्रमेव। अन्यथा। तन्त्रानङ्गीकारे। क्षमाशब्दः क्षान्तिभूम्योर्वाचकः। नानार्थानुरोधेनेति। सूत्रमावश्यकं तत्रेति शेषः ॥

न्यायप्राप्तत्वादिति। अनभिधानमाश्रित्य तु भाष्ये पक्षद्वयेपि सूत्रं प्रत्याख्यातमित्यन्यत्। अनेकघटादिपदानां चार्थे वृत्तिरेव नानभिधानादिति द्वन्द्वप्राप्तिरेवेति
तदाशयः। आवश्यकमिति। अनभिधानाज्ज्ञानेद्वितिशेषः। नानेनैकशेषो विधीयते इति। किंतु न्यायसिद्ध एवानूद्यते इति एतच्छेषस्तद्ग्रन्थे। प्रयुक्तानामिति। अयंभावः।
वृद्ध्यादिप्रवृत्तावेकशेषशास्त्राप्रवृत्त्यानित्यविभक्तिदेश्यता कार्ये कानाक्रान्तत्वेन तावदेव परिनिष्ठितं स्यात्तच्च न लोके प्रयुज्यते प्रयुक्तानां चेदमन्वाख्यानमिति न तत्र

घटोयं घटोयमिति नाशब्दप्रयोगदर्शनात्तद्वद्घटघटाविति द्वन्द्वस्य न्यायप्राप्तत्वात्। न चैवमपि घटकलशाविति द्वन्द्वापत्तिः। विरूपाणामपि स
मानार्थानामिति वार्तिकात्। रूप्यते बोध्यत इति व्युत्पत्त्या रूपशब्दस्य अर्थपरत्वमाश्रित्य वार्तिकार्थस्यापि सूत्रेणैव क्रोडीकारात्तस्माद्घटघटौ घ
टकलशौ विपासिकअनिष्टवारणाय पक्षद्वयेपि सूत्रमावश्यकमित्यवधेयम्। एवं स्थिते सूत्रवैयर्थ्यमेव हृदि निधाय यदि ह व्याचख्युः। नानेनैक
शेषो विधीयते इत्यादि यच्च समुदायादेकस्यां विभक्ताविति पक्षं प्रत्याख्याय पुनराहुः। रामरामऔ इति स्थिते इति। अलौकिकमेतत्प्रक्रियावाक्यमूह्य
ते न तु लौकिकम्। अलौकिके च विभक्त्येकादेशादिकार्यं न प्रवर्तते। प्रयुक्तानामेवान्वाख्यानादित्यादि। तत्सर्वं सन्दर्भविरुद्धं न्यायविरुद्धं च। प्रयुक्तानेवह्यन्वा
ख्यातुमलौकिकं सूत्र्यते। शास्त्रीयकार्यं च सर्वमलौकिके एव प्रवर्तते न तु परिनिष्ठिते। प्रथमयोः पूर्वसवर्ण इत्यादीनां प्रवृत्तिं विना परिनिष्ठितरूपालाभात्। परि
निष्ठिते तत्प्रवृत्तेर्दुरुपपादत्वाच्चेत्यास्तान्तावत् । क्रियावाक्ये वृद्ध्यादिप्राप्तिरिति। संदर्भविरुद्धमिति। एकस्यैव प्रयोगे यथास्यादिति सूत्रमिति समुदायादेकविभक्ता
विति पक्षः प्रत्याख्यात इति च सन्दर्भ इत्यर्थः। न्यायविरोधमाह। प्रयुक्तानेवेति। न च यथा वृत्त्याशास्त्रीयकार्यप्रवृत्त्यापरिनिष्ठितं सल्लोके प्रयोगार्हं कल्पितेतदीयालौकिके तच्च
त्र प्रवृत्तावपि अत्र वृद्ध्यादिप्रवृत्तिर्नोचिता वैषम्यादिति वाच्यम्। कृतद्वन्द्वानामेकशेष इति पक्षेनावावनड्वाहाविति यादौ परत्वादिना आवादौ कृते एकशेषानापत्तेरिति दूषणात्

नपरमाख्यवार्तिकमुद्भाव्यप्रत्याख्यातम्॥

अमियोऽजिति। अनुप्रविन आधारत्वविवक्षायां तृसेशाखेतिवत्सप्तमीत्याह। अमोऽवयवे चेति। पूर्वपरयोरित्यधिकृतपरशब्देन विशेष्यत्वादजेवगम्यत इति बोध्यम्। नि
र्विवादत्वादित्रि एतत्सूत्रानुवृत्तेः सत्वादिति भावः। लिङ्गमिति। अनुवृत्तावनुवृत्तस्य विशेष्यत्वे चेत्यर्थः। स्पष्टं चेदमौतोम्शसोरित्युपक्रम्य प्रत्ययलक्षणसूत्रे भाष्ये। अवयवष
ष्ठीति। अवयवावयविभावसंबन्धबोधिका षष्ठीत्यर्थः। निर्देशाच्चेति। नुम्ग्रहणाच्चेत्यपि बोध्यम्। नियमार्थ इति। स च साजात्यादक्षरसमाम्नायिकविषयकोऽतो नृणामित्या
असिपूर्वः। अमश्चेति। अमियो चेतस्मिन्। अमोऽवयवे चेति यावत्। तेन मकारसहितस्य पूर्वरूपं न। एवं अस्मादूहिन्यामित्यादावपि ऊहिन्यां यो चेतस्मिन्नित्यादि बो
ध्यम्। इको यण चीत्यजग्रहणस्यानुवृत्तेर्निर्विवादत्वात्। पदास्वैरिबाह्येत्यादिनिर्देशाच्चेह लिङ्गं। तस्माच्छसः। तत्शब्देन सन्निहितः पूर्वसवर्णदीर्घः परामृश्यते।
तस्य इत्यवयवषष्ठी। स चावयवः परत्वेन विशेष्यते। पूर्वसवर्णदीर्घात्परस्य शसोऽवयवस्येति। तदेतदाह। परो यः शसः सकार इति। परो यः शस इति तु नोक्तम्। अ
संभवाच्च कृते पूर्वसवर्णदीर्घे ततः परः शस् संभवति। अट्कुप्वाङ्। रषाभ्यामिति पञ्चमीनिर्देशादव्यवहितस्य प्राप्तौ वचनमिदम्। तत्र सर्वैर्व्यवायोऽसंभ
वी। एकैकमात्रविषय इत्यपि नार्थः। सुभ्वादिषु सुभ्नशब्दपाठसामर्थ्यात् रूपाणामित्यादिनिर्देशाच्चेत्यभिप्रेत्याह। यथासंभवमिलितैश्चेति। नन्वेवं आदर्शेने
अतिप्रसङ्गः। अच्पर्यङादिभिरेव व्यवधाने इति नियमः। अप्राप्ते विधिरयमित्युक्तत्वात्। सत्यम्। योगविभागोऽत्र बोध्यः। व्यवायेपीत्येको योगो विध्यर्थः। अट्कुप्वा
ङ्नुम् इत्यन्यो नियमार्थः। छान्दसोऽभिसो लुक्। निषेधं बाधितुमिति। तेन पर्याणद्धमित्यत्र उपसर्गादसमासे पीति णत्वं सिध्यतीति भावः ॥
स्वतराभागेन व्यवधानेपि णत्वसिद्ध्याऽकुवर्णान्तस्येति वचनं न कार्यमिति भावः। इदं प्रत्याहाराह्निके प्रकृतसूत्रे च भाष्ये स्पष्टम्। यद्यपि रषाभ्यामिति पञ्चम्योपस्थितनिर्दि
ष्टपदस्य व्यवाये इत्यनेनाविरोधायाऽज्व्यतिरिक्ताव्यवहितपरतया दर्शनाल्लीत्यादौ णत्वं मुख्यकवारणम्। ध्वनितं चेदं प्रकृतसूत्रे वार्तिककृता तथापि तत्र नृणामि
त्यर्थवचनारम्भे गौरवमितीदमेवाहतं मूलकृता ॥

स्वाभाविकस्येति। तद्भिन्नस्थानिकस्यपाणिन्युच्चारितस्येत्यर्थः। तृंहू इत्यादेरपिनकारजावनुस्वारेनिवृद्धोक्तेर्नस्थानिकत्वादतएवतृं हू इत्यस्यनलोपेतृढ इत्यस्यसिद्धिः।
इविप्रीणन इति। हिविदिवीतिदण्डकप ठितस्येदंनिष्कृष्यग्रहणम्। प्रेन्वनमित्यादौनुमोनस्यक्षुभ्नादित्वाण्णत्वाभावः। इतिदिगिति। तद्धृदत्रतुनवकुंशक्यंतृंहू इ
नुम्ग्रहणमिति। तत्स्थानिकस्यस्वाभाविकस्यचानुस्वारमात्रस्योपलक्षणमित्यर्थः। तेनवृंहिवृद्धोइदित्वान्नुम्। तस्यानुस्वारः। तृंहू हिंसायाम्। स्वाभा
विकोत्रानुस्वारः। वृंहणम्। तृंहणम्। उभयत्रापिणत्वंसिद्धम्। इविप्रीणने। प्रेन्वनम्। इहकृत्यचइजादेः सनुमइतिणत्वंन। यथानक्षत्रंदृष्ट्वावाचंविसृजेदिति
विधौनक्षत्रदर्शनस्यकालविशेषोपलक्षणत्वात्सत्यपिदिवानक्षत्रदर्शनेवाङ्नविसृज्यतेउपलक्षितस्यकालविशेषस्याभावात्। रात्रौअसत्यपिनक्षत्र
दर्शनेविसृज्यते। [illegible]त्। तथेहापिबोध्यम्। नन्वेवनुम्ग्रहणंव्यर्थंअनुस्वारस्याट्त्वेनैवसंग्रहात्। उरःकेणेत्यादौविसर्ग—जिह्वामूलीयादिव्यव
धानेऽप्येवम्[illegible]ः इति[illegible]सत्यमित्याह। नचेति। स्यादेतत्। उक्तरीत्यानुम्विसर्जनीयेतिसूत्रेपिनुम्ग्रहणंत्याज्यंस्यात्। तत्राप्यनुस्वारस्यलक्षणीयत्वात्।
अन्यथाऽसंभवात्। नहिषत्वप्रवृत्तिवेलायांसर्पींषीत्यादौनुम्लभ्यते। षत्वस्यासिद्धत्वेनततःप्रागेवानुस्वारप्रवृत्तेः। यद्यपिसुहिन्सुइत्यत्रसंभवत्येवत
थापितत्रैवातिव्याप्तिंवारयितुंलक्ष्यानुरोधान्नुम्स्थानिकेऽनुस्वारेलक्षणाश्रयणीयैवव्याख्यानात्। तस्यचशत्वेनतद्व्यवायेषत्वस्यसिद्धत्वादितिचेत्। मै
वम्। उक्तरीत्यातत्रत्यविसर्गग्रहणस्यप्रत्याख्यानसम्भवेपिनियमार्थंनुम्ग्रहणम्। तथाहि। अनुस्वारेणव्यवधानेचेत्षत्वंतर्हिनुम्स्थानिकेनैवेति
नियम्यते। तेनपुंस्वित्यादौषत्वंनेतिदिक्। यस्मात्प्रत्ययविधिः। अत्रप्राचोक्तम्। यस्माद्धातोःप्रातिपदिकाद्वेति। तन्न। तिङन्तादीनामपितरबादिकंप्र
योगत्वात्। [illegible]स्यनिर्मूलत्वात्। आमुष्यायणइत्यादौवृद्ध्यभावापत्तेश्च ॥
स्यस्यतृंहणमित्यादि[illegible]ः स्पष्टंचेदंभाष्ये। अङ्गत्वादिति। तदनङ्गीकारेह्यपावितरामित्यादौचिणोलुगापादनादिपरभाष्यविरोधः। चिणःपरस्याङ्गसंज्ञानिमित्तस्यप्रत्ययस्यलुगित्यर्थात् ॥

दिगिति। दिगर्थस्तु ... आकथाच मित्यादौ याथा कथा ... हस्ताभ्यां णयता विलम्बेन वचनसामर्थ्येन निपातसमुदायात्प्रत्ययं गत्वा नापत्तौ वृद्ध्यनापत्तेरित्यलम्। ऐस्कृतदिति। न य्यैरित्यादि सिद्धये उत्तरार्थं तदित्यन्ये स्पष्टमिति सुपि चेत्यपेक्षयानामीति तत्र नित्यमित्यपि ध्वनितं। विषयभेदादिति। तन्त्रेण षष्ठीद्वयोच्चारणाद् आदेशरूपसस्यस्थाने प्र

नहि प्रातिपदिकाद यं तद्धितः किंतु सुबन्तादिति दिक्। अतो भिस ऐस्। नन्वेस इत्येवास्तु। न च अंतो गुणे इति पररूपापत्तिः। एकारोच्चारणवै यर्थ्यापत्तेः। अन्यथा दृशमेव विदध्यात्। इति चेत्सत्यम्। एदैतो र्हि मात्र त्वाविशेषेण गौरवाभावात् ऐस्कृतः। एवं च पररूपशङ्कैव नास्ती ति महद्वा ... एवमाश्रयाङुः। ऐस्करणं निर्जरसैरित्यैकार श्रवणार्थमिति तद्भाष्यविरुद्धम्। सन्निपात परिभाषया जरसादेशाप्रवृत्तेर्निर्जरैरि त्येव माष्यसिद्धान्तितत्वात्। अमि। परिभाषाविरोधादिति। एतच्च रुधादिभ्यः श्नमिति सूत्रे श्नान्नलोप इति सूत्रे च भाष्य कैयटयोः स्पष्टम्। आरम्भ सामर्थ्यादिति। सुपि चेत्यस्य तु न सामर्थ्यम्। रामाभ्यामित्यादौ सावकाशत्वादिति भावः। एवं च रामशब्देनामीत्यस्योपन्यासो लेखक प्रमादादिति य इत्तुः स्तच्चिन्त्यम्। आदेशप्रत्यययोः। एकापि षष्ठी विषयभेदाद्भिद्यत इत्याशयेन व्याचष्टे। आदेशः प्रत्ययावयवश्चेति। यदि तु आदेशावयवो गृह्य ते तर्हि तिसृणामित्यादौ दोषः। यदि च प्रत्ययो यः सकार इति तर्हि रामेष्वित्यादौ न स्यात्। यद्यप्येवं वैरूप्येण व्याख्याने सह विवक्षा विरहात् द्वन्द्वो न युज्यते तथापि सौत्रत्वाद्बोध्यः। विवृताघोषस्येति। यत्तु वदन्ति सकारस्य सोष्मणोऽघोषस्यान्तरतमः षएव मूर्धन्यः इति तन्न्यूनम् ॥

स्यावयवसस्यस्थाने च षो भवतीत्येवं रूपः षष्ठीभेद इत्यर्थः। ओसं ... इत्यार्थक इत्यभिमानः। तिसृणामिति। तिस्रादेशे सकारोच्चारणन्तु तिसृ इत्यत्र न रपरेति षत्वनिषेधे चरितार्थमिति भावः ॥

ठकारेतिप्रसङ्गादिति। सोष्मणः सोष्माणद् इति द्वितीयाद् इति स्थाने। तरतमसूत्रस्थभाष्येण तस्यापि सोष्मत्वबोधनात्। सोष्मण इत्यस्योष्मत्वसहितस्येत्यर्थः। अभ्यर्थेऽन्य
न्तरसंवादमप्याह। तथाचेति। प्राक्सुबुत्पत्तेरिति। सोपपदात्ति चेर्विचितिभावः। केवलात्ति चेर्विचि दध्नः सेचावितिसमासेनूत्तरपदत्वे चेत्यस्यापदादिविधाविति निषे
धेन प्रत्ययलक्षणेन पदत्वसत्वात् दस्यादिरिति पदत्वेपि सिद्धिरिति भावः। यद्यपि केचिदटेन सोपपदात्ति चेर्विजेव नानभिधानादित्युक्तं तथापि यच्चिभमित्यत्र सुप्तिङन्त
मित्यतः सुबित्यनुवर्त्य यजादावसर्वनामस्थाने तत्प्रकृतिर्भसंज्ञा भवति यजादावसर्वनामस्थानपरं सुबन्तं यद्यस्ति तदपि भसंज्ञं तेन सुवाचेत्यादौ न कुत्वम्। अत्र तत्प्रकृतेः
सञ्ज्ञाप्रधानशिष्टभवयवसुबन्तस्यत्वन्वाचयशिष्ट। एवं स्वादिष्विति योगविभज्य स्वादिषु पूर्वस्य पदत्वविधायासर्वनामस्थाने इत्यत्र सुबन्तमित्यनुवर्त्यते चोत्पपकण्यप्रसज्यत्र

ठकारे तिप्रसङ्गात्। तथा च प्रातिशाख्यम्। वर्गे च प्रथमा वर्घोषेषु ग्मो सोष्माणा अनुनासिको न्त्य इति। नच दधि सेचौ दधि सेच इत्यादौ प्राक्सु
बुत्पत्तेः समासे पदत्वाभावात् पत्वं पदादादिः पदादिरिति पञ्चमी समासो भाष्ये उक्तः। ततश्चेहापि सात्पदाद्योरिति निषेधः स्यादिति चेत् ॥

तिषेधमाश्रित्य यजादौ सर्वनामस्थाने परतः पूर्वपदं न तत्स्वरं यदि सुबन्तमस्ति तदपि पदं नेत्यर्थः। सुबन्तं च यजादिप्रत्ययाव्यवहितमेवातो राजपुरुषादौ पूर्वप
देन लोपादिसिद्धिः। तत्र समुदायस्य स्वादिष्विति प्राप्ताऽवयवस्य सुबन्तामिति प्राप्ताप्रूयमाणे सौ पूर्वपदस्य संज्ञेष्टैव। तेन सुवाचावित्यादिसिद्धिरित्येवमुत्तरपदत्वे
चेत्यस्य प्रत्याख्यानेदध्नः सेचाविति षष्ठीतत्पुरुषेपि षत्वनिषेधाय पंचमीसमास आवश्यक इत्यनभिधानेन मानमिति तात्पर्यम्। प्रत्याख्याने पञ्चमीस
मासे बहुसेचावित्यादौ बहुपूर्वस्य षत्वं नेति वचनं कार्यं वार्त्तिकारम्भे तत्रैव कुत्ववारणाय बहुपूर्वस्य चापदादिविधौ नेति वदिदमपि योगविभागस्येष्टसि
द्धर्थं तथा यत्रोत्तरपदस्य कार्यित्वं तद्विषय एव पदान्तत्वप्रयुक्तकार्यं एव च बोध्यमित्यन्यत्र विस्तरः ॥

यापदसंज्ञेति।भच राजपुरुषेष्वित्यत्रदोषः।अंतर्वर्तिविभक्त्यासुबन्तमितिपदत्वमाश्रित्यनिषेधापत्तेरितिवाच्यम्।सातिग्रहणेनस्वादिष्वितियस्यपदसंज्ञातदुत्त
रस्यषत्वनिषेधोनेतिज्ञाप्यतइतितात्पर्यात्।प्रत्याख्यानरीत्यातस्यापिस्वादिष्विविपदत्वात्।सर्वंचेदंनलुमतेतिसूत्रेभाष्येस्पष्टम्।व्यतिसेइति।यद्यपिव्यतिहारस्यानेक
कर्तृकक्रियाविषयत्वादेकवचनस्यतत्रासम्भवस्तथापिविश्वामित्राश्रमेमारीचंप्रतिकिमर्थंब्रह्मवधंकरोषीतिपृष्टेममायंधर्मइतितेनोक्तेत्तरितेधर्मोऽस्तिमत्संतव
एवसतममान्योन्यमतिस्तेऽनुममापिधर्मः।ब्रह्मद्विषस्तेप्राणिहन्मियेनेति।भट्टिकाव्यस्यरामवाक्येतवधर्मेणममान्योधर्मस्तपोरूपोव्यत्यासेनभवतियेनधर्मेणत्वंतवं

मेवम्।स्वादिष्विति यावत्पदसंज्ञातामाश्रित्योक्तनिषेधोनप्रवर्ततइतिसातिग्रहणेनज्ञापितत्वात्।यत्वाहुः प्रत्ययविषयेनायंनिषेधइतिज्ञाप्यत
इति।तन्न।व्यतिसेइत्यादौषत्वापत्तेः।ननुपदस्यादिरितिपक्षेव्यतिसइत्यत्रषत्वंदुर्वारम्।नचव्यपदेशिवद्भावेनसेइत्यस्यापितिङन्तत्वात्पदत्वं
कथम्।प्रत्ययग्रहणेयस्मात्सविहितस्तदादेरेवग्रहणात्।अन्यथारामेष्वित्यादावपिषत्वनिषेधापत्तिरितिचेत्सत्यम्।नवयंप्रत्ययमात्रस्यतद
न्तत्वम्।किंतुप्रकृतिप्रत्ययसमुदायेप्रवृत्तांपदसंज्ञामेकदेशविकृतन्यायेनलुप्तप्रकृतिकेप्रत्ययेप्यानयामः ॥

ध्विनोनिहन्मीत्यर्थकेएकवचनदर्शनान्नदोषः।अद्यारभ्यत्वद्धर्मः कौर्यमयिभवतिमद्धर्मोंकौर्यंचत्वयि।वर्तमानसामीप्येलट्।रामबाणपातेनसमुद्रसमीपेपतितो
मारीचस्तपश्चचारेतिरामायणेप्रसिद्धम्।अन्यसंबन्धिक्रियामितरःकरोतिइतरसंबन्धीनीमन्यइतिकर्मव्यतिहारसंभवादितिजयमङ्गलाव्यतिसेइत्यस्यहे चै
त्रमैत्रेणसहव्यत्यस्तोभवसीत्यर्थः यद्देशेमैत्रसत्तातद्देशेचैत्रस्यसत्तायद्देशेचैत्रस्यसत्तातद्देशेमैत्रस्येतिफलति।यद्यपिव्यपदेशिवद्भावेनैकाच्त्वादेरिवास्याप्यशास्त्रीय
त्वान्निर्देशोवक्तुंशक्यःरामेष्वित्यादौत्वसहायत्वाभवान्नतत्प्रवृत्तिस्तथापिपूर्वपक्ष्युक्तमभ्युपेत्यापिसमाधातुमुपक्रमतेनवयमित्यादिना ॥

ग॰ श॰ सिद्धत्वादिति। सुप्तिङन्तमित्यत्र यस्मात्प्रत्ययविधिरित्यनुवृत्तेरिति भावः। अत्र कृतेप्येकादेशे एकदेशविकृतन्यायेनोक्तरीत्या मान्तस्य प्रकृतित्वादौ इत्यस्य प
५९ रादिवद्भावेन सुप्तान्तत्वेन पदत्वसिद्धिरिति सिद्धान्तान्तरमपि सूचितम्। इदं चान्तादिवत्सूत्रे भाष्ये स्पष्टम्। तत्र वृक्षे इत्यादौ परादिवत्त्वेनैकारस्य सुप्त्वमाश्रित्य प
दादित्वं साधितम्। अनुपयोगाच्चेति। येन स सहायेऽव्यपदेशिवद्भावा प्रकृत्या तत्संनिधाने तेषां पदत्वं नास्तीति सूचितम्। आद्यन्तवत्सूत्रस्थभाष्योक्तैकपुत्रादिदृष्टान्तबले

रामो रामादित्यादावपि हि एकदेशविकृतन्यायेनैव पदत्वम्। एकादेशात्प्रागेव पदसंज्ञाप्रवृत्तेः। न त्वेकादेशे कृते सुप्तिङन्तमित्यस्य प्राप्तिरस्ति। उभ
यतआश्रयणेनान्तादिवदिति सिद्धान्तात्। यत्तु वदन्ति। प्रकृतिसन्निधाने प्रत्ययस्य पदत्वं नास्ति। मन्त्रेषु सर्वेषामित्यादिनिर्देशादिति। तच्चिन्त्यम्। उक्त
रीत्या पदत्वाभावेऽन्यायस्ति देज्ञाप्तनस्यासंभवादनुपयोगाच्च॥ सर्वादीनि सर्वनामानि॥ सर्वादीनीति तद्गुणसंविज्ञानो बहुव्रीहिः। हलि सर्वेषामिति निर्दे
शात्। द्वन्द्वे चेतीति। स हि समुदायस्य निषेधो न त्ववयवानामिति वक्ष्यते। न च तदन्तविधिं विना समुदाये संज्ञाप्रसक्तिरस्तीति भावः। ननु तदन्त
संज्ञायाः किं फलम्। न च परमसर्वस्मादित्यादौ स्मायादयः फलम्। अङ्गाधिकारे तदन्तविधिनैव सिद्धेः। इत्यत आह। तेनेति। न चेहापि प्रातिपदिका
दित्यनुवृत्तेः। सर्वनाम्ना तद्विशेषणे तदन्तविधिर्भवतीति वाच्यम्। समासप्रत्ययविधौ प्रतिषेध इत्युक्तेरिति भावः। ॐ न तथैवलाभादिति दिक्। तद्गुण
संविज्ञान इति। तस्यान्यपदार्थस्य गुणा विशेषणानि संविज्ञायन्ते कार्यित्वादिना यत्रेत्यर्थः। प्रायः संयोगसमवायान्यतरसंबन्धेन संबन्धी यत्रान्यपदार्थस्तत्र तद्गुण
त्वम्। तदतिरिक्तस्य स्वस्वामिभावादिसंबन्धेन संबन्धिनस्त्वतद्गुणत्वं नागयज्ञोपवीती भोज्यतामित्यादौ यज्ञोपवीतस्य कार्यित्वाभावेपि तत्संनिहितत्वमस्त्येवेति राम
तद्गुणत्वमेवेति हरिग्रन्थे स्पष्टम्। तत्सिद्धेरिति। न च सर्वनाम्नो विहितत्वाभावः। तदन्तसंज्ञाभावे द्वन्द्वे चेत्यादीनामवयवसंज्ञानिषेधकत्वेन विहितविशेषणे फलाभावादिति भावः। ५९

तसिलिति। अवयवसर्वनामत्वे न तु न निर्वाहः सर्वनामप्रकृतिकसप्तम्यान्तत्वाभावादितिभावः। —— भाष्यप्रयोगइति। दिङ्नामान्यन्तराले दक्षिणोत्तराभ्यामिति
सूत्रस्थइतिशेषः। एवम्। नित्यद्विवचनान्तत्वे। स्वाङ्गशिटामित्याद्युदात्तत्वन्तु न फलं उभेभ इत्यादावन्तोदात्तपाठेन गणे अन्तोदात्तनिपातनात्। तृणादित्वेन तत्सिद्धेश्चेतिभा
अकच्चेति। चकारात्परमसर्वतइत्यत्र तसिल्॥ जसः शी॥ अनेकाल्त्वादिति। नतुशित्वादितिभावः। अवर्णान्तादिति। अवर्णान्तादङ्गात्परस्येत्यर्थः। अतो येषांके
षान्तेषामि त्यादौ नाव्याप्तिः। सर्वनाम्नो विहितस्यामइति। सर्वनाम्नः परस्येति तु नोक्तम्। दक्षिणोत्तरपूर्वाणामित्यत्र सुट्प्रसङ्गात्। द्वन्द्वे चेति निषेधो हि समुदा
यस्य न तु अवयवस्य। न च तस्मादयमाम् विहितः किंतु समुदायादेवेति नसुट्। विहितविशेषणत्वस्याश्रयणे प्रमाणं तु दक्षिणोत्तरपूर्वाणामिति भाष्यप्रयोग
एव। पञ्चत्रिंशादिति। पञ्च च त्रिंशच्चेति द्वन्द्वः। पञ्चाधिका त्रिंशदिति तत्पुरुषो वा। यत्तु प्रत्यात्तरा एकचत्वारिंशदिति प्राचो ग्रन्थव्याचक्षाणैरुक्तम्। नायंमध्य
मपदलोपी तत्पुरुषः। तथा सति राजन्य बहुवचनद्वन्द्वेऽन्धकवृष्णिषु संख्येति विधीयमानः पूर्वपदप्रकृतिस्वरो न स्यात्। तस्मात्समाहारद्वन्द्व एवायम्। एकविं
शतिरित्यादौ तु पुंस्कत्वं तु न भवति। लोकाश्रयत्वाल्लिङ्गस्येति। तच्चिंत्यम्। समासभेदे स्वरभेदे इष्टापत्तेः। तथा च बहुव्रीहौ संख्येये इति सूत्रे संख्यायास्तत्पुरु
षस्योपसंख्यानं निस्त्रिंशाद्यर्थमन्यत्राधिकलोपादिति वार्तिकं व्याचक्षाणो भाष्यकार आह। एकाधिका विंशतिरेकविंशतिः द्वाविंशतिरिति। अतएवेति। द्वयोर्द्वि
वचनस्यैवन्याय्यत्वादिति भावः। नन्वेवं सर्वादिषु पाठो व्यर्थः। सर्वनामकार्याणां स्मायादीनां द्विवचनेऽभावात्। न च उभाभ्यां हेतुभ्यामुभयोर्हेत्वोरित्यत्र सर्वनाम्नस्तृ
तीया चेति पाक्षिकतृतीयात त्फलमिति युक्तम्। निमित्तकारणहेतुषु सर्वासां प्रायदर्शनमिति वार्तिकेन गतार्थत्वात्। न च वृत्तिकृता सर्वनाम्नस्तृतीया चेति सूत्रे पठितत्वादि
दं वार्तिकं सर्वनामसंज्ञासापेक्षमिति वाच्यम्। भाष्ये हेताविति सूत्रे तस्य पठितत्वात् अतएवानेनकारणेन वसति अन्नस्य कारणस्येत्युदाहृतं हरदत्तेनेत्याशङ्क्याह। तस्येह
पाठस्त्विति॥ ~ वः। प्रायदर्शनमिति। प्रायग्रहणादुभातिरिक्तासर्वनाम्नः प्रथमाद्वितीये न स्त इत्यर्थकल्पनसंभवान्नासर्वनामत्वे सदोषः ॥

अयच्यादिति। अत्रापिस्थानिवत्त्वत्रस्थभाष्यरीत्या प्रत्ययान्तरत्वमितिभावः। निर्देशेनचेति। वृत्तिविषयेइत्यनुक्ताद्दमेववक्तव्यमितिभावः। अन्याभावइति। अन्येषां सर्वनामकार्याणामभावइत्यर्थः। पूर्वपक्षिणस्तद्भावविरहादितिवदेकदेशविकृतन्यायोऽशास्त्रीयविकारविषयोऽपीतिनाभ्युपेतमितितदनुसारेणैवसमाधिवक्तुमुपक्रम ते। तथापीत्यादि। उभशब्दादिति। भसन्तस्वार्थिकानांसुबुत्पत्तेः पूर्वमेवान्तरङ्गत्वादुत्पत्तेरुभयघटितात्वशब्दादुभयशब्दोऽस्त्यर्थः। यत्रलुकापहृतंतत्रायजितितुनोक्तंप्रातिपदिक

अयचप्रसङ्गादिति। अयंभावः। उभादुदात्तोनित्यमित्यत्रोभादुदात्तइतियोगोविभज्यते। अवयववृत्तेः संख्यावाचिनउभशब्दाद्वयवविन्यर्थेऽयच् स्यात्। उभयोमणिः। ततो नित्यम्। उभशब्दाद्वृत्तिविषयेनित्यमयच्स्यात्स्वार्थे। तेनोभयपक्षविनीतनिद्राइत्यादावयचप्रयानित्यएवंकप्रत्ययेपि स्यादितिचिन्त्यंवंशे विकृतेपिअयजदुर्वारइतिचेन्नैवम्। योगविभागस्येष्टसिद्ध्यर्थतया उभौसाभ्यासस्येतिनिर्देशेनयत्रचद्विवचनंनश्रूयतेतत्रैवायमि तिव्याख्यानात्। तथाचवार्तिकम्। अन्याभावोद्विवचनटाब्विषयत्वादिति। अकचिहिसतितन्मध्यपतितस्तद्ग्रहणेनगृह्यतेइतिन्यायेनोभशब्दस्याद्वि वचनविषयत्वंनविहन्यतेकप्रत्ययेतुविहन्येतैवा तदुक्तमिति। वार्तिककृतेतिशेषः। यद्यपिपूर्ववार्तिकेटाबप्युक्तस्तथापिनासौविवक्षितः टाब्विष यत्वमपिद्विवचनपरत्वएवबोद्धव्यमितिकैयटादिभिर्व्याख्यातत्वादित्याशयेनव्याचष्टे। द्विवचनपरत्वाभावेइति। टाबेकादेशस्यापिपूर्वान्तत्वेनग्र हणाद्द्विवचनपरत्वमस्तीतिभावः। यद्यप्युभावित्यादौद्विवचनपरत्वंदुरुपपादमुभयतआश्रयणेन्तादिवद्भावविरहात्तथाउभशब्दादुत्पन्नंद्विवचनंलुका नापहृतंयत्रततोऽन्यत्रायचइतीहविवक्षितोऽर्थः ॥ ७७ प्रकृतिकाचारक्विबन्तेयद्ययजिष्यतेतदातत्स्थानापत्तेः तत्रोत्पत्तेरभावेनविशिष्टाभावात्तस्मात्। लुकानाप हृतमिति। लुक्कृतापहारसंभवनाभाववदित्यर्थः। एतेनोभशब्दस्यपाठाभावेऽसर्वनामत्वेनतत्तसिलादिविवक्षायाः कर्तुमशक्यत्वेनद्विवचनस्यलुकानपहारस्यैवसत्त्वेन ततोयजनापत्तावुभयत्रेत्यसिद्धिरित्यपास्तम्। यद्यप्यत्तदात्रत्वादिस्यात्तस्मिंस्तुलुगपिस्यादितिलुकापहारसंभावनासत्त्वेनलुक्कृतापहारसंभावनाभाववतोऽन्यत्वात् ।

यद्यपि भाष्य इति। स्वार्थिकत्वेनोभशब्दात्परस्य कप्रत्ययस्यापि द्विवचनत्वमस्तीत्यन्वयः। अधिक इति। संख्यापेक्षयाधिकलिङ्गकारक इत्यर्थः। दिगिति। दिगर्थस्तु भाष्यस्थप्रौढिवादत्वमपि समर्थयितुं शक्यमिति। तथाहि। कप्रत्ययस्य स्वार्थिकत्वेन द्व्यर्थाभिधानसमर्थत्वेन वार्तिके द्विवचनशब्देन तस्यापि ग्रहणं द्विवचनत्वं द्वित्वसंख्याप्रकारकसंख्येयविशेष्यकबोधविषयार्थानुवादकत्वम्। त्रतसिलौ तु विभक्त्यन्तस्य स्वार्थे विहितौ इति तत्कारकशक्तिप्रधानाववतो न तयोरुक्तं द्विवचनत्व

यद्यपि भाष्ये कप्रत्ययस्यापि स्वार्थिकत्वे नोभशब्दात्परस्य द्विवचनत्वमस्तीत्याशयो भशब्दपाठः प्रत्याख्यातः। तथापि प्रौढिवादमात्रं तत्। कृत्रिमस्यैव द्विवचनस्येह ग्रहीतुमुचितत्वात्। अन्यथा त्रतसिलादावति प्रसक्तत्वात्। ननु कारकविभक्त्यन्ताद्विहितौ त्रतसिलौ स्वार्थिकत्वेपि द्वित्वमात्रं नाभिधत्त इति चेत्। न। कप्रत्ययस्याप्यज्ञाताद्यर्थबोधकत्वात्। पञ्चकपक्षेऽधिकबोधकत्वप्रौढ्याच्चेति दिक्। नास्तीति। अनभिधानादिति भावः। तथा चोभयशब्दस्य द्विवचनानुत्पादात् सर्वविभक्तिकत्वेनाव्ययत्वे प्राप्ते तद्धितश्चासर्वविभक्तिरिति सूत्रे कृत्तद्धितानां ग्रहणं च पाठ इति भाष्यं कैयटेनावतारितम्। अस्तीति। पचतिकल्पं पचतिरूपमित्यादिवारणेन पाठस्योपक्षीणत्वादनभिधाने प्रमाणं नास्तीति भावः। तयप्प्रत्ययान्तत्वेति। उभयशब्दस्येति भावः ॥

७) म। कस्य तु भज्ञाताद्यर्थविशिष्टे भार्थे विधानेन तत्वं प्रसक्तमेवेति भाष्याशयः। कल्पाद्यन्तेऽयजैकम्भवति। तत्रोभयोर्मणिरित्यादौ अॅचत्त्वे अस्य लिङ्गभ्यासस्योभयेषामिति निर्देशेनानित्यत्वावश्यकत्वात्। कल्पवादेस्तस्मादनभिधानमेवेत्युलमकैयटेनावतारितमिति। उभयोन्यत्रेति वार्तिके उभयो मणिरुभये देवमनुष्या इति भाष्यकृतोदाहरणात् स्वार्थिकोपक्रमेण तत्प्रवृत्तेश्चोभयोरपि ग्रहणमिति तस्य द्विवचनाभावोऽनभिधानादावश्यक इति तद्भावः। इति भाव इति। इत्यभिमान इत्यर्थः। तद्बीजं तूक्तम् ॥

अनन्वयापत्तेरिति। तेनहिवाक्यशेषेणकृत्स्नस्यसंबोद्ध्यत्वावगमात्संबोध्यस्यचयुष्मदर्थत्वेनानन्वयः पिबन्तंभवन्तमितिचानन्वितमितिबोद्ध्यम्। अत्रपक्षेत्व
इत्येकश्रुत्योदात्तानुदात्तयोर्निर्देशइतिबोद्ध्यम्। प्राप्त्यभावादिति। पूःशब्देनस्त्रीत्वविशिष्टस्यैवबोधनेनतादृशार्थस्यविशेष्यत्वेएवतत्प्रवृत्तेः। अतएवभाष्येन्तरा
निस्तैवेति। परेऽवरउभयाअमित्राइतितुछान्दसत्वाद्बोध्यम्। अत्युत्पन्नाविति। एतच्चप्रसंशायांकैयटेस्पष्टम्। एके। काशिकाकाराः। एतन्त्वंमन्येइत्युदा
त्तस्य। उतत्व ः पश्यन्। इत्यनुदात्तस्यदर्शनादितिभावः। एकः। प्रथमः। संहितयापाठेत्वातत्वस्यास्फुटत्वेपितांतश्छेतयोऽन्यथाएकश्रुत्यासकृदेवपठेत्।
नचतान्तेविप्रतिपत्तव्यम्। त्वत्वसमसिमेत्यनुच्चानीतिफिट्सूत्रात्। तथाचऋक्। न्नः स्तरीरुत्वद्भवतिसूतउत्वदिति। वेदभाष्यकाराश्चैत्थंव्याचख्युः। त्वदितिसर्व
नामसुपठितोऽनुदात्तोयमन्यपर्यायइति। जयदेवोपिप्रायुंक्त त्वदधरमधुरमधूनिपिबन्तमिति। त्वतोऽन्यस्याः अधरइतिविग्रहः। नतुत्ववाधरइति। पश्यतिदिशिदिशि
रहसिभवन्तमितिपूर्ववाक्येनसहानन्वयापत्तेः। नेमइति। श्रुयतेच। प्रनेमस्मिन्ददृशेसोमइति। समइति। तथाचश्रूयते। नभन्तामन्यकेसमे। मानोरकायंरक्ये
समस्मै। उरुष्याणोअघायतः समस्मात्। उतोसमस्मिन्नाइत्यादि। सिमः कृत्स्नेचशक्तेवस्यान्मर्यादावबद्धयोः। श्रूयते। आदूंत्रीवासस्तनुतेसिमस्मै। उकुक्रम
स्कमजतेसिमस्मात्। उभयत्रापिसिमशब्दः सर्वपर्यायइतिवेदभाष्यम्। गणसूत्रइति। यद्यपिभाष्येअष्टाध्यायीस्थसूत्रेऽपुरीतिवक्तव्यमितिवार्तिकंपठितंतथा
पितद्गणसूत्रस्यशेषः। नतुजसिविभाषाविधायकस्य। अवत्स्यपिकृत्स्नजसः शीविधानात्टाबन्तात्प्राप्त्यभावात्। अन्तरायामिति। प्राकाराद्बाह्यायान्तदन्तर्वर्तिन्यांवे
त्यर्थः। लिङ्गविशिष्टपरिभाषयाएकादेशस्यपूर्वान्तत्वेनग्रहणाद्वाप्राप्तिर्बोद्ध्या। त्यद्तद्इदंएतौउक्तपरामर्शकौ। तन्नाद्यश्छान्दसइतिगणरत्नकारः। तन्न। स्यश्छन्दसि
बहुलमितिसूत्रेछन्दोग्रहणवैयर्थ्यापत्तेः। एको न्यार्थेप्रधानेचप्रथमेकेवलेतथा। साधारणेसमानेऽल्पेसंख्यायांचप्रयुज्यते ॥
यामितिस्त्रियांसप्तम्यामेवोदाहृतमितिभावः। केवलइति। असहायइत्यर्थः। सापेक्षेयापेक्षावधीतिसमस्तपाठंव्याचष्टेस्वस्मैत्यादि। अपेक्षेतिकर्मणिघञ् ॥

व्यवस्थास्त्येवेति। पूर्वादिशब्दैरेकस्या एव दिश उपाधिकृतभेदस्य प्रतिपादनम्। उपाधिश्च पृथ्वीमध्यं तस्यागन्तवर्त्तिनश्चत्वारः पर्वताश्च समायणे किष्किन्धायां सुग्रीवेणमध्यदेशावधिकस्यैव दिग्विभागस्योक्तेः। पृथ्वीमध्यं च मध्याह्नसूर्यसंयोगिदेशः एवं च तन्मध्यभागावधिकोदयाचलादिपर्यन्तदेशरूपोपाधिविशिष्टदिशि पूर्वादिशब्दानां तत्तच्छब्दप्रवृत्तिनिमित्तीकृतस्य प्रवृत्तिरित्युपाध्यन्तर्गततया व्यवस्थास्त्येव। उदयाचलपर्यन्तरूपोपाधेस्तदभिधेयस्य तदाकाङ्क्षत्वं चास्त्येव। मध्याह्नसूर्यसंयोगिदेशात्तत्संमुखदेश उदक् तत्पृष्ठस्य देशश्च दक्षिणा। मध्याह्ने सूर्यस्योदङ्मुखत्वात्। स्पष्टं चेदं हेलाराजीये। व्यवस्थायामिति च विषयसप्तमीति भावस्तदाह प्रसि

स्वाभिधेयेति। स्वस्य पूर्वादिशब्दस्याभिधेयेनापेक्ष्यमाणस्यावधेर्नियम इत्यर्थः। दिशः सपत्नी भव दक्षिणस्या रूढत्वादवपि व्यवस्थाऽस्त्येव। प्रसिद्धत्वात्तु नावधिवाची शब्दः प्रयुज्यते। न च संज्ञात्वान्निषेधः। आधुनिकसङ्केतो हि संज्ञा। न च दिक्षु सास्तीति अस्त्याति प्रकरणे कैयटहरदत्तादयः। अत्र दिक्षु चिरन्तनः कुरुक्षेत्र आधुनिकः सङ्केत इत्यत्र व्याख्यातृवचनमेव प्रमाणम्। एतेन विश्वेषां देवानामिति व्याख्यातम्। वेदप्रसिद्धत्वात्। देवगणविशेषे विश्वशब्दस्य आधुनिकसङ्केताभावात्। दक्षिणा गाथका इति। इहामुकस्मात् कुशला इति अवध्यन्वयसंभवेऽपि तन्नियमो नास्तीति भावः। अधरे ताम्बूलरागः उत्तरे प्रत्युत्तरे च शक्त इत्यपि प्रत्युदाहर्तव्यम्। कथं तर्हि। तथा परेषां युधि चेति कालिदासः। अपरे प्रत्यवतिष्ठन्ते इत्यादि च। अत्राहुः। देशवाचितया व्यवस्थाविषययोरेव परापरशब्दयोरुपचाराच्छत्रौ प्रतिवादिनि च प्रयोगः ॥

द्धत्वादिति। देशवृत्तीनां तत्तदवधिकोदयाचलसंनिहितत्वादिप्रवृत्तिनिमित्तमित्यादि बोध्यम्। आधुनिकसङ्केतो हीति। असंज्ञापदसामर्थ्यादन्यथा सर्वादीनां केवलरूढत्वेनेन्द्रादिपदानामिव रूढत्वरूपसंज्ञात्वस्य सर्वत्र सत्त्वात्तदसङ्गतिः स्पष्टैवेति भावः। व्याख्यात्रिति। कैयटादीत्यर्थः। आधुनिकसङ्केताभावादिति। किं त्वैश्वर एवेति भावः। यदि तत्रोत्कर्षस्यावधिसापेक्षत्वाद्व्यवस्थास्तीत्याग्रहस्तदा प्रत्युदाहरणान्तरमाह अधरे इत्यादि। अत्रापि संज्ञात्वं मत्वाह। उत्तरे इत्यादि। उपचारादिति। तत्त्वारोपादिति भावः ॥

म·प्र·
९२

अर्थान्तरसंक्रमइति।स्वार्थविशिष्टार्थान्तरबोधकत्वमित्यर्थः।इदंचजितश्चतत्प्रत्ययादितिसूत्रेभाष्येध्वनितम्।नेवार्थइति।देशवद्यमपितच्छक्यइत्यर्थः।तुल्यन्यायादेतच्छ
ब्दस्यापिकैयटोक्तार्थःशक्यइतिध्वनितम्।सुमेरुमिति।हिमवान्ववधिरितितुयेकेचनपरेणाहिमवन्तं जनपदाउत्तरकुरवःउत्तरमद्राइतिऐतरेयब्राह्मणेश्रूयतेउत्तराइत्यस्य
तन्नामानइत्यर्थस्तदाहआधुनिकेति।उत्तराः कुरवोदक्षिणान्कुरूनपेक्ष्योत्तरउच्यन्तेइतितुकपिंजलाधिकरणेशाबरभाष्येउक्तम्।हेमचन्द्रइति।कोशयोरविरोधेसंभवतिवि
नचैवमुपसर्जनता।नहिलाक्षणिकत्वमुपसर्जनत्वम्।किंतुस्वार्थविशिष्टार्थान्तरसंक्रमः।सचसमासादिवृत्तावेव।अतएवभूवादिसूत्रेएतान्यपीति।एतत्प्रति
पाद्यानिवस्तूनीत्यर्थइतिकैयटोक्तिःसङ्गच्छते।वस्तुतस्तु परापरशब्दयोःदेशान्तरनिष्ठत्वादिकमेवार्थः।शक्यत्वादिकंतुआर्थिकोर्थः।असंज्ञायांकिम्।उत्तराःकुरवः
सुमेरुमवधिमपेक्ष्यकुरुषूत्तरशब्दोवर्त्तते।इत्यस्तीहव्यवस्था।किंतुआधुनिकसङ्केतोयमित्याहुः।स्वमज्ञातिधनाख्यायाम्।आत्मात्मीयज्ञातिधनवाचीस्वशब्द
स्तत्रज्ञातिधनयोःपर्युदासात्।आत्मात्मीयोपरिशिष्टावित्याशयेनव्याचष्टे।आत्मीयाइत्यर्थः आत्मानइतिवेति।यत्त्वाहुः।आत्मनिस्वशब्दोनपुंसकः तेनस्वेस्वाइत्यु
दाहरणंतत्रनसंभवति।तच्चिन्त्यम्।आत्मन्यपिस्वशब्दस्यपुंस्त्वात्।विभाषाजसीतिप्रकरणेस्वमात्मीयेइत्येववक्तव्येगुरुनिर्देशंकुर्वतःसूत्रकारस्यैवात्रप्रमा
णत्वात्।यदपि स्वोक्तेर्थेउपष्टंभार्थम्।स्वोज्ञातावात्मनिस्वंत्रिष्वात्मीयेस्वोस्त्रियांधने।इतिअमरसिंहोक्तिमाहुः।तदपिचिन्त्यम्।कोशेहिआत्मनीतिपूर्वान्वयि।
स्वमितितुउत्तरान्वयि।तथाचहेमचन्द्रः।द्यौःस्वर्गनभसोःस्वोज्ञात्यात्मनोःस्वंनिजेधनेइति।मेदिनीकारोपि।स्वःस्यात्पुंस्यात्मनिज्ञातौत्रिष्वात्मीयेस्त्रियांध
नेइति।तस्मात्स्वेस्वाइत्यस्यात्मानइतिविवरणंसम्यगेवेतिस्थितम् ॥ ७७ रोधोनन्याय्यइतिभावः।यदितुएवमन्वयेस्वोज्ञातावात्मनिधनेस्त्रीआत्मी
यकेत्रिष्विति पाठेनैवसिद्धेःत्रिःस्वग्रहणवैयर्थ्यापत्तेः बन्धूकबन्धूभवदेतदस्यामुखेन्दुनानेनसहोज्झिहाना।रागश्रियाशैशवयौवनीयांस्वमाहसन्ध्यामधरोष्ठलेखेति प्र·म·
श्रीहर्षश्लोकेआत्मानमित्यर्थकस्वमित्यस्यबन्धूकबन्धूभवदितिविशेषणेनचनपुंसकत्वमस्तीत्युच्यतेतर्ह्यस्तुमेदिन्यादिप्रामाण्यात्पुल्लिङ्गेप्यस्त्येवेतिस्वेस्वाइत्युदाहर ९२

पोनसंभवतीतिप्राचीनोक्तिरसङ्गतैवेतिध्व
नयन्नाहविवरणंसम्यगेवेति।

एतदर्थमेवेति। एतदर्थमपीत्यर्थः। धनत्वेनातीयस्यबोधेमाभूदित्यर्थं चेत्यपिबोध्यम्। आत्माख्यायामितितुनोक्तं लाघवाभावात्। बाह्यं चेति। उक्तबहिर्देशस्यमि त्यर्थः। उपसंव्यानशब्दोपीति। एवंच तद्ग्रहणं बहिर्योगस्यगृहेष्वेवप्रसिद्धिमाश्रित्यसूत्रेकृतमिति भावः। महल्लाघवमिति। त्रिसूत्र्याजसाधारेशीभावे एवविकल्पविधानात्। व्यवस्थायामित्यादिगणएवपाठविशेषणमिति भावः। वक्ष्यमाणत्वादिति। एकद्वाद्इतिबहुव्रीहेरभिधानेपितत्रैकद्व्यन्यतरादित्यर्थादुपसर्जनत्वमेव। समासा

त्तातिधनवाचिनस्त्विति। ताच्छील्ये णिनिनात्तातिधनयोरपि आत्मीयत्वंपुरस्कृत्यप्रवृत्तौसर्वनामतास्यैवेति ध्वनयति। एतदर्थमेव हि सूत्रे आख्याग्रहणंकृतम्। अन्तरंबहिर्योगोपसंव्यानयोः। बहिरित्यनावृतोदेशोबाह्यंचोच्यते। तत्राद्यमर्थंगृहीत्वाह। बाह्यादित्यर्थइति। द्वितीयेतुआभ्यन्तराइत्यर्थोबोध्यः। बाह्येनहिआभ्यन्तरस्ययोगोस्ति। अर्थद्वयमप्याकरेस्थितम्। उपसंव्यानशब्दोपिकरणव्युत्पत्त्योत्तरीयपरः। कर्मव्युत्पत्त्यातुअन्तरीयपरः। पूर्वादिभ्योनवभ्यो वा। अत्रेदमवधेयम्। एतत्सूत्रंजसःशीत्यत्रानुवर्त्यवाक्यभेदेनव्याख्येयम्। वाछन्दसीत्येतदपि पूर्ववदित्यत्रयथा। एवंचाष्टाध्याय्यांपूर्वपरेत्यादित्रिसूत्रीगतार्थेतिमहल्लाघवम्। एकशब्दस्याष्टावर्थाउक्तास्तत्रविशेषमाह। संख्यायामिति। अन्येषुसप्तसुतुवचनान्तरमपिस्यादेव। एकेएकेषामितियथेतिभावः। नबहुव्रीहौ। कृतेबहुव्रीहौनिषेधोयमित्यर्थः। उपसर्जनीभूतानसर्वादयइतिवक्ष्यमाणत्वादतआह। चिकीर्षितेइति। समासात्प्रागेवेतिचप्रक्रियेति। अलौकिकेविग्रहवाक्येइत्यर्थः। नन्वस्तुतत्राकच् अतआह। त्वकेति। नचनिमित्तस्यानुपसर्जनत्वस्यविनाशोन्मुखत्वात्प्रागेवसंज्ञानभविष्यतीतिवाच्यम्। न्तेकृतेपिशिष्टस्यसर्वाद्य

न्तत्वाभावाच्च। समासान्तानामुत्तरपदावयवत्वंतुनेत्युक्तम्। चिकीर्षितइतीति। अध्याहारलभ्यमेतत्। एतदर्थमेवनबहुव्रीहिरितिवक्तव्येबहुव्रीहावितिगुरुनिर्देशइतिभावः। विनाशोन्मुखत्वादिति। यद्यप्यलौकिकेएवैकार्थीभावस्यारोपास्तितथापितत्रस्वार्थविशिष्टार्थान्तरबोधकत्वरूपोपसर्जनत्वाभावादेवमुक्तम् ॥

अनित्यत्वादिति। अतएवातिभवकानित्यादिसिद्धिः। वस्तुतः साभाष्यानुक्तत्वान्नास्त्येवेतिबोध्यम्। सगुणग्रहणमिति। च्छ्वोः शूडिति सूत्रे प्रश्नेत्यादावन्तरङ्गत्वाज्जातस्य तुकोनिवृत्त्यै तत्क्रियते। सतुक्कनिर्देशसामर्थ्याद्वनान्त्यस्य षः। वान्तादिप्रकृतिकक्विबन्तादेस्तु अप्रयुक्तत्वेन लक्षणविषयतैवनेत्यादिभाष्ये स्पष्टम्। तत्परिभाषासत्त्वेहि यणादेशनिमित्तविनाशेन पूर्वं तदप्रवृत्तिरेवेति सगर्थ एव स्यादिति भावः। प्रकृतिप्रत्यापत्तीति। कं सङ्क्रनयतीत्यादौ णिलुकि तन्निमित्तकादेशनिवृत्तये क्रियमाणमारम्भानात्तु तस्तदाचष्टे क्तलुक् प्रकृतिप्रत्यापत्तिश्चेति वचनमित्यर्थः। अत्रेदं चिन्त्यम्। लुक्यपि प्रत्ययलक्षणसत्वाद्वाजाएनेयइत्यादाविवाकृतपरिभाषया अत्राप्राप्तिः नलुमतेति निषेधस्तु प्रत्यये परतो जायमानपूर्वकार्य एवेति स्पष्टमेव। तस्मात्पुष्ययोगं जानाति पुष्येण योजयतीत्येतत्साधके पुष्ययोगे ज्ञीतिवचने भाष्यकृत् कृतप्रत्यापत्त्यनुवृत्तिर्ज्ञापिका।

अकृतव्यूहपरिभाषाया अनित्यत्वात्। तत्रैवैतत्सूत्रस्यैव ज्ञापकत्वात्। अतिभवकानिति। एतदेव ज्ञापकफलमिति भावः। इष्टापत्तिं कृत्वेति। च्छ्वोः शूडिति सतुक्कग्रहणं प्रकृतिप्रत्यापत्तिवचनं वा अनित्यत्वे ज्ञापकम्। लक्ष्यानुरोधाद्व्यवस्थेति भावः। यथोत्तरम्। तथाचाद्यत्वे भाष्यकारोक्तैव व्यवस्थेति भावः ॥

७७ वसुहि च जोरिति घिति परतः कुत्वमिति। भाष्यकारोक्त्येति। अकच्छ्वरौ तु कर्तव्यौ प्रत्यङ्गमुक्तसंशयाविति च तदुक्तिः एतदेवाभिप्रेत्य भित्त्विकृ एव्योरचेति सूत्रे किमर्थमत्वं विधीयते वलोप एवास्त्वित्याशङ्क्य लेः ह्लोपे तस्य स्थानिवत्त्वेन गुणाभावाय तत्। न च वलोपेपि नधात्विति गुणनिषेधः सिद्ध इति वाच्यम्। तत्प्रत्याख्यानपक्षे गुणप्राप्तेरित्युक्तम्। अनेन सूत्रमतात्प्रत्याख्यानवादिमतं प्रबलमिति प्रत्याख्यानवादिसंमतलक्ष्यमेव कथंचित्सूत्रमतेपि साध्यं न तु विपरीतं संभवेऽन्यथासूत्रमप्रमाणमेवेति च प्रत्याख्यानं सूत्रसंमतमिति च ध्वनितम्। सूत्रकृत्खण्डितप्राचीनऋषिवाक्यानाम प्रामाण्यवत्सूत्रकारवचः खण्डनप्रवृत्तभाष्यवार्तिकवचनैस्तदंशे सूत्रकारवचसोप्यप्रामाण्यकल्पनैवोचितेतिदिक् ॥

किमिति। बहुव्रीहौ नेत्यस्य द्वेधा व्याख्यानसंभवादिति भावः। उत्तरग्रन्थेति। न्यासकारस्यापि सूत्रलभ्यार्थप्रतिपादने एव तात्पर्यादिति भावः। प्राप्तेरिति। प्राप्तेरभावेन निषेधो ऽनर्थक एवेति भावः। अत एवेति। अवयवानामुपसर्जनत्वेन सर्वादिबहिर्भावादेवेत्यर्थः। अन्वर्थेति। सर्वेषां नामेत्येवं रूपेत्यर्थः। तस्यार्थ इति। सोऽनुपस्थितोऽन्वर्थसंज्ञया गौणमात्रे यत्तु प्राचोक्तम्। बहुव्रीहौ सर्वादेः सर्वनामता न स्यात्। प्रियसर्वाय। सूत्रकारमते बहुव्रीहौ न सर्वनामता। भाष्यकारमते गौणत्वमात्रे। त्वत्कपितृको मत्कपितृक इत्यत्र समासावयवयोर्युष्मदस्मदोः सर्वनामत्वादनंगकार्यत्वेनाकच् स्यात् समासभूत्। कप्रत्यय एव स्यादित्येतदर्थमिदं सूत्रमिति न्यासकृन्मतमिति। अत्रेदं वक्तव्यम्। किं बहुव्रीहौ संज्ञा नेति विवक्षितम्। उत तदवयवानां सर्वादीनामिति। नाद्यः। समासावयवयोर्युष्मदस्मदोरित्युत्तरग्रन्थविरोधात्। समुदाये प्राप्तिविरहाच्चानसंज्ञदन्तविधिना प्राप्तिः। बहुव्रीह्यवयवानामुपसर्जनतया सर्वादिबहिर्भावेन संज्ञायाः प्राप्तेरेव दूरापास्तत्वात्। अत एव न द्वितीयोऽपि। न चोपसर्जनानां पाठात् पर्युदासो वार्तिककृतोक्तो न तु सूत्रकृत इति वाच्यम्। अन्वर्थसंज्ञाबलेन सूत्राक्षरैरेव तल्लाभात्। एतेन सूत्रकारमते बहुव्रीहौ न सर्वनामतेत्यपि परास्तम्। बहुव्रीहावेवेति तस्यार्थः। भाष्यकारमते इत्याद्यपि न। विशेषोपादानेन हि सूत्रकारवार्तिककारयोर्मतमन्यादृशमिति प्रतीयते। देवदत्तो वामेनाक्ष्णा पश्यतीत्युक्ते दक्षिणेन न पश्यतीतिवत्। तच्च नास्ति सूत्रवार्तिकमतेऽपि गौणपर्युदासस्येष्टत्वात्। यत्तु त्वत्कपितृक इत्यादि तदित्थं प्राचा व्याख्यातम्। त्वं पिता यस्य अहं पिता यस्येति विग्रहे बहुव्रीहिसमासे कृते समासावयवयोः समासान्तःपातिनोर्युष्मदस्मदोः सर्वार्थवाचकत्वेन सर्वनामसंज्ञकत्वाद् ज्ञाताद्यर्थविवक्षायामव्ययसर्वनाम्नामित्यकच्प्रसज्येत। तस्यैव प्रभृतीनां ङ्गवाङ्गाधिकारविहितत्वाभावेनाङ्गसंज्ञानपेक्षत्वात्। तत्र त्वत्कपितृक इत्याद्यनिष्टं प्रसज्येतेति। न्यासकृतापि अन्वर्थसंज्ञाबलादेव संज्ञानिरासे कृते कज् न भविष्यतीत्याशंक्य समुदायो हि विशेषे वर्तते पूर्वपदं तु सर्वार्थतया अनपेतमेवेत्युक्तम्। तदेतत्सर्वं प्रामादिकमेव। तथा हि। अहत्स्वार्थायां वृत्तौ समासावयवयोरर्थ एव नास्ति। अजहत्स्वार्थायामपि स्वार्थविशिष्टान्यपदार्थे वृत्तित्वेनोपसर्जनत्वं स्पष्टमेव। ॥ तदप्रवृत्तेस्तत्संमतत्वादिति शेषः। सूत्रे

म॰श॰ त्वादितन्मतेन्वर्थत्वेनवार्त्तिकमतेतुवचनेनेत्यर्थः।स्वोक्तार्थेन्यासकृदूस्यसंवादमाह।न्यासकृतापीति।अनपेतमेवेति।समुदायेएकार्थीभावाङ्गीकारेणसमुदा
६४ यस्यान्यपदार्थोपसर्जनत्वेप्यवयवस्यतत्वेमानाभावइत्यभिमानः।माहतइति।अजत्स्वार्थायामपिअवयवार्थस्यान्यपदार्थविशेषणतयैवोपस्थित्योपसर्जनत्वा
त्स्वेतरितरार्थविशेषणत्वेनोपस्थितिविषयत्वस्यैवोपसर्जनत्वपदार्थत्वादितिभावः।सर्वशब्दस्येति।उत्तरपदभूतस्यापीत्यर्थः।युक्तिमदिति।नचोत्तरपदेलक्षणापू
एवंचसमासांतःपातिनोयुष्मदस्मदोःसर्वार्थवाचकत्वेनेत्यादिग्रन्थःसमुदायोहीत्यादिन्यासग्रन्थश्चपक्षद्वयेपिव्याहतः।किंचैवंअतिसर्वायेत्यत्रस्मायादेशोदु
र्वारः।अङ्गाधिकारेतदन्तग्रहणात्।त्वदुक्तरीत्यासर्वशब्दस्यसर्वार्थतानपायात्।नहिपूर्वपदेसर्वार्थताउत्तरपदेतुनेतियुक्तिमत्।अपिचैवंगौणत्वेसर्वादीनांसर्वार्थवाच
कत्वंनास्तीतिस्वोक्तास्यहविरोधःस्यादितिय किंचिदेतत्।यदपिव्याचख्युः।त्वंपितायस्येत्यादौविग्रहवाक्येप्राप्तासंज्ञानिषिध्यतेइति।तदपिन।विग्रहवाक्यंहिलौकि
कमलौकिकंवाविवक्षितम्।नाद्यः।प्रक्रियावाक्येस्यनिषेधःनतुलौकिकइतिकैय्यटग्रन्थविरोधात्।प्रकृतसंदर्भगतपूर्वापरस्वग्रन्थविरोधाच्च।नद्वितीयः।तस्ययुष्म
दस्मुपित्सुइत्याकारकत्वेनत्वंपितेत्याकारकत्वायोगात्।यदपिव्याचख्युः।नन्वतिसर्वादौसंज्ञानप्रवर्ततेत्वत्कपितृकादौतुप्रवर्ततइत्यत्रकिंविनिगमकन्तत्राह।अ
नङ्गकार्यत्वेनेति।अङ्गशब्दःसमुदायपरः।तेनातिसर्वइत्यत्राङ्गस्यसंज्ञापेक्षितासर्वनाम्नोगात्स्मायादिविधानादवयवमात्रस्यसत्यपिसर्वनामत्वेदोषाभावात्।
समुदायेचसमुदायार्थंप्रतिसर्वार्थस्योपसर्जनत्वात्।तदंतस्यसंज्ञानभवतीतियुक्तम्।इहतुअवयवमात्रस्यसाचिकीर्षितानसमुदायस्यावयवस्यस्वार्थमात्रप्रधानइति
स्यात्।प्रसङ्गइतिवैषम्यमस्तीत्याशयइति।तदपिन।अङ्गाधिकारेतदन्तविधेःसर्वसंमतत्वेनावयवमात्रेसत्यपिसर्वनामत्वेदोषोनास्तीत्युक्तेर्व्याहतत्वात्।अङ्गाधिकार
परिभाष्यास्मैस्यादूइतिस्वग्रन्थविरोधाच्च ॥ ७ वेपदन्तात्पर्यग्राहकमितिमतेतद्युक्तिमदितिवाच्यम्।तत्रमतेहिपूर्वपदंनिरर्थकंस्वार्थप्रतिपादकंवा।नाद्यः।नैरर्थक्येनसर्वार्थ शमः
कत्वाभावादेवाप्राप्तेः।नान्त्यः।पूर्वपदार्थेविशेषणान्वयापत्तेः।विनिगमनाविरहेणपदद्वयेपिलक्षणेत्याच्चएकार्थीभाववादिभिस्तथावक्तुमशक्यत्वाच्च।एवंचतद्दूटकास्यवानास ६४

वैनुमत्वाभावएवोचितइतिदिक्। स्वोक्तेति। एतत्प्रकरणस्थयेत्यर्थः। स्वमन्येतितितेरप्यलौकिकएवनिषेधस्योक्तेस्तिभावः। अर्थान्तरोपसंक्रमेसतिगतेति। तेनात्तिसर्वायेत्या दैनदोषः पुनः संज्ञातुदुर्लभा संज्ञोपसर्जनानांनिषेधात्। पाक्षपर्युदासेनतदन्तग्रहणेनापिनसंज्ञा। अर्थान्तरसंक्रमात्पूर्वन्तुसैभावस्यनप्रवृत्तिः। अकच्प्रवृत्तिस्तुततःप्रागस्त्येवेति तन्निवृत्तयेइदंसूत्रमित्यभिमानः। गच्छत्विति। निमित्तापायपरिभाषयेतिभावः। दुर्लभेति। उपसर्जननिषेधादितिभावः। इत्यर्थइति। अनङ्गकार्यत्वेनेत्स्वार्थइतिभावः। क्लिष्ट

भयायमाशयः। प्राक्प्रवृत्तोऽपिसंज्ञा अर्थान्तरोपसंक्रमेसतिगतेति। तर्हि अकजपिगच्छतु ननुकार्यकालपक्षेसामार्थ्यपुनःसंज्ञापेक्षितासाचदुर्लभेत्याशयइतिचेत् अस्त्वेवमात्मनस्त्वसौस्त्रकृतग्रन्थार्थः। न्यासग्रन्थविसंवादेनइतिन्यासकृन्मतमितिवाक्यशेषविरोधात्। न्यासग्रन्थस्त्वनुपदमेवोदाहरिष्यते। यदपिव्याचख्युः। अङ्गमप्रधानंव्याध्येतद्विरुद्धमनङ्गबाधकमित्यर्थः। तथाचकप्रत्ययापवादत्वाद्कच्स्यादित्यर्थइति। तदपिक्लिष्टम् व्यर्थंच। न्यासग्रन्थासंमतंच। तथाहि। त्वत्कपितृकोमत्कपितृकइतिवृत्तिग्रन्थंव्याख्यायन्यासकारउज्जग्राहाननुचअन्वर्थसंज्ञाकरणादेवात्रसंज्ञानिरासेकृतेऽकज्नभविष्यति। नह्यत्रसर्वार्थतासंभवति। विशेषविषयत्वात्। नैतदस्ति। समुदायोहिविशेषेवर्ततेपूर्वपदंतुसर्वार्थतायाअनपेतमेव। भवतुतर्हि अनयोरनन्तरयोरेतत्सूत्रविषयता। प्रियविश्वायेत्यादेस्तुनोपपद्यते। नहिप्रियविश्वादयःशब्दाःसर्वेषांनामानि। नापितदवयवभूतानांविश्वादिशब्दानांकिंचित्सर्वनामकार्यमुपपद्यते। स्मैप्रभृतीनामङ्गकार्यत्वात्। विश्वादिशब्दानामनङ्गत्वात्। एवं मन्यते। त्वत्कपितृकोमत्कपितृकइत्यत्राकज्माभूदित्येतदर्थंतावदेतदारब्धव्यम्। प्रियविश्वायेत्यादावपिविस्पष्टार्थंभविष्यतीति। अनेनहिन्यासग्रन्थेनाङ्गसंज्ञानपेक्षत्वमेवार्थोलभ्यतेसचस्वोत्प्रेक्षितव्याख्यायांदूरोत्सारितएव ॥ मिति। तत्वं तु स्पष्टमेव। न्यासग्रन्थासंमतिमुपपादयन्ननङ्गकार्यत्वेनेत्यस्यवैयर्थ्यमुपपादयति तथाहीति। विशेषविषयत्वादिति। अन्यपदार्थविशेषणत्वादित्यर्थः। समुदायोहीति। तस्यैवतद्विशेषणत्वमित्यभिमानः। अनन्तरयोरिति। त्वत्कपितृकमत्कपितृकयोरित्यर्थः। अङ्गसंज्ञानपेक्षत्वमेवार्थइति। एवंचानुपदोक्तेयद्यपीतिपक्षेकप्रत्ययापवादत्वस्याकचिप्रसिद्धत्वादेवंवक्तुरीत्यातदुक्तिर्व्यर्थेतिबोध्यम् ॥

म· श· ६५ इत्थादिवदत्रेति। इति ग्रन्थव्याख्यावसरे इति शेषः। प्रतिपदोक्तत्वादिति। यदन्तत्वमादाय सर्वनामत्वप्राप्तिस्तस्य चार्थविहितत्वाद् वाक्यमपि तत्संबन्ध्येव प्रत्यासत्तेरिति भावः। तेन करोति त्वयासामर्थ्ये समासेन कृतत्वाय पूर्वसेमास पूर्वसैइति समासे तत्संबन्धिनि वाक्ये वचनात्तत्र वाक्यस्य प्रतिपदोक्तसमाससंबन्धिन एव ग्रहणे

यदपि व्याचख्युः। यद्यपि सूत्रवार्तिककृतोरप्येतन्मतं तथापि न्यासकृता विवृतत्वादन्याय्यं कृत्स्नतमित्युक्तमिति। तदपि स्थवीयः। वार्तिककृता स्वार्थस्यास्पष्टत्वात्। न्यासकृता समासे कृते सतीत्यादिविवक्षावदुक्तार्थस्य दूरस्तत्वेन तद्विवृतत्वाभावाच्च। यदप्याहुः। न्यासकृच्छब्देन सूत्रकार एव विवक्षित इत्यादि। तदपि न। सूत्रकारमते बहुव्रीहावित्यादिपूर्वग्रन्थेन सह विरोधात्। भाष्यकारमते त्विति ग्रन्थेन तस्य विच्छिन्नत्वाच्च। तस्मादिह प्राचः प्रक्रियाग्रन्थः तद्व्याख्यातृग्रन्थश्चापातरमणीय एवेत्यास्तां तावत्। यदि तु प्रक्रियाग्रन्थोऽपि कथंचिद्व्याख्याविरोधेन व्याख्येय इत्याग्रहस्तर्हीत्थं व्याख्यायताम्। ननु प्रियविश्वायेति गौणत्वाद्यागतार्थम्। अतो निष्कर्षमाह। सूत्रकारमत इति। बहुव्रीहाविति। विवक्षिते सतीति शेषः। गौणत्वमात्र इति। मात्रशब्दोऽवधारणे गौणत्व एव न तु ततः प्राक्। तथा च सूत्रं प्रत्याख्यातमिति भावः। न्यासकृन्मतस्य तु अतिफल्गुत्वात् स्वरूपव्याक्रियैव पराक्रियेत्याशयेनाह त्वत्कपितृक इत्यादि। एतच्च प्राचीनतत्तद्ग्रन्थपरिशीलनशालिभिर्विभावनीयम्। प्रकृतमनुसरामः। संज्ञाकार्यमिति। सर्वनामसंज्ञाप्रयुक्तं स्मायादिकमित्यर्थः। अन्तर्गणकार्यमिति। अड्डतरादिभ्यः। त्यदादीनामः। तदोः सः साविव्यादिकमित्यर्थः। तृतीयासमासार्थेति। इहपूर्वसदृशेति विहितः समासो गृह्यते प्रतिपदोक्तत्वात्। न तु कर्तृकरणे कृतेति। तेन त्वयकाकृतमित्यत्र निषेधो नास्त्यदायस्येति। तत्रैव द्वन्द्वशब्दस्य समस्तत्वान्न तु द्वन्द्वे यानि सर्वादीनीति संबन्धः। कारकाणां क्रिययैवान्वयात्। न च द्वन्द्वे विद्यमानानि यानीति संबन्धः। विद्यतिक्रियाध्याहारे गौरवात् ॥

फलान्तरमप्याह। त्वयकेति। तृतीयासमासमात्रस्य ग्रहणे हि तदर्थे वाक्ये यत्र क्वापि स्थितस्य सर्वादेः संज्ञाने स्यर्थे चापि स्यादिति भावः ॥ राम: ६५

[illegible]वेति। किंचावयवमात्रनिषेधे प्रयोजनं सर्वनामाव्ययसंज्ञायामिति येन विधिरिति सूत्रस्थभाष्यप्रामाण्येन तदन्तस्य संज्ञायां वर्णाश्रमेतराणामिति भाष्यप्रयोगा-
नुपपत्तिः। नह्यत्र सर्वार्थवाचकत्वं नास्तीति वक्तुं शक्यं मानाभावात्। लोके च्युत्पत्तिसिद्धस्य तस्यानेन निषेद्धुमशक्यत्वात्। नापि तस्य सर्वादिगणपाठो निषिध्यत इति युक्त-
म्। तस्याऽप्रक्रान्तत्वात्। अविधेयत्वाच्च। न च निषेधवैयर्थ्यम्। अवयवकुत्साबोधकाकजभावस्याचारितार्थ्यात्। तदेव ध्वनयन्नाह फलबलाच्चेति। फलं सुवचमिति। तथा
दक्षिणोत्तरपूर्वकाणामित्यादावन्यत्र निषेधेन कप्रत्यये समुदायसंज्ञाभावोऽपि फलम्। द्वन्द्वावयवमात्रे सुन्दरादिविशेषणान्वयाभाववत् कुत्सादिविवक्षायामभा-
वः समुदायेतद्विवक्षायां तु समुदायोत्तरप्रत्ययेन तदुक्तेर्नावयवात्तदुत्पत्तिरिति चिन्त्यमेतत्। समुदायनिषेधे तु द्वन्द्वस्य संज्ञिनोऽधिकरणत्वविवक्षायां सप्तमी बोध्या। य-
निषेध्याया भवति क्रियाया एव प्राधान्येन तदन्वयस्यैव न्याय्यत्वाच्च। किंचात्यदादीनां द्वन्द्वो नास्ति एकशेषेण बाधितत्वात्। ततः प्राचीनास्त्वद्... नत्रकाकाचे
नैमित्तिकः। नन्वदक्षिणोत्तरपूर्वाणामित्यत्र इष्टमपि पुंवद्भावं निषेद्धुमिदं किं न स्यादिति वाच्यम्। सर्वनाम्नो वृत्तिमात्र इति मात्रग्रहणं हि क्वचित्सर्वनामत्वेन दृष्टानां सं-
ज्ञाप्रतिसंज्ञाभावेऽपि पुंवद्भावार्थम्। अत एव दक्षिणपूर्वायेत्यत्र संज्ञाभावेऽपि पुंवद्भावः। तस्मान्न्यायबलात् फलबलाच्च समुदायग्रहणमेवोचितम्। यद्यपि त्व
कक्वस्तान्त इति पक्षेऽवयवनिषेधेऽपि फलं सुवचम् ॥ ७ ॥ द्वन्द्वस्थ सप्तमी प्रथमार्थे। अकच्स्वरौ तु कर्तव्यौ प्रत्यङ्मुक्तसंशयाविति भाष्योक्तौ तत्प्रकरणविषय समूह-
न्तरेण तद्विषयेन बहुव्रीहौ चेत्येवाह पर्यायेण वा। तत्प्रकरणस्य सप्तमीनिर्देशनात्तदर्थकत्वौचित्यात्। किंच विभाषा जसीत्यनेन फलाभावादवयवनिषेधाभावे तत्साहचर्ये-
णार्थाधिकारानुरोधेन च द्वन्द्वे चेत्यस्याप्यवयवनिषेधकत्वाभावः। एतेन सप्तमीनिर्देशसामर्थ्याद्बहुलस्य संस्कारानुरोधाच्च विद्यमानानीत्यध्याहारेण समुदायस्यावयवानां चार्थनि-
षेधः। तत्र समुदायस्य व्यपदेशिवद्भावेन निषेधः। आधाराधेयभावेऽपि व्यपदेशिवद्भावस्यानद्यतने लङ् तुल्यास्य प्रत्ययस्यादित्यादिसूत्रस्थभाष्यादौ स्पष्टत्वात्। तत्फलं च व-
र्णाश्रमेतराणामित्यादावव्ययवत्सर्वनामत्वप्रयुक्तोऽपि नाकजित्यपास्तम्। इतरकशब्देन समासेऽतिभवकानित्यादाविव तच्छ्रवणस्य दुर्वारत्वेन तन्निषेधे फलाभावाच्चेति दिक् ॥

व्यास्येति। समुदायस्याप्तस्येति शेषः। यद्यपीति। जसीत्याधारसप्तमीतिभावः। जसइरिति। इकारेणईकारग्रहणंबोध्यम्। प्रत्याख्यायेति। प्रत्याख्यानेनचेदंध्वन्यते। वक्ष्यमाण
क्लेशपरिहारार्थएवेकारेणनतुफलान्तरेभिनिवेष्टव्यमिति। आदन्तेशेत्वदितिच्छेदएवसूत्रतात्पर्यमिति। तेचेति। येनिमित्ततयोपात्तास्तेशप्रभृतयइत्यर्थः। अनुरू
तथापिशास्त्रस्याल्पविषयतास्यात्। न्यायश्चाविरुध्येतेतिभावः। सुट्प्रसङ्ग इति। वर्णाश्रमेतराणामित्यादाविति भावः। नचनिषेधसामर्थ्यम्। अनाङ्गस्यत्रतसिलादेर्व्या
स्त्या चरितार्थत्वात्। जसाधारमिति। यद्यपिशीभावेनजस्अपह्रियतेतथापि औपचारिकमाधारत्वंबोध्यम्। यद्वा जसः इः जसिः तस्मिन्सौत्रः सप्तम्यालुक्। इत्यर्थतो
व्याचष्टे जसाधारमिति। जराया जरसन्यतरस्याम्। विभक्ताविति। एकवचअष्टनआविभक्ताविलस्मातोनुवर्ततातेनजरायाइदंजारमित्यादौनातिव्याप्तिरितिभावः। पदे
ति। पदमङ्गंचविशेष्यम्। विशेषणेनचतदन्तविधिरितिभावः। तदनुसारिभिरिति। इनातेः पूर्वविप्रतिषेधेएकस्यात्रोपात्तत्वात्स्यादेशोपियहीतुमुचितइतितेषामाश
यः। अतस्ववीतजन्मजरसः परंसुविर्ब्रह्मणः पदमुपैतुमिच्छतामितिभारविप्रयोगमसमञ्जसमितिमत्वावीतजन्मरजसइतिपठनीयमितितैरुक्तम्। एतच्चेति। भा
ष्यकृताहिटाङसिङसीतिसूत्रेइनातौप्रत्याख्यायनादेशमसादेशंचविधायनादेशेपरेएत्वंयोगविभागेनसाधितम्। बहुवचनेझल्येत्। ओसिच। ततः आङिचापः। तत्वं
स्यात्। ततः आपः संबुद्धौच। आपएकारः स्यात्संबुद्धौ आङि ओसिचानचैवमनेनेत्यत्रहलिलोपः स्यादितिवाच्यम्। अनादेशस्यनकारेपरेविशिष्यविधानात्। तथाहि।
अनाप्यकः इति अनिनकारेआपिचपरेइदमः इत्यनुवृत्त्याअनाप्यकःइत्यादिस्यादिन्यापेक्षया स्यादिरित्यर्थः। सूत्रेअइतिनान्तस्यनपुंसकनिर्देशः। नचङसेरदादेशेकृतेपररूपंस्यादितिवाच्यम्। अकारोच्चारणसामर्थ्याद्दीर्घसंभवादिति।
तथा। जराया जरसन्यतरस्यामितिसूत्रेउक्तम्। गोनर्दीयआह। अतिजरैरितिभवितव्यंसन्निपातपरिभाषयेति। एवंचपूर्वविप्रतिषेधेनेत्यादिसर्वंभाष्यविरुद्धमित्यर्थः।
पद्भ्नो। अत्रशसप्रभृतयोनिमित्ततयोपात्ताः। वेचपदाद्यादेशाननुरूपान्प्रकृतिविशेषानाक्षिपन्तीत्याह। पादइत्तेति ॥ 
पानिति। स्वार्थबोधनसमर्थान्स्वसदृशवर्णवतश्चेत्यर्थः। वस्तुतो वा शोकव्यञ्जितिव इत्रस्यार्थमेवबोध्यम्। अनुवर्ततेइति। अस्येतिप्राञ्चइतिशेषः ॥ 

ज्ञापकादिति। तन्निवृत्तेरितिभावः। अत एव भाष्ये तदनुवृत्तिर्नोक्ता। तथा सतीति। प्राचीनसंमतव्याख्यादरे इत्यर्थः। भस्येत्यनेनेति। अङ्गस्येत्येतत्सहितेनेत्यर्थः। एतेन भत्वस्य
रषणौ। प्रत्ययवस्थशब्दयोरपि विधानात्तेन न प्रत्ययाक्षेप इत्यपास्तम्। अङ्गं चेति। अधिकारलब्धमिति भावः। ननु भत्वस्य तन्त्रे यस्मात्प्रत्ययविधिरित्यनुक्तस्याङ्गनिष्ठत्वेनैते
नाङ्गनिष्ठयजादिपरत्वाक्षेपेण तदवयवस्य तत्त्वालाभः। किंचानोविशेषणेपि विधौ परिभाषोपतिष्ठते नानुवादे इति निर्दिष्टपरिभाषानुपस्थितेरनस्तक्ष्णोत्यादौ दोषो दुर्वार इति चेत्तत्रा
ह्ययतश्चेति। तथा च भाष्यम्। एवं तर्हि कार्यकालं संज्ञापरिभाषं यत्र कार्यं तत्रोपस्थितमिदं द्रष्टव्यं भस्येत्युपस्थितमिदं भवति यचि भमिति तत्र यजादिपरतया न्कारं विशेषयिष्यामः।
यद्यपि शीर्षंश्छन्दसि इत्यतः अत्र छन्दसीत्यनुवर्तते तथापि भाषायामपि क्वचिद्भवति मासश्छन्दसीति वार्तिके छन्दोग्रहणाद्ज्ञापकादिति वक्ष्यते। प्रामादिकमिति। त
थाहि। अस्तोकस्य वर्तिकामभीके इति मन्त्रे मुखादित्यर्थः। औचित्यात्। वृकस्य विद्धर्तिकामन्तरास्यात्। इति मन्त्रान्तरसंवादाच्च। एवं हव्याजुह्वान आसनि। आसन्यं प्राण
मूचुरित्यादावपि। व्याख्यातं च तथैव वेदभाष्येषु। अत एव हरदत्तेनापि काशिकायाः प्रामादिकत्वमाविष्कृतमिति ध्येयम्। अल्लोपोनः। अत्र प्राञ्चः। अन्नन्तस्य भस्याङ्ग
स्याकारस्य लोपः स्यादिति। तथा सति तक्ष्ण इत्यादौ तकाराकारस्यापि लोपः स्यात्। भस्याङ्गस्यानोकारस्य इति व्याख्याने तु अनसा मनसा इत्यादौ स्यात्। तन्नावृत्त्यादिनाऽन
न्तस्य भस्यानोकारस्येति व्याख्यानेपि। अनस्तक्ष्णोत्यादौ अतिव्याप्तिरेव। अतो व्याचष्टे। ङ्गावयव इत्यादि। भस्येत्यनेनाक्षिप्तः प्रत्ययविशेषोऽङ्गं चेति द्वयमनो विशेषणम्। अ
न् तु अकारस्य अतो नोक्तदोष इति भावः। एतच्च ष्यङः संप्रसारणं इति सूत्रे भाष्ये स्पष्टम्॥ ७७। अनः अकारम्। यजादिस्वादिपरस्यानोऽकारस्येति। तस्यायं भावः। कार्यका
लपक्षे भस्येति श्रुते भपदार्थजिज्ञासायां यचि भमित्युपस्थितेन शक्तिग्रहे वृत्ते एतद्वाक्यार्थबोधकाले लक्ष्यानुरोधेन तक्रादिन्यायाश्रयणात् यचीत्यस्यानो विशेषणतापि विधेः प
रिभाषेति न्यायस्तु इक्को गुणवृद्धी अचश्चेति व्यतिरिक्तेनास्त्येव। उदात्तस्वरितयोर्यण इत्यादावुदात्तस्वरितस्थानिकयण इत्यर्थस्येष्टत्वादिति। एतच्च स्त्रीप्रत्यये इत्वप्रकरणे निरूपयिष्या
मः। यदि तु अदसुयङ्स्त्यर्थमनन्त्यविकारे इति परिभाषावश्यकी तयैवानस्तक्ष्णोत्यादौ व्यावृत्तिः। अत्र सान्तमहत इत्यादौ चानेकल्क्लिएकल्पनापेक्षया परिभाषास्वीकार एवोचितः। भाष्य

अतएव ‍ यान्येतस्याः परिभाषायाः प्रयोजनानितद्दर्शमेषापरिभाषाकर्त्तव्येतिभाष्येउपसंहृतम्। यत्तुनसंप्रसारणइतिसूत्रेणैतस्याः परिभाषायाः सन्तिप्रयोज
नानीतिभाष्यंतत्तुनसंप्रसारणइत्यादेरेवज्ञापकात्प्रयोजनाल्पत्वसूचकमित्युच्यते। तदास्तुअङ्गविशेषणमेवतदित्याहुः। सामर्थ्यादिति। निमित्तनिमित्तिनो
रुपदस्थयोरसंभवादितिभावः। अखण्डमिति। तत्त्वंचनिमित्तानधिकरणनिमित्तिमत्यदाघटितत्वम्। तेनमातृभोगीणइत्यत्रणत्वसिद्धिः। केवलभोगीनेत्यस्य
प्रत्ययमात्रस्यवातत्त्वाभावात्। अतएवात्मन्विश्वजनेतिसूत्रस्यमाचार्यादणत्वंचेतिचरितार्थम्। गुपर्वणेत्यादिसिद्ध्येनिमित्तानधिकरणेति । पदंच।
त्रलोकेविभक्तीतरानपेक्षतयार्थबोधकत्वेनदृष्टम्। तेनगन्धर्वगानमित्यादौसुबुत्पत्तेः प्राक्समासेपिणत्वंन। सुम्नादिषुनृनमनशब्दस्तुसंज्ञाभूतोऽखण्डइतितस्यक्षुव
रेषाभ्याम्। पदइतीयतैवसामर्थ्यादेकपदत्वेलब्धेपिसमानग्रहणंयत्समानमेवअखण्डमितियावत्। तत्रयथास्यात्तेनसमासेनभवति। रामनाम। यूषइति। यूषोम
ण्डः। मुद्गामलकयूषस्तुभेदीदीपनपाचनः इतिदर्शनात् इतिप्रश्नेत्विति। एतेनपञ्चमीसमासस्यपाक्षिकतांध्वनयति। तथाहि। भाष्ये। बेभिदिताभ्यांथितिकेः।
अपीपचन्निति प्रयोजनत्रयमुक्तमेतन्नान्यथासिद्धम्। एकाचउपदेशेत्यत्रविहितविशेषणादेवबेभिदितेत्यत्रइण्निषेधान। मथितंपण्यमस्येतिविग्रहेठकि
ठस्येकादेशेपस्येतिचेत्यल्लोपेइसुसुक्तान्तात्कइतिकादेशस्तुनभविष्यति। ठस्याभावात् । ७ णीसरस्यणत्वेज्ञापकताभाष्योक्तानासङ्गतेत्याहुः। मण्डइति। तद्विशे
षइत्यर्थः। बेभिदितेति। बेभिद्यतेर्यङन्तात्तृचि अल्लोपयलोपयोः एकाचउपदेशादितिनिषेधादिण्नस्यात्। पञ्चमीसमासेत्वल्लोपस्यस्थानिवत्त्वान्निषेधाप्रवृत्तिरितिभावः। ए
वमितरयोः कादेशजुसोरभावोबोध्यः। विहितविशेषणेति। एवंचस्थानिवत्त्वंविनापितदप्रवृत्तिः सिद्धेतिभावः। विहितविशेषणत्वंचास्यैकाचोद्धेइत्यत्रभाष्येध्वनितम्। तत्र
हियङ्लोपेबेभिदितेत्यत्रयङन्तात्तृचिइट्प्रतिषेधमाशङ्क्यैकाचोङ्गादितिव्याख्यानेनपरिहृतम्। तद्भाष्यस्ययथाश्रुतत्वेबिभित्ततीत्यादौदोषवारणायोपदेशग्रहणस्यैकाजंशे 
पिसंबन्धेबेभिदितेत्यादावपिपरिहारासंभवेनतस्यविहितविशेषणत्वेतात्पर्यमावश्यकम्। प्रत्ययविधानावधेरेवप्रायेणाङ्गत्वादङ्गादित्यनेनेदंसूचितम्। विहितविशेषणेचेवि 

भिन्नतीत्या दावदोषेणैकाजंशेउपदेशग्रहणासंबन्धइतितदाशयः।नभविष्यतीति।स्थानिवत्वंविनापीतिशेषः ।ओ अल्विधित्वादिति।ठस्येकइत्यत्रस्थानिनिप्रत्ययेष्वुच
सर्वत्राकारोनविवक्षितःआदेशएवतुविवक्षितः।अन्यथानिष्पादकॄशब्दादेदेशइतिठ जिव्यञ्जनमात्रस्यव्यञ्जनरूपकादेशेकशब्दस्यलाक्षणिकत्वात्केणइतिइस्साना
पत्तिरितिभावः।स्थान्यादेशेयोरिति।इकादेशस्थानिभूतप्रत्ययेआदेशविधायकेसूत्रेठस्येकइत्यत्रचेत्यर्थः।स्पष्टंचेदंठस्येकइत्यत्रभाष्यकैयटयोः।इदमुपलक्षणमंस
न्निपातपरिभाषयापिकादेशस्यरूपंबोध्यम्।स्पष्टंचेदंठकृकृसोश्चेतिवार्तिकभाष्ये।बलीयस्त्वादिति।एतच्चयस्यविभाषाविस्तोभोगइतिसूत्रस्थकैयटेस्पष्टम्।एतत्सर्वे
मपरविधाविति तुवक्तव्यमितिवार्तिकस्यकैयटानुरोधेन।दिगिति।दिगर्थस्तुएतदर्थंपञ्चमीसमासस्यावश्यकत्वम्।तथाहि।परसाहचर्यस्यबलवत्त्वेमानाभा

नचस्थानिवद्भावेनठत्वंमल्विधित्वात्।ठस्येकइत्यत्रहिस्थान्यादेशयोःअकारउच्चारणार्थः।अपीपचन्नित्यपिणिलोपस्यचङन्त्यकारयोरेकादेशस्यच
स्थानिवद्भावंविनापिसिद्धम्।सिद्धसाहचर्यादभ्यस्तादपिलङ एव झेर्जुस् विधानात्।नचसिचासाहचर्याद्लुङ एवकिंनस्यादितिवाच्यम्।पूर्वसाह
चर्यात्परसाहचर्यस्यबलीयस्त्वादितिदिक् ॥ ७वः। विप्रतिषेधसूत्रेकार्यशब्देनशास्त्रीयस्यैवग्रहीतुमौचित्येनात्रतदप्राप्तेः।नित्यः परस्य णादेशःपश्चासौ

व्यवस्थया।युगपत्संभवोनास्तिबहिरङ्गेणसिद्धतीत्यचःपरस्मिन्नितिसूत्रस्यभाष्योक्तरीत्यापूर्वसाहचर्यस्यान्तरङ्गत्वेनतस्यैवग्रहीतुमौचित्याच्चविभाषागमहन
विदविशामित्यत्रलुग्विकरणपरिभाषानुग्रहायपरसाहचर्याश्रयणेनुदविदोन्दत्रेत्यत्राप्यन्तरङ्गपरिभाषानित्यत्वाद्व्याख्यानेनपरसाहचर्याश्रयणमितिबोध्यम्।प्र
त्यैषिषन्नित्यादौलङिउभौ अभ्यस्तमितिसूत्रस्यभाष्यसंमतेएवमपिदोषाच्चपूर्वोत्तरसाहचर्ययोःभावरूपादेशानपहृतविकरणकाभ्यस्तस्यैवग्रहणमित्यप्यतिक्लिष्टं
ततोवरंपञ्चमीसमासएव।अपरविधाविति तुवक्तव्यमितिन्यासान्तरेपिपञ्चमीस सासोवक्तुंशक्यः न्यासान्तरन्तुस्वविधेरपिसंग्रहायेतिस्पष्टमेव।अतिप्रसङ्ग
स्त्वनित्यत्वेनपरिहरणीयइति ॥

अधिकरणषष्ठीति। प्रातिपदिकस्य पदस्येत्यनयोः परस्परानन्वितयोरन्तेनान्वयादिति भावः। अभेदेनैवेति। संबन्धान्तरासत्त्वेपि विशेष्यविशेषणभावसंबन्धेनेत्यर्थः। शक्यमकर्तुमिति। पदस्येत्यस्यकाविद्वैयधिकरण्येनान्वयेऽस्य तात्पर्यग्राहकं तर्भाष्ये उक्तं न तु लक्ष्यानुसारिव्याख्यानादेव ज्ञापकं विनापि सिद्धमित्यभिमानः। भत्वासंभवादिति सर्वनामस्थानत्वेनेति भावः। समाहारद्वन्द्वस्येति। प्राण्यङ्गत्वादेकवत्समाहारद्वन्द्वस्य ककुद्दोः शब्दस्येत्यर्थः। सुयोजम्। दोःशब्दस्य पुंस्त्वेपि सुनिर्वाहम्। मन्यमन्त्यात्त्वे

तदन्तस्येति। षष्ठीतत्पुरुषः। तस्यान्तो येन कारस्तस्येति अर्थः। उक्तं च हरदत्तेन। विशेष्यमन्तस्येत्यस्य नेत्येतद्विभक्तिकम्। तथैव प्रातिपदिकेत्येतत्तद्विशेषणमिति। यत्तु प्राचोक्तम्। प्रातिपदिकान्तस्य पदान्तस्य नस्येति पदद्वयाख्यातम्। अन्तस्येत्युभाभ्यां संबध्यते इति। तद्दोरेव ग्रस्तम्। अन्तस्येत्यस्यावृत्तिप्रसङ्गात्। व्यधिकरणषष्ठीद्वयापत्तेश्च। यदि तु अभेदेनैव संबन्धेन प्रातिपदिकेनैव नेत्यनेनापि पदं विशेष्यते। तदा विशेषणेन तदन्तविधौ सौत्रमन्तग्रहणं शक्यमकर्तुम्। विभाषाङिश्योः। शीतिनपुंसकाच्चेति विहितो न तु जश्शसोः शिः। तस्मिन्भत्वासंभवात्। भस्येत्यनेनासर्वनामस्थानस्यैव यजादेरास्येप्रासदेतदाह। असर्वनामस्थानेति। अतएवेति। दोषणीति प्रयोगात्। यद्यपि समाहारद्वन्द्वस्यैकशेषे कृतेपि भाष्यं सुयोजं तथापि ककुदित्यस्य पृथक्पदत्वं न्याय्यम्। अन्यथा ककुद एकत्वबाहुल्येद्विवचनलभ्येत इति भावः। तमुपाद्रवदुद्यम्य दक्षिणं दोर्निशाचर इति रघुः। तत्र दक्षिणं दोरिति उद्यम्येत्यनेन कर्मतया संबध्यते। दोषं तस्येति। दोषं तस्य तथाविधस्य भजतश्चापस्य गृह्णन्गुणमिति श्रीहर्षप्रयोगः। तत्र दोषं हस्तं दूषणं च भजतश्चापस्य गुणं मौर्वीमतिशयं च गृह्णन्निति संबन्धः ॥

नदोःशब्दस्य द्वन्द्वे पूर्वनिपातापत्तेः। किं च तदन्ते आदेशो दुर्लभः। विशेष्यसन्निधानादिति भावः। ककुद एकत्वमिति। प्रकरणाच्छ्रुतौ तथार्थकमेवेदमिति भावः। दक्षिणं तमुद्यम्य दोर्नामा निशाचर इत्यन्वयभ्रमवारणायाह। तत्रेति। एकदेशिसमासइति। तत्र त्वाख्याने तु कर्मधारय इति बोध्यम् ॥

जहातीति। हा इति शोकव्यञ्जक शब्दमित्यादिः। नुम्यप्यस्त्विति। अयंभावः। तन्त्रेण नाभावे नकारे च कार्यं तं प्रति अन्यं प्रति च कृते च कार्यान्तरं प्रति मुभावोऽसिद्ध इ
ति तदर्थः। एतेन मुत्वस्यासिद्धत्वेने नादेशे गुणे नुमादेरप्राप्तिरिति परास्तम्। नुम्येवास्त्विति पाठे एवकारोऽप्यर्थः। उच्चारणार्थत्वादिति। तन्त्रेणोच्चरिते हि ती येने शब्दे इ

अमरव्याख्यातारस्तु। दोषशब्दस्त्रियामपि स्वीकृत्य भागुरिमतेन यपि दोषेत्युक्ता। दोर्दोषा च भुजो बाहुः पाणिर्हस्तः करस्तथेति धनंजयनिघण्टुमुदाजह्रुः।
द्वयोरह्नोर्भवद्व्यह्नः। तद्धितार्थेति समासः। कालाट्ठञ्। द्विगोर्लुगनपत्य इति लुक्। राजाहःसखिभ्य इति टच्। अह्नोऽह्न एतेभ्य इत्यह्नादेशः। अह्नः सायमिति। स्यतेर्घ
ञि अवसानवचनः सायशब्दः संख्याविसायेति ज्ञापकादेकदेशिसमासः॥ इत्यदन्ताः॥ हाहानिति। गन्धर्वविशेषवाचकमव्युत्पन्नं प्रातिपदिकमिदम्। कौमारा
स्तु। जहाति। विहा हा इति क्रियाशब्दं च वदन्तो विश्वपावद्रूपमाहुः। तन्मते प्रत्युदाहरणं तु अकारो वासुदेवः स्यात् तेन सह वर्तन्त इति साः तान् सानिति बोध्यम्॥ इ
त्यादन्ताः। आङो नास्त्रियाम्। पुंसीति तु नोक्तम्। अमुना कुलेनेत्यत्र यथा स्यात्। न च नुमा रूपसिद्धिः। मुत्वस्यासिद्धत्वादिको चीति नुमो प्राप्तेः। नादेशे तु नासिद्धत्वं न मु ने इ
ति निषेधात्। न च न मु ने इति निषेधो नुम्येव भवतु ने इत्यकारस्योच्चारणार्थत्वादिति वाच्यम्। अमुष्मै कुलायेत्याद्यसिद्ध्यापत्तेः। अच्च घेः। इदुद्भ्यामिति ङेरिति औदिति
च पदत्रयमनुवर्तत इत्याशयेनाचष्टे। इदुद्भ्यामुत्तरस्येत्यादिना। घेरनन्तरस्येति तु नोक्तम्। सूत्रे घेरित्यस्य षष्ठ्यन्तत्वात्। तस्मात् स्यादौ च प्रमाणाभावात्। औदिति पूर्वसू
त्रे इदुद्भ्यामुत्तरस्य ङेरिति क्लृप्तसंबन्धस्य त्यागायोगाच्च। औत्स्यादिति ॥
त्यर्थः। अमुष्मै इति। न मु न इति सूत्रविषये पूर्वं विभक्तिनिमित्तकार्यप्रवृत्तौ मु
त्वस्य मकारविषयेकमपि प्रत्यासिद्धत्वाभावेन विभक्त्यादेशं प्रत्यसिद्धत्वेपि वा तस्याभावात्परत्वे न नुमापत्तेः। आदिना अमू कुले अमुयोरिति तयोरत्वस्याप्रवृत्तौ मुत्वे
नुमिचानिष्टं स्पष्टमेव। न मु टादेश इति वार्तिकस्वारस्येन नादेश इत्येव तदर्थ उचित इत्यपि बोध्यम् ॥

नेत्संज्ञ इति। इयमपि तदुक्तिश्चिन्त्या तस्य लोप इति सूत्रभाष्ये उच्चारणार्थानामपीत्संज्ञकत्वस्य स्पष्टमुक्तत्वात्। स्वरितत्वादर्शनादिति। नन्वौतः स्वरितत्वेऽपि नाग्नावित्यत्र स्वरि
तश्रवणमग्निशब्दस्यान्तोदात्तत्वेनैकादेश उदात्तेनेत्यनेनोदात्तत्वादिति चेन्न आवृत्तावनुदात्तस्येत्यस्य तत्रानुवर्तितत्वात्। शेषनिघातेनौकारस्वरितत्वमादायाग्निशब्दस्य स
र्वानुदात्तत्वाच्च। स्वरितस्यानुदात्तपदेन ग्रहणमुदात्तस्वरितयोरित्यादौ स्वरितग्रहणात्। उच्चारणार्थानामित्संज्ञकत्वेऽपि प्रत्ययाप्रत्ययोरित्येव सिद्धे पुनस्तितिप्रत्ययग्रहणं क
र्तव्यमिति वार्तिके नौपदेशिकप्रत्ययत्वं तेषां तत्र स्वस्थानात्स्वरितत्वप्रवृत्तिरिति तत्त्वम्। आदेशोपदकारस्थानिकचर्त्वनिष्पन्नतकारस्य सत्त्वेन दित्त्वात्तदप्राप्तेः। उच्चारणार्थ इत्य

अत्र व्याचख्युः। औतस्तित्वं स्वरितार्थम्। न विभक्तावितीत्वनिषेधस्तु न भवति। अनित्यत्वात्। अनित्यत्वं च इदमस्थमुरिति थमो मकारस्येत्संज्ञापरित्राणार्थादुदि
त्करणाल्लभ्यत इति तन्त्रे वोक्तमिति। तच्चिन्त्यम्। न विभक्ताविति सूत्रे ङे रौतस्तु कार उच्चारणार्थः नेत्संज्ञ इति स्वयमेवोक्तत्वेन पूर्वापरविरोधात्। युक्तं चो
च्चारणार्थत्वं न तु स्वरितार्थत्वम्। स्तीर्णे बर्हिषि समिधाने अग्नावित्यादौ स्वरितत्वादर्शनात्। अदिति तपरत्वं तु बह्वावित्यादावत्वे कृते स्त्रियां टाप् माभूदि
त्येतदर्थमित्याहुः। तदपि चिन्त्यम्। तपरग्रहणाद्धि टापा सह दीर्घो माभूत् टाप् तु स्यादेव। लक्षणद्वयबाधे मानाभावात् ॥

स च वर्णान्तरोच्चारणे मुखसुखार्थ उच्चारणार्थो न त्वन्यफलार्थ इत्यर्थः। अत एव भाष्ये औकार एङित न आश्रित्यादिति प्रत्याख्यातम्। न हि तदा तित्त्वमस्ति। न च ङित्त्वे विंश
तौ तिलोपापत्तिः। भाष्यप्रामाण्येन तस्य सप्तम्यामनभिधानादिति दिक्। अदिति। अस्य यदपीत्यादिः। दीर्घो माभूदिति। भिन्नफलत्वा वृत्त्यर्थत्वात्तपरत्वस्येति
भावः। न च त्रौ विदर्थस्येति प्रकरणेन समासबाध इवानेन टापोऽपि बाध इति वाच्यम्। प्रतिपदविधाना षष्ठी न समस्यत इति वार्तिकानुरोधेन तत्र तथाकल्पने
पीह तथाकल्पने मानाभावात् ॥

म·श· अनडुः सिध्यतीति। वैकल्पिकत्वमात्रं तु वाचनिकमिति तद्भावः। संज्ञापूर्वक इत्यस्य भाष्यास्पष्टत्वादाह। अङ्गवृत्तेति। इयमगतिकगतिः। सोऽर्ङेति न्यासे लाघवभाव
७० श्चावित्वसामर्थ्याद्विलोपकल्पने गौरवं च तस्मादुपनडोऽनडुः तद्वैकल्पिकत्वं च चिन्त्यमेव भाष्यानुक्तत्वादिति प्रामाणिकाः। चेतीति। तस्मादित्युत्तरस्येति ज्ञापयतीति विवृतिवि

अत एव कृन्मेजन्त इति सूत्रे भाष्यवार्त्तिकयोर्विवरणे च सन्निपातपरिभाषया टाब् नेत्युक्तम्। टापा व्यवधाने हि आनन्तर्यविघातः स्यादिति। तस्मात् औत इत्यत्र अ
तोऽपि तपरकरणमुच्चारणार्थमेवेत्यवधेयम्। अनडुः सौ। सोऽर्ङेत्येव सिद्धे अनड्डिधानमन्यतोऽपि स्यादिति ज्ञापनार्थम्। तेनोशनसः संबुद्धौ अनड् सिध्यतीति प्रा
ञ्चः। तच्चिन्त्यम्। सोऽर्ङेत्युक्ते हि ऋदुशनेत्युत्तरसूत्रेणापि डा स्यात्। ततश्च उशनेत्यत्र सर्वनामस्थाने चासंबुद्धाविति दीर्घः स्यात्। पुरुदंसेत्यत्र सान्तमहत
इति दीर्घः स्यात्। यद्वा संज्ञापूर्वको विधिरनित्य इति वा अङ्गवृत्तपरिभाषया वा समाधानं बोध्यम्। हल्ङ्याब्भ्यो दीर्घादित्येतत् ङ्यापोरेव विशेषणं न
तु हलः संभवात् इत्याह। दीर्घाविति। परमिति। न लिङ्विहितविशेषणं यासाकाङ्क्षत्वात् सखव्याप्तेः। न च तत्र हलन्तादिहितत्वेन निर्वाहः। यः सद्त्यादा
वतिव्याप्तेः। कर्तेत्यादावव्याप्तेश्चेति भावः। हलिति। तस्य च सुतिसीत्येवं रूपत्वे मेकदेशविकृतन्यायेन बोध्यम्। लुप्यत इति। यद्यपि हलो पोर्योरित्यतो
लोप इत्यनुवर्तते। तच्च तत्र भावसाधनं तथापीह कर्मसाधनं हलिति प्रथमान्तेन सामानाधिकरण्यादिति भावः। दीर्घग्रहणं किम्। अतिखट्वः। नि
ष्कौशाम्बिः ॥ ७५ शेषणासंभवश्च शब्दार्थः। एकदेशविकृतन्यायेनेति। स्थानिवत्त्वस्योपलक्षणमिदम्। अर्द्धाधिकविकारेण प्रत्यभिज्ञाभावाच्छि
न्नपुच्छश्वदृष्टान्तमूलकन्यायस्याप्राप्तेरिति बोध्यम्। प्रथमान्तेनेति। यद्यपि तस्मादित्युत्तरस्येत्युक्तेः पञ्चम्यन्ततापि संभवति तथापि बहुषु पदेषु विभक्तिविप रामः
रिणामकल्पनापेक्षया आगन्तुकलोपशब्दे एवार्थान्तरकल्पनमुचितमिति भावः ॥ ७०

ननु सुतिसीति प्रत्यये यस्मात्स विहितस्तदादेरित्युपस्थित्या तस्य हल्ङ्याब्भ्य इति विशेषणमिति हल्ङ्याबन्तात्तदादेः परस्येत्यर्थेन प्रकृत्या सेपादुपसर्जनस्त्रीप्रत्ययेतदादिनियमसत्त्वात् च प्रकृतेर्ङ्याबन्तत्वाभावेन नात्र दोष इत्यत आह ॥ अत एवेति। एतस्मिन्नर्थे येनविधिरिति परिभाषया शब्दरूपं विशेष्यमादाय तदन्तविधौ ततः प्रत्ययग्रहणपरिभाषयोक्तं विशेष्यमादाय पुनस्तदन्तविधौ टिड्ढाणञिति सूत्रेऽणन्तान्तादितिवद्ङ्याबन्तान्तादित्यर्थस्यावश्यकत्वेनात्र दोषः। मालेत्यादौ तु व्यपदेशिवद्भावेन सिद्धिरिति भावः। अविष्टा सुजातः अविष्ट इत्यादौ तद्धितलुकि स्त्रीप्रत्ययलुकि च प्रत्ययलक्षणेन टाबन्तत्वादतिव्याप्तिवारणार्थं दीर्घग्रहणमित्यपि बोध्यम्।

ननु इह समस्तस्य ङ्याबन्तत्वं नास्ति। न च स्त्रीप्रत्यये तदादिनियमो नास्तीति वाच्यम्। अनुपसर्जने हि तथा। इह तूपसर्जनत्वात् तदादिनियमोऽस्त्येव। सत्यम्। तथापि उत्तरपदस्य ङ्याबन्तत्वेन सोस्ततः परत्वानपायात्। नहीदं विहितविशेषणमित्यवोचाम। अत एव बहुश्रेयसी अत्र सुलोपः। स्यादेतत्। गङ्गीयतेः क्विप्। गङ्गीः। इह ईकारस्य स्थानिवद्भावेनाप्त्वाद्दीर्घत्वाच्चातिव्याप्तिरिति चेत् सत्यम्। ङी ई आ आप् इति प्रश्लिष्य दीर्घग्रहणस्य प्रत्याख्यानान्न कश्चिद्दोषः। सुतिसीति किम्। भेत्ता। तासेस्तकारस्य लोपो माभूत्। न चैवमपि अभैत्सीदित्यादौ सिचो लोपापत्तिः। सुतिभ्यां साहचर्येण विभक्तेरेव ग्रहणात्। अपृक्तं किम्। भिनत्ति। भिनत्तीति प्रत्युदाहरन्ति। तच्चिन्त्यम्। विशिष्टस्याहल्त्वात्। सुतिसीनां हलिति क्लिष्टं व्याख्यायाति प्रसङ्गापादनस्यानुचितत्वात्। यस्त्वाहुः। सुरां सुनोतीति सुरासुत्। तमाचष्टे सुरासयति। ततः क्विप्। सुराः। सुरासौ। सुरासः ॥

अतिव्याप्तिरिति। अस्य स्त्री ई दे वद् तस्य ई देवदत्तेरित्यादावपि सेति बोध्यम्। प्रत्याख्यानादिति। दीर्घग्रहणेनोपस्थितत्वादीकाराकाररूपस्यैव दीर्घस्य ग्रहणाच्चेत्यपि बोध्यम्। सुरासयतीति। न च णौ चङीति सूत्रस्य भाष्यप्रामाण्येन इदुदुपधेभ्यो णिज्नास्तीति सिद्धान्तात्कथमत्र णिजिति वाच्यम्। तद्भाष्यस्य तेषां लुङि प्रयोगाभावकल्पने नोपपत्तेः। सर्वथा तदभावकल्पनमप्रामाणिकमित्यभिमानात् ॥

ग्रहणाच्चेति। सावनुनासिकोकारपाठाच्चेत्यपि बोध्यम्। इष्टं चाष्टनग्रहणं चिन्त्यप्रयोजनम्। वस्तुतो गङ्गाः सुरा इत्यादेरभिधाने इदं मानं चिन्त्यम्। विभक्त्योरानन्तर्यमिति। एवं च विभक्तिसंयोगान्तलोपस्यासिद्धत्वं ज्ञाप्यत इति तात्पर्यम्। गोमानित्यादौ लक्ष्यभेदाद्वारंवारं संयोगान्तलोपः। नपुंसककार्यत्वादिति। स्वमोरिति हि तत्र लुगिति तत्र नलोपनिषेधायावश्यकत्वादिति भावः। लुकालुप्ते इति। ङि·संबुद्ध्योरिति सप्तमीति भावः। आवश्यकतया चेति। ङि·संबुद्ध्योरित्यस्य पक्षान्तर इहसुनोतैरवयवस्य सस्य लोपव्यावर्त्यमिति अष्टनग्रहणमिति। तदपि न। परस्परसाहचर्येण सुतिसीनां विभक्तीनामेव ग्रहणात्। अन्यथा सिचो लोपापत्तेरुक्तत्वात्। प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणाच्च। हल् किम्। बिभेद। ननु प्रथमं हल्ग्रहणं व्यर्थम्। हलन्तात्परेषां संयोगान्तलोपसंभवात्। अत्राहुः। संयोगान्तस्य लोपे हि नलोपादिर्न सिद्ध्यति। यत्तु तेनैव लोपः स्यात् हलस्तस्मा इति धीयते। तथा हि। सखेत्यत्र नलोपो न स्यात् संयोगान्तलोपस्यासिद्धत्वात्। स्यादेतत्। संयोगान्तलोपो नासिद्धः। न ङि·संबुद्ध्योरिति सूत्रे संबुद्धिग्रहणाज्ज्ञापकात्। न चैवं गोमानित्यादावपि नलोपापत्तिः। ज्ञापकस्य सविषयत्वात्। यन्न हि नकारविभक्त्योरानन्तर्यं तत्रैवासिद्धत्वं व्याख्यानात्। यत्वाहुः। हे त्रिहन्निति नपुंसककार्यत्वादुक्तं ज्ञापकमिति। तन्न। लुका लुप्ते प्रत्ययलक्षणाभावेन संबुद्धौ वा नपुंसकानामित्यस्यावश्यकतया च संबुद्धिग्रहणस्य नपुंसकविषयत्वासंभवेनोक्तज्ञापकस्य सुस्थत्वात्। तस्मान्नलोपो न प्रयोजनमिति चेत्। इह तर्हि अभिनोऽत्रेत्यत्र रोरुत्वं न स्यात्। तदिदमुक्तं नलोपादिरिति। तथा अबिभर्भवान्। अजागर्भवान् इत्यत्र तिलोपो न स्यात्। तस्येति नियमात्। अत्रेदमवधेयम्। ङ्याब्ग्रहणं सोरेव विशेषणं न तु तिस्योः। व्याख्यानात् ॥ ७७ पक्षेऽपि विकल्पार्थमावश्यकतया चेत्यर्थः। यद्यपि वा नपुंसकानामित्येव भाष्ये पठितं संबुद्धिग्रहणं च सूत्रादेव संबध्यत इति तदर्थं न चरितार्थं तथाप्यत्र पाठे नोक्तार्थज्ञापकतापि। संबुद्धिग्रहणं भाष्ये प्रत्याख्यातमिति तु न भ्रमितव्यम्। सूत्रस्थङि·ग्रहणस्य ङि·संबुद्ध्योरनुत्तरे इति वार्तिकस्य संबुद्धिग्रहणस्य च प्रत्याख्यानेऽपि सूत्रस्थस्याप्रत्याख्यानादिति भावः ॥

भाष्यमिति। यदिपुनरयमष्टनलोपः संयोगान्तलोपोविज्ञायेतेत्युपक्रम्यतद्भाष्यंप्रवृत्तम्। पूर्वान्तत्वेनेति। नचैवंसंबुद्धावित्यादौसंनिपातपरिभाषयाटाभ्नेतिभाष्यविरोधइ
तिवाच्यम्। दीर्घग्रहणस्तुत्तरमन्तादिवद्भावप्रवृत्तावपिटाबुत्पत्तिकालिकानन्तर्यविघातस्यतेनवारयितुमशक्यत्वात्। अशास्त्रीयत्वात्संन्निपातस्यान्तवद्भावेनातिदेष्टुम
शक्यत्वाच्च। अम्भावस्यास्त्वितिनाऽत्र विर्वोधिता। पञ्चमीसमासाश्रयणेस्थानिवद्भावोस्ति। अस्याभिधानेचनदृढमानम्। आबन्तेभ्यआचारक्विबेवनास्ति। आतोधातोरि
तिसूत्रस्यभाष्यप्रामाण्यात्। तत्रवार्त्तिककृताआतोनापइत्युक्तमितितद्बीजम्। आचारक्विबन्ताद्यङ्लुक्तुनास्त्येव। तेनकस्यस्त्रीकी। कीशब्दादिभ्यआचारक्विबन्तेभ्यो
अस्मिन्नेवसूत्रेहिहलष्टकग्रहणन्तिस्योश्चग्रहणंनकर्त्तव्यंभवतीतिभाष्यंचेहप्रमाणम्। यदिहिङ्याब्ग्रहणंतिस्योरपिविशेषणंस्यात्। तर्हिकुर्यंति
सोर्ग्रहणस्याकर्तव्यतांब्रूयात्। यत्तुङ्याब्भ्यांतिस्योरसंभवएवेति। तत्रङ्यन्तादसंभवइतिसत्यम्। आबन्तात्तुआचारक्विबन्ताल्लङःतिप्सिपोस्तएव।
अगङ्गात्। अगङ्गाः। इतियथा। नचशपाव्यवधानम्। एकादेशस्यपूर्वान्तत्वेनग्रहणात्। नचस्थानिवद्भावः। अपूर्वविधित्वात्। अत्रायंनिष्कर्षः। ङ्यापःसे
रित्येवसूत्रमुचितम्। नचसुराः सुरास्सौइत्यादौधातोःसकारेऽतिप्रसङ्गः। ङ्याब्भ्यांसाहचर्यात्। प्रत्ययाप्रत्यययोरितिपरिभाषयाचप्रत्ययस्यैवसो
र्ग्रहणात्। राजेत्यादौनलोपस्तुनङिसंबुद्ध्योरितिज्ञापकेनसाधितएव। किंचाभिनोऽत्रेतिउत्वमपिसूपपादम्। संयोगान्तलोपोरोरुत्वेइतिसिद्ध
काण्डेपाठात्। हरिवोमेदिनंत्वेतियथा। अबिभर्भवान्इत्यत्रापिनदोषः। एतत्तस्येतिअत्रतकारस्यापिप्रश्लेषेणात्तस्येतिच्छेदात् ॥
यङ्लुकि लङिअचेकेदित्यादौङ्यन्तादपिसंभवइत्यपास्तम्। ईकाररूपत्वाभावाच्च। उत्वमपीति। अपिनापूर्वरूपम्। रोरुत्वेइति। कर्त्तव्येकृतेचेतिशेषः। नमुनेइति
वत्। हरिवद्भूनि। हरिशब्दान्मतुपिछन्दसीरइतिवत्वेनुमिसंयोगान्तलोपेमतुवसोरितिरुत्वेउत्वेगुणः। छेदादिति। कीर्त्तयतेः क्विब्विचावेवनस्तोवृतेर्यङ्लुकिलङिई
ड्भावेतिप्सिपोःप्रयोगएवनास्ति। यथालक्षणमप्रयुक्तेइत्यत्रैवभाष्योक्तेः। अप्रयुक्तेलक्षणप्रवृत्त्यभावस्यैवयोग्यतेत्यर्थः। प्रयुक्तानामिदमन्वाख्यानमितिसिद्धान्तात् ॥

नेतिव्याख्यानमिति। उपपादितंचेदं रामशब्दान्ते। नलोपेकृते इति। संयोगान्तलोपस्यासिद्धत्वादिति भावः। नलोपात्प्रागिति। विभक्तिसंयोगान्तलोपस्य नलोपविषये ऽसि
द्धत्वाभावज्ञापनद्वारेति शेषः। एतेन राजेधते चक्रयत्रराजाच्छत्रमित्यादौ वृद्धियणतुगादिकं नस्यात्संयोगान्तलोपस्यासिद्धत्वात्। किंच कर्त्रैत्यादावेकमेचयणशास्त्रंपूर्वा
परविषयभेदाद्भिन्नमिति शब्दपरविप्रतिषेधात्परयणादेश इत्यचः परस्मिन्नित्यत्र भाष्यकैयटयोः स्पष्टम्। विषयगतपौर्वापर्यस्य लक्षणे आरोप इति तदाशयस्तेन धीमा

मनुउस्वाक्ष इत्यादौ संयोगादिलोपः स्यादिति चेत् न। दत्वे कृते तदप्राप्तेः। असिद्धं दत्वमिति चेन्न। सिद्धकाण्डे वस्वादिषु दत्वमिति पाठात्। नन्वपदान्त
त्वात् दत्वं न स्यादिति चेन्न। सावपि पदं भवतीति पक्षाश्रयणात्। तद्धि जन्तु असर्वनामस्थाने यचीति च्छित्वा यजादौ सर्वनामस्थाने पदं नेति व्याख्यात
म्। न चैवं राजेत्यादौ नलोपे कृते सो रुत्वविसर्गौ स्यातामिति वाच्यम्। इतोदिति सिद्धे पथिमथ्यात्याकारविधानेन प्रथमं सुलोपस्य ज्ञापनात्। ननु नैतज्
ज्ञापकं संबुद्धौ चरितार्थत्वात्। हे पन्थाः। मन्थाः ऋभुक्षाः। तत्र हि दीर्घो संबुद्धाविति पर्युदस्तः। नलोपश्च निषिद्ध इति चेत्। एवं तर्हि नलोपात्प्राक् सं
योगान्तलोप इत्यर्थेन ङिसंबुद्ध्योरिति सूत्रमेव ज्ञापकमस्तु। तथाहि। ङिसंबुद्ध्योरिति षष्ठी न तु सप्तमी ङेर्लुका लुप्ततया प्रत्ययलक्षणाभावान्ङ्य
न्तस्य संबुद्ध्यन्तस्य च प्रातिपदिकस्येति सामानाधिकरण्येनान्वयः। नच प्रथमं संयोगान्तलोपं विना संबुद्ध्यन्तं प्रातिपदिकं लभ्यते। तस्मान्ङ्याप्सो
रितिन्यासेन किंचिद्बाधकम्। ७७ निसादौ सुविषयसंयोगान्तलोपशास्त्रस्य नलोपविषये तत्र पूर्वस्मिन्नसिद्धत्वेन न नलोपो नस्यादित्यपास्तम्। सा

वपि पदमिति पक्षे तु अदोषाच्च। आरोपे मानाभावाच्च। षष्ठीति। अतएव ङौ न नलोपनिषेधः सार्थकस्तदाह ङेरिति। नच नलुमतेति निषेधानित्यत्वान्न दोषः। तदपेक्ष्यापं
ङ्यन्ततया व्याख्यानस्यैव लघुत्वात्। संबुद्ध्यन्तेति। संबुद्ध्यन्तप्रातिपदिकान्तनस्य लोपो नेत्यर्थः ॥

इतिसूत्रमस्त्विति। अतएवसुपीरित्यादिसिद्धिः। अन्यथापदान्ते संयोगादिलोपस्य संयोगान्तलोपापवादत्वात्तत्र वृत्तौ र्वोरिति दीर्घो न स्यात्। तिप्यनस्तेः सिपिधातोरिति सूत्राभ्यां धातुसंबन्धिपदान्तसस्य दत्वरुत्वविधायकाभ्यां कसाहचर्येणचप्रकृतिप्रत्ययसंबन्धिवर्णसंयोगमाश्रित्यसस्यपदान्तेसंयोगादिलोपाप्रवृत्तिकल्पनेतुनकिंचिल्लाघवम्। किंचनङि संबुद्ध्योरितिसप्तम्येवयुक्ताङि ग्रहणाच्च। ननुमतेत्यस्यैतद्विषये नित्यत्वमूलकमेववानपुंसकानामितिवार्तिकम्। एवंचब्रह्मन्नायर्थसंबुद्धिग्रहणस्यावश्यकत्वेननज्ञापकासंभवः। अपूर्ववचनकरणेनसिद्धप्रत्याख्यानन्तुनयुक्तम्। इदमे वाभिप्रेत्यसूत्रशेषेभाष्येतस्मादशक्योहलङ्क्तलोपः संयोगान्तलो

यदितुवस्वादिष्विदत्वमितिवार्तिकंप्रत्याख्यायते। अधातुग्रहणेनैवोखासदित्यादौदीर्घाभावः सिद्धः। तर्हिहल्ङ्याब्भ्यः सोरितिसूत्रमस्तु। यत्तुयथाश्रुतं सूत्रप्राचाव्याख्यातम्। ङ्यन्तादाबन्ताद्दीर्घाच्चेति। तन्न। ङ्यापौहिदीर्घौ नतु तदन्तमपि। नचदीर्घात् ङ्यन्तादित्यादेर्दीर्घयोङ्यतदन्तादित्यादिरर्थोलभ्यते। दीर्घादितिपञ्चम्या अनन्वयात्। समासेउपसर्जनयोर्ङ्यापोर्विशेषणायोगात्। उक्तंहिभाष्ये। सविशेषणानांवृत्तिर्नवृत्तस्यवाविशेषणयोगोनेति। एतेनअनदीसंज्ञह्रस्वइउवर्णान्तमित्यपिप्राचोवृत्तिः प्रत्युक्ता। सख्युरसंबुद्धौ। इहेतोत्सर्वनामस्थानेइत्यतः सर्वनामस्थानेइत्यनुवर्तते। तदसंबुद्धावित्यनेनविशेष्यते। गोतोणिदितिसूत्रात्पिदित्यनुवर्त्यं तत्सामानाधिकरण्येनसप्तम्याः प्रथमाकल्प्यतइत्याह। संबुद्धिवर्जसर्वनामस्थानमिति ॥

ॐ पोविंशातुम्। नन्वेद्दिस्यायतेद्धिहलङ्क्तग्रहणंतिस्योश्चग्रहणंकर्तव्यमित्युक्तम्। इतिसूत्रमित्युपलक्षणम्। हल्ङ्याब्भ्यः सुतिसिहलितिसूत्रमस्त्वित्यपिबोध्यम्। अतएवाविभोःसज्यमित्यादौहलोपइतिदीर्घसिद्धिरितिदिक्। दीर्घाच्चेति। हलन्तादित्यपेसम्बन्धकारइतितद्व्याख्यातारः। नतुतदन्तमपीति। तस्याप्रत्ययग्रहणेतदन्तग्रहणमितिभावः। प्रत्युक्तेति। इउवर्णान्तस्यह्रस्वत्वासंभवादिउवर्णयोरेकादेशत्वेनतद्विशेषणासंभवाच्चेतिभावः ॥

युक्तमिति। अनङ् सावित्यत्र विभक्तिविपरिणामः कार्यः सर्वनामस्थानेद्दत्यस्य गोतो णिदित्यत्र प्रथमान्ततायाः क्लृप्तत्वान्न तन्निवृत्तिरित्यभिमानः। विशेष्यासन्निधानादि

ति। शब्दस्वरूपं विशेष्यत्वव्यावर्तकम्। किंच सत्यपि विशेष्ये सखिशब्दभिन्नान्तस्येत्येवस्यान्नतु सख्यन्तभिन्नस्येति। नञैकार्थीभावापन्नस्यान्यत्रान्वयायोगादिति भावः।

सख्युरसंबुद्धिः इत्येव तु सूत्रं युक्तम्। ख्यत्यात्परस्याकृतयणादेशयोः खिखीशब्दयोः अनुकरणं ख्येति। एवं तिती शब्दयोस्त्येति। उभयत्राप्यकार उच्चारणार्थः। नतु मुख्यापत्यादिशब्दैकदेशानुकरणमिदम्। सख्युर्यः। पत्युर्नः। संख्यायाः संवत्सरसंख्यस्य च। आपत्यस्य च तद्धिते इत्यादिनिर्देशात्। इत्यभिप्रेत्याह खितिशब्दाभ्यामित्यादि। परस्येति ग्रहणं एकः पूर्वपरयोरित्यधिकारनिवृत्त्यर्थम्। औत्। एतच्च नदीसंज्ञकेषु इदुद्भ्यामिति पूर्वसूत्रे णबाध्यते। घिसंज्ञके तु अच्च घेरित्युत्तरसूत्रेण। तस्मा त्संज्ञाद्वयशून्योस्य विषयः। न च तादृश उकारोस्ति। अत आह। उकारेति। यत्तु प्राचा घिनदीसंज्ञा वर्जिताभ्यामिदुद्भ्यां परस्येत्युक्तम्। तन्न। तादृश उकारस्याप्रसिद्धेः। समुदायस्येति। न च पर्युदासेपि पर्युदस्यमानसमर्पके सखिशब्दे तदन्तग्राहकत्वं शंक्यम्। विशेष्यासन्निधानात्। यत्त्विह ग्रहणवतेत्याद्युपन्यस्तं हरदत्तेन। यच्च ख्यत्यात्सूत्रे कय्यटेन। तन्न। तस्य प्रत्ययविधिविषयत्वात्। गौणत्वेपीति। अस्याद्यनङ् इति भावः। तथा च येन विधिरिति सूत्रे परमसखायाविति बहुव्रीहिः। तत्पुरुषे हि टच्प्रसङ्गमिति कैयटः। तथा द्वितीयाश्रितेति सूत्रे सो मसखेति प्रतीकमुपादाय बहुव्रीहित्वान्न समासान्त इति कैयटः। मिदचोन्त्यादिति सूत्रे तज्ज्वलोयुः स्त्रियां चेति सूत्रे च भाष्यकैयटयोः ख्याधातौ माधव ग्रन्थे च स्फुटमेतत्। अनुद्युत्तो वरुण इन्द्रसखा। आग्नेयाहि मरुत्सखा। तीव्रं सोमं पिबति गोसखा यं इत्यादिप्रयोगाश्चैवमेव सङ्गच्छन्ते। तत्र बहुव्रीहि प्रयुक्त स्य पूर्वपदप्रकृतिस्वरस्य दर्शनेन गौणत्वात्। एतेन घिसंज्ञासूत्रे शोभनः सखायस्य सुसखिरित्युदाहरन्तो हरदत्तन्यासकारौ तदनुगामिनश्चान्ये उपेक्ष्याः ॥

तस्य प्रत्ययविधीति। एवं च हरदत्तानुरोधेनेदं सर्वमिति भावः। तथा द्वितीयेति। तत्पुरुषविषये बहुव्रीहिर्नेति उपक्रम्योभयं खल्वपीष्यते सोमसखा गवां सख इति भाष्यम्। अन्त्येष

संख्यावाचके इति। आदिसंख्याव्यापकधर्मविशेषवाचके इत्यर्थः। ननु बहुत्वं संख्यानियतविषयपरिच्छेदहेतुत्वरूपसंख्यात्वस्य तत्राभावात्। अत एव भाष्ये यद्यम
संख्या संख्येत्याहेत्युक्तम्। संख्यायतेऽनयेति। साक्षाद्व्याप्यसंख्याद्वारा वेत्यर्थः। अत एव बहुगणसाहचर्येण संख्यासंबन्ध्यर्थप्रतिपादकस्य ग्रहणादेव बहुवचनेति। अन्यथा ष
ष इत्येव वदेत्। अर्थप्राधान्येति। षट्शब्देन षट्संज्ञकः शब्दस्तदर्थसंख्याश्रयश्चेत्युभयमपि विवक्षितम्। तेषां बहुत्वादिदं बहुवचनम्। तत्रार्थात्परत्वं स्वगतसंख्यानुवाद
करूपं गौणं तदाह। षडर्थेति। तेन गौणेन। इदं प्राचामनुरोधेन। षड्भ्य इति बहुवचनं तिसृभ्य इतिवत्। षट्संज्ञकानां बहुत्वाच्च। न हि सर्वत्र जातिनिर्देश एवोचितः। आचार्यैः

पतिः समास एव। एवकार इष्टतोऽवधारणार्थः। अन्यथा हि समासे पतिरेवेति संभाव्येत। धात्वादेरित्यादिज्ञापकानुसरणे च प्रतिपत्तिगौरवं स्यात्। अथ कथं
सीतायाः पतये नमः। पत्यौ शरस्था। नष्टे मृते प्रव्रजिते क्लीबे च पतिते पताविति। उच्यते। पतिरित्याख्यातः पतिः। णौ टिलोपे अच इरित्यौणादिक इः। अयं पतिश
ब्दः पतिः समास एवेत्यत्र न गृह्यते लाक्षणिकत्वात्। एवेन कृष्णस्य सखिरर्जुन इति भारतम्। सखिना वानरेन्द्रेणेति रामायणं च व्याख्यातम्। बहुगण। बहु
गणौ प्रातिपदिके संख्यावाचके गृह्येते। न तु संघे वैपुल्ये अपि। संख्यायतेऽनयेति अन्वर्थसंज्ञाविधानात्। अत एव डतिरपि तद्धितएव गृह्यते। वतुना साह
चर्याच्च। न तु पाते र्डतिः। षड्भ्यो लुक्। षड्भ्यः परयोरिति। बहुवचननिर्देशोऽर्थप्राधान्यसूचनार्थः। षडर्थगतसंख्याभिधायिनोरिति फलितोऽर्थः। प्रत्ययलोपे।
स्थानिवत्सूत्रेण सिद्धे नियमार्थमिदम् ॥ ६५ लीवा। षष्शब्दस्य बहुवचनान्तस्यैव संज्ञात्वाच्च। तस्मादिदं विहितविशेषणम्। परमपञ्चादीनामपि संख्याप्रकार

संख्येयविशेष्यकबोधजनकत्वेन संख्यावाचितया षट्त्वमस्त्येव। लोके गणनायां प्रसिद्धानामेव ग्रहणमित्यत्र न मानम्। उपसर्जने तु अतिक्रान्ताद्यर्थप्राधान्यं न तु संख्या
या इति न दोषः। स्पष्टं चेदं सर्वादीनीति सूत्रे भाष्य इति तत्त्वम्। सिद्धे इति। तृणह इति सूत्रे ऽचि नेत्यनुवृत्त्यात् णहानीत्यादिव्यावृत्तौ हलीत्यननुवृत्त्या अतृणेडित्यस्य सिद्धिः।
शास इत्। अङि। अजादौ ङ्कितिचेदङ्ग्वेति नियमेनाजादिव्यावृत्तौ न त्र हल्ग्रहणाकरणेन मित्रशीरित्यस्य सिद्धिरेवमन्यत्रापीति भावः ॥

प्रत्ययस्यासाधारणमिति। इदंद्वितीयप्रत्ययग्रहणेनलभ्यते। यत्रप्रत्ययस्यविशेष्यत्वंतत्रैवेतिनियमस्तुन। राजेत्यादौपदत्वानापत्तेः। दीर्घेनेति। असोलुकःस्थानेवत्त्वे नासन्तत्वेपीतिशेषः। नचात्तुसाहचर्याच्छ्रूयमाणासन्तएवदीर्घइतिवाच्यम्। तदनित्यत्वस्याप्यनेनज्ञापनात्। प्राधान्येनेति। तत्त्वंचवर्णाविशेषणत्वरूपम्। एतच्चस्थानिवद्विन्नतुकस्यैवसिद्धेप्रत्ययलक्षणमित्येतत्सामर्थ्याल्लभ्यम्। इमिति। मित्रशीरित्यादौहलादौक्विति विधीयमानमित्वंचसिद्धातीत्यपिबोध्यम्। वर्णप्राधान्येति। वर्णस्यतत्वेचप्रत्ययनिरूपितविशेष्यत्वमितः विशेषणत्वंच। अणयोःकारइत्याद्यर्थकेटिड्ढाणञित्यादौइकोयणचीत्यादौच। तत्रान्त्यमुदाहरति। तेनेति। आद्योदाहरणंतु चि

प्रत्ययस्यासाधारणं यत्ररूपंप्रयोजकं तदेवकार्यंप्रत्ययलोपेसतिभवति। नतुप्रत्ययाप्रत्ययसाधारणमिति। तेनगोभनाहषदोस्यसुदृषेत्प्रासाद इत्यत्रात्वसन्तस्येतिदीर्घोन। यद्वा। यत्रप्रत्ययः प्राधान्येनाश्रीयतेतत्रात्विधिलेपिविज्ञथर्थमिदम्। तेनअतणेडित्यत्रहलादौपितिसार्वधातुकेविहितइम्लुप्तेपितस्मिन्भवति। वर्णाश्रयेनास्तिप्रत्ययलक्षणंइतितुवर्णप्राधान्यविषयकम्। तेनगवेहितङ्गोहितमित्यत्रअवन। अस्मदिति। अत्रप्राचाअव्ययेत्यपिपठितंतत्तुअव्ययानांप्रायेणनिर्लिङ्गत्वाद् अव्ययीभावस्यक्लीबत्वेपिलिङ्गान्तराभावाच्चोपेक्षितम् ॥ ७ त्रायांजाताचित्रेत्यादावणयोकारस्तदन्तादितिविहितोङीन्नेतिबोध्यम्।

नचगोहितमित्यत्रनलुमतेतिनिषेधः लुप्तप्रत्ययनिमित्ताङ्गोद्देश्यककार्येएवतेननिषेधात्। अतएवोक्तामेत्यादौक्रमःपरस्मैपदेष्वितिदीर्घसिद्धिः। परस्मैपदपरशिन्निरूपिताङ्गस्यतेनदीर्घविधानात्। तस्मिन्नितिन्यासेपि लुक्स्थानिभूतप्रत्ययाव्यवहितप्रकृत्युद्देश्यककार्येएवप्रवृत्तिरितिबोध्यम्। यद्वित्यादिनोक्तोवार्त्तिककृत्संमतः पक्षस्तत्फलानामन्यथासिद्ध्याभाष्यकृतादूषयित्वानियमार्थत्वपक्षउक्तइतिदिक्। प्रायेणेति। विभक्तिप्रतिरूपकाणांलिङ्गयोगेपित्रिषुसारूप्याभावइत्याशयः ॥ रामः
७४

अर्थप्राधान्यबोधकस्येति। अर्थप्राधान्यएवप्रवृत्तिबोधकस्येत्यर्थः। बहुवचनस्येत्युपलक्षणम्। तद्बोधकाभावादित्यत्रतात्पर्यम्। गौणामुख्यन्यायस्तुपदकार्यएवन
प्रातिपदिककार्ये। किंचाप्रसिद्धत्वरूपस्यगौणलाक्षणिकत्वरूपस्यवागौणत्वस्यतत्रग्रहणम्। नचायंतथा। इतरविशेषणत्वेनउपसर्जनत्वंनतुगौणत्वम्। अतएवप्रियति
वस्तुतस्त्विति।। अर्थप्राधान्यबोधकस्यबहुवचनस्याभावात्। गौणत्वेपित्रयादेशोन्याय्यः। अस्थ्यादावनङ्दितिभावः। अकारोवक्तव्यइति। त
थाचबहुत्वाभावेऔडुलोमिशब्दइकारान्तः। बहुत्वेतुअकारान्तउडुलोमशब्दोअन्यएव। तस्यचइकारान्तेषुव्युत्पादनंप्रासङ्गिकमितिभावः।
तथाचौडुलोमिशब्दस्यइदन्तस्यबहुत्वेअदन्तत्वमितिनभ्रमितव्यम्।। इतिइदन्ताः।। किदिति। तेनआतोलोपइटिचेत्यालोपइतिभावः। य
यीपप्यादयइति। यत्तुप्राचोक्तम्। एवंदेवयज्यतिलक्ष्म्यादंयइति। तन्न। देवान्यजतइतिविग्रहेइन्नित्यौणादिकसूत्रेणह्रस्वान्तस्यैवदेव
यजिशब्दस्योज्ज्वलदत्तादिभिःसाधितत्वात्। अप्रोद्धिजान्देवयजीन्निहम्मिइतिभट्टिप्रयोगस्यह्रस्वविषयकतयैवव्याख्यातत्वात्। नचयजे
र्दीर्घईप्रत्ययःप्रतिषेधोक्तोस्ति। बहुलग्रहणात्कल्प्यतइतिचेद्‌ भवेदेवंयद्यनन्यथासिद्धंकल्पकमुपलभ्येत। वेदेपिह्रस्वएवप्रयुज्य
ते। आयज्ञिंत्वामनवेजातवेदसंइति। अतिलक्ष्मीशब्दस्यतुनदीत्वाद्ध्रस्वेआडागमेनुटिआमिचकृतेमहदेववैलक्षण्यमितिनवातप्रमी
साम्यम्। एतच्चमूलेएवस्पष्टीभविष्यति। क्विबन्तेति। एतच्चमाङ्मानेशब्देचेतिधातौमाधवग्रन्थेस्पष्टम्।। ७ सेत्यादौतिस्रादयोभाष्यकृतोदाहृताः।
गौणत्वेपीति। उपसर्जनत्वेपीत्यर्थः। नर्द्धुमितव्यमिति। एतद्भ्रमनिवृत्त्यर्थमेवात्रास्यव्युत्पादनमितिभावः। इतीदन्ताः। ह्रस्वविषयकतयैवेति। जयमङ्गलायामितिशे
षः। माङ्मानेइति। घुमास्थेतीत्वविधायकसूत्रस्यमवकारादाविितिवार्तिकंभाष्येप्रत्याख्यातमितिईत्वंसुलभम्। शंस्याशब्देतुभाष्यप्रयोगादेवेत्वाभावः।
ततोविजेवेत्यन्ये। नचतेनेत्वेपितस्यासिद्धत्वात्कथंयणितिवाच्यम्। क्वावीत्वंविभक्तौयणादेशइतिव्याश्रयत्वादितिबोध्यम् ॥

नकबिति।समासान्तविधौलिङ्गविशिष्टपरिभाषाभावस्यङ्याप्प्रातिपदिकादितिसूत्रेभाष्येउक्तावप्यस्यतन्निषेधकत्वेनात्रप्रवृत्तिरस्त्येव।गोस्त्रियोरितिसूत्रेब
हुश्रेयसीविभाष्योदाहरणादनन्तरस्येतिन्यायंबाधित्वानघृतश्चेत्यस्याप्ययंनिषेधइतिभावः।ङ्यादिष्विति।बहुवचनंप्रयोगभेदाभिप्रायेण।शक्तीति।स्त्रीत्वनिरूपि
तशक्तीत्यर्थः।तेनलक्ष्म्यादिशब्दसंग्रहः।तदन्तसंज्ञापक्षेतुशीनद्योरित्यादौनदीशब्दस्यतदवयवेलक्षणा।नद्यन्तादित्याद्यप्यतिलक्ष्म्याद्यर्थमावश्यकं।लक्ष्मीशब्देव्य
पदेशिवद्भावेनतत्त्वंबोध्यम्।इउवर्णाविति।अतएवव्यन्ताद जायत्तंविप्रतिषेधेनेतिसङ्गच्छते।नत्वित्यादिइदंहरदत्तानुरोधेन।न्यायसिद्धमिति।अन्तरङ्गत्वात्पूर्वप्रव
बहुश्रेयसीति।ईयसश्चेतिनकप्।नाप्युपसर्जनह्रस्वः।ईयसोबहुव्रीहेर्नेतिनिषेधात्।यूस्त्र्याख्यौ।ईदूदन्ताविति।इहवर्णयोरेवसंज्ञेत्यपिपक्षोस्ति।
आच्छीनद्योरितिसूत्रस्वरसात्।तयोस्त्र्याख्यत्वंतुङ्यादिषुसत्सुक्वचित्स्त्रीवाचकवर्णसमुदायेघटकत्वेनप्रवेशात्।शक्तिपर्याप्त्यधिकरणत्वस्यावि
वक्षितत्वात्।तेननद्यन्तादिव्यवहारोनविरुध्यते।एवंघिसंज्ञायामपि।इउवर्णौतदन्तंवाघिसंज्ञिइतिपक्षद्वयंबोध्यम्।वर्णसंज्ञापक्षेअसखीत्यस्यसखिभि
न्नस्यावयवइत्यर्थः।ननुसखिशब्दावयवंवर्जयित्वेति।तेनातिसखिनेत्यादिनिर्बाधमित्यवधेयम्।पूर्वमिति।वृत्तेःप्रागित्यर्थः।वक्तव्यमिति।संज्ञायाश्चयोद्देश
प्रवृत्तौन्यायसिद्धमिदंकार्यकालत्वेतुवाचनिकम्।अचिश्नु।इहय्वोरितिधातोरेवविशेषणंनतुश्नुभ्रुवोरव्यभिचारात्।इत्याह।इवर्णोवर्णान्तधातोरिति ॥
त्तनदीव्यन्तयैवसमुदायेनसत्त्वात्कार्यसिद्धिरितिभावः।वाचनिकमिति।स्त्रीत्वविशिष्टार्थमात्रबोधकस्यैवसंज्ञेत्यभिमानेनेदम्।जहत्स्वार्थावृत्तित्वाभिमानेनवा।भा
ष्यकृतात्वजहत्स्वार्थायामवयवस्यनित्यस्त्रीत्वविशिष्टार्थबोधजनकत्वेनतस्यसंज्ञायांकुमार्यैब्राह्मणायखरकुट्यैब्राह्मणायेत्यादौक्विलुब्विषयेआनुपूर्व्यैक्येनभेदा
ग्रहात्समासेनव्यन्तत्वात्कार्यसिद्धिमाश्रित्यप्रत्याख्यातमिदम्।अवयवस्त्रीविषयत्वात्सिद्धमिति।तन्मात्रबोधकत्वनिवेशेनमानम्।यौगिकेषूत्तरपदेजहत्स्वार्थत्वाभावश्चेति
तदाशयः।अवयवशब्देनात्रवृत्तिप्रकृतिभूतशब्दग्रहणम्।अतएवकव्जाद्यन्तेनदोषः।तत्रापीत्थंविशेषणतयाकुमारीशब्दादेर्नित्यस्त्रीलिङ्गार्थबोधकत्वात्।श्नुप्रभृतीनामिति।

दोषइति।सामानाधिकरण्येविशेषण[illegible]ण्यभावमात्रम्।वैयधिकरण्येतुभेदसंबन्धस्यचेतिगौरवंदोषइत्यर्थः।दिदिवतुरिति।अत्रयणापत्तिस्तत्रापितद्वीत्यावैयधि
करण्यात्।यदियण्विधौसामानाधिकरण्यमेवतदेयङ्एवापत्तिः।नचैषुलोपेननिर्वाहः प्रत्ययनिमित्तेयङादेरसिद्धत्वात्।अनित्यत्वात्तदभावेप्याहऊपतुरिति।क्ङिचेते
ति।अजादिप्रत्ययस्याङ्गांशेउत्थिताकाङ्क्षत्वादितिभावः।उभयोर्विशेषणमिति।व्याख्यानात्लक्ष्यानुरोधाच्चैकदेशान्वयेपिसौत्रत्वाद्वृत्तिरितिभावः।उन्यावितिं।अतएवस्वर
पूर्वोपदपूर्वोचोपधायस्येवर्णस्यतस्थ्मोणित्यर्थकंस्वरपदंपूर्वोपधस्येतिवार्त्तिकंसङ्गच्छतेउक्तोपायेनप्रत्याख्यातमित्यन्यत्।तदन्तत्वादिति।नचधात्ववयवसंयोगपूर्व
श्नुप्रभृतीनामिवर्णोवर्णयोरिति व्याख्यानेतुइयङुवङोर्ङित्वंव्यर्थंवैयधिकरण्यंचदोषः।क्षिपति।अद्युतत्।दिदिवतुः।ऊयतुः।इत्यादौचातिव्याप्तिः।न
द्वारणायइवर्णोवर्णयोरच्परत्वंनविशेषणेतुक्लिष्टेतितिभावः।आन्तरतम्यादिति।स्थानतइतिभावः।एरनेकाचः।अचिश्नुधात्विति सूत्रेद्वन्द्वनिर्दे
शेपिधातुरेवेहरूपंध्वंतेनतुश्नुभ्रुवोतयोरिवर्णासंभवात्।धातुग्रहणंचावृत्त्या उभयोर्विशेषणम्।संयोगस्यचाङ्गस्येचेतिव्याचष्टे।धात्ववयवसंयोगेत्यादिन
र्ण त्रधातुनांसंयोगस्य।वैशेषणादिहयण्।उन्न्यौ।उन्न्यः।अङ्गविशेषणत्तु।हरिम्।हरी।हरीनित्यादिसिद्धये।यदिहिधातुनाङ्गंनविशेष्येततर्हिइहापिप्रक्ष्मप्रक्ष्यइ
त्यादाविवपूर्वरूपंपूर्वसवर्णदीर्घंचबाधित्वायण्स्यात्।धात्ववयवसंयोगपूर्वकोनभवतियइवर्णःतदन्तत्वादङ्गस्य। ७ त्वस्यधात्ववयवेइकारएवसंभवेनसंयोगव
द्विप्रयोगस्यापिविशेषावगतिहेतुत्वेनतद्भिन्नस्यापिधात्ववयवस्यैवग्रहणान्नदोषइतिवाच्यम्।तन्त्रीरित्यादौधात्ववयवसंयोगपूर्वस्याधात्ववयवस्यापिसंभवात्।परिमाणा
ख्यायामितिसूत्रेभाष्येअजपावपिसंज्ञायामेवयथाजातीयकउत्सर्गस्तज्जातीयकेनापवादेनापिभवितव्यमित्युक्तंतन्मूलकेनउत्सर्गसमानदेशाअपवादाइतिन्यायेनतु
ननिर्वाहः।अङ्गांशेतदसंबन्धेहरिमित्यादावपितस्याप्यातेनयेननाप्राप्त्यभावेनतदपवादत्वस्यैवाभावात्।यद्यपिप्रत्यासत्त्याइकोगुणवृद्धीइतिनिर्देशोपष्टम्भयाधात्ववय
वसंयोगपूर्वभिन्नस्यधात्ववयवस्यैवग्रहणमितिहरिमित्यादौनदोषस्तथापिस्पष्टप्रतिपत्तयेआवृत्तिरेवाश्रितेतिदिक् ॥

सूत्रमतेपीति। भीत्रेतिसूत्रं षष्ठीबाधनार्थमितिवैतण्डिकतया वदन्तितत्सिद्धसूत्रमतेपीत्यर्थः। वस्तुतोभयहेतुरित्युक्त्यास्यततीयाबाधकत्वंबोध्यम्। नचैर्परत्वादिति। एवंचयलोपोदुर्लभइतिभावः। वार्त्तिककारोक्तेरिति। लोपोव्योरितिसूत्रेक्वावुपसंख्यानमितिवार्त्तिकम्। तस्यापूर्वत्वापेक्षयाक्वौयथालोपेदुर्लभइष्टसिद्धिर्भवतितथावक्तव्यमित्यर्थः। साचपूर्वविप्रतिषेधेनेत्याशयेनैवमुक्तमितिबोध्यम्। गौणत्वेपीति। इच्छाकर्तृरूपार्थप्रत्युपसर्जनत्वेपीत्यर्थः। कृतयणेति। अन्यथाखितेः परस्येत्वेववदेदि

वृश्चिकशब्दस्येति। भाष्यकृताहिबुद्धिपरिकल्पितमपायमाश्रित्यभीत्रार्थानामितिसूत्रंप्रत्याख्यातंततश्चसंबन्धमात्रविवक्षायांषष्ठ्येवेतिभावः। सूत्रमतेप्याह। वृश्चिकस्तन्मुष्यिनीति। अल्लोपयलोपाविति। नचपरत्वादेरष्टकस्येतिस्यादितिवाच्यम्। वेरष्टकलोपाद्‌ लिलोपः पूर्वविप्रतिषेधेनेति वार्त्तिककारोक्तेः। कौतुकमिति। नपुंसकेभावेक्तः। कौलोपइत्यर्थः। इदंसर्वंकुमारीमिच्छन्कुमारीत्यत्रापिबोध्यम्। अनन्यतयेति। गौणत्वेपिअनङ्णित्वयोःप्रवृत्तेरुक्तत्वाच्चेतिबोध्यम्। दीर्घस्यापीति। एतदर्थंकृतःयणादेशनिर्देशइतिभावः। नन्वतिसखेःभूपतेःइतिगुणविषयेव्यावर्तयितुंयणानिर्देशइतिचेत्। अस्त्वेवम्। तथापिदीर्घप्रवृत्तेदुर्वारत्वात्। नहिह्रस्वेष्वभावः नदीर्घेष्वित्यत्रप्रमाणमस्ति। सोत्रस्यविकृतनिर्देशस्याव्याप्त्यतिव्याप्त्युभयवारकत्वेननतत्सा र्वत्वलाभेनतथैवोचित्यात्। भाष्यारूढत्वाच्चयत्तुप्राचाभ्यतिकेचित्इत्युक्त्वा। सख्यः। सख्युः। इत्याद्युक्तम्। यच्चतद्व्याख्यातृभिरुभयमप्येतद्भाष्येस्थितमित्युक्तम्। यच्चात्रोपष्टंभार्थंप्रसादकृता। सख्युपत्युःप्रासिद्धेयतख्यत्यादित्याहपाणिनिः ॥

तिभावः। गुणविषयेइति। प्रकृतिप्रत्ययापेक्षगुणापेक्षयातदवयवमात्रापेक्षस्यान्तरङ्गत्वेनततः पूर्वंप्रवृत्तिःस्यादितिभावः। दुर्वारत्वादिति। तदर्थंकृतस्यान्यसंग्राहकत्वेपिबाधकाभावादितिभावः। विकृतनिर्देशस्येति। यकारान्तानुकरणनिर्देशस्येत्यर्थः। अकारस्तूच्चारणार्थइतिभावः ॥

साधारणमिति। ह्रस्वदीर्घसाधारणमित्यर्थः। विदांकुर्वन्त्विति। भाष्ये स्वार्थस्यास्पष्टत्वादिति भावः। अतिरभसादिति। संयोगपूर्वकत्वेन यणो दुर्लभत्वादिति भावः। यङ्लुतो लोपस्याभीयासिद्धत्वं तु नव्याश्रयत्वात्। नियमार्थमिति। फलतः प्रयोगनियमार्थमित्यर्थः। इतीदन्ताः। नियमार्थमिति। फलतः प्रयोगनियमार्थमित्यर्थः। तृतीयान्तादिति। तृजन्तेन तुल्यं रूपं लभत इत्यर्थः। निमित्तेत्यादि। पूर्ववत्सनं आद्यन्तवत्सुबामन्त्रिते पराङ्गवदित्याद्यत्र यस्योदाहरणम्। तत्र तृजन्तत्वरूपनिमित्तस्य तद्व्यवहारस्य वातिदेशे आह सत्यं चशब्दं समुच्चार्य विहितकार्यस्यैवापत्तौ जसि गुणावादेशयोस्तृजन्तोद्देश्यको। ष्टुन्निति दीर्घ एव स्यात्। स्वौजसादिषु चानङ्गुणौ न स्याताम्। न चोत्तरसूत्रद्वयेन सामर्थ्यादस्त्रौ नित्यत्र क्रोष्टुंग्रहणेनैव

साधारणं तन्मन्वानाः सुस्नुः सुतेः सुखीः सुतीः। सुखीयतिसुतीयत्योर्यौ क्विबन्तौ तयोर्विदुः। निष्ठादेशस्य पूर्वत्रासिद्धत्वाल्लून्युरादिकम्। सुखम्यद्त्सादि साध्वेतदुभयं भाष्यगौरवादिति विचारचिन्तामणिस्थश्लोकोपन्यसनं कृतं तदेतत्सकलं भाष्यकैय्यटापर्यालोचनमूलकं इति कृतबुद्धय एव विदांकुर्वन्तु। शुष्कियद्वर्षि। यत्तु शुष्क्युः। पक्व्युः शुष्क्यः। पक्व्यः। इत्युदाजह्रुः। भाष्ये स्थितमिति चोपसंजह्रुः तदतिरभसात्॥ इतीदन्ताः॥ तृज्वत्क्रोष्टुः। क्रुश आह्वाने। अस्मात्तितनीति तुन्प्रत्यये क्रोष्टुशब्दः तृचि तु क्रोष्टृशब्दः द्वावपि सृगालवाचिनौ। तत्राविशेषेण द्वयोः प्रयोगे प्राप्ते सर्वनामस्थाने स्त्रियां च तृजन्त एव। तृतीयादावच्युभयम्। अन्यत्र तु तुन्नन्त एवेति नियमार्थं त्रिसूत्री आरभ्यते। क्रोष्टुरिति। तुन्नन्तात् प्रथमात्तृज्वदिति तृतीयान्तादिति। निमित्तव्यपदेशतादात्म्यशास्त्रकार्यरूपविषयकत्वेनातिदेशस्य षड्विधत्वेऽपि प्राधान्यादिह रूपमेवातिदिश्यते ॥ ७

सिद्धावादेनापि सामर्थ्यात्कार्यमात्रप्रवृत्तिरिति वाच्यम्। तत्सामर्थ्येन रूपातिदेशस्यैव ज्ञापयितुं युक्तत्वात्। तादात्म्यातिदेशस्त्वसंभवी सहप्रयोगाभावात्। शास्त्रकार्यातिदेशावपि न तुन्नन्तस्याद्युदात्ततया तृज्वद्भावे नोकारस्य रेफरूपयणादेशेऽपि तस्योदात्तस्थानिकयणोऽभावेनोदात्तयणो हल्पूर्वादिति स्वरानापत्तेः। अर्थातिदेशस्त्वसंभवी तयोरैक्यस्य स्वतएव सत्त्वाच्च। षड्विधत्वेऽपीति। अर्थातिदेशासंभवं मत्वेदम्। युन्नवन्तामाह प्राधान्यादिति। रूपमिति। तच्च तृज्वदित्यत्र ऋकारस्योपस्थित्या तद्विशिष्टं क्रोष्टृ इति। तच्च तृज्वदिति च चकारोच्चारणसामर्थ्यादन्तोदात्तस्वरविशिष्टमिति। ऋकारस्योदात्तत्वादुदात्तयण

म॰ श॰ संज्ञाशब्दानामिति। उणादिव्युत्पन्नानामितिशेषः। अतो घातशब्दस्य दीर्घो भवत्येव परत्वादिति। इदमग्निमं च कार्यैकस्यासंभवाभावो विप्रतिषेध इत्यभिमानेन। यद्वा पूर्वत्वादुत्कृष्ट
७७ त्वात् विशेषविहितत्वेन शीघ्रोपस्थितिकत्वादित्यर्थः। निष्कर्षेति। अस्य पूर्वपक्षिण इति शेषः। यथालक्षणमिति। अप्रयुक्ते लक्षणाभावस्य योग्यतेत्यर्थः। बाध्यसामान्यचिन्ते[illegible]सा
चत... सूत्रे भाष्ये स्पष्टा। एवं चाविर इति सूत्रे ... अचिरादेशे जस्युपसंख्यानं गुणपरत्वादिति वार्तिकं बाध्यविशेषचिन्ताभिमानेन प्रवृत्तमिति भावः। एतेन तद्वार्तिकबलाज्ज्ञसोन्य
तद्वचनपञ्चादेर्..., कुस्यचित्। किं तत्कुशेरेव। उपस्थितत्वादर्थत आन्तर्याच्चेत्यभिप्रेत्य फलितमाह। क्रोष्टुशब्दस्थाने इति। नियमार्थमिति। अन्येषां संज्ञाशब्दानां माभूदित्ये
तदर्थमित्यर्थः। ...इति। अनङ् हल्ङ्यादिलोपात् परत्वादुपधादीर्घः। स च सर्वनामस्थाने चेत्यनेनैव यद्यपि लभ्यते तथापि परत्वादनङ् नित्यत्वेनान्याय्यः। कृतेप्यनङि एकदे
शविकृतस्यानन्यत्वे... त्वात्। अन्यथा गुणे कृतेपि दीर्घो न स्यादिति भावः। रात्सस्य। इह तकारोपि प्रश्लिष्यत इति पक्षान्तरम्। तेन हल्ङ्यादिसूत्रस्थाने ... सोरि
ति निष्कर्षे अदि... वानित्यादि सिद्धम्। अजर्घर्तेरित्यत्र तु चर्त्वस्यासिद्धत्वात् तलोपो न। ननु कीर्तयतेः क्विपि कीर्त् इह स्यादिति चेन्न यथालक्षणमप्रयुक्ते इति भा
ष्यम्। एतेनावर्वर्तेरिति व्याख्यातम्। परत्वादिति। न च नुण्नित्य इति वाच्यम्। तृज्वद्भावे कृते सन्निपातपरिभाषया नुटो दुर्लभत्वादिति भावः। नुमचिरेति। ननु
रेण स्वविषये प्राप्तं सर्वं बाध्यम्। ... सामान्यचिन्ताश्रयणात्। तथा च वक्ष्यते। गुणदीर्घोत्वानामपवाद इति। एवं चाविशेषान्नुडप्यनेन बाध्यः। न तर्हि विप्रति
षेधः। उत्सर्गापवादयोस्तद्योगादिति चेत्सत्यम्। अत एव तदंशे विप्रतिषेधं दूषयित्वा न तिसृचतसृ इति ज्ञापकान्नुडिति भाष्यकृतोक्तमि
ति सन्तोष्टव्यम् ॥ ७७ त्रिप्रियतिसरमित्यादेर्गुणविकल्पस्यन्त: परास्ता: ॥ तृज्वत्सूत्रस्थभाष्यविरोधात्। मपर्यन्तस्येति सूत्रस्थत्रिप्रियतिस्रावित्यादिभा
ष्यविरोधाच्च। अनेन। रेण। विप्रतिषेध इति। अचिरेणेत्यर्थः। दूषयित्वेति। यद्यपि न तिसृ इति ज्ञापकेन तदपवादत्वाभावकल्पनया विप्रतिषेध उपपद्यते। तथापि रामः
ज्ञापकानुसरणस्यावश्यकत्वेनैव तं दूषयित्वेत्यर्थः। इदं तृज्वत्सूत्रे भाष्ये। संतोष्टव्यमिति। अतिसोढस्तदंशो वार्त्तिकेन कार्य इति भावः ॥ ७७

दृशापादीति। अत्राहुर्विबीजं तु नुम्निपातनं व्यर्थम्। नच परं सवर्णाभावार्थमुभयनिपातनम्। नुम्येव निपात्ये ऽनुस्वारनिपातनसामर्थ्यैनैव तदभावसिद्धेरिति। एवं च
इत्युदन्ताः॥ हूहूरिति। अव्युत्पन्ना संज्ञेयम्। अतिचमूशब्दे त्विति। प्रथमलिङ्गग्रहणं चेत्युक्तेः। यथा च एवमतिचम्वादय इति प्राचो ग्रन्थो भाष्यवि
रुद्ध इति भावः। वर्षाभ्वश्च। वर्षाभूशब्दस्य नित्यस्त्रीत्वात् स्त्रीलिङ्गप्रकरण एव एतत्सूत्रं वक्तुं युक्तम्। पुल्लिङ्गे तु क्रियाशब्दाभिप्रायेण कथंचिद्योज्य
मिति व्याचख्युः। तदसत्। दर्दुरे हि पुल्लिङ्गोयम्। भेके मण्डूकवर्षाभूशालूरप्लवदर्दुरा इत्यमरोक्तेः। भिन्नलिङ्गानां न द्वन्द्व इति तेन परिभाषितत्वात्।
भेक्यां पुनर्नवायां स्त्री वर्षाभूर्दर्दुरे पुमानिति यादवकोशाच्च। दर्दुरे षणीति पाठान्तरम्। षणीति पुल्लिङ्गस्य प्राचां संज्ञा। दृभतीति। दृभी ग्रन्थे तुदादिः।
व्युत्पादितन्दृसि। यद्यप्युज्ज्वलदत्तेन दृम्फूरिति पवर्गद्वितीयं पठित्वा दृम्फे र्नलोपाभावो निपात्यत इति व्याख्यातं तथापि वृत्त्यन्तरेषु दृभी ग्रन्थ इत्यस्मात्।
ऊप्रत्यये नुमागमो निपात्यत इत्युक्तम्। एतच्च माधवग्रन्थे स्पष्टं दृशापादी वृत्तौ तु दर्भणं दृम्भुः। नुमागमोऽनुस्वारश्च निपात्यतामित्युक्तम्। अयमूकारोऽनेन धा- इ
तोरित्युवङोऽप्रसङ्गादिको यणचीति यण्। स चामि पूर्वप्रथमयोः पूर्वसवर्ण इत्याभ्यां बाध्यत इत्याशयेनोदाहरति। दृम्भूमित्यादि। न चैवं दृन्करेति यण्
शङ्क्यः तत्र अश्रवत एव ग्रहणात्। अस्य तु दृन्शब्दस्य भूशब्दस्य च अनर्थकत्वा दिति भावः। एवं चायं हूहूवदिति फलितम्। श्रीपतिमते नाह। दृन्नि
ति। माधवस्तु अन्दूदृम्भूदित्यादिसूत्रेण दृढशब्दे उपपदे कूप्रत्ययः। उपपदस्य दृन्नादेशश्च निपात्यत इत्याह। दृन्भूरिति। तरुसर्पजातिभेद इ
ति केचित्। कपिरित्यन्ये। दृन्करेति। अत्र दृन्निति नान्तपाठो मुख्यः। मान्तपाठोपि केषांचित्। वक्तव्य इति। वर्षाभ्वश्चेति चकारोऽनुक्तसमुच्चयार्थः अ
नुक्तं च भाष्यवार्तिकबलान्निर्णेयमिति भावः ॥

यमूकारो न धातोरित्युवङोऽप्रसङ्गाद्यणा भाव्यमिति दृन्पूर्वकभूप्रकृतिकं दृम्भूशब्देन सह न रूपविशेष इति माधवश्चिन्त्यः। निपात्यत इति। एकादेशस्य पूर्वान्तत्वेन भूत्वमिति भावः।

म० प्र० ७८ वार्त्तिकमिति। एतेन भाष्ये पूर्वग्रहणं व्यवहितेपि त्रस्त्यर्थमिति वर्षाभ्वोरित्यादावपि यणिति परास्तम्। सूत्रवार्त्तिकानुरोधेन पूर्वग्रहणस्य परिभाषाप्राप्तार्थानुवादत्वौचि
तथाच वर्षाभूपुनर्भ्वश्चेति वार्तिकं व्याख्याय भाष्यकार आह। अल्पमिदमुच्यते। वर्षादृन्कारपुनः पूर्वस्य भुव इति वक्तव्यमिति। वामनेन तु दृन्पुन
र्वादेन पठित एव। एवं स्थिते यत्प्राचा दृन्कारेति पठितं, यच्च तत्सौत्रेण महाभाष्यकारवचनमर्थतोनुवदति इत्युक्तम्। यच्चान्ये वार्तिकेन पूरितमर्थमुदाह
र्वतीत्यवतारितं, तत्सर्वं रभसकृतमेव। नच भाष्येपि दृगित्येव पाठ इति भ्रमितव्यम्। अंदूदृन्भू इति निपातित इति मा— धवग्रन्थेन कैयटादिग्रन्थे
ष्वपि। कारभ्वो रितियत् किंचिदेतत्। दीर्घपाठे इति। अयं च भाष्यवृत्त्यादिबहुग्रन्थसंमतः पाठः। अनुस्मृतौ तु ह्रस्वः पठ्यते। यत्तु तद्विवृतावुक्त
म्। एकदेशविकृतस्यानन्यत्वात् कारपूर्वस्यापि सिद्धमिति। तन्न। तथाप्यण्प्रत्ययविशिष्टस्यान्यत्वात्। न ह्यण्प्रत्ययो [illegible]। तस्माद्ध्र
स्वपाठे कारपूर्वस्य उवङेव। तथा दीर्घपाठे करपूर्वस्य उवङिति विवेकः। स्वयंभूशब्दवदिति। प्राचा तु दृम्भूकाराभूशब्दौ वर्षाभूशब्दवदुदाहृ
तौ। तन्निर्मूलत्वादुपेक्ष्यमिति भावः॥ इत्यूदन्ताः॥ नृ च। इह छन्दस्युभयथेति सूत्रादुभयथेत्यनुवर्तते। छन्दसीति तु निवृत्तम्। तेन चिन्ताजर्जर
चेतसां वत नृणां का नाम शान्तेः कथा। नृणामेको गम्यस्त्वमसीत्यादिप्रयोगाः सङ्गच्छन्ते। केचित्तु छन्दसीत्यनुवर्तयन्ति। तदयुक्तम्। पूर्वसूत्रेणैव
सिद्धे नृ चेति सूत्रस्य वैयर्थ्यापत्तेः। यदपि पूर्वसूत्रे तिसृचतसृ इत्यनुवर्तयन्ति। तदप्ययुक्तम्। अविशेषेण विकल्पदर्शनात्। तथा च धातोधा
तृणामिति मन्त्रे तैत्तिरीयैः ह्रस्वः पठ्यते। बह्वृचैस्तु दीर्घ इति दिक्। इत्यृदन्ताः ॥
त्यात्। उपेक्ष्यमिति। काराभूरित्यत्र काराशब्दः करोतेर्ण्यन्तादिदायङिति निष्पन्नो बन्धनगृहवाचकस्तस्य टापा सहैकादेशस्य पूर्वान्तत्वेपि वार्तिके ग्रहणं न प्रसि रा०म० ७८
द्धत्वेन ह्रस्वपाठे करवाच्यतया च हस्तवाचकस्यैव ग्रहणादिति भावः ॥

इत्यपहायेति। एतदवयवगकारमपहायेत्यर्थः। इत्योकारोपलक्षणतयेति। तपरकरणे नगस्याविवक्षितत्वलाभादिति भावः। निरवकाशत्वं चेति। चो हेतौ। यतो निरवकाशत्वमतो बाधकत्वमित्युक्तं न सङ्गच्छेतेत्यर्थः। अमरात्पुंस्त्वमिति। भिन्नलिङ्गानां न द्वन्द्व इति तेन परिभाषणादिति भावः। भाष्यमिति। स्थानेन्तरतमसूत्र इति भावः। क्वजन्तस्य

ओतो णिदिति वाच्यमिति। गोत इत्यपहाय ओत इति वाच्यमित्यर्थः। तथा च गामित्यत्र परत्वाद्वृद्धौ सत्यामात्वं न स्यादित्याशङ्क्य निरवकाशत्वेनात्वे न वृद्धिर्बाध्यत इति औतोम्शसोरिति सूत्रे भाष्यकृतोक्तम्। कैयटोपि तत्रेत्थमाह। ओत इति सूत्रे पाठ्यम्। गोत इत्योकारोपलक्षणतयाचार्येण व्याख्येयमिति। वृत्त्यादिग्रन्थेष्वप्येवमेव स्थितम्। स्मृतौ रिति। यत्त्वाहुः। गोशब्देन औणादिकेन साहचर्याद्द्योशब्द एव लक्ष्यते। न त्वोकारान्तमात्रम्। तेन स्मृतौ स्मृतवौ स्मृतव इत्येव भवतीति। तद्भाष्यविरुद्धम्। गोद्योरेवपरस्य णित्वाभ्युपगमे ह्यौतोम्शसोरित्यात्वस्य स्मृतामित्यादिरवकाशः स्यात्। तथा च गामित्यत्र परत्वाद्वृद्धेर्दुर्वारतया उदाहृतभाष्योक्तमात्वस्य बाधकत्वं निरवकाशत्वं च न संगच्छेतेति दिक्। इत्योदन्ताः॥ रायो हलि। अर्थ्यैभिभवाभपीस्यमरात्पुंस्त्वम्। [illegible] संरायाभूयसा स इत्यादिप्रयोगाच्च। रायि छान्दस इति भाष्यम्। तच्च क्यजन्तस्य रैशब्दस्य छान्दसत्वपरं न तु केवलस्यापीति वान्तो यीति सूत्रे कैयटः। केवलोपि छान्दस इति पक्षान्तरं स एवाह॥ इत्यैदन्ताः॥ ग्लौर्मृगाङ्कः कलानिधिरित्यमरः। एवं जनानवतीति जनौः। ज्वरत्वरेत्यूठ्। एत्येधतीति वृद्धिः। जनावौ जनाव इत्यादि॥ इत्यजन्ताः पुल्लिङ्गाः॥

[illegible]ति। रा रैशब्दोपि यकारादिप्रत्ययान्तश्छान्दस इति भाष्याक्षरार्थः। यकारेण यकारादिः प्रत्ययो लक्ष्यते। इकार उच्चारणार्थः। प्रायेण विसर्गरहित एव पाठः। तदपादोप्रत्यये इत्यर्थ इति भावः। नविति। अत एव रायमिच्छतीति विग्रहप्रदर्शनपरं भाष्यं सङ्गच्छते। तेन हि विग्रह[illegible]। अ[illegible]त एव रायि आशा राय्याशामित्यचः परस्मिन्नित्यत्र भाष्ये प्रत्युक्तमिति भावः। पक्षान्तरमिति। अत्रारुचिबीजं स्पष्टमेव॥ इत्यजन्ताः पुल्लिङ्गाः॥

लिङ्गविशिष्टेति। तया परिभाषया प्रातिपदिकत्वतद्व्याप्यधर्माणां विशिष्टे बोधनेन तया प्रातिपदिकत्वादित्यर्थः। ध्वनितं चेदं बहुव्रीहेरूधस इत्यत्र भाष्ये। परत्वादिति। असंभवे
ङ्यादिलोपस्य रिमार्थः कृते लोपे एत्त्वं सावकाशमित्यभिमानः। ननु सत्यपि संभवे बाधनमिति न्यायविरोधो त आह। प्रतिपदोक्तत्वाच्चेति। अपवादत्वाच्चेत्यर्थः। यथाश्रुते
पीति। आकारप्रश्लेषाभावेपीत्यर्थः। परत्वेनेति। यौगपद्यसंभवेपि विप्रतिषेध इत्यभिमानेनेदम्। आटश्चेत्युदाहृतमिति। समुदायावयवयोः संनिधानेनुबन्धउभयोपकारक।

रमेति। लिङ्गविशिष्टपरिभाषया प्रातिपदिकत्वात्स्यादयः। यत्तु आबन्तत्वादिति। यच्च व्याचख्युः। प्रत्ययान्तत्वादप्रातिपदिकत्वेपि पृथक् ङ्याप्ग्रहणादित्यर्थ इति।
तन्न। ङ्याब्ग्रहणस्यानर्थकतायाः प्रागेवोक्तत्वात्। एङ्ह्रस्वादिति। परत्वात्प्रतिपदोक्तत्वाच्च संबुद्धौ चेत्येत्वे कृते हल्ङ्यादिलोपो न प्राप्नोति। स्यादेतत्। वृद्धौ वा आत्वे ष्या
कारस्य पत्वाभावात्। अत एव आकारप्रश्लिष्य दीर्घग्रहणप्रत्याख्यानात्। यथाश्रुतेपि एङ्ह्रस्वादिति लोपस्यैव परत्वेन न्याय्यत्वादिति भावः। याडापः। यद्यपि यङि
लेवोवितन वार्ती गुण इति पररूपापत्तिः। अकारोच्चारणसामर्थ्येनैव तद्बाधात्। तथाप्युच्चारणार्थोकार इति संभाव्येत। अतः स्पष्टार्थं याट् कृतः। वृद्धिरेचीति प्राप्त
प्राचा आटश्चेत्युदाहृतम्। तन्न। याट्स्याटोः टकारस्य समुदायानुबन्धत्वेनेह आटो भावात्। सर्वनाम्नः स्याड्ढ्रस्वश्च॥ दीर्घोच्चारणं प्राग्वत् ॥

न वा यग्नार्थकः। आटोर्थवतः कार्यभावादिति तदाशयः। इहाटो भावादिति। अयं भावः। निर्देशेषु प्रायोगिकरूपासंभवादौपदेशिकरूपग्रहणमिति परिभाषा
त्रे भाष्ये स्पष्टम्। उपदेशे च तेषामित्संज्ञकत्वादुपस्थिततद्गुणवतामेव प्रदेशेषु भानमिति टकारेत्संज्ञकाकारस्येत्यादिक्रमेणार्थः। क्तक्तवतू निष्ठेति सूत्रे भाष्ये स्फु
टमेतत्। पाणिनेश्च तत्र तत्र विशिष्टोपदेशे तात्पर्येण तत्प्रयुक्ते संज्ञकेन तस्यैव वृद्धित्वादिव्यवहारो नावयवस्य तदुपदेशे तात्पर्याभावात्। एतेनौपदेशिकस्याप्यरत्वाभा राम:
वेन न वृद्धिप्राप्तिः नेष्यते च तत्र वृद्धिः प्रयोगे तु नाडित्वादाटश्चेत्यसंगतमित्यपास्तमिति ॥ ७९

याटि परे इति। अन्तरङ्गत्वात्पूर्वं याडिति भावः। न सिद्ध्येदिति। इत्यादेवन सिद्ध्येदित्यर्थः। पूर्वमसुडि असान्तत्वाभावेन मुत्वानापत्तिः। पूर्वं मुत्वे त्वसिद्धिः स्पष्टैव। एवं च
सुमुयडि स्यादिति व्याख्याभेदेन रूपद्वयमिहापि स्यात्। मुत्वपक्षे आभ्यानिकत्वेनासुडः प्रत्ययतया तदवयवत्वेन षत्वसिद्धिः। एवं च तत्रासान्तस्येत्यर्थ इत्यत्र स्याट्ग्रहण
मपि ज्ञापकमिति भावः। परे तु संज्ञाकृतत्वबहिरङ्गत्वस्यानाश्रयणेन नित्यत्वादसुडि रूपासिद्धिः। न च चेनयाडपि विधेयो सुड् चेति न्यासे इति वाच्यम्। विभाषा द्वितीयेति सूत्रेण
विनिगमकाभावादुभयोरपि विकल्पे द्वितीयायै इत्याद्यसिद्ध्यापत्तेः। किंचासुडो याडपवादत्वेन तद्विषये याट् दुर्लभः। अचिरादेशान्तु ट्पूर्वविप्रतिषेधेनेत्यस्ंगतमारा
अत्र वदन्ति। सर्वनाम्नो सुड् चेत्येव स्त्रताम्। एवं च याटि परे डित्वात्स्यादेशे असुडि सर्वस्याद् इत्यादि सिद्धम्। स्याट्करणे ह्रस्वविधाने च प्रयोज
नं चिन्त्यमिति। अत्रेयं चिन्ता। असुड् चेत्युक्तेः मुष्यै इत्यादि न सिद्ध्येद् इति। वस्तुतस्तु। आमि सर्वनाम्नः सुट् याटो ह्रस्वश्चेति सूत्रयितुं युक्तम्। न चै
वं याट एव ह्रस्वापत्तिः। दीर्घोच्चारणसामर्थ्यात्। ह्रस्वोच्चारणेप्यकारसामर्थ्यादेवातो गुणस्य वारयितुं शक्यत्वादित्यवधेयम्। [illegible] गौणत्वाद
समासे[illegible]यदीत् ॥ [illegible] देशस्य बाध्य सामान्यचिन्तया सर्वापवादत्वेन तु डपवादत्वादित्याशङ्कानति स च तस्लिति दीर्घत्वनिषेधाद्रादेशोन
त्नबाधतं इति भाष्ये उक्तं तज्ज्वत्सूत्रे। तस्माद्विषयभेदेपि येन नाप्राप्ति न्यायेन बाधकत्वमिष्यत एव। यद्यप्यस्य ड्रादेशे न सिद्ध्यति तथाप्यव ड् सूत्रस्य भाष्ये [illegible]
न्तरतम्येन कदाचिदन्तरतोदात्तत्वे एकादेश उदात्तेनेत्यनेन विभक्तेरुदात्तत्वापत्तिरित्याहुः। सामर्थ्यादेवेति। उच्चारणार्थत्वं तु नव्याख्यानादिति भावः। [illegible]यद्य
त्रापीत्यस्य मण्डूकानुवृत्तिरिति बोध्यम् ॥

म·श· वैपरीत्यापत्तेरिति। अत्र भावः। वाक्ये यत्तच्छब्दाभ्यामुद्देश्यविधेयत्वं प्रतीयते योत्तरात्वप्रकारकज्ञानविशेष्या सा प्रसिद्धपूर्वी यस्यादृत्यर्थात्। तत्रोत्तराशब्दस्य ज्ञा
८० नविशेष्यपर्यन्तलक्षकतया गुणवाचकत्वेन पूर्वनिपातः। उत्तरस्यां पूर्वात्वप्रकारकज्ञानविशेष्यत्वं तु न विधेयं पूर्वापदस्य पूर्वनिपातापत्तेः। न विधेयपरः शब्दोऽर्थ
इति विधेयबोधके लक्षणानौचित्याच्च। त्वदुक्तविग्रहे तु पूर्वापदस्य यच्छब्दसमभिव्याहारेणोद्देश्यसमर्पकतया तस्यैव लाक्षणिकत्वेन गुणवचनतया पूर्वनिपा
तापत्तिरिति। न कर्तव्यमिति। स्पष्टं चेदं भाष्ये। तृतीयाशब्दसाहचर्येण सहायवाचिद्वितीयाशब्दस्य न ग्रहणम्। भागार्थे विधीयमानस्यानो भक्तेर्विशेष्यत्वेन न स्त्रीत्वम

योत्तरेति। यत्त्वाहुः। या पूर्वा सोत्तरा यस्या उत्तरपूर्वेति। तद्भसात्। पूर्वनिपातवैपरीत्यापत्तेः। तीयस्येति। इदं हि पुन्नपुंसकयोरेव प्रयुक्तम्। अने
नैव सिद्धौ विभाषा द्वितीयातृतीयेति सूत्रं न कर्तव्यमिति भावः। अम्बार्थनद्योः। अत्र वार्तिकम्। मातुर्मातच्पुत्रार्थमर्हते इति। मातृशब्दस्य संबुद्धौ
मातजादेशो भवति। मात्रा पुत्रस्य श्लाघ्यत्वे द्योत्ये। गार्गीमातास्य गार्गीमातृकः। तस्य संबोधनं हे गार्गीमात। नद्यृतश्चेति समासान्तस्यापवादोऽयम्। अत्र
तु श्लाघ्यत्वं न द्योत्यं किं तु स्वरूपकथनमात्रं तत्र कबेव। गार्गीमातृक। आवन्तं यदङ्गमिति। यत्तु याडाप इति सूत्रव्याचक्षाणैरुक्तम्। अविवक्षितार्थ
त्वेन लाक्षणिकत्वान्न याट्। एवमति सर्वायेत्यत्र न स्याडिति ॥ ७ नभिधानात्। एतेन तत्र लाक्षणिकत्वाद्वार्तिकाप्रवृत्ताविदमावश्यकम्। अत्र
सूत्रेन सा परिभाषा प्रवर्तते प्रतिपदोक्तस्याभावात्। न च महाविभाषया नभावे वार्तिकप्रवृत्त्या रूपद्वयं सिद्धम्। अनो नित्यत्वाङ्गीकारात्। आद्युदात्तस्य त
थापि रूपद्वयासिद्धेश्चेति परास्तमिति भावः। अत्रोपसंख्यानादाह। संबुद्धाविति। अर्हन्तं पुत्रमभिधातुं यो मातृशब्दः प्रयुज्यते तस्येत्यर्थः। सापेक्षत्वेऽप्यतस रामः
वनिपातनात्समासः। अर्हत्वं च पुत्रस्य मातृद्वारकमेवेति तदाह। मात्रा पुत्रस्येति॥ अपवाद इति। यदीदं न स्यात्तदा प्राप्नोतीति भावः ॥ ८०

वैयर्थ्यापत्तेरिति। नन्वाकारोयंलाक्षणिकइतितदाशयः। नचखट्वायेइत्यत्रापियाडनापत्तिः सूत्रंतुनिशायेइत्यत्रचरितार्थमितिवाच्यम्। यस्यरूपस्यलक्षणप्रवृत्तिं विनानसंभवस्तस्यैवलाक्षणिकस्यपरिभाषाविषयत्वान्नचेहतथाएकादेशतः प्रागपितद्रूपसत्त्वादितिचेन्न। वर्णग्रहणेतदप्रवृत्तेस्तैरप्युक्तत्वेनतद्विरोधादित्यभिमानः। ह्रस्वयोरप्राप्ताविति। अतएवयूस्त्र्याख्याविति सूत्रेह्रस्वघटितवाक्येनेतिनिवृत्तमित्युक्तंभाष्ये। निषेधेप्राप्तेइति। भावतात्पर्यकतालाघवानुरोधेनाप्राप्तविभाषात्वमेवोचितमितिभावः। ह्रस्वयोस्तुस्त्रियामित्येवेति। इत्यादिषप्राप्तिमाशङ्क्य ङिति ह्रस्वश्चेत्यत्रनित्यस्त्रीलिङ्गावित्येवंविधोनियमोनाश्रीयतेइतिकैयटो

वद्भसात्। नह्यतिदेशस्यविषयेलक्षणप्रतिपदोक्तपरिभाषाप्रवर्तते। अतिदेशवैयर्थ्यापत्तेः। तेनयाटदुर्वारः। स्याटस्तुप्रसङ्ग एवनास्ति। सञ्ज्ञोपसर्जनयोःपश्चात्पर्युदासात्। केचित्त्विति। परिशिष्टकारादयः॥ङिति ह्रस्वश्च॥ अप्राप्तविभाषेयम्। ह्रस्वयोरप्राप्तावितरयोस्तुनेयङुवङ्स्थानावितिनिषेधेप्राप्तेआरम्भात्। इहेयङुवङ्स्थानौस्त्रीशब्दभिन्नौनित्यस्त्रीलिङ्गाविति त्रीणिईदूतोर्विशेषणानिह्रस्वयोस्तुस्त्रियामित्येवनतुनित्यस्त्रीत्वपर्यन्तम्। अन्यथाइष्टशनिप्रभृतीनामुभयलिङ्गानांपटुमृदुप्रभृतीनांसर्वलिङ्गानांचस्त्रीत्वेपिनदीत्वंनस्यात्। कैयटरीत्यानित्यस्त्रीत्वाभावात्। हरदत्तमतेपिह्रस्वांशेनित्यग्रहणस्यवैयर्थ्यालाभाच्च ॥ ङ्ग्तिरूपक्रमानुरोधाद्ध्रस्वांशमात्रविषया, यूस्त्र्याख्याविति सूत्रेःत्रत्येयङुवङ्स्थानावित्यंशस्यनिषेधपरतयाभाष्येव्याख्याने नमिषेधस्यप्राप्तिपूर्वकतयातत्रनित्यस्त्रीलिङ्गावित्यस्यावश्यकत्वाच्चेतिभावः। तदाह। अन्यथेति। कैयटरीत्येति। स्त्रीविषयावेवयौनित्यमितिभाष्यस्वारस्येनलिङ्गान्तरविशिष्टार्थानभिधायकत्वरूपस्यनित्यस्त्रीत्वस्यतेनोक्तेरितिभावः। हरदत्तमतेपीति। पूर्वभाष्येएवोभिन्नक्रमोनित्यमेवयौस्त्रीविषयावित्यन्वयः नित्यमेवेत्यस्यपदान्तरंविनापीत्यर्थइतिव्याशयंव्याचष्टे। इत्यादीनांचशब्दार्थएवस्त्रीत्वमितितेषांपदान्तरंविनापिस्त्रियांवर्त्तमानत्वेनव्यावर्त्याभावइतिभावः॥

आख्यग्रहणमपहायेति। नित्यस्त्रार्थकमपहायेत्यर्थः। स्त्रीशब्दमात्रमिति। स्त्र्याख्यपदं स्त्रीबोधकाविति तन्मात्रार्थकं निष्कृष्य पूर्वोक्तार्थमपहाय संबध्यत इत्यर्थः। परत्वादिति। ङे राम पेस्त्र्यादिः। तिस्रस्तिष्ठन्तीति। इदं प्रियतिस्राविसादेर्मपर्यन्तस्येति भाष्योदाहृतस्योपलक्षणम्। बाध्यसामान्येति। इदं च तृज्वत्क्रोष्टुरित्यत्र भाष्ये स्पष्टम्। बाधकृति। अनन्तरस्येति न्यायाश्रयणे उत्वस्यैव बाधः स्यादिति बोध्यम्। ननु यत्रानेक। विधिं प्रति येन नाप्राप्त्यापवादत्वं प्राप्तं तत्र व्यवस्थापकाम ध्ये पवादा इत्यादिन्यायाः प्रकृते च रभावस्य नकेनापि येन नाप्राप्तिरिति चेन्न। किमिदं येन नाप्राप्तिन्यायेन पूर्वसवर्णदीर्घापवादतया प्रथमाद्वितीयामात्रविषयमुतऋत उदित्यपवादतया पञ्चमीषष्ठीमा

अत एव आख्याग्रहणमपहाय स्त्रीशब्दमात्रं निष्कृष्य संबध्यते तदेतदाह। ह्रस्वौ च इउवर्णौ स्त्रियामिति। औत्वे प्राप्त इति। परत्वादिति भावः। यत्तु प्राचा औदिति सूत्रे घिमन्दी संज्ञावर्जिताभ्यामिति व्याख्यातं नासाव स्त्रार्थः किंतु पूर्वोत्तरसूत्रद्वयलभ्यः। एवं च इदुद्भ्यामिति सूत्रानुपन्यसनं प्राचः प्रामादिकमेव। अचिरनृतः। गुणदीर्घोत्वानामिति। तिस्रस्तिष्ठन्तीत्यत्र ऋतो ङीतिगुणस्यातिस्रः पश्येत्यत्र प्रथमयोरिति पूर्वसवर्णदीर्घस्य प्रियतिस्र आगतः प्रियतिस्रः स्वमित्यत्र ऋत उदित्युत्वस्य रत्वमपवाद इत्यर्थः। बाध्यसामान्यचिन्तायां स्वविषये प्राप्तस्य सर्वस्य बाधादिति भावः। विशेषचिन्तायां तु मध्येपवादा इति न्यायेन दीर्घोत्वयोरेव बाधः स्यान्न तु गुणस्य। सामान्यविशेषपक्षौ च जातिव्यक्तिपक्षवल्लक्ष्यानुरोधाद्व्यवस्थितौ इति कैयटादौ स्पष्टम्। यत्तु प्राचा अपवादशब्दो बाधकत्वोपलक्षकः। पूर्वविप्रतिषेधेन गुणमपि बाधत इत्याशयः इति। तन्निर्मूलं क्लिष्टं च ॥ ७ त्रविषयमुत ऋतो ङीति गुणापवादतया सर्वनामस्थान ङि मात्रविषयमिति संशये व्यवस्थाकाङ्क्षायां तन्न्यायप्रवृत्तेः सूपपादत्वात्। तन्निर्मूलमिति। जसि रादेशो वक्तव्यो गुणपरत्वादिति एतत्सूत्रस्थं वार्तिकं मूलमिति न वाच्यम्। बाध्यसामान्यचिन्तामाश्रित्य तत्प्रत्याख्यानस्य तृज्वत्सूत्रे भाष्ये ध्वनितत्वेन तस्य दृढमूलत्वाभावात्। बाध्यसामान्यचिन्ताश्रयणे एव तस्य मूलत्वौचित्याच्च तदाह। क्लिष्टं चेति ॥ राम: ८१

नाङ्गस्येति। तस्याश्रुतत्वात्। स्त्रियां वर्त्तत एवेति। अजहत्स्वार्थायामन्यपदार्थस्य त्रिशब्देनाप्युक्ततया तस्याः स्त्रियां वृत्तिः। न चेदं स्त्रीत्वं पदान्तरसापेक्षतया बहिरङ्गमिति वाच्यम्। त्रिशब्देन सर्वत्र स्त्रीरूपार्थप्रतिपादनेतात्पर्यग्राहकस्यापेक्षितत्वेनयान्तरङ्गाभावादिति भावः। तत्कथमिति। स्त्रियान्तत्र चवृत्तिरिति पुन्नपुंसकयोरेवेति त्वदुक्तं विरुद्धमिति भावः। अजहत्स्वार्थापक्षे त्विति। तुनोक्तार्थः एवचिर्ध्वनिता। तद्बीजं तु रूढे रविरोधित्वे जहत्स्वार्था वृत्तेरभावः। किं चजहत्स्वार्थाजहत्स्वार्थशब्दयोरव

यदपि प्रसादकृतोक्तम्। गुणस्य पूर्वविप्रतिषेधेनेतरयोः परविप्रतिषेधेन बाधक इत्यर्थ इति। तन्न। एवविधेरं चरितार्थत्वात्। न च दोसोऽस्वरितार्थता। यणश्चागतार्थत्वात्। त्रिचतुरोर्विशेषणादिति। श्रुतत्वाद्धि त्रिचतुरोरित्यस्यैव स्त्रियामिति विशेषणं नाङ्गस्येति भावः। प्रियत्रिरिति। अत्र व्याचख्युः। स्त्रियाअन्यपदार्थत्वेन बहुव्रीहिरूपमङ्गं तत्र वर्ततेत्रिशब्दस्तु पुन्नपुंसकयोरेवेति तिस्रादेशो नेत्यादि। अत्रेदं वक्तव्यम्। जहत्स्वार्थायां त्रिशब्दोऽनर्थकः। अजहत्स्वार्थायां तु स्त्रियां वर्त्तत एव। तत्कथं पुन्नपुंसकवृत्तितां सङ्गच्छतामिति। अत्रेदं न्तत्वम्। जहत्स्वार्थैव वृत्तिरिहाभिमता। लेप्यानुरोधात्। तेनाङ्गं स्त्रियामिति सम्यगेव त्रिशब्दस्य पुन्नपुंसकवाचिता तु भूतपूर्वगत्या। उत्तरपदार्थप्रधानस्तत्पुरुष इत्यादिसिद्धान्तप्रवादस्यैवमेव निर्वाह्यत्वात्। एवं प्रियतिसा पुमानित्यत्र स्त्रियां वृत्तिरपि भूतपूर्वगत्यैव। अजहत्स्वार्थापक्षे तु स्त्रीनिष्ठसंख्यासमर्पकयोस्त्रिचतुरोरिति विवक्षितोऽर्थः। प्रत्ययोत्तरपदयोश्चेत्येतत्सूत्रगतभाष्यग्रन्थसंदर्भश्चेह प्रमाणम् ॥

यवानां वाक्यदृष्टस्वार्थत्यागतदभावाविव्येवार्थस्तत्रान्त्ये स्वार्थप्रादिवृत्तेः कथमन्यपदार्थे स्त्रियां वृत्तिः। न चान्यपदार्थस्य समुदायशक्यत्वेऽपि समुदायघटकत्वेनावयवस्यापि सशक्य इत्याशयस्तर्हि जहत्स्वार्थत्वेपि तुल्यं, तत्रापि पक्षेऽन्यपदार्थस्य समुदायशक्यत्वात्। यदि स्त्रीवाचकतापर्याप्त्यधिकरणत्वविवक्षेत्युच्यते तदा अजहत्स्वार्थत्वेपि तुल्यमिति ॥

म·श· तल्लोपसंभवादिति। पञ्चत्रपुष्यद्त्यादौ समुदायभक्तो नुम्नावयवस्येगन्तत्वविघातकइतीगन्तोत्तरपदद्विगुलप्रयुक्तपूर्वपदप्रकृतिस्वरोन्तरङ्गत्वान्नुमः
८२ पूर्व[illegible]भावनित्या। अतिराभ्यामित्यत्रापि नुमं बाधित्वा परत्वादात्वं रद्यौ त्वे त्यत्र रद्धिशब्दविहितरद्वेरेव ग्रहणान्न पूर्वविप्रतिषेधेन नु
म् इति शङ्क्यम्। प्रियतिसृभ्यामित्यादावपि नुमः परत्वात्तिस्रादेश एव। एतेन निर्दिश्यमानत्रिशब्दस्यव्यवहितत्वादादेशो न स्यादित्यपास्तम्। शुचीनामित्यादौ नुम

अनित्यत्वादिति। इको चीत्यज्ग्रहणं चेह लिङ्गम्। तद्धि संबुद्धौ नुमं वारयितुं कृतम्। भ्यामादिषु सत्यपि नुमि तल्लोपसंभवात्। संबुद्धिश्च
लुकालुप्तेति प्रत्ययलक्षणेन नुमः प्राप्तिर्वाच्या। प्रत्ययलक्षणं च न लुमतेति निषेधस्यानित्यतां विना दुर्लभमित्याकरे स्पष्टम्। न चेदमनित्यत्वं सं
बुद्धिगुणमात्रविषयकमित्यभिनिवेष्टव्यम्। लक्ष्यानुरोधे नान्यत्रापि क्वचित्तदभ्युपगमे बाधकाभावात्। तथा च प्रियतिसृ प्रियत्रि रिति रू
पद्वयमपि उक्तरीत्यैव कैयटेन समर्थितम्। पूर्वविप्रतिषेधेनेति। न चात्र प्रमाणाभावः। प्रियतिसृ णिद्त्यादिभाष्योदाहरणस्यैव तत्र प्रमाणत्वा
त्। हे रत्वे सत्याविति। विभक्तिसन्निपातकृतमपि त्यदाद्यत्वं टापो निमित्तम्। सन्निपातपरिभाषाया अनित्यत्वान्न यासयोरिति ज्ञापकाच्चेति भा
वः। द्यादेश इति। अजादौ यद्त्यादेशो विहितः स उपसर्जनत्वे पुंसि विद्यमानस्य स्त्रीशब्दस्यौसादिषु चतुर्ष्वेव न त्वन्यत्र गुणनाभावादिभिः पू
र्वैस्तैर्बाधितत्वादित्यर्थः ॥ ७७ चिरेति पूर्वविप्रतिषेधेन सकृदिति न्यायेन नुमो प्राप्त्यात तत्रेन्हन्निति नियमादीर्घो न स्यादिति न शङ्क्यम्। बहुभिः राम:
कुलैरित्यत्र नुमिषड्भिरिभ्यः स्युपोत्तममित्यस्य प्राप्त्यात तदभावे पि बहुशब्दस्यान्तोदात्ततया न स्वरे विशेषः। न चोत्तरार्थं, तत्रैव कर्तुं युक्तत्वादित्यस्त्र विस्तरः। ८२
प्रियतिसृ इति। तथैव भाष्ये उदाहृतत्वेनानङि नलुमतेति निषेध एवेति बोध्यम्। अनित्यत्वे प्रमाणमाह। न यासेति। चोहेतौ ॥

षष्ठीसमास इति। इयङादिस्थित्यधिकरणत्वेन क्वचिद्दृष्टावित्यर्थः तेन हे श्रीरित्यादौ निषेधसिद्धिः। ह्रस्वो नुपपन्न इति। नेयङ्स्थानेत्र यङादिनाक्षेपात्। यत्र न
टीकायां प्रत्येके बाधकाबाधितेयङादिसत्ता क्वचित्प्रयोगे दृष्टा तस्य तद्वयवस्य च निषेध इति भावः। कथंचिदिति। अनेन सीताविरहिणो रामस्य वाक्ये सीताया

नेयङुवङ्स्थानावस्त्री। तिष्ठतोऽयपयोरिति स्थानौ अधिकरणे ल्युट्। इयङुवङोः स्थानाविति षष्ठीसमासः। फलितार्थमाह। इयङुवङो
स्थितिर्ययोरिति। यत्रेयङुवङौ निष्पद्येते तत्रैवायं निषेधः। यत्र त्वपवादेन बाध्येते तत्र न निषेध इत्येतदर्थं स्थानग्रहणम्। वामि। यद्य
पि प्रकृतो निषेधोऽनेन विकल्प्यत इति प्राञ्चः। तथापि निषेधविकल्पे विधिविकल्प एव फलति। तथा च लाघवात्स एव सूत्रार्थ उचित इ
त्याशयेनाह। वा नदीसंज्ञौ स्त इति। ङिति ह्रस्वश्चेति सूत्रेऽप्येवमेव। कथं तर्हीति। उवङ्स्थानत्वेन नदीत्वाभावात् ह्रस्वो नुपपन्न इत्याक्षे
पः। बहुवदिति। केचित्तु वामीत्यतो वाग्रहणमिहापकृष्य व्यवस्थितविभाषां चाश्रित्य समादधुः तन्मन्दम्। तथा सतीह नग्रहणस्य वामीत्यु
त्तरसूत्रस्य च वैयर्थ्यापत्तेः। अन्ये तु सामान्येन पुंसकमिति कथंचित्समादधुः। न षट्। स्त्रियां यदुक्तं तन्न भवतीति व्याख्यानात् अनन्त
रोङीबिव व्यवहितष्टाबपि निषिध्यत इत्याशयेनाह। ङीप्टापौ नेति। राः पुंवदिति। रैशब्दस्य स्त्रीलिङ्गतायाः अपि स्मरणादिति भावः।
तथा च क्षीरस्वामी। रात्येनं राः स्त्रीत्येके। स्त्रियां नौस्तरणिस्तरिरित्यमरः॥ इत्यजन्ताः स्त्रीलिङ्गाः ॥

एवं विवक्षितत्वेनेदमप्यप्रयोजकमिति सूचितं नञ्घटितमनित्यमिति तु भाष्यानुक्तत्वान्न लक्ष्यसंस्कारोपयोगि ॥ इत्यजन्ताः स्त्रीलिङ्गाः ॥

 झलइत्यभिप्रायेणेति। एकवाक्यतयाझलएवलोपइत्यभिप्रायेणेत्यर्थः। संयोगान्तलोपइति। झल्ग्रहणस्यतत्रापकर्षेपिवाक्यभेदेनसंबन्धः। तेनचपूर्ववाक्यस्य
 यण्व्यतिरिक्तेऽभ्यर्थ्यपिक्वचित्प्रवृत्तिरितिभावः। सन्निपातेति। ह्रस्वाकारसन्निपातेनजातस्यतद्विघातकत्वायोगादितिभावः। परत्वाज्जरसीति। परेत्तुजरायाइतिसू
त्रोक्तेनजरांसीत्यत्रनुम्जरसोः प्राप्तयोर्विप्रतिषेधेनजरसितिभाष्यप्रामाण्येनपूर्वविप्रतिषेधात्पूर्वंविभक्त्यादेशप्रवृत्तिरधिकविभक्त्यपेक्षजरसादेशापेक्षया
विभक्त्यादेशानामन्तरङ्गत्वादवश्यंवाच्या। अन्यथाशिभावात्पूर्वमेवजरसः प्रवृत्तौनुमात्स्यविप्रतिषेधविचारासङ्गतिःस्पष्टैव। अतएवटाङसीतिसूत्रेकैयटेनोक्तं
अतोम्। स्वमोरिति। अमोऽम्विधानंलुग्बाधनार्थम्। अम्स्यादिति। एतच्चप्राचामनुरोधाद्व्याख्यातम्। संयोगान्तलोपोझलइत्यभिप्रायेणवा। वस्तुत
स्तुम्इत्येवपदच्छेदः लाघवात्। तत्रसोर्मेकृतेज्ञानमितिसिद्धम्। द्वितीयैकवचनेतुआदेःपरस्येत्यकारस्यमकारेकृतेन्त्यस्यमस्यसंयोगान्तलोपेसि
द्धमिष्टम्। अन्येतुवदन्ति। एवंसतिसुपिचेतिदीर्घत्वंस्यादिति। तन्न। सन्निपातपरिभाषाविरोधात्। यदपिदीर्घविधौसानप्रवर्ततइति। तदपिन। रुधादिभ्यः
श्नम्। श्नान्नलोपइतिसूत्रयोः सुपिचेतिदीर्घत्वेसन्निपातपरिभाषाप्रवृत्तेर्भाष्यकृताध्वनितत्वात्। कैयटेनोपपादितत्वाच्च। यदप्याहुः। अतिजरसमिति
नसिद्ध्येदिति। तदपिन। द्वितीयैकवचनेहिअतोमितिबाधित्वापरत्वाज्जरसिकृतेसन्निपातपरिभाषयालुकोप्रवृत्तौरूपसिद्धिःस्पष्टैवप्रथमैकवचनेतु।ति
भाष्यकारस्तुसन्निपातपरिभाषयाजरसादेशमनभ्युपयन्नतिजरेणातिजरादितिभाष्येनत्वतिजरसिनअतिजरसादितिगौरवमुद्भावितवान्निर्भरवृत्त्यापरत्वात्पूर्वंजरसादेशेइना
द्यप्राप्यातदभावपक्षेतस्यप्राप्त्यापरिभाषयाजरसादेशमनभ्युपयन्नित्यस्यासङ्गतिः स्पष्टैवतुच्यतेतदत्राप्यन्तरङ्गत्वात्तोमितयाजरसभावएवोचितः। नचतत्रानाकारान्तस
न्निपातलक्षणमेवाजादित्वंकिंतुतदभावेपि। एषातुसन्निपातलक्षणविधिप्रवृत्तिंविनानयस्यप्रवृत्तियोग्यतातत्रैवेतिवाच्यम्। मानाभावात्। टाङसीतिसूत्रस्थेनातिजरेणेत्येतन 
द्विषयकैयटेनविरोधाच्च। एवंचजराशब्दविषयंपरत्वादिनादीन्बाधित्वाजरसित्यादिमूलंमतंसमनोरमाचप्राचामनुसारेणेति। तदाह। एकवचनेत्विति। तत्रापीत्यर्थः ॥ 

अतदितीति। नतु तपरसूत्रप्रवृत्त्यर्थ इत्यर्थः। नपुंसके ह्रस्वावश्यंभावाद्धृत्यावत्याप्रसिद्धेरिति भावः। ननु तकारस्योच्चारणार्थत्वे मितिच्छेदे सन्निपातपरिभाषया दीर्घवारणं कथमिति चेन्न। पादशब्दसन्निपातेन सोरादेशस्तस्य विनाशेनादोषात्। अतएव दासिरित्यादौ अङ्गसंज्ञा अकारान्त प्रकृतिप्रत्ययसंनिपातकृतानया परिभाषया। हल्लोपस्यानिमित्तं नस्यादित्याशङ्क्य अनित्यत्वेन भाष्ये समाहितमतस्तस्य सन्निपातस्य शब्दोपात्तत्वाग्रहाभावात्। भाष्यकृता तु मादेशे सन्निपातपरिभाषया संबुद्धिलोपाप्राप्तिर्नियामिका मित्येवच्छेदमङ्गीकृत्यैङ्ह्रस्वादित्यत्र व्यधिकरणान्वयहल्पदानुवृत्तिरूपगौरवं फलमुखत्वान्न दोषावहमित्यनुसृतम्। परिभाषानित्यत्वेन तु न समा

अतिजरमित्येवेष्यते। सन्निपातपरिभाषया जरसादेशस्याप्रवृत्तेः। अतदिति तकार उच्चारणार्थः। भसंज्ञायामिति। सुड

नपुंसकस्येति पर्युदासेनासर्वनामस्थानत्वादिति भावः। यस्य। इश्च अश्च यं तस्य। तदाह। इवर्णावर्णयोरिति। औङः श्यामिति। विभक्तित्वापेशः। जः शसोः। जसासाहचर्यात् शसपि सुबेव गृह्यते। तेनेह न। कुण्डशो ददाति। शि। शीत्यविभक्तिको निर्देशः। महासंज्ञाकरणं पूर्वाचार्यानुरोधात्। अन्यतमस्यामिति। एवं च सामान्यादिष्वन्यतमत्तमदित्यादिप्रयोगाः प्रामादिका एवेति भावः। सोरमादेशे इति। यत्तु प्राचोक्तम्। स्वमोरमादेशे वा जरसिति ॥

हितम्। तस्यागतिकगतित्वात्। किंच तस्यानित्यत्वे दीर्घापत्तिः। इदमपि तत्रैव भाष्ये ध्वनितमित्यलम्। विभक्तित्वापेक्षयेति। तद्धितविभक्तित्वाश्रयणेन विभक्ताविति विशेष्यापेक्षयेत्यर्थः। सुबेवेति। निरनुबन्धकपरिभाषया तद्धितशसोऽपि ग्रहणमिति न वाच्यम्। येनानुबन्धेन सानुबन्धकत्वं तदनुच्चारणएव तत्प्रवृत्तेः। अनुरोधादिति। तेन स्वशास्त्रस्य प्रामाण्यज्ञापनमिति भावः ॥

तद्भाष्येति। सन्निपातपरिभाषया विभक्त्यादेशे जरसभावस्य जरायादिति सूत्रे भाष्ये स्पष्टमुक्तेरिति भावः। पर्य्यैत्विति तुनात्रारुत्त्रिर्बोधिता। तद्बीजं तूक्तम्। अवर्णमिति। ह्रस्वत्वविशिष्टमवर्णमित्यर्थः। यादेशः तदित्यनुवर्त्ते। स्तत्र यद्यपि कष्टायेति निर्देशप्रापितदीर्घेण ह्रस्वत्वांशो निवर्तितस्तथाप्यवर्णत्वमादेशेनुवर्ततेतदपि चेल्लोपेन निवर्ततेतर्हि परिभाषाविरोधः स्पष्ट एवेति भावः। भाष्य इति। गाधातोष्टेगुणेन अकारे आर्धधातुकोपदेशे दन्तत्वाभावादतो लोपाभावेपि पररूपेण सामगस्य सिद्धेगापोष्टकः किल करणाल्लिङ्गादा

तद्भाष्यविरुद्धम्। एवं च अजरसं वर्तते इति हे अजरसमिति चापशब्द एव। अजरं सं पश्येति तु प्रयोगः साधुः। किंतु अमादेशे कृते जरस इति प्राचउक्तिरेवासाध्वी परत्वाज्जरसोन्याय्यत्वात्। पूर्वविप्रतिषेधे प्रमाणाभावाच्च। सान्तमहतः संयोगस्य। सान्तेति पृथक्पदं लुप्तषष्ठीकम्। संयोगस्येत्यनेन समानाधिकरणमिति व्याचष्टे। सान्तसंयोगस्येति। उपधाया इति। उपधाग्रहणं पूर्वमात्रोपलक्षणं पारिभाषिकार्थस्येहासंभवात्। मास्छन्दसीति। मास्वित्यस्य तकारः स्यात्। भादौ प्रत्यये छन्दसी तिवाक्यार्थः। माद्भिः शरद्भिर्दुरो वरं तवेत्युदाहरणम्। ह्रस्वोनपुंसके। इहह्रस्वश्रुत्याः चेत्युपस्थितम्। तेन प्रातिपदिकस्य विशेषणात् तदन्तविधिरित्याह अजन्तस्येति। प्रातिपदिकस्याचइति तु न व्याख्यातम्। संभवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वात्। सुवाग्ब्राह्मणकुलमित्यादौ अतिव्याप्तेश्च। सन्निपातेति। अवर्णमाश्रित्य कृतो यादेशः कथं तल्लोपे निमित्तं स्यात्। एतच्च एओङ् सूत्रे इकोगुणवृद्धी इति सूत्रे च भाष्ये ध्वनितं कैयटेन प्रतिपादितं शब्दकौस्तुभे निष्कर्षं प्रापितमिति तत एवावधार्यम्।

✓कारस्य गुणो नेति व्यर्थं तत्रेग्ग्रहणमिति भाष्ये उक्तम्। कैयटेनेति। सामगायेत्यत्रासति टकः किलेएकादेशस्य पूर्वान्तत्वे नग्रहणात् आकारस्य धात्ववयवत्वेनातो लोपः स्यात् किलेत्वातो लोप इत्यालोपे धात्वनवयवत्वादप्रवृत्तिरित्याशङ्क्य सन्निपातपरिभाषया कित्त्वेपि नातो लोप इति तेन प्रतिपादितम्। शब्दकौस्तुभे इति। पूर्वोक्तभावश्च तत्रोक्तः। परे तु व्याप्याः स्वजातीयजादिसन्निपातनिमित्तो दीर्घो न स्वसन्निपातविघातकलोपनिमित्तम्। सन्निपातपरिभाषायाश्च सन्निपा

तल्लुस्यादिविधिप्रवृत्तेः प्राकृतनिमित्तभूतोयः सन्निपातस्तद्विघातकस्यस्यातिरिक्तस्यस्वयमनिमित्तमित्यर्थ इत्याहुः पूर्वविप्रतिषेधेनेति। अन्तरङ्गानपीत्यस्योपलक्षण
मिदम्। अत्रत्यवार्तिकानुरोधेन तेनेदमुक्तम्। त्यदादिभ्यश्चेतिवक्तव्यमितिहितत्रवार्तिकम्। तंकुलमितिस्यादिति। द्वितीयैकवचनेइतिशेषः। प्रथमैकवचनेतुसंकुलमिति
एवंत्यदाद्यत्वे तुभंयाशब्दस्य क्लीबस्य ङ पिशुभंयइतिमाधवेनोदाहृतं तन्नादर्तव्यमितिभावः। स्वमोर्नपुंसकात्। अयंतु कृपूर्वविप्रतिषेधेनत्यदाद्य
त्वस्यकिमःकादेशस्यचबाधकः। परत्वादित्यदाद्यत्वेऽम्भावेनतंकुलमितिस्यात्। वृद्धौत्वेति। अतिसखीनिकुलानीत्यत्रसख्युरसंबुद्धावितिणिद्वद्भावाद्वृद्धिः
प्राप्तावारिणीत्यत्रतुअच्चघेरित्यौत्वम्। प्रियक्रोष्टूनीत्यादौ तृज्वद्भावःप्राप्तः। ननुमनुटोःकोविशेषस्तत्राह। नामीति। नुमस्तुअङ्गभक्तत्वात्तस्मिन्सतिदीर्घो
नस्यादितिभावः। तृतीयादिष्विति। पुंवदिति। अर्थान्नुम्ह्रस्वयोःप्रतिषेधोयम्। प्रवृत्तिनिमित्तभेदादिति। पीलुशब्दस्यहिरसत्वव्याप्यजातिर्वृक्षेप्रवृत्तिनिमि
त्तम्। फलेतुफलत्वव्याप्यजातिर्वृक्षविशेषप्रभवत्वंवा। उभयथापिपुन्नपुंसकयोर्नैकंप्रवृत्तिनिमित्तमितिभावः। अस्थिदधि। अतिदध्नेति। दधिअतिक्रा
न्तेनेत्यर्थः। यत्तुप्रियदध्नेति उरःप्रभृतिषुदधिमधुशालीतिपाठात्निसःकप्प्राप्तः। भाष्यकारप्रयोगादेवप्रियदधिशब्देनभवतीत्याहुः। तच्चिन्त्यम्। भाष्ये
तादृशपाठस्यबहुषुपुस्तकेष्वनुपलम्भात्। स्त्रियान्तुप्रियदध्याप्रियदध्नेइतिकेचित्तन्न। सन्निपातपरिभाषयाबहिरङ्गपरिभाषयाचङीपोप्रवृत्तेः। तस्मा
त्पुंसीवस्त्रियामपिअतिदध्नेत्यादिकमेवबोध्यम्। सुधिनीइति। परत्वान्नुमाद्यङ्बाध्यते। सुधियेति। पुंवत्त्वपक्षेनुमोऽभावादियङ्। बहुश्रेयसो
यस्येतितद्बहुश्रेयसीकुलम्। अत्रनपुंसकह्रस्वत्वंन। ईयसोबहुव्रीहेर्नेतिह्रस्वमात्रस्यप्रतिषेधादितिश्रीपतिपुरुषोत्तमविश्वरूपादयः। ७ स्यादितिबोध्यम्। नुम्
ह्रस्वयोरिति। पुंसिविहितस्यभावस्यातिदेशस्याभावात्ह्रस्वनुमोर्निषेधोतिदेशसामर्थ्याद्व्याप्तिन्यायाश्रयणाच्चेतिभावः। नद्विषयस्येतिस्वरस्यतुननिषेधोभिन्नकर्तृको
क्तात्। विषयपदेननपुंसकत्वाभावेपितत्प्रवृत्त्यङ्गीकाराच्च। नुमोऽभावादिति। ह्रस्वाभावेननाभावाभावाच्चेयङितिभावः ॥

उपसर्जनह्रस्व एवेति। ईयसो बहुव्रीहौ पुंवदिति हि भाष्ये पठितम्। ईयसः परस्य स्त्रीप्रत्ययस्य बहुव्रीहौ विद्यमानस्य पुंवत् पुंविषयस्य ईकारस्य यथा नह्रस्वस्तथास्यापीति तदर्थः। ईयसन्ताद्विहितो यः स्त्रीप्रत्ययस्तदन्ते बहुव्रीहौ पुंवदिति तु नार्थः। बहुव्रीहेः पुंवत्वेपि उपसर्जनस्य श्रेयसी शब्दस्य स्त्रीप्रत्यान्तत्वान्न्यायेन उपसर्जनह्रस्वस्य दुर्वारतापत्तेः, एवं च प्रत्यासत्त्या स्त्रीप्रत्ययत्वनिमित्तक गोस्त्रियोरित्यस्यैव तेनाभावातिदेश इति भावः। तदेवार्थतोऽत्र पठितम्। श्चेति सूत्रे भाष्ये ईयस उपसर्जनस्त्रीप्रत्ययस्य दीर्घत्वं वक्तव्यम्। बहुश्रेयसी पुंवद्वचनात्सिद्धमित्युक्तं, तेनास्य नपुंसकह्रस्वनिवृत्त्यर्थत्वं लभ्यते। अन्यथा वच

अन्ये तु उपसर्जनह्रस्व एव निषिध्यते नपुंसकह्रस्वत्वं तु स्यादेव। बहुश्रेयसि बहुश्रेयसिनी इत्याद्याहुः। तुः प्रस्थः सानुरस्त्रियामित्युभयलि ङ्गः सानुशब्दः। तस्य नपुंसकत्वे रूपमाह। स्नूनि सानूनीति। पुंसि शंभुवत्। प्रियक्रोष्टूनीति। यत्तु प्राचा प्रियक्रोष्टूणीत्युक्तम्। तत्पूर्वविप्रतिषेधपरभाष्यवार्तिकविरुद्धम्। यत्तु व्याचख्युः। विभाषा तृतीयादिष्वचीत्येतद्विषयकोऽविप्रतिषेधः ॥

नेन वचनप्रत्याख्यानासङ्गतिः। मम तु मतेन पुंसकह्रस्वनिवृत्त्यर्थमावश्यकं तदिति युज्यत एव तेनास्य प्रत्याख्यानम्। दीर्घत्वं हि प्रत्यासत्त्योपसर्जनह्रस्वतापवादः। सामान्यतो ह्रस्वमात्रापवादत्वे हि प्रत्याख्यानासङ्गतिरितिदिक्। पूर्वविप्रतिषेधपरभाष्ये इति। अङ्गाधिकारे तदन्तविधेः सत्त्वेन तदन्तग्रहणेन यदागमा इति न्यायेन नुम्विशिष्टस्य ग्रहणेपि सूत्रे षष्ठीनिर्देशाभावान्निर्दिश्यमानस्य नुमागवधानमित्यस्याभावेपि पूर्वविप्रतिषेधसामर्थ्यात्तक इति न्यायेन नुमस्तृज्वत्त्वाभावः। अत्रानयोर्यौगपद्यासंभवेन विरोध इति भावः ॥

इत्यस्यैवेति। अन्यथा प्रथमोपस्थितसर्वनामस्थानोदाहरणत्यागो निर्बीजः स्यादिति भावः। पक्षे। तृज्वत्त्वाभावपक्षे॥ उदाहृतत्वाच्चेति। नच प्रियक्रोष्टुणे इत्यादिव्याहृत्या चारितार्थ्यम्। प्रियक्रोष्टु इत्यवस्थायां नुम्तृज्वत्त्वयोः प्राप्तयोः परत्वात्तृज्वत्त्वे सकृद्गतिन्यायेन नुमभावसिद्धेः। पुनः प्रसङ्गविज्ञानोप्रयेण वचनारम्भापेक्षया सकृद्गतीत्याश्रित्य वचनानारम्भस्यैव लघुत्वादिति भावः। पुंवद्भावाभावादिति। भाषितपुंस्कत्वाभावादिति भावः। इत्येवेति। इत्य

भाष्ये प्रियक्रोष्टुने अरण्यायेत्यस्यैवोदाहृतत्वादिति। तन्न। उदाहरणस्य सङ्कोचकत्वे मानाभावात्। यदाहुः। नचोदाहरणमादरणीयमिति। किञ्च पूर्वविप्रतिषेधस्यैकस्मिकतृज्वद्भावमात्रविषयकत्वे तत्र तृज्वद्भावग्रहणं व्यर्थमेव स्यात्। प्रियक्रोष्टुने इत्यादेर्विप्रतिषेधं विनापि पक्षेसुसाधत्वात्। नच प्रियक्रोष्ट्रे इत्यादिनिवृत्तिस्तत्फलम्। पुंवद्भावपक्षे तस्य दुर्वारत्वात्। स्वयमपि तथोदाहृतत्वाच्च। नच समाहारद्विगौ पञ्चक्रोष्टुने इत्यादौ पुंवद्भावाभावात् तत्र तृज्वद्भावनिवृत्तिः फलमिति वाच्यम्। एवमपि भाष्यीयोदाहरणासामञ्जस्यात्। उपलक्षणं तदिति चेत्। हन्तैवं प्रियक्रोष्टूनीत्येवोपलक्षणं भाष्ये उदाहृतमप्रातिपदिकांशानुग्रहायेतिदिक्। सुत्वेनेति। पुंवत्त्वपक्षे नुमभावाय यण्। सुलुनेति। ओः सुपीति यणं बाधित्वा परत्वान्नुम्। यदि मन्त्वमिति। रुनच्च रादानेदिति धातौ अतिरिक्तं ब्राह्मणकुलमिति प्रक्रम्य माधवेन स्पष्टीकृतम्॥ पीत्यर्थः। प्रातिपदिकांशेति। प्रातिपदिकांशस्याप्यनुग्रहायेत्यर्थः। इति दिगिति। दिगर्थस्तु यद्यपि चतुर्थ्यन्तोदाहरणपरभाष्यप्रामाण्यात् पुंवत्त्वपक्षे नभिधानेन तृज्वत्त्वाभावकल्पना न्याय्या भाष्यकृता हि सूत्रत्रयस्य प्रत्याख्यानायाश्रितस्य शब्दानां नियतविषयकत्वस्य सूत्रारम्भेऽप्यावश्यकत्वद्योतनाय पूर्वविप्रतिषेधवार्तिके तदुदाहृतं तथापि नचोदाहरणमादरणीयमिति न्यायेन सर्वनामस्थानविषयकताप्यस्य न्याय्या उदाहृतातिरिक्तोदाहरणाभाव इत्येवं परतयानादरणीयमिति तदर्थ इति बोध्यम्॥

म॰ शे॰ ८६ एकदेशविकृतस्येति। सचन्यायो व्यास्त्रीयस्याप्यतिदेशको। शाब्दी यविकारे चेति प्राग्दीयत इति सूत्रस्थभाष्यसंमतत्वादितिभावः। पुंवद्भावइति। तेनसुन्दर भार्य इत्यादौ जातनिरत्तेरपि दृष्टत्वेनाप्यपितेनजातह्रस्वनिरत्तिर्नतूपजीव्यविरोधेन ह्रस्वानिरत्तिः। अतएवसमासस्येतिसूत्रेभाष्येयतोनावइत्यनावइतिप्रति षेधोहलस्वरप्राप्तौव्यञ्जनमविद्यमानवदित्यस्यज्ञापकउक्तः। नाव्यमित्यादौ आदिर्नकारोनस्वरयोग्योयश्चाकारस्तद्योग्योनासावादिरित्यनावइतिनिषेधोऽन र्थकः। नचादिरेवनकारउदात्तगुणविशिष्टान्तरतमाजरूपोस्तु यदन्तस्यह्यक्स्यादिरुदात्तगुणकरूपोभवतीतिचयतोनावइत्यस्यार्थइतिवाच्यम्। एवंहि

अन्येषुसुयोशब्दोभाषितपुंस्कः। सएवेदानीमिगन्तः। एकदेशविकृतस्यानन्यत्वादतः पुंवद्भावोभवतीत्याहुः। तथाचरूपमालादौपुंव द्भावउदाहृतः। तस्मादेजन्तेषुक्लीबेषुपुंवद्भावोमाधवमतेनास्तिमतान्तरेत्वस्ति। अतःप्रद्यवाप्रएयासुनावेत्यादिप्राचोदाहृतमपिनाती वदुष्यति॥ इत्यजन्तानपुंसकलिङ्गाः॥ लिडिति। लिहआस्वादनेक्विप्लिट्सु लिट्त्विति। टस्यजश्त्वेनडः। तस्यखरिचेतिच र्त्वेनटः। तस्यासिद्धत्वात्डः सीतिधुट्। चर्त्वम्। तकारः। नपदान्ताद्दोरितिष्टुत्वनिषेधः। चयोद्वितीयाइतितुनेहप्रवर्तते। चर्त्वस्या सिद्धत्वात्। एतेनतेचप्रत्याहाराएकचत्वारिंशदितिप्राचोग्रन्थंव्याचक्षाणैर्यदुक्तंलिट्त्सुलिठ्त्स्विवितिठाभ्यांरूपद्वयमितितत्प्रत्युक्तम्॥

निमित्तभूतस्यच्कत्वविनाशादुपजीव्यविरोधेनाद्युदात्ताप्राप्तिरितितदाशयइतिचेन्न। माधवादयनुरोधेनास्यग्रन्थस्यसत्त्वात्॥ इत्यज न्तानपुंसकलिङ्गाः॥ धुडिति। डःसीतिसूत्रेऽनुवृत्तपदस्येतिव्यधिकरणंपदावयवस्यसस्येत्यर्थइतिभावः॥ एकेद्वितीयमिति। अत्रत्यवा तिककारइत्यर्थः॥ राम॰ ८६

अपदान्तभाजमिति। इदमचर्त्वभाजमित्यर्थोपलक्षकं पदान्ते प्रायो जश्त्वप्राप्त्या चर्त्वविनाचयोऽलाभात्। तथा चेति वदता मूलकृता अस्यार्थस्य सूचनात्। अत एव सुगणठ् षष्ठ इत्यादौ भवत्येव ढुगादीनां जश्त्वप्रत्यसिद्धत्वेन तदप्राप्त्या चर्त्वस्याप्यभावादिति भावः। धातोरित्यावर्त्तते इति। इदं प्राचामनुरोधेन दादेरित्यावर्त्तते इति युक्तं, धातोरित्यनेन हि औपदेशिकस्य धातोरित्यर्थेन दामलिहोऽन्यावृत्तावपि अधोमिति न संगच्छेत दादेर्दादेरित्यनेनोपदेशकालिकदादेरित्यर्थकेनोभयं सिद्ध्यति, उपदेशकालमित्यस्य तौकालिकं लक्षयतीत्यर्थः। उपदेशे दादेरिति तु फलितोऽर्थः। वाच्यार्थत्वे षष्ठ्यन्तस्य सप्तम्या विपरिणामोऽपि कर्तव्यः स्यादिति गौरवम्। धातोरित्यस्यैव लक्षणया तथार्थकस्य दादेरित्यनेनान्वयेऽपि न क्षतिरित्याशयेन तु मूले धातोरित्युक्तम्। अत एव भाष्ये घत्वस्यासिद्धत्वाद्धुगित्यत्र ढत्वं प्राप्नोतीत्या

तथा च प्रातिशाख्येऽपि ऊष्मोदयं प्रथमं स्पर्शमेके द्वितीयमाहुरपदान्तभाजमिति श्लोकेऽपदान्तेत्यादिविशेषणं संगच्छते। दादेर्धातोर्घः। धातोरित्यावर्त्तते। तत्रैकमतिरिच्यमानमुपदेशकालं लक्षयतीत्याशयेनाह। उपदेश इति। आवृत्तिफलं पृच्छति। उपदेशे किमिति ॥

शङ्क्यापवादत्वेन समाधायाथवा एकं वक्ष्यामि होढा। दादेरिति ततो धातोरिति दादेरिति वर्त्तते नेति निवृत्तमित्युक्तम्। दुहेस्तुवा द्रुहेत्यनेन ढत्वस्यापि विधानात्, धुडित्यादौ न दोष इति तदाशयः। तत्र धातोरिति सूत्रे भाष्यकृता तदादेरित्यनुवृत्तेः फलान्तराभावेन तदुपदेशवद्भावादिलक्षकं सामर्थ्यात्, अर्थाधिकारात्, तथा धात्वपूर्वत्र निपेद्धसमर्पकेऽप्येवम्। अत एव नामधातुविषये दामलिडित्यादौ ढत्वघत्वाभावौ सिद्धौ। एवं च तदेकवाक्यतयाऽपवादत्वपक्षेऽपि दादिपदस्योपदेशकालिकदादिलक्षकतोचिता। आवृत्त्याश्रयणं तु बालानां स्फुटं तत्प्रतिपत्तय इति बोध्यम्। न चोपदेश इत्येव कुतो नोक्तं, गौरवापत्तेः। धातोरिति तु तद्वाडित्यादिव्यावृत्तये उत्तरत्रावश्यकम् ॥

म·श· अभ्यासीति। अधोगित्यादौ सामनुधातोस्थ्वयवो योदादिरित्यर्थे इदं सिद्धं वैयधिकरण्यं च गर्दभयतेरप्रत्यये गर्धबित्यादौ भष्भावायोत्तरसूत्रे आवश्यकं दोग्धे
८७ तिस्थ्वपदे शिवद्वावात्सिद्धम्। स्पष्टं चेदं भाष्ये तत आह। अतिव्याप्तीति। दामलिडित्यादौ। न च प्रागुक्तभाष्योत्तरमधोक् सिद्धये वैयधिकरण्यान्वयपर्यन्तं भाष्यकृतो नु
धावनेष्टं र्थमिति वाच्यम्। तदेरिति निवर्तते इत्यस्योक्तमाशयमजानत एवमपि घोदेरित्युच्यते। तत्राधोक् न सिद्ध्यतीति शङ्कायामुत्तरसूत्रार्थमपि प्रसङ्गान्निर्णे

अव्याप्त्यतिव्याप्तिपरिहारः फलमित्याह। अधोगित्यादिना। एकाचो बशो भष्। झलीति निवृत्तमिति। यत्तु प्राचोक्तम्। प्रातिपदिकसंज्ञस्य तु झलि परतः
पदान्ते चेति। तद्ग्रामादिकमेव। अधोक्। आधोग्। भजर्षादित्याद्यसिद्ध्यापत्तेः। प्रातिपदिकग्रहणस्याप्रकृतत्वाच्च। तत्र झलो निमित्तत्वानुपयोगाच्च। धुग्भ्यां
धुक्षु इत्यादौ पदान्त इत्येव सिद्धेः। यदपि तत्रैव तेन व्याख्यातम्। झलि परे प्रातिपदिकसंज्ञस्यैवेत्यादि। तदपि निर्मूलं निष्फलं चेत्युपेक्ष्यम्। भष्भावद्दिति। ज
श्त्वचर्त्वयोरसिद्धत्वात्ताभ्यां प्रागेवेति भावः। षत्वचर्त्वे इति। चर्त्वस्यासिद्धत्वात्पूर्वं षत्वं ततश्चर्त्वमिति भावः। वा द्रुह। द्रुहेर्दादित्वान्नित्यं प्राप्तेऽन्येषामप्राप्ते
उभयत्र विभाषेयम्। ननु द्रुहादयो दिवादिष्वनेनैव क्रमेण पठ्यन्ते तत्र वा द्रुहादीनामित्येवास्तु। दिवाद्यन्तर्गणस्य पुषादेरन्तर्गणो रधादिस्तदन्तर्गणो
द्रुहादिरस्त्विति चेन्न। तथा हि सति मङ्लुकि न स्यात् ॥ ७७ तुदादिपदलक्षणायामधोगित्यस्यासाधारणफलत्वाभावं दर्शयितुं च तथोक्तेः। अतए
वायं वैयधिकरण्यस्योत्तरार्थमावश्यकत्वोक्त्येहार्थमनावश्यकत्वं भाष्ये ध्वनितं सङ्गच्छत इत्यलम्। तद्ग्राम्यादिकमिति। धुग्भ्यामित्यादेः पदान्तत्वादेव सिद्धेरिति भा
वः। उपेक्ष्यमिति। एतेनैकाचो बश इति सूत्रे हस्वादङ्गादित्यतोऽङ्गादित्यनुवर्तते, अङ्गं च द्विविधं धातुरूपं प्रातिपदिकं रूपं च, तत्र धातोः पदान्त एव प्रातिपदिकस्य झलि पदा रामः
न्ते चेति प्राचामाशय इत्यपास्तम्। स्वरितत्वकल्पनविभक्तिविपरिणामादीनां निर्मूलत्वान्निष्फलत्वाच्च न ह्यत्र नद्वाड्भ्यामित्यादावतिव्याप्तेश्चेति दिक् ॥ ८७

निषेधादित्रि। भष्भावस्तुएकाज्ग्रहणेपिअजघींइतिभाष्योदाहरणेननिषेधानित्यत्वाद्भवतीतिभावः। स्लिपाशपेतिभाष्यानुक्तत्वादप्रमाणंवैचित्र्या यत्तुतथानोक्तमित्यन्योस्सूत्रशाटकवदिति। अस्यसूत्रस्यशाटकं वयेत्यादौयदिवातन्योनशाटकोयदिशाटकोनवातन्यइतिविरोधमाशङ्क्यमन्ये सवातन्योयस्योतस्यशाटकइत्येषासंज्ञाभवतीतिभाष्येउक्तम्। तथाप्रकृतेपियणः स्थानेसभवति यस्यसंप्रसारणशब्देनजातस्यसंप्रसारणसंज्ञा

निर्दिष्टंयदूणेनचेतिनिषेधात्। दोधुक्। दोधुट्। इग्यणः। यणस्थानेइति। विधिप्रदेशेषुसूत्रशाटकवद्भाविसंज्ञाश्रयणमितिभावः। वा हऊठ्। वसोः संप्रसारणमित्यतोनुवृत्तंसंप्रसारणमूठोविशेषणम्। तेनअलोन्त्यस्येतिन। यत्तुप्राचावाशब्दस्येत्युक्तम्। नासौसूत्रार्थः। किं तुकृत्यचित्फलितार्थकथनपरतयानेयम्। छन्दस्येवेति। छन्दसिसहः। वहश्चेतिसूत्रेछन्दसीत्यनुवृत्तेरितिभावः। यत्तुऊठिकृतेस वर्णदीर्घः। भूहः। भूहेत्यादिप्राचोक्तंतद्भाष्यविरुद्धम्। तथाहि। उठ्ग्रहणंमास्तु। संप्रसारणमेवविधीयताम्। तस्यलघूपधगुणेकृतेवृ द्धिरेचीतिवृद्धौसिद्धंविश्वौहइत्यादिस्वंस्थितेक्रियमाणमूठ्ग्रहणंबहिरङ्गपरिभाषांज्ञापयति। सत्यांहितस्यांबहिरङ्गस्यसंप्रसारणस्यासि द्धत्वादन्तरङ्गोगुणोनस्यादितिभाष्येस्थितम्। नन्वनकारान्तेऽकारान्तोपसर्गेचोपपदेरूपेविशेषः स्यादितिचेन्मैवम्। भाष्यकारोक्तज्ञाप कबलेनैवतादृशस्थलेण्विप्रत्ययाभावस्यानुमानादितिकैयटहरदत्तादयः। एतेनवार्यूहः प्रौहइत्यादिप्रयोगाअपिपरास्ताः ॥

भवतीत्यर्थइतिभावः। तेनदिवउतोनसंप्रसारणत्वम्। फलितार्थेति। संप्रसारणपूर्वत्वाभ्यांफलितेत्यर्थः। ऊठिकृतेइति। भूवाट्शब्देइतिशेषः। क्रि यमाणमिति। ऊठ्ग्रहणमित्यर्थः। तादृशस्थलेइति। भत्वविषयेइत्यर्थः। भूवाडित्यादितुभवत्येव ॥

ऊहतेरिति। एतद्वार्यूह इत्येतद्विषयम्। अव्यभिचारादिति। स्रंसुध्वंस्वोर्विसृतुनास्त्यनभिधानादतः संयोगान्तलोपे तत्रव्यभिचार इत्यपास्तम्। अत एव भाष्यकृतास्रस्येत्यननुवृत्तौ पपिवानित्यत्रैव दत्वशङ्का कृता। अनुवृत्तौ चानडुद्भ्यामित्यत्रैव दत्वाभावशङ्का कृतेति दिक्। न्यासो हितेति। न्यासकृद्धितेत्यर्थः। निरनुब

अथैवा ऊहतेः क्विप् इत्यवधेयम्। वसुस्रंसु। वसुः प्रत्ययः। तेन तदन्तं ग्राह्यम्। ससजुषो रुरिति सूत्रात् स इत्यनुवर्तते। तच्च वसो रेवाविशेषणम्। नतु स्रंसुध्वंसोः। अव्यभिचारात्। नाप्यनडुहः। असम्भवादित्यभिप्रेत्याह। सान्तवस्वन्तस्येति। पदान्त इति। झलीति तु प्राचः प्रमादः। स्रस्तमित्यादावतिव्याप्तेः। सहेः साडः सः। सहेरिति। किं सह डेन वर्तत इति सडः। यस्य नाम्नि डशब्दोऽस्ति यथा मृड इति। सडस्यापत्यं साडिः ॥ हान्ताः॥ दिव औत्। प्रातिपदिकस्येति। अव्युत्पन्नस्य दिवेर्डिविरिति न्यासो हितसूत्रेण व्युत्पन्नस्य वा नतु दिवु क्रीडायामिति धातोः। निरनुबन्धकग्रहणे न सानुबन्धकस्येति परिभाषया। तेनाक्षद्यूरित्यादौ न भवति। औतस्तकार उच्चारणार्थः। सुद्युभ्यामिति। उकारस्य संप्रसारणत्वाद्धल इति दीर्घः प्राप्त उदिति तपरसामर्थ्यान्न भवति। यत्तु प्राचोक्तम्। दिवो वा आत्वममीति। तदुपेक्षितम्। मुनित्रयानुक्तेर्निष्फलत्वाच्च। द्यामिति रूपं द्योशब्दस्यैवेति बोध्यम्। इति वान्ताः। षट्चतुर्भ्यश्च। बहुवचननिर्देशादर्थप्राधान्यं विवक्षितम् ॥

न्धकेति। ङिवे: प्रत्ययस्य सानुबन्धकत्वेपि तदन्तस्यातथात्वादिति भावः। इदं चात्र सूत्रे भूवादिसूत्रे च भाष्ये स्पष्टम्। उच्चारणार्थ इति। नतु स्वरितार्थः। उच्चारणार्थानामितां यामपि निति प्रत्ययग्रहणमिति वार्तिके न तदप्रवृत्तिरिति भावः। संप्रसारणत्वादिति। अत द्भावितस्यापि संज्ञेति पक्ष इदम् ॥ राम: ८८

शब्द द्वारकमिति। नचैवं तद्वाचकशब्दात्परत्वमेवार्थात्परत्वमित्याश्रयातं ततश्च प्रियपञ्चन् आमित्यत्रापि तद्वाचकपञ्चन् शब्दात्परत्वमस्त्येवेति दोषस्त दवस्थ इतिवाच्यम्। एतत्सामर्थ्येनप्रधानीभूतषड्थैवाचकशब्दात्परत्वं विवक्षितमित्यभिमानात्। इदंप्राचामनुरोधेन। द्विवचननिर्देशेगौरवात्समाहारेण सर्वत्रसूत्रेषु निर्देशादर्शनाच्चषट्संज्ञकानां बहुत्वाच्चबहुवचनोपपत्तेः। किंचनषट्स्वस्रादिभ्यइत्यादौ शब्दबाहुल्याभिप्रायेणबहुवचनवनिसम्भ्योजसइ त्यादौ प्रयोगबाहुल्याभिप्रायेणतं इचैहापिबहुवचनंवक्तुंयुक्तम्। किंचनामीतिसूत्रेभाष्ये आमीत्येवसूत्रमस्तु। नचनित्यत्वात्पूर्वंदीर्घे ह्रस्वाश्रयोनुट् नस्यात् ह्रस्वान्ताद्वानुडित्येतत्सामर्थ्येनभूतपूर्वगत्याह्रस्वान्तत्वमाश्रयतत्प्रवृत्तेः। नचनृणामित्यत्रचारितार्थ्यम्। नैकमुदाहरणंयोगारम्भं प्रयोजयति। नृनद्याप इत्येव

अर्थाश्रयः परत्वंशब्दद्वारकम्। तेनतदन्तविधौसत्यपि परमचतुर्णामित्यादावेवभवति नतुबहुव्रीहौ। तदेतद्ध्वनयति। गौणत्वेतुनुट्नेष्यतेइ त्यादिना। द्वित्वमिति। अचोरहाभ्यामित्यनेन॥ एन्ताः॥ कमला। लक्ष्मीः। लान्ताः। मोनोधातोः। पदान्त इति। झलीतितुयद्यपि प्राचानुवर्तितं तथापिका शिकादावभावात् निष्फलत्वाच्चोपेक्ष्यम्। किमः कः। ननुइमः इत्येवसूत्र्यताम्। त्यदादीनामिमोः स्यादु इतिव्याख्यास्यते॥ ॐ ब्रूयात्। नचतिसृणामि त्यत्रचारितार्थ्यम्। षडित्यत्रत्रेरित्यनुवृत्त्यासिद्धेरित्युक्तम्। गौणेस्याप्रवृत्तौप्रियचतसृणामित्यत्रचारितार्थ्येनभाष्यासङ्गतेः। रु नद्याप इतिन्यासेतुनभाष्यतात्पर्यं, त्रिशब्दनिरत्तिपरभाष्यासंङ्गतेः। नैकमुदाहरणमित्यस्यासङ्गतेश्च। गौणेनुटोऽप्रवृत्तिसाधकभाष्यान्तराभावाच्च। नचैवं पदं दत्तामित्यादौ भूतपूर्वगत्याश्रयणेऽतिप्र सङ्गः। ह्रस्वत्वंनाममात्राकालिकात्वम्। तत्रसामर्थ्याद्विशेषणभूतमात्राकालिकत्वांशएवभूतपूर्वगत्याश्रयणम् नतुविशेष्यभूताच्त्वांशेपि इत्यदोषादि तिदिक्। इमिति। अत्रत्यदादीनामइत्यनुवर्ततेतदाह। त्यदादीनामिति। अतएवसिद्धान्तेउपसर्जनेनेतिभावः ॥

द्वेः प्रागिति। तेन द्विपर्यन्तानां त्यदादित्वेपि न दोषः। किंसर्वनामबहुभ्य इत्यत्र किंग्रहणं न कार्यमिति भावः। नचेमौ इत्यत्राप्यापत्तिः। अङ्गकार्ये कृते इति निषेधात्। आरम्भसामर्थ्याच्चेति। त्यदादीनामः इत्यनेनैवान्त्यादेशेसिद्धे इम इत्यारम्भसामर्थ्यादित्यर्थः। ककः इति स्यादिति। ममतु तन्मध्यपतित इति न्यायेन साकच्कस्य किंश ब्दत्वात्सिद्धम्। निर्दिश्यमानस्येति परिभाषा तु नात्र प्रवर्तते। कादेशविधानसामर्थ्यात्। नचसुबन्तात्तद्धितोत्पत्त्या विभक्त्युत्पत्तेरनन्तरं परत्वात्कादेशे कृतेऽकचि ककः इ

किंग्रहणस्य द्वेः प्राक् पठिष्यते। नानर्थक इति निषेधादारम्भसामर्थ्याच्चालोन्त्यविधिर्न भविष्यति। नत्विङ्कादेशेनेत्याशङ्क्याह। अकच्सहितस्यापी ति। द्वेरत्वेकक इति स्यात्। कुतिहोरित्याद्यर्थञ्च किम इति अवश्यं वक्तव्यमिति भावः। नन्वेवं गणकार्यत्वाभावादुपसर्जनत्वेपि स्यात्। मैवम्। त्यदा दीनामित्यनुवर्त्यवचनविपरिणामेन त्यदादेः किम इति व्याख्यानादनुवृत्ति सामर्थ्याच्चेह सूत्रे द्विपर्यन्ता इति नियमस्य त्यागात्। उत्सर्ग इ ति। तेन तदोः सः सावितिसूत्रेऽनन्त्ययोरिति किम्। हे स इति भाष्यम्। भो अच्युत भवन्नच्युत इति च न विरुध्यत इति भावः। नास्तीत्यत्र मूलं तु प्र चुरप्रयोगादर्शनमेव। यत्वाहुः। इदमस्तु सन्निकृष्टं समीपतरवर्ति चैतदोरूपम्। अदसस्तु विप्रकृष्टं तदिति परोक्षे विजानीयादिति वचना देवंविधस्यार्थस्याभिमुखीकरणानर्हत्वादिति, तदापाततः। सन्निकृष्टादिशब्दानामिव इदमादीनामपि संबोध्यसमर्पकत्वबाधकाभावात् ॥

त्येव स्यादिति वाच्यम्। प्रातिपदिकादित्येवाधिकारात्सुपः शब्देन निमित्तत्वेनानाश्रयणादङ्गसंज्ञानिमित्तप्रत्ययानपेक्षणेन चाऽकचोन्तरङ्गत्वादिति भावः। किम इत्यव श्यमिति। कुतिहोः क्वातीत्यादेशे क इत्यश्रवणापत्तिः। उतिहोरतीति न्यासे उकारस्यात्वादेशत्वापत्तिरेतद्वर्णनानर्थक इत्यारम्भे गौरवम्। अङ्गवृत्तपरिभाषयाक्वेत्यत्र गुणस्य वा रणे च क्लेश इति भावः। किमो द्वेरनन्तरं पाठेपि दोषाभावमाह। अनुवृत्तीति। द्वित्वं न विरुध्यत इति। यत्त्वप्ययं प्रयोगो निपातमादाय सिद्ध्यति तथापि विभाषा भवदिति वार्त्तिकं न

वि॰ ज्ञातइतितार्थम्।

विप्रकृष्टस्यापीति। परोक्षस्यचेत्यपिबोध्यम्। पिपर्त्तीमिति। अयंनिर्देश एवास्यांशस्यज्ञापकमित्याहुः। अनादेशः स्यादिति। तत्रकृतेसकृदितिन्यायेनपुनः स्मेर्नस्यादिति भावः। नित्यत्वादिति। लक्ष्यानुरोधेनबाधकाबाधितप्रसङ्गस्यैवात्रग्रहणान्नाऽनादेशोनित्यइतिभावः। अपूर्वंबोधयितुमिति। अज्ञातज्ञापनमेवोभयत्रापिविधानंन तु प्रवर्तनाविषयत्वमित्यर्थः। नविधीयन्ते। नाज्ञाताबोध्यन्ते। अनुवाद्यत्वेनेति। सखीवाक्यमिदम्। तत्रकेसेआरोपितभीरुत्वंभाविकामित्यवहारसङ्गोपनायानुवाद्यत्वे

विप्रकृष्टस्यापिबुद्ध्यासन्निधापितस्यबहुशः संबोधनदर्शनाच्च। तथाचभट्टिः। हापितः क्वासिहेसुभ्रुबह्वेवंविललापसः इति। अनाप्यकः। प्रत्याहारइति। ननुटा पूर्विभक्तावितिविशेषणादितिभावः। अनभ्यासविकारइति। तेनभृञामित्। अर्तिपिपर्त्योश्चेतीत्वेऽलोन्त्यविधिरस्त्येव। बिभर्तिपिपर्ति। ननुस्मायादेशात्पर त्वादनादेशः स्यादित्याशङ्क्याह। नित्यत्वात् ङे स्मैइति। कार्यविधातुमिति। अपूर्वंबोधयितुमित्यर्थः। इषदर्थेक्रियायोगे इतिश्लोकेतुइषदर्थादयोन विधीयन्ते। किंत्वनूद्यन्ते। तेनएनादेशोन। एतेननक्तंभीरुरयंत्वमेवतदिमंराधेगृहंप्रापयेत्यपिव्याख्यातम्। भीरुत्वस्यानुवाद्यत्वेनविवक्षितत्वा त्॥ मान्ताः॥ सुगाणिति। अनुनासिकस्यक्विझलोरितिदीर्घः। नचतस्मिन्कर्तव्येऽल्लोपणिलोपयोः स्थानिवद्भावः शङ्क्यः। दीर्घविधौतन्निषेधात्। क्वौ विधिंप्रतिनिषेधाच्चेतिभावः। एतेनसुगण्णीशइतिप्राचोग्रन्थंगणयतेः क्विबितिव्याचक्षाणाउपेक्ष्याइतिध्वनयति। तदीयोग्रन्थोपिसमर्थनीय इत्याग्रहेतुइत्थंसमर्थ्यताम्। सर्वलोपित्वेनक्विबिवाचरतीतिक्विप्। क्विप्शब्दादाचारक्विबन्तात्कर्तरिक्विप्। तेनविजित्यर्थः। णान्ताः॥

नैवविवक्षितमितिभावः। नन्दनिदेशातइति। नन्दनीयनिदेशादित्यर्थकंबोध्यम्। दीर्घविधाविति। नपदान्तसूत्रेसपादसप्ताध्यायीस्थदीर्घस्यापिग्रहणमित्य र्थ स्यचिण्णमुलोरितिसूत्रेभाष्येध्वनितत्वादितिभावः। उपेक्ष्याइति। दीर्घप्राप्तेरितिभावः

म॰ श॰ ८० व्याख्यानन्त्विति। तुनाऽरुचिर्बोधिता। सप्तम्यन्तपाठेपि न लुमतेति निषेधानित्यत्वेन वा नपुंसकानामित्यस्य सिद्धिरिति लाघवमस्तीति। औचित्यमेव दर्शयति। एवं हीति। सामान्यशास्त्रेति। प्रा
प्तस्य पुनर्विधानसामर्थ्येन सामान्यशास्त्रस्य संकोचस्तदितरपरतारूप इत्यर्थः। संकोचश्च नलोप विधौ पूर्वत्रासिद्धमित्यस्यानुपस्थितिरूपः। अर्थवत्सूत्रे चार्थवत्प
देनार्थवत्समुदायाग्रहणरूपः। एवं चास्य विधित्वं स्पष्टम्। इदमेव च नियमस्य विध्यपेक्षया गुरुत्वम्। निषेधवादिनोप्यस्यावश्यकत्वम्। अन्यथा विकल्पापत्तेः। सा
मान्यशास्त्रसङ्कोचे चान्यत्र तद्भावस्याप्यर्थतः सिद्धेरर्थसिद्धं तमादाय नियमशास्त्रेषु प्रतिषेधत्वव्यवहारोपि कृत्तद्धितेति सूत्रस्य समासग्रहणकृतनियमेन बा
ध्यसामान्यचिन्तया कृदंशस्यापि सङ्कोच इति मूलके नोपदंशमित्यादौ न कृदन्तत्वप्रयुक्तं प्रातिपदिकत्वम्। पञ्चपञ्चनखा भक्ष्या इति शास्त्रेणापि प्रापकप्रमाण
उपधादीर्घ इति। सर्वनामस्थाने चासंबुद्धावित्यनेन। ङौ संबुद्धौ चेति। प्राचामनुरोधेनेत्थं व्याख्यातम्। ङ्यन्तस्य संबुद्ध्यन्तस्य च पदस्येति षष्ठ्यन्ततया
व्याख्यानं तूचितम्। एवं हि प्रत्ययलक्षणं सुलभमिति तदर्थं निषेधसामर्थ्यानुसरणक्लेशो न कर्तव्यः। पूर्वस्मादपि विधौ स्थानिवत्त्वमाशङ्क्याह। न चेति।
षाष्ठीमिति। वाह ऊठित्यत्र ज्ञापितत्वेन तद्देशस्थत्वादिति भावः। इत्यसिद्धत्वादिति। नियमसूत्राणां विधिरूपेण प्रवृत्तिः सामान्यशास्त्रतात्पर्यसं
कोचकता चेति पक्षस्य द्युद्भ्यां लुङीति सूत्रे भाष्यकृताध्वनितत्वादिति भावः ॥
रागप्राप्तभक्षणस्य तदितराविषयत्वरूपसंकोचकल्पनं तेनान्येषां भक्षणाभावो गम्यते तद्भक्षणे प्रायश्चित्तं च गम्यते। पतिः समास एवेत्यादौ एवकारो घिसंज्ञा शास्त्र
स्य समासाघटकपतिशब्दाविषयकत्वरूपसंकोचस्य स्फुटं द्योतनाय। पतिघटितसमासान्यसमासाविषयकत्वरूपसंकोचो मा भूदिति। अन्ययोगव्यवच्छेद एवका
रार्थ इति तु सामान्यप्रमाणसंकोचफलितमर्थमादाय नेयम्। द्युद्भ्यो लुङीति। द्युद्भ्यो लुङीति सूत्रमुपक्रम्यानुपराभ्यामिति सूत्र इत्यर्थः। पञ्चपञ्चनखा भक्ष्या राम॰ ८०
इत्यत्र भक्ष्यनियमेः भक्ष्यप्रतिषेधो गम्यते इति ग्रन्थेन पस्पशायां च भाष्ये स्पष्टमेतत्। भक्ष्यनियमे। प्राप्तभक्ष्यस्य पुनर्विधाने इत्यर्थः ॥

निषेधरूपेणेति।सुबादिपदस्य स्वव्यतिरिक्तविधौ लक्षणया भवतीत्यस्य च नभवतीत्यर्थे लक्षणयेतिभावः।निषेधश्च नलोपविधावनुवर्तमानपूर्वत्रासिद्धत्व
स्य।अतएवान्यस्वार्थहानिप्राप्तबाधपरार्थकल्पनारूपदोषत्रयं मीमांसकैरुच्यते परिसंख्यापदेन चायमभ्युपगम्यते इति बाध्यम्।इतिपक्षेत्विति।अनेनारुचि
र्बोधिता।तद्बीजं तु लक्षणाप्रयुक्तगौरवं फलाभावश्च तदभावे लक्षणाया अनौचित्यं चेति।इतिसमासे इति।इत्यनुवर्तमाने तद्धितार्थेति समासे इत्यर्थः।स्वरविधौ व्यञ्ज
नमविद्यमानवदिति तु नात्र।तस्य स्वरोद्देश्यक विधावेव प्रवृत्तेः।नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिष्विति सूत्रे देवताद्वन्द्वे उत्तरपदप्रकृतिस्वरनिषेधके

निषेधरूपेण प्रवृत्तिरिति पक्षे तु पूर्वत्रासिद्धमित्यनेनेति बोध्यम्।सुब्विधिमुदाहरति।आलमित्यादिना।स्वरविधौ तु पञ्चार्मम्।दिक्संख्ये संज्ञाया
मिति समासे नलोपे कृते अवर्णान्तं पूर्वपदं जातमिति अर्मे चावर्णद्व्यच्त्र्यजित्ति पूर्वपदाद्युदात्तत्वं प्राप्तं नलोपस्यासिद्धत्वान्न भवति।सञ्ज्ञाविधौ पञ्चेत्य
त्र नलोपे कृतेऽपीत्यादिना ङीप्रत्यये वक्ष्यति।कृतितुग्विधौ तु वृत्रहभ्याम्।ह्रस्वस्यपिति कृतितुगिति तुगन।कृतिकिम्।वृत्रहच्छत्रम्।छे चेति तुक्स्यादेव।प्रतिदिवेति।
कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिव इति कनिन्।हलि चेति दीर्घः।प्रत्तूपधायां चेत्युपन्यस्तम्।तन्न।दिवेर्वकारस्यानुपधात्वात्।इन्नहन्। ७ पृथिव्यादिपर्युदास
रूपधर्मिग्राहकस्य तथैव सत्वात्।अतएवाचः कर्तृयकि शतुरनुमो नद्यजादी इत्यादौ अच इति अजादीत्यादि च चरितार्थम्।अतएव राजवतीत्यादौ नलोप
स्यासिद्धत्वाद्वन्वतीशब्दत्वादन्तोवत्या इति स्वरो न।उदश्वित्वान्नित्यत्र ह्रस्वनुड्भ्यामिति मतुबुदात्तत्वं च नेत्याकरः।इदं समासस्येति सूत्रे भाष्ये स्पष्टम्।इदमेवाभिसं
धाय यतोऽनाव इत्येतन्निषेधमूलकं हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवदिति परिभाषान्तरं भाष्ये तत्रैव स्पष्टमुक्तम्।अनुपधात्वादिति।धातोरुपधाभूतरेफव
कारयोर्हल्परयोरिति तदर्थादिति भावः।प्रतिदिवन्शब्दादाचारक्विप्यपि अनुनासिकस्येति दीर्घ इदं रूपं दुर्लभं,वस्तुतो हलन्तेभ्य आचारक्विपो नभिधानमन्यत्रोक्तम् ॥

म॰ यु॰ ९१

तथेति। यथोपधाग्रहणादकृदिति दीर्घाव्यावृत्तिस्तथासर्वनामस्थानग्रहणासंबद्धोपधापदानुवृत्तेरस्यव्यावृत्तिरित्यर्थः। पञ्चमीसमासोमास्त्विति। सार्वत्रिकोमास्तुअनित्यत्वादित्यर्थः। तदनित्यत्वेनस्थानिवत्त्वाभावेएकाज्त्वाभावादेवैकाजुत्तरेतिणत्वव्यावृत्तिः सिद्धेतिभावः। णत्वग्रहणमिति। माषवापिनावित्यत्रतद्धितस्यप्रयोजनं,तच्चबहिरङ्ग तयायस्येतिचेत्यल्लोपासिद्धत्वेनापिसिद्धमितितन्मास्त्विति भावः। इदन्त्रिपाघान्तत्वरिभाषाप्रवृत्त्यभिमानेन।

उपधायाइति। उपधादीर्घस्यैवायंनियमः। तेनवृत्रहायतइत्यत्रअकृत्सार्वधातुकयोरितिदीर्घोभवत्येव। तथावृत्रहणीइत्यत्रानु नास्ति कस्यकिभ्फलोरितियोदीर्घः सोपिनियमेनव्यावर्त्यतेउपधादीर्घमात्रापेक्षयानियमविज्ञाना‾दितिभावः। हन्तेरत्पूर्वस्येतिसूत्रंयोगविभागेनव्याचष्टे। हन्तेः। प्रसङ्गादस्योदाहरणमाह। प्रहण्यादिति। प्रकृतोपयुक्तमंशमाह। अत्पूर्वस्य। एकाजुत्तरेति। नचाल्लोपेकृते एकाच्त्वेनास्तीतिवाच्यम्। पूर्वस्मादपिविधौस्थानिवत्त्वात्। नचपूर्वत्रासिद्धेनस्थानिवदितिवाच्यम्। तस्यदोषः संयोगादिलोपलत्वणत्वेष्वित्युक्तेः। यत्तुअट्कुप्वाङितिसूत्रेरत्रघ्नः स्रुघ्नइतिभाष्यमुपादायकैयटेनव्याख्यातंप्रातिपदिकान्तेतिणत्वप्रसङ्ग इतितत्पञ्चमीसमासोमास्त्वित्याशयेन। तस्यदोषइत्यत्रणत्वग्रहणंमास्त्वित्याशयेनवाबोद्धव्यम्। णत्वग्रहणप्रत्याख्यानंतुभाष्येध्वनितंकौस्तुभेप्रपञ्चितम्। वस्तुतस्तुकुमतिचेतिनित्यंणत्वमिहन्याय्यम्। सर्वथापिवैकल्पिकंनित्यंवाप्राप्तंणत्वंनियमेननिवर्त्यतइतिसिद्धम् ॥

भाष्येध्वनितमिति। अन्यथासिद्धमाप्रपवनीत्येतस्यतदुदाहरणत्वोक्त्येत्यभिमानः। न्याय्यमिति। तस्यप्रातिपदिकान्तेत्यपवादत्वादितिभावः। नचसन्निपातपरिभाषयातदप्राप्तिः। सर्वेणत्वेषुकवर्गव्यवायाश्रयणेनतद्विषयेतस्याअनित्यत्वावश्यकत्वात् ॥ राम॰ ९१

हादेशेष्विति। हादेशः कवर्गव्यवाये इत्यर्थः। आर्षत्वाद्वार्तिके समासः। वार्तिके हादेशेष्वुक्ते द्विघण इत्यादौ पूर्वपदादिति णत्वं सिध्यति। तत्र हि हन्तेरप्रत्ययो घनादे
शाभ्यां। अतस्त्वागारैकदेश इति सूत्रे प्रघणप्रघाणयोः कृतणत्वयोरुच्चारणम्। तत्रापि हन्तेर्घनघनादेशविधानात्। न्याय्यत्वादिति। न च वार्तिकरीत्या वृत्रहाणीति
णत्वमापाति। सूत्रारम्भे तु नेति वार्तिकारम्भस्यैव ज्यायस्त्वात्कथं न्याय्यत्वं बहिरङ्गत्वेन दीर्घस्यासिद्धत्वेन प्राघानीत्यत्र दोषः। तथा सूत्रारम्भे प्रघना घन इत्यत्र णत्वं प्रा
भाष्ये तु कुव्यवाये हादेशेषु प्रतिषेधो वक्तव्यः। किं प्रयोजनम्। वृत्रघ्नः। स्रुघ्नः। प्राघानि। हन्तेरत्पूर्वस्येति अत्पूर्वग्रहणं न कर्तव्यं भवतीत्युक्तम्।
एतच्च वार्तिकाशयवर्णनमात्रं न तु वस्तुस्थितिः। वार्तिके न सूत्रावयवप्रत्याख्यानापेक्षया योगविभागमाश्रित्य वार्तिकार्थोपसंग्रहस्यैव न्याय्यत्वा
दिति दिक्। माधवेनोक्तमिति। इत्थं हि तदीयो ग्रन्थः। भसंज्ञायाम् ल्लोपे उत्तरपदमनञ्चकं स्यात्। स्थानिवद्भावश्चाल्विधित्वान्नेति एकाजुत्तरपदत्वाभ
वात् प्रातिपदिकान्तनुम्विभक्तिषु चेति विकल्पो भवति। वृत्रघ्नो वृत्रघ्ना इति। तद्भाष्येति। किं चाल्विधित्वान्नेत्यसंगतम्। अल्विध्यर्थमेव अचः परस्मि
न्नित्यस्यारम्भात्। तस्याप्रवृत्तौ युक्त्यन्तरस्यैव वाच्यत्वात्। विकल्प इत्यप्यसंगतम्। कुमति चेति सूत्रस्य दुर्वारत्वाद् इत्यवधेयम्। मघवा बहु
लम्। अर्वणस्त्रसावनञ इति सूत्रात् त इत्यनुवर्तते। तदपेक्षया च मघवेति षष्ठ्यर्थे प्रथमा तदाह। मघवन्शब्दस्येति। अधातोरिति। अधा
तुभूतपूर्वस्यापीत्यर्थः। अञ्चतिग्रहणं हि नियमार्थम्। धातोश्चेद्भवति अञ्चतेरेवेति ॥ ७७ नोति वार्तिकरीत्या तु नेति वाच्यम्। आत्पूर्वस्येत्यनेन ह्रस्या
निकवर्गाभाववद्धन्तेरेवोपलक्षणेनादोषात्। प्रघणप्रघाणयोः कृतणत्वयोरगारैकदेश इति सूत्रे उच्चारणमत्रत्यात्पूर्वग्रहणस्योक्तार्थोपलक्षणत्वे मानम्। णत्वनि
पातनं कस्त्रनापेक्षयोक्तार्थतात्पर्यग्राहकत्वौचित्यादिति भावस्तदेतद्ध्वनयतोक्तम्। वार्तिकार्थोपसंग्रहस्येति। भूतपूर्वपर्यन्तमधातुपदस्य लक्षणायां बीजमाह। अञ्चतिग्र
हणं हीति। अञ्चतेरिति। नलोपिनोऽञ्चतेरित्यर्थः। नलोपेन निर्देशात्। सामान्यापेक्षश्च नियमस्तेन पर्णध्वद्गोमत्यतेः क्विपि गोमानित्यादावुगितश्चेति ङीब्विपिनेति दिक्। स्पष्टं चेद

म०श० कैयटेनेति। अयंच कैयटः केशाद्व इति सूत्रस्थः। अर्वणस्तृ इत्यादि। अर्वणो मघोनश्च न शिष्यं यतस्तच्छान्दसं सामान्यतो बोधितानामपि केषांचिद् घ्रुधात्वादिवन्नि
९२ यतविषयत्वादित्यर्थः। एवंच छन्दसि दृष्टानुविधिरिति न तदर्थः शास्त्रारम्भ इति तात्पर्यम्। एवं हि छान्दसलक्ष्यसाधकसर्वसूत्रप्रत्याख्यानं स्यादतः प्रकारान्तरेण
पि सिद्धिमाह। मतुब्वन्योरिति। ऋ धातोर्विजन्तान्मघशब्दाच्च मतुब्वनिभ्यां रूपद्वयसिद्धिरिति भावः। ननु सूत्रारम्भे नित्यस्तृ आदेशोऽर्वणः प्रत्याख्याने तु पक्षे तदभावोपि
स्यत आह। छन्दस्युभयेति। आदेशतदभावेत्यर्थः। तदुदाहरणमिमान्यर्वणः पदानीति। एतत्प्रत्याख्याने दीर्घो घकारोदात्तत्वं च लभ्यते। एतेनास्य छान्दसत्वाच्छन्दसि त्रा

एवंच यो मानिवाचरति गोमानित्यादौ संप्रति धातुत्वेपि विद्ध्यर्थम धातुग्रहणम्। एतच्चं मूल एव स्फुटीभविष्यति। ननु कुर्वन् इत्यादाविव संयोगान्त
लोपस्यासिद्धत्वेन नान्तत्वाभावा दीर्घत्वं न स्यादित्याशङ्क्याह इहेति। बहुलग्रहणादिति। क्वचिदन्यदूवेत्यर्थकादित्यर्थः। निपातनादिति। मघेर्हका
- रस्य घकारः अवुगागमः कनि प्रत्ययश्चेत्यस्य त्रितयस्य निपातनादित्यर्थः। प्रत्याख्यातमिति। तथाच छन्दसीवनिपौ वित्यत्र कैयटेनोक्तम्। मघवा
बहुलमित्येतन्न कर्तव्यं श्वन्नुक्षन्निति निपातनान्मघशब्दान्मतुपा च भाषायामपि शब्दद्वयस्य सिद्धत्वादिति। यत्तत्र वार्तिककृतोक्तम्। अर्वणस्तृम
घोनश्च न शिष्यं छान्दसं हि तत्। मतुब्वन्योर्विधानाच्च छन्दस्युभयदर्शनादिति ॥ ७ देशपक्षे मघवन्नित्येव रूपं तच्च मतुबन्तस्य छान्दसत्वाद्दीर्घाभावेन सा

ध्यमिति प्रत्याख्यानाशयः। लोके तु मतबन्ते दीर्घो भवत्येवेति परास्तम्। वार्तिकाक्षरस्वारस्येन तथा प्रतीतेर्मघवान् जीर्णीत्यादौ वेदेपि दीर्घस्य पठ्यमानत्वाच्च। तदे
तत्कैयटेनोक्तं भाषायामसाधुतेति। केशाद्व इति सूत्रस्थ उक्त कैयटस्तु एतत्सूत्रस्थवार्तिकविरोधात्स्वग्रन्थविरोधाच्च हेय एवेति ध्येयम्। यत्तु छान्दसा अपि क्वचिद्भाषा रा०म०
यामित्याश्रित्य भाषायां प्रयोग इति। तन्न। तज्ज्ञापकस्यैव यस्यासुमुपो मतुबिति सूत्रप्रयोगस्य छन्दोवत्सूत्राणि भवन्तीति भाष्यकारोक्त्यान्यथासिद्धत्वादित्याशयः ॥ ९२

तद्धनिवन्नेति। इदं चिन्त्यं न शिष्यं छान्दसं हि तदिति सामान्यप्रवृत्तवार्तिकस्य सङ्कोचे मानाभावात्। कविप्रयोगाणां बहुशः प्रामादिकानां दर्शनेन तेषामार्षवचनसंकोचे
यच्च तद्व्याख्यावसरे कैयटेन भाषायामसाधुतेत्युक्तं तद्धनिवन्नमध्योदात्तमघवन्शब्दविषयकम्। छन्दस्येव वनिविधानात्। अतो न कैयटस्य पूर्वाप
रविरोध इति ध्वनयन्नाह। छन्दसीत्यादि। अन्तोदात्तं विति। यद्यपि श्वन्नुक्षन्नित्यत्र कनिनन्ता एते इत्युज्ज्वलदत्तादिग्रन्थमहिम्ना आद्युदात्तं लभ्यते त
थापि उक्षा समुद्रो अरुणः सुपर्णः पूषा त्वेतो नयतु अग्निर्मूर्धा निर्मज्ज्ञानं न पर्वणो जभार त्वमर्यमा भवसि यत् इत्यादौ तत्सूत्रोपात्तानामुक्षन्नादीनाम
न्तोदात्तत्वस्य निर्विवादतया कनिप्रत्यय एवोचित इति भावः। मघवा बहुलमिति सूत्रे मघोन इति प्रतीकमुपादाय मघशब्दस्याकारस्य यस्येति लोपमा
शङ्क्यनैतदस्ति। अन्यदेव हीदमव्युत्पन्नं प्रातिपदिकं तथाहि भाषायामप्यस्य प्रयोगो दृश्यते इति वदन्न्यासकारोऽपि मघवन्शब्दस्यान्तोदात्तत्वे भाषा
यामपि साधुत्वे चानुकूलः। एवं स्थिते मतुपमाश्रित्य त्रादेशं प्रत्याचक्षाणौ भाष्यवार्तिककृतौ मघवानित्यत्र त्रादेशपक्षेऽपि दीर्घं स्वीकुरुत एव। फलभेदे
प्रत्याख्यानासम्भवात्। अतो बहुलग्रहणान्नासिद्धत्वमिति यदुक्तं तद्भाष्यादिसंमतमेव। यत्त्वाहुः। मतुप्पक्षेऽपि छान्दसत्वान्न दीर्घ इत्येवं भाष्यस्या
शय इति। तन्न। मतुबन्तस्य छान्दसत्वे मानाभावात्। उदाहृतभट्टिकैयटविरोधाच्चेति दिक्। एतेन श्वन्नुक्षन्नित्यत्र निपातितस्य मघवन्नित्यस्य त्रादे
शे दीर्घाभावान्मघवानिति क्षीरस्वामिग्रन्थः प्रत्युक्तः। तथा च कातन्त्रसूत्रं सौ मघवान् मघवा चेति। विचारचिन्तामणावपि मघवानेव मघवेत्युक्तम्।
काशिकायामपि दीर्घ एव दृश्यत इत्यलं बहुना। अर्वणस्तृ। ऋधातोर्विचि गुणे च अरिति रूपं तस्मान्मतुपि अर्वन्तावित्यादि सेत्स्यति। छन्दसी वनिपा
विति वनिपि वेदे अर्वेति। लोके तु ऋधातोरेव वनिपि सेत्स्यति। रूढिशब्दश्चायम् ।
न मानत्वमिति दिक्। उचित इति भाव इति। तथा च वनोर चेति सूत्रे भाष्ये मघोनीत्यत्र प्राप्नोति मघवन्शब्दोऽव्युत्पन्नं प्रातिपदिकमिति ॥

प्रायुङ्क्तेति। अत्र यद्वक्तव्यं तदुक्तम्। इति पक्ष इति। अस्थिदधीत्यत्रोदात्तपाठेन सिद्धे उदात्तग्रहणेन शास्त्रेऽभिमतं स्वरूपेणोच्चारितगुणस्याविवक्षया भेदकत्वज्ञाप
नादिति भावः। उञः ऊँ इत्यत्र नासिकाव्यापारेण क्लेशाधिक्येनोच्चारणादानुनासिक्यं विवक्षितमिति सर्वेषां समानम्। भेदकत्वेपि तपरसूत्रस्यानणि विध्यर्थत्वाद्दोषः
वाजिवाहार्वगन्धर्वहयसैन्धवसप्तय इत्यमरकोशात्। अतोऽर्थोपि न भिद्यते। तथापि नान्तनान्तयोः सर्वत्र प्रयोगे प्राप्ते व्यवस्थार्थमिदं सूत्रं तृज्वत्क्रोष्टु
रिति त्रिसूत्रीवत्। यत्तु हरदत्तेनोक्तम्। अर्वन्मघवन्शब्दयोर्भाषायां स्तमधुत्वमेव। अर्वणश्च मघोनश्चेत्यादि भाष्यादिति। तदापाततः। भाष्यस्यावि
शेषविषयतायाः प्रागेवोक्तत्वात्। तथा च श्रीहर्षः। वाहैरलुप्यत सहस्रदृगर्वगर्वइति प्रायुङ्क्त। ननु गुणा अभेदका इति पक्षे सूत्रे ननु नासिकोच्चारणे
पि आन्तरतम्यादनुनासिकः स्यादित्याशङ्क्याह। आ आदिति। मत्त्वाहुः। इहानुनासिको न। अमणत्वेन सवर्णग्रहणाभावात्। मवत परस्तत्कालस्येति
अनणि विध्यर्थमिति वाच्यम्। भाव्यमानः सवर्णान्न गृह्णातीति निषेधात्। गुणानामभेदकत्वेपि शुद्धैकव्यक्तेः सूत्रे निर्देशान्नातिप्रसङ्ग इति। अत्रेदं
वक्तव्यम्। अनणि विध्यर्थमिति शङ्कायां भाव्यमान इत्याद्युत्तरमसङ्गतम्। तस्याण्विषयत्वात्। यदाहुः। भाव्यमानोऽणित्यादि। अन्यथा वो कुरित्या
दावपि निषेधापत्तेः। तत्रोदित्करणसामर्थ्यान्न निषेध इति चेत्। किमनेन बकबन्धनप्रयासेन। तपरस्तत्कालस्येति सूत्रे प्रत्ययग्रहणस्य भाष्यकृ
ताऽननुवर्तितत्वाच्च। किञ्च शुद्धैकव्यक्तेरप्यसंगतम्। अभेदकत्वे दोषस्य दुरुद्धरत्वात्। एकाव्यक्तिर्गृह्यत इत्युक्त्याहि व्यक्त्यन्तरं न निर्दिष्टमित्यर्थः फ
लितः सत्यं गुणानामभेदकत्वे सत्येव सङ्गच्छते नान्यथेत्यास्तां तावत् ।
तत्राप्रत्ययग्रहणानुवृत्तौ मानाभावादित्यपि बोध्यम्। अननुवर्तितत्वाच्चेति। एवं च तत्र सूत्रे तत्सम्बन्धे मानाभावः। एवं च भेदकत्वेपि तपरसूत्रस्यानणि विध्यर्थत्वाद्दोष
इति भावः। नान्यथेति। एवं च गुणानामभेदकत्वेपीत्युपक्रम्य नात्र प्रयुक्तिरसङ्गतेति भावः ॥

मूलशैथिल्यादिति। सवर्णग्रहणाप्राप्तेरितिभावः। तद्विशिष्टस्येति। यदूतिस्थानिश्रवणानदन्तविद्धभावाच्चेतिभावः। अयम्। इनस्त्रियामित्येषः। एवंचऋक्पूरित्येषत्वेन निषेधेनापिवारयितुंशक्यइतिभवः। श्योन्यश्चेति। योन्यइतिसूत्रमित्यर्थः चादिलोपः। प्राप्तमिति। तदन्तग्रहणादितिभावः। नभवतीति। नचटिलोपेनविभक्तिनिमित्तकोऽन्यत्रापितत्प्रवृत्तेरितिवाच्यम्। प्रकृतोदाहरणेविभक्तिनिमित्तत्वमात्रेणतत्प्रवृत्तेः। अतएवयुवोरनाकावितिसूत्रभाष्येम्युवेत्यादेः परिभाषाफलत्वेनोपन्यासः

एतेनभाव्यमानोणूसवर्णान्नगृह्णातीतिनिषेधादाकारोनानुनासिकइतिप्रसादग्रन्थोपिप्रत्युक्तः। दीर्घस्यानणृत्वेनमूलशैथिल्यात्। श्योन्यः। स्थान्यादेशौद्वावपिनचकौ। श्येन्यइत्येवसिद्धेइतोदुबवनम् ऋभुक्षिनर्थम्। न्यादेशइति। केचित्तुअन्यादेशमाहुः। तत्राकारप्रश्लेषोव्यर्थः। यत्तुन्यासकृताप्राचाचोक्तमनेकाल्त्वेपिथकारमात्रस्यायमादेशोनिर्दिश्यमानस्यादेशाभवन्तीतिन्यायादिति। तन्न। तद्विशिष्टस्याप्रसङ्गेनोक्तपरिभाषायाइहविषयाभावात्। प्रसङ्गादाह। स्त्रियामिति। सुपथीति। इनस्त्रियामितितुकबनकृतः। समासान्तविधेरनित्यत्वात्। युवोरनाकावितिसूत्रेसुपथीतिभाष्याच्चानपूजनादितिनिषेधस्यतुनायंविषयः। षषः प्राचीनेपेवंसदितिवक्ष्यमाणत्वात्। पथिमथीत्यत्रयोन्यश्चलिङ्ग· विशिष्टपरिभाषयाप्राप्तंविभक्तौलिङ्ग· विशिष्टाग्रहणान्नभवति। शाविति। यत्तुप्राचाइतोत्सर्वनामस्थानेथोन्थइतिसूत्रद्वयेसुटीतिव्याख्या। तन्न ॥

संगच्छते। परत्वादित्यभ्युच्चयः। नचाभिव्यक्तपदार्थाइतिन्यायेनकथमत्राल्वादीनांप्रवृत्तिः। तस्यन्यायस्यपदकार्यविषयत्वेनतपरकरणादनित्यत्वेनचेहाप्रवृत्तेः। नचनकेवलः पथिशब्दः स्त्रियामस्तीतियुवोरनाकावितिसूत्रस्थभाष्यप्रामाण्यादेभ्यः क्यजन्तेभ्यः क्विपोनभिधानमितिवाच्यम्। स्त्रीप्रत्ययाप्रवृत्त्यातदङ्गीकारेप्यसतेः विभक्तौलिङ्ग· विशिष्टाग्रहणमित्येतत्प्रयोजनकथनावसरेहिभाष्येतदुक्तम् ॥

नयणिति। ननु तद्भावेपीयङ् दुर्लभः। सुब्विधावनर्वर्तिविभक्त्याश्रयनलोपस्यासिद्धत्वेनावर्णान्ताङ्गभावादिति वाच्यम्। सुप्त्वतद्व्याप्यधर्मनिमित्तकसुब्विधेरेव ग्रह
णात्। अतएव दण्डिष्वित्यादौ षत्वे नलोपस्यासिद्धत्वं न। न च न्यादेशे ङ्क्रन्तपरिभाषयानेयङ्। तस्या अनित्यत्वात्। न चेयङि कृते लत्वं दुर्वारम्। सन्निपातपरिभाषया
स्वातिरिक्ततद्विघातकस्य बाधेनादोषादिति भावः। न च प्रकृतिप्रत्ययविशेषापेक्षन्यापेक्षयान्तरङ्गत्वाद्यणेव स्यादिति वाच्यम्। प्रातिपदिकस्याप्यत्र प्रकृति
तदसत्। निर्बीजलक्षणापत्तेः। क्लीबे औङः श्यां सुपथीत्यत्रातिव्याप्तेः। सुपन्थानि पश्येति शसि रूपस्यासिद्धिप्रसङ्गाच्चेति भावः। अत्रेदमवधेयम्। पन्था
नमात्मन इच्छति पथीयति। ततः क्विप्। अल्लोपः। यलोपः। एकदेशविकृतस्यानन्यत्वात् पथिमथीत्यात्वम्। थोन्थः। पन्थाः। इतोत्सर्वनामस्थान इत्य
त्वन्न भवति। इतइतिकपरकरणात्। एरनेकाच इति यणं बाधित्वा परत्वादनित्यत्वाच्च थोन्थः। संयोगपूर्वकत्वान्न यण्। पन्थियौ पन्थियः। पन्थियम्
म्। पन्थियौ। भस्य टेर्लोपः। पथः। पथा। पथीभ्याम्। पथीभिः। इत्यादि एतेन इतोत्सर्वनामस्थाने इत्यत्र स्थानिन्यादेशे च तपरकरणं मुखसुखार्थमिति
हरदत्तग्रन्थः प्रत्युक्तः। यत्तु न्यासकारस्तदनुसारिणोन्ये च सुखीः सुतीरितिवत् पथीः पथ्यौ पथ्य इत्याद्युदाजहुः, तच्चिन्त्यम्। सावात्वस्य दुर्वारत्वात्।
यत्तु पथिमथ्यृभुक्षामिति नान्तप्रकृत्यनुकरणमेतदिति। तदप्यनर्थकम्। एकदेशविकृतन्यायस्य दुर्वारत्वात्। पन्थाइत्यत्रापि नित्यत्वात् विशेषवि
हितत्वाच्च पूर्वमात्वे कृते नान्तत्वेन न्यादेशाप्रसङ्गाच्च ॥

तिसूत्रेनन्त्ययोरित्युक्त्वा तत्प्रत्याख्यानाय भाष्यकृता दस इति योगविभागकरणेन च तादृशान्तरङ्गत्वस्य सर्वत्रानाश्रयणाच्चेति बोधनात्। सावात्वस्येति। न्यादेशस्या ॥ त्वेन हलादेरपि तन्निमित्तत्वेन यण्प्रकृतितन्निमित्तव्याप्यत्वाभावात्। न दोः सः सावि
प्युपलक्षणम्। यद्वि वैयात्यान्नात्रातिदेश इति वदेत्तत्राप्याह। पन्था इति। न्यादेशेति। अत्वस्याप्युपलक्षणम् ॥

नात्वादीति। नचनपदान्तेतिनिषेधः। अनान्तत्वान्नः क्वेइतिनियमेनसञ्ज्ञाविधौनलोपासिद्धत्वेनचेकारान्तेपदत्वाभावादेतेनपदान्तत्वादिकोसवर्णइतिह्रस्वेऽ
पुंदुर्वारमित्यपास्तमितिभावः। आश्रितत्वादिति। नत्वकृतिकसख्युरितिरूपेङसनिमित्तोयणक्यजकारनिमित्तकत्वेहिक्विनिमित्तकलोपापत्तिः। ङसनिमित्त
कस्यतुबहिरङ्गत्वेनासिद्धत्वान्नलोपःस्थानिवत्त्वेहिव्यवधानात्तन्निमित्तकोपिनस्यात्। अनुकूलत्वाच्चेति। आत्वादिप्रवृत्तिप्रतिबन्धकन्यायानामनित्यत्वेनैतद्धि
यदप्याहुः। अल्लोपस्यस्थानिवत्त्वान्नात्वादि कौलुप्तंनस्थानिवदितिनेहाश्रीयतेइति। तदपिचिन्त्यम्। तथासतियणप्रसङ्गात्। [illegible]स्यादितिसूत्रे
सुख्यौ: सुनीरित्यादिनिर्वाहाय [illegible] कौलुप्तंनस्थानिवदित्यस्यकेयटादिभिराश्रितत्वात्। इतोदित्यनन्तपरकरणंकुर्वतःसूत्रकृतोपिइहानुकूलत्वाच्चात
स्यादात्वम्प्रादेश[illegible]स्यैवेतिस्थितम्। एतेनमथीः। मथ्यौ। मथ्यः इत्याद्यपिप्रत्युक्तम्। मन्थाः। मन्थियौ। मन्थियः इत्यादेरेवन्याय्यत्वात्। यदपिक्रुभुक्षीः क्रु
भुक्ष्यौ क्रुभुक्ष्यइत्यादि[illegible]यणत्वंदुर्वारमित्युक्तमेव। ओङादिषुयणतुदुर्लभः संयोगपूर्वकत्वात्। तस्मात्क्रुभुक्षाः। क्रुभुक्षियौइत्यादिबोध्यम्। सान्तात्पट्
स्त्रीलिङ्गनिर्देशः संख्यांविशेषयितुम्। तत्सामर्थ्याच्चपूर्वत्रसंज्ञापरमपिसंख्याग्रहणमिहसंज्ञिपरंसंपद्यतइत्याशयेनाह। संख्येति। यत्तुप्राचाउपदेशकाले षां
न्तानाम्नाचेत्युक्तम्। तन्[illegible]नलोपेकृतेपीत्यादिस्वग्रन्थविरुद्धम्। संप्रत्ययनान्तत्वेपिउपदेशेनान्तत्वमासीदिति। कुमसिद्धत्वेन। नन्वेवंपूर्वापरविरोधःकाशि
कायामपितुल्यइतिचेन्नकिंतत् [illegible] षयेः प्रवृत्तिबोधकतयेतिभावः। विशेषयितुमिति। विशेष्यसाकाङ्क्षत्वात्तस्येतिभावः। तत्सामर्थ्याच्चेति। ष्णान्तेतिअनेनविशेष
णसामर्थ्यादित्यर्थः। संख्याशब्देतत्कार्यंभवादितिभावः। इहेति। अनुवर्तनमितिशेषः। सञ्ज्ञिपरमिति। यद्यपिसंज्ञित्वंबहुगणवतुडतिषपितदसंभवस्तथापिलोकेसं
ख्याप्रकारकबोधजनकाःपञ्चादयइहतत्वेनविवक्षिताइतिबोध्यम्। किमसिद्धत्वेनेति। नलोपेकृतेपीत्यादिग्रन्थप्रतिपादितेनेतिभावः ॥

म॰ श॰ वाधेदूषणे। अवयवेनेति। सान्तपदावयवेन षकारनकारेणेत्यर्थः। समुदायेन। सान्तपदेन। ससंबन्धिकः नित्यं संबन्ध्यन्तरसापेक्षो यथा गुर्वादिः। सापेक्षोपीति। सा
९५ पेक्षस्य समासे हि ततो बोधाभावो बीजं न च नित्यसमासपक्षे न हीजमस्तीति भावः। तदेवाह। वाक्यवदिति। व्यपेक्षा। आकाङ्क्षा। अवयवान्। गुर्वादीन्। संसृष्टस्य युज्यन्ते

बाधे हेतोरसाम्यात्किं हेत्वन्यदपि वाज्यतामिति न्यायात्। यत्तु व्याचख्युः। उपदेशकाले यौ षकारनकारौ तदन्ते त्यर्थः। देवदत्तस्य गुरुकुलमि
तिवत् समुदायेन संबन्धान्नासमर्थसमास इति। तदापाततः। अवयवेन संबन्धं व्याख्याय समुदायेन संबन्धादित्युक्तेः परस्परव्याघातात्। किं
च यत्रोपसर्जनपदार्थः ससंबन्धिकस्तत्र द्वयी विधा। सापेक्षोपि समस्यत इत्येका। प्रधानपदार्थस्यैव कुलादेर्गुर्वादिनेव देवदत्तादिनापि संबन्धः स
च गुरुणा सहैवेत्यत्रिर्भः देवदत्तेन सह तु तदीयगुरुत्वाद्यत्र रूपेण गुरुपदेन इति द्वितीया विधा। उक्तं च हरिणा। संबन्धिशब्दः सापेक्षो नित्यं
सर्वः समस्यते। वाक्यवत् सा व्यपेक्षा हि वृत्तावपि न हीयते इति। समुदायेन संबन्धो येषां गुरुकुलादिना। संसृष्टस्यावयवांस्ते तु युज्यन्ते तद्वता
सहेति च। अत्र उपसर्जनं ससंबन्धिकम्। येन द्वयी विधावकाशमासादयेत्। न चिन्तनमन्नशब्दः ससंबन्धिकार्थोस्तीति चेत्। उपदेशकाले
यौ षकारनकारावितिवदद्रिस्तदन्वयस्य स्पष्टत्वात्। अन्यथा हि उपदेशकालेन्तौ यस्येति वक्तव्यं स्यात्। वस्तुतस्तु तदपि न ॥

इत्यस्य तद्वारकसंबन्धेन युज्यन्त इत्यर्थः। उपसर्जनम्। अप्रधानपदम्। न ससंबन्धिकं न संबन्ध्यन्तरेण नित्यसाकाङ्क्षम्। साकाङ्क्षो नित्यसाकाङ्क्षः ॥ राम॰
९५

ईशितव्यम्। प्रजाभूम्यादि। सम्प्रकृतेपीति। अन्तशब्दस्य उपदेशकालं प्रति न नित्यसाकाङ्क्षतेति भावः। सञ्ज्ञिपरत्वेत्यादि। संख्यापदस्येत्यादिः। अन्तग्रहणं समास संपादनद्वारा अन्यपदार्थबोधकत्वेन तत्संपादकमिति भावः। किंचान्तग्रहणस्य तदर्थत्वे तस्य विशेषणतया [illegible] अन्तत्वेन च पूर्वनिपातापत्तिः। उणादीनामव्युत्पत्ति पक्षे प्रत्ययानां समुदायानां वोपदेशाभावेन त्वदुक्तार्थासंगतिश्चेत्यपि बोध्यम्। उपदेशग्रहणं कर्तव्यमिति। [illegible] प्रकृतिप्रत्ययोपदेशकाले ष्णान्ते सर्वस्य

अन्तःशब्दो हि अवयवि निसाकाङ्क्षो न तु यत्र कुत्रचित् अन्यथा कृदन्तस्य राजपुरुष इति स्यात्। राज्ञोपि ईशितुरीशितव्यं प्रति साकाङ्क्षत्वात्। राजा प्रभौ नृपे चन्द्रे यक्षे क्षत्रियशक्रयोरिति कोशात्। यदि तु कृदन्तप्रत्यनाकाङ्क्षेति ब्रूषे तर्हि सम्प्रकृतेपि। सन्निपातेति। तथा चोपदेशकाल इति व्याख्यानं निष्फलमपीति भावः। यत्वाहुः। परिभाषाया अनित्यत्वात् लुक् स्यादिति। तत् साहसमात्रम्। दृष्टस्थलेप्यप्रवृत्तौ परिभाषाया निष्फलत्वापत्तेः। किंचोपदेश इति निर्मूलमपि यत्तु वदन्ति। अन्तग्रहणसामर्थ्यादौपदेशिकत्वं लभ्यत इति। तदपि न। संख्येत्यस्याकर्षणेन सञ्ज्ञिपरत्वसंपादनेन च सामर्थ्योपक्षयात्। नोपधायाः। नेति लुप्तषष्ठीकम् अङ्गस्य विशेषणम्। गौणत्वेत्विति। बहुवचननिर्देशस्यार्थप्राधान्यार्थत्वादिति भावः। प्रियपञ्चामिति। नकारद्वयमध्ये चकारः। अष्टन आ हलादाविति। रायो हलीत्युत्तरसूत्राद्धलीत्यपकृष्यते। तच्च विभक्तेर्विशेषणमिति भावः ॥

यातु समस्तान्तपदार्थभूतस्य उपदेशकालस्य तेषाम् अन्वयो वक्तुमशक्य इति स्पष्टमेवेति दिक्। हलीत्यपकृष्यत इति। हलीत्युभयोः शेष इति भाष्योक्तेरिति भावः। सन्निपातेति। नान्तत्वप्रयुक्तषट्सञ्ज्ञकसन्निपातेन जातस्य नुटस्तद्विघातकत्वमिति न तस्याः प्राप्तिः ॥

अनित्यत्वादिति। नचनुटि नोपधाया इति दीर्घे नलोपेनाष्टानामित्यस्य सिद्धेः किमनित्यत्वेनानचनलोपस्यापि सन्निपातपरिभाषयाऽप्राप्तिः। नलोपस्यासिद्धत्वेन तद्विषयेतद्
प्राप्तेरिति वाच्यम्। क्वचोजन्तसूत्रभाष्ये सन्निपातपरिभाषादोषनिरूपणावसरे हे गौरीत्यादौ संबुद्धिलोपेपि तस्य स्थानिवत्त्वेन ह्रस्वनिमित्तसन्निपातविघाताभावान्तत्रानित्या
निष्प्रभाष्यासङ्गतेः। सन्निपातस्याशास्त्रीयत्वात्स्थानिवत्त्वमिति चेत्तत्रासिद्धत्वमपि कथमिति विभावय। किंच पूर्वत्रकर्त्तव्ये तदसिद्धत्वेपि तत्रकृते तस्यासिद्धत्वे मानाभा

तेनाष्टानामित्यत्र नुटः पश्चादेव सन्निपातपरिभाषया अनित्यत्वादात्वं न तु प्राक्। अन्यथा अष्टन् आमिति स्थिते परत्वान्नित्यत्वाच्च आत्वे कृते नान्तत्वे षट्सञ्ज्ञा
भावान्नुट् न स्यात्। न च यथोद्देशपक्षेऽन्तरङ्गत्वात् प्रागेव कृता षट्सञ्ज्ञा एकदेशविकृतन्यायेन कृतात्वेपि सुलभेति वाच्यम्। अल्विधौ उक्तन्यायायोगादिति भा
वः। अष्टाभ्य औश्। कृताकारादिति। ननु हलीत्यपकृष्यतामित्युक्तम्। तत्कथं कृताकारता लभ्यत आह। आष्टभ्य इति। कृतात्वस्यैतदनुकरणं न तु लक्षणवशसंपन्न
मात्वम्। तथाहि सति वक्ष्यमाणज्ञापकेन तस्य वैकल्पिकतया लाघवार्थमष्टभ्य इत्येव ब्रूयादिति भावः। इदमिति। श्रुतमनुमितं चेत्यर्थः। अष्टनो दीर्घादिति। दीर्घा
न्तादष्टनः परा असर्वनामस्थानविभक्तिरुदात्ता स्यात्। अष्टाभिः। दीर्घात् किम्। अष्टभिः। मध्योदात्तमिदम्। षट्त्रिचतुर्भ्यो हलादिः। पित्वात्फलं सुपोत्तम
मित्यस्य प्रवृत्तेः ॥

व:। अन्यथा हलीत्यस्यात्रासंबन्धे परत्वादित्यभ्युच्चयः। नित्यत्वाच्चेति। कार्यकालपक्षे सञ्ज्ञायास्तत्तद्विध्येकवाक्यतया षट्त्वात्व
योर्बहिरङ्गत्वं समानमिति भावः। अल्विधित्वादिति। षट्सञ्ज्ञाया अल्विधित्वेन तन्मूलककार्याणामप्यल्विधित्वमित्यभिमानः। यद्वा नान्तसंख्यावाचकत्वसमानाधि
करणधर्मविशेषरूपस्य षट्त्वस्य स्थान्यल्धर्मत्वाभावेन नुट्प्रयुक्तकार्यस्य नुडादेरपि नाल्विधित्वमिति स्थानिवत्त्वेनैकदेशविकृतन्यायेन च नुट् सुलभस्तर्हि सू
त्रे कार्यकालपक्षे न तत्सिद्धिरिहलीत्यनुवृत्तेः फलमिति बोध्यम्। श्रुतम्। हलादौ। अनुमितम्। जश्शसोः ॥

म॰ श॰ ६७ तत्पदार्थप्रधानसमासेसमुदायस्यापिषट्त्वात्। स्पष्टंचेदंसर्वादीनीत्यत्रभाष्ये। ततोविहितत्वाच्चेतिवाच्यम्। एतद्भाष्यप्रामाण्येनतदनभिधानादितिचेन्न। एतज्ज्ञापक
परभाष्यप्रामाण्यादष्टनइत्यस्यापिविहितविशेषणाश्रयणेनसमासेऽप्रवृत्तेः। प्रियाष्टादीनामनभिधानस्यषट्संज्ञासूत्रेभाष्येस्पष्टत्वाच्च। तिसृभ्योजसइतिसूत्रस्थेनोप
समस्तार्थमेकइतिभाष्येणतुल्यन्यायात्षट्स्वस्यापितदन्तेप्रवृत्तेरुक्तत्वाच्च। चतुरःशसीतिसूत्रस्थन्तुवार्तिकंजसग्रहणानर्थक्यमन्यत्राभावादितितिसृभ्यइतिसू

पूर्वस्मादप्यीति। एवंचप्रियाष्टइतिहरदत्तोदाहृतंष्टुत्वंनसंभवतीतिभावः। नचपूर्वत्रासिद्धीयेनस्थानिवदितिनिषेधः। तस्यदोषइतिसापवादत्वात्।
ननुरषाभ्यामितिप्रतिपदोक्तणत्वंतत्रग्रहीष्यामः। ननुष्टुत्वविधिलभ्यमितिचेत्। मैवम्। भाष्यमतेतदयोगात्। तथाहि। रषाभ्यामितिसूत्रेऽपदान्तस्यमू
र्धन्यइतिसूत्रमनुवर्त्यणग्रहणंपदान्तस्येतिनिषेधसूत्रंचभाष्येप्रत्याख्यातम्। नचमूर्धन्यशब्देनष्टुशब्देनवानिर्वर्त्यमानेणकारेवैषम्यंसुवचम्। यथो
त्तरंमुनीनांप्रामाण्यमितिस्थानिवद्भावएवोचितः। शब्दकौस्तुभेतस्यदोषइत्यत्रणत्वग्रहणंमास्त्वितिनिष्कर्षः कृतस्तद्व्याचष्टे। कार्यकालपक्ष
इति। नचयथोद्देशमाश्रित्यष्टुत्वमस्त्वितिवाच्यम् ॥

त्रस्थवार्तिकवदेवदूष्य,मेकेइतिचमुख्यार्थकमितिदिक्। प्रतिपदोक्तमिति। संयोगादिलोपसाहचर्याण्णत्वस्यैवेतिभावः। प्रत्याख्यातमिति। तदेकवाक्यतयात्र
नित्यत्वेनपर्यवसाने प्रतिपदोक्तपरिभाषासाहचर्यपरिभाषयोरप्रवृत्तिरितिभावः। प्रत्याख्यानेनचस्पष्टार्थमेवतयोरुपादानंनतुफलान्तराभिनिवेशः कार्यइति राम: ६७
सूच्यते ॥

प्रत्याख्यानासंभवेनेति। उक्तरीत्या भाष्यध्वनितणत्वग्रहणेत्यादिः णग्रहणेतिवा। पञ्चमीसमासेति। अपरविधाविति वक्तव्यमित्यचः परस्मिन्निति सूत्रस्य वार्तिकमाख्यानावसरेऽभैयट ध्वनितेत्यर्थः। वस्तुतस्तदयुक्तमिति प्राङ्‌निरूपितम्। तत्प्रत्याख्यानमभ्युपेत्यापि समाधत्ते। फलैक्यायेति। प्रत्याख्यानस्यायुक्तत्वं ध्वनयन्नयं पञ्चमीसमासपक्षे लक्ष्यसिद्धिं शङ्कते। निष्ठायामिति। सेड्ग्रहणादिति। नन्वहि सेड्ग्रहणं नानिड्व्यावृत्त्यर्थं णिजन्तात्तदसंभवात्। न चण्णुपेः सनीवृत्तेनीड्विकल्पात्तं ज्ञपितइत्यादौ यस्य विभाषेति णिनिषेधेन तत्संभवतीति वाच्यम्। यस्य विभाषेत्यत्रैकाच इत्यनुवृत्तेः। अन्यथा दरिद्रातेरपि सनि विकल्पितेटत्वेन दरिद्रित इतीण्न स्यात्। वादान्तेति सूत्रे ज्ञप्त इति निपातनेनेडभावस्यैव णिलोपस्यापि निपातनाच्च। तस्मात्तद्योगविभागेन कालावधारणार्थमिति कृत एव णिलोपो न तु न

फलभेदे प्रत्याख्यानासंभवेन कार्यकालपक्षस्यैवेह न्याय्यत्वादिति भावः। अत एव पञ्चमीसमासस्य प्रत्याख्यानोपष्टम्भेनापि पूर्वं प्रत्याख्यानकार्य फलैक्यात् कार्यकालपक्षस्यैव न्याय्यत्वेनासिद्धत्वस्य दुर्वारत्वात्। निष्ठायां सेटीति सेड्ग्रहणाज्ज्ञापकात्पूर्वस्माद्विधौ स्थानिवद्भावस्यानित्यतयानेह प्रवृत्तिरिति तु संभवेदुत्प्रेक्षा यदि लस्यैकत्वं प्रमितं स्यात् ॥

तः प्रागिति। अन्यथाकारितमित्यादौ परमपीडं बाधित्वा नित्यत्वाण्णिलोपे एकाच इतीण्निषेधः स्यात् पूर्वस्माद्विधौ स्थानिवत्त्वेऽपि शास्त्र एव निषेधो णिचा व्यवधानादिति भावः। यदि तु एकाच उपदेश इत्यत्र विहितविशेषणपक्षे सेटीति चिन्त्यप्रयोजनमित्युच्यते तदा प्रविगणय्येति भाष्योदाहरणादेव तदनित्यत्वम्। अन्यथा ल्लोपस्य स्थानिवत्त्वाल्ल्यपि लघुपूर्वादिति णेरयादेशो न स्यात्। ल्यपीति सूत्रे प्रशमय्येत्यादौ चरितार्थमिति दिक् ।

स्पष्टमिति। वस्तुतस्तु षड्भ्यो लुगित्येतत्साहचर्यादस्य गौणे न प्रवृत्तिः। तस्य च विहितविशेषणाद्गौणे प्रवृत्तिरिति सर्वादिसूत्रे भाष्ये स्पष्टम्। गौणे औङः प्रवृत्तौ त्वाप्यात्वमपि नेति बोध्यम्। इत्येव स्यादिति। यद्यपि हलीत्यपकर्षपक्षे प्रियाष्टाविति न सिद्ध्यति। प्रियाष्टान इति प्राप्नोतीति भाष्ये उक्तम्। तथापि अपकर्षाभावेप्यात्वस्य वैकल्पिकतया प्रियाष्टान इत्यस्य दुर्वारत्वेन यथाश्रुतभाष्यासङ्गतेरेव गर्भतया तद्व्याख्यानम्। प्रियाष्टाविति। आबादेशे वकारस्य लोपः शाकल्यस्येति लोपोत्र गौणत्वे प्यौङ्प्रवृत्तौ हि भाष्यमसंगतमेवेति भावः। कैयट इति। अत्राहु विचीजं तु यथालक्षणमित्यस्य तत्कृतानैव वा लक्षणमप्रयुक्ते प्रवर्त्तते प्रयुक्तानामेव ल

लक्षणैकचक्षुष्कतोयां तु अनित्यत्वपुरस्कारोऽनुचित एवेत्यास्तां तावत्। जः शसोरिति। औश्त्वं हि लुग्लुटाविव गौणत्वे न भवति। अष्टाभ्य इति बहुवचननिर्देशात्। अन्यथा हि कृतात्वानुकरणेपि एकवचनेनैव निर्दिशेत् अष्टा औशिति। अष्ट इति वा। एतच्च स्सान्तेति सूत्रे भाष्यकैयटयोः स्पष्टम्। तथाच औश्त्वविधौ कृतात्वनिर्देशबलेनानुमीयमानमात्वमपि प्राधान्य एवोचितम्। तथा च जसि प्रियाष्टान इत्येव स्यान्न तु प्रियाष्टा इत्याशङ्क्योक्तं भाष्ये यथालक्षणमप्रयुक्त इति। न भवत्येवात्वमित्यर्थ इति कैयटः ॥

७ लक्षणेनान्वाख्यानादिति द्वितीयव्याख्यैव युक्ता। आद्यव्याख्यायामप्रयुक्त इतिवाक्यशेषासङ्गतिः। अप्रयुक्तेपि लक्षणानतिक्रमसत्त्वात्। प्रयुक्तानामिदमन्वाख्यानमित्यभियुक्तोक्तिविरोधाच्च। यथालक्षणमित्यस्याप्रयुक्ते लक्षणाभावस्यैव योग्यता न तु लक्षणप्रवृत्तेरित्यक्षरार्थः। किंच भाष्यकारस्य लक्ष्यैकचक्षुष्कतयैषैव व्याख्योचिता, एकस्यैव प्रयोगस्य भाष्यफक्किकाव्याख्यानभेदेन साधुत्वासाधुत्वयोरनौचित्याच्च। तस्मादत्रत्यं मूलं टीका चैवं व्याख्यातं कैयटाद्यनुरोधेन। वस्तुतः प्रियाष्टादीनामनभिधानमेवेति दिक् ॥

आत्वस्याभावादौत्वं नेति। अत्रवृत्तिकृता औशोभावादात्वं नेति वक्तुं युक्तम्। प्रथमैकवचनमिति। हल्ङ्यादिलोपात्परत्वादात्वे सोर्लोपाप्राप्त्या रुत्वविसर्गौ। नचलोपे न्तरङ्गः। प्रकृतिप्रत्ययोभयसापेक्षत्वेन समत्वादित्यभिमानः। नलोपाभावस्त्विति। कुञ्चधातुर्नोपधइतिसंमताकारीयधातुवृत्त्यनुसारेणेदम्। परेश्चेतिसूत्रभाष्या

वामनोपि। अष्टाभ्यऔशितिसूत्रेतदन्तग्रहणात्परमाष्टावित्युक्त्वा प्रियाष्टान इत्यत्रात्वस्याभावादौश्न भवतीत्याह। हरदत्तस्तु तत्रैव प्रियाष्टान इत्स्त्रेतिवृत्तिग्रन्थमुपादाय यथापुनर्गौणतायामात्वं न भवति तथा तद्विभावेववक्ष्यत इति प्रतिज्ञाय अष्टनआविभक्ताविति सूत्रे एकवचननिर्देशादुपसर्जनेष्वात्वम्। भविषयेआतोलोपः। प्रियाष्टः पश्येत्यादिवदन्पूर्वप्रतिज्ञातार्थविपरीतं भाष्यवृत्त्यादिविरुद्धं कथमभिहितवानिति सुधीभिः प्रष्टव्यः। हलादौवेति यद्यपि हल्ग्रहणस्यापकर्षमकृत्वापि व्याख्यानं भाष्ये प्रतीयते। तथापि तस्यापरितोषग्रस्तत्वं प्रपञ्चितमन्यत्रेतिभावः। प्रियाष्टादिति प्रथमैकवचनम्। उक्तं संगृह्णाति। प्रियाष्ट्इति॥ नान्ताः॥ भुदिति। बुध्यतेः क्विप्॥ धान्ताः॥ ऋत्विग्दधृक्। किंविदिति। ऋत्वावुपपदे यजेः क्विन्। धस्रोतेर्द्विर्वचनमन्तोदात्तत्वंच। सृजेः कर्मणि क्विन्अमागमश्च। दिशेः कर्मणि। उत्पूर्वान्स्निहेः क्विन् उपसर्गान्तलोपः षत्वम्। अञ्चेः सुप्युपपदे क्विन्चेत्यर्थः। युजेरिति। कुञ्चेरप्येवम्। नलोपाभावस्त्वधिकः। कनाविति॥

तु अयं ञोपध इति लभ्यते। तत्र हि कुञ्चेत्यत्र कुत्वस्याशङ्क्य कुञ्चामिति ऋत्विगादिसूत्रस्थ निपातनात्सिद्धमित्युक्तम्। तस्य नकारजत्वे तु परसवर्णासिद्धत्वात्कुत्वप्राप्तौ भाष्यासङ्गतिः। निर्देशे नचचयोगे कुत्वाभावे निपात्यत इति कुड्डिलादौ कुत्वं भवत्येव न दानलोपस्य प्राप्तिरेव नेति तत्त्वम्॥

उच्चारणार्थ इति। ननु तदित्संज्ञाप्रयुक्तकार्यभागयमनो विशिष्यतस्य नो क्ता सा उच्चारणे सहायसम्पादनेन वर्णोच्चारणस्य चारितार्थ्ये विधेये तदपगममात्रफलि
कानुसाः स्येवेति नन स्य लोप इति सूत्रस्य भाष्यविरोध इति बोध्यम्। कुलस्यासिद्धत्वादिति। चोः कुरिति कुत्वस्येत्यर्थः। इदं सर्वं न्यायसिद्धार्थकथनमात्रम्। परत्वादिति
हल्ङ्यादिलोपादित्यादिः। असंनिहितत्वादिति। सध्वोर्ग्रहणसामर्थ्येनैकाचो बश इत्यतस्तदनुवृत्तेर्निष्ठादेशप्रकरणेन विच्छेदाच्च। एतेनात्रैव चोरिति वक्तव्यं तन्त्रे

इकारस्तूच्चारणार्थ इति भावः। सन्निहिते इति। यत्तु प्राञ्चस्तु तेषां धात्वधिकार इति तन्न। सन्निधौ धातुग्रहणस्य उत्तरत्रानुवृत्तेरभावेनाधिकारत्वाभा
वात्। युजेरसमासे सर्वेति। यत्तु प्राचोक्तं सुटीति तन्न। सर्वनामस्थाने इत्यस्यैव प्रकृतत्वात्। लक्षणायां बीजाभावात्। क्लीबे युजी इति द्विवचनेऽतिव्याप्ते
श्च। यत्तु वदन्ति नपुंसके शसि युञ्जि इत्यत्र नुम् न स्यादिति तन्न। नपुंसकस्य झलच इति नुमः सम्भवात्। सुलोप इति। कुत्वस्यासिद्धत्वात्। परत्वादिदी
नुम्। इतो हल्ङ्यादिलोप इति भावः। क्विन्प्रत्ययस्य कुः। पदान्ते इति। यत्तु प्राचोक्तं झलीति। तन्न। झलीत्यस्यासन्निहितत्वात्। निष्फलत्वाच्च। यत्तु त
न्त्रे तेनैव व्याख्यातम्। झलो झलीत्यतो मण्डूकप्लुत्या झलीत्यस्मिन्ननुवर्तमानेऽपि न कश्चिद्दोष इति। तन्न। स्पृष्ट इत्यादावतिव्याप्तेः। खन् इति। खञ्जतीति ख
न्। खजि गतिवैकल्ये परौ व्रजेः। दीर्घश्चेति। यत्तु प्राचा व्याख्यातं विण्णित्वादुपधावृद्धिरिति। तन्न। पञ्चपाद्यां दशपाद्यां चानेन क्विप् दीर्घस्यैव विधानात्।
स्कोः। संयोगेति लुप्तषष्ठीकम्। झलन्ताभ्यां विशेष्यते इति व्याचष्टे। पदान्त इत्यादिना ॥ ७ ववाक्विन्प्रत्ययस्येति वक्तव्यम्। एवं च कुग्रहणं व्यर्थमित्यपास्तम्।

चोरित्यत्र तत्संबन्धादत्र न तत्संबन्धाच्च। निष्फलत्वाच्चेति। सिद्धान्तिसमतफलाभावादित्यर्थस्तं ध्वनयन्नाह। अतिव्याप्तेरिति। लुप्तषष्ठीकमिति। एतेनोपसर्जनस्य तद्विशे
षणत्वात्समासानुपपत्तिरित्यपास्तम्। पदान्ते झलि च यौ स्कौ संयोगादी तयोर्लोप इति न सूत्रार्थः। संयोगादित्वस्य पदान्तत्वस्य चैकस्मिन्नसंभवात् ॥

तदपवादस्येति। सूत्रद्वयविहितण्विनपवादस्येत्यर्थः। तत्र मन्त्र इति सूत्रे उपपदानां धातूनां च पृथक् पाठे कर्तव्ये समुदायोच्चारणमलाक्षणिकानां निपातनार्थं तत्र श्वेतशब्दे कर्तृवाचिन्युपपदे वहेः कर्मणि प्रत्ययः। उक्थे कर्मणि करणे वोपपदे शंसेः प्रत्ययो नलोपश्च। अवे यजेः नलोपेऽपि न वृद्धिः। उक्थशास्शब्दस्य सामान्येन रुः सिद्धो न तस्य निपातनं क्रियत इति भाष्येण तत्र तदभावस्यापि निपातनात्। दाशृ दाने इत्यस्मात् पुरः पूर्वकात् प्रत्ययः कर्मणि दाश आदेर्डत्वं चेति। वहियज्योरिति।

भञ्जनीति भट्। क्विप्। सस्येति। जश्त्वस्यासिद्धत्वात् पूर्वं षत्वमित्यर्थः। एतेन प्राचोऽपि विपरीतोक्तिः प्रत्युक्ता। ऊर्गिति। ऊर्ज बलप्राणनयोः। अस्माच्चुरादिण्यन्तात् भ्राजभासेत्यादिना क्विप्। णिलोपः। स्वचचोः कुत्वेनस्या निवृत्। पदान्तविधित्वात्। पूर्वत्रासिद्धत्वाच्च। इह जान्ते घवया इति नोदाहृतम्। मन्त्रे श्वेतवहोक्थेति प्रकृतसूत्रे अवे यज इति विहितस्य ण्विनस्तदपवादस्य च नेड्। सम्प्रदानछान्दसत्वात्। यत्तु श्वेतवाडुक्थशास्पुरोडाश्वयज्जां डसिति प्राचोक्तम्। तन्न। डसः प्रकृतभूतयोर्वहियज्योर्दीर्घाभावात्। यदपि अवया इति प्रतीकमुपादाय ण्विनिति प्राचा व्याख्यातम्। तन्न ॥

शंसेरप्युपलक्षणमिदम्। किं चोक्तभाष्यादुक्थशसित्युच्चारणमपि प्राचामसंगतम्। न च डस्त्वं विधेयः अवयाः श्वेतवाः पुरोडाश्वेति पदान्तविषये रुत्वे रूपसिद्धेरिति वाच्यम्। वृद्धौ अतः परत्वाभावेनोत्वानापत्तौ श्वेतवोभ्यामित्याद्यसिद्ध्यापत्तेः ॥

अप्रवृत्तेरिति। ननु पदान्तविषयेवासरूपन्यायेनाण्विनप्यस्तु निपातमं चेदुभयोरत्वरु प्र करणेअवयाश्वेतिसूत्रपाठः। अन्यथाडसम्तेससजुषोरु रितिरुत्वेसिद्धे दीर्घमात्रस्य निपातनात्तदकरणे एव कृतं स्यादिति चेन्न। डस्वक्तव्यः किंप्रयोजनं वर्थम्। क्रियते वर्थं निपातनम्। अवयाः श्वेतवा इति। तन्नवक्तव्यम्। अवश्यं तद्वक्तव्यं डसारंभोपि संबुद्धौ दीर्घार्थं तर्हि डस्यवक्तव्यः। डसपि वक्तव्यः श्वेतवोभ्यामित्यर्थमिति भाष्यविरोधात्। अन्यथाण्विन्यस्ये रुत्वार्थमपित्स्यावश्यकत्वेन संबुद्धौ दीर्घार्थमिति भाष्यस्य निर्दलतापत्तिः। तस्मादत्र वार्तिकनयेवासरूपा प्रवृत्तिः क्तादिष्विव व्यवस्थितविभाषयाङ्गीकार्या। रुप्रकरणे सूत्रं तु सूत्रकृता डसोऽकरणात् कृतं णिनन्ते रुत्वमात्र सेयतदिष्टत्वात्। श्वेतवोभ्यामिति प्रयोगं तु सूत्रकृन्नजानात्येवेति स्पष्टं भाष्यविदाम्। केचित्तु ण्विनआदे

अपवादस्य डसोविषये उत्सर्गस्य ण्विनो प्रवृत्तेः। तदोः सः सावनन्त्ययोः। अनन्त्ययोः किम्। हेस परत्वात्त्यदाद्यत्वं बाधित्वा सत्वं स्यात्। ततो हल्ङ्यादिलोपे रुत्वविसर्गौ स्याताम्। किंच स्त्रियां सेति न स्यात्। वस्तुतस्तु अनन्त्यग्रहणं शक्यमकर्तुम्। नचोक्तदोषः- ॥

शोडस। श्वेतवहादीनां डस्पदस्येति वार्तिकात्। एतत्संबन्धिनो ण्विनः प्रत्ययस्य डस् तदन्ते पदत्वस्य भावित्वे इति तदर्थः। अतएव वृत्तिकृता ण्विनं प्रक्रम्य श्वेतवाः इत्युदाहृतमेवं च वासरूपस्यात्र विषय एव नेत्याहुः। परत्वादिति। नित्यत्वं तु नात्वस्य शब्दान्तरस्य प्राप्तेः। सत्वं स्यादिति। उभयोरपीति भावः। असोलाक्षणिकत्वेनात्वसंन्तं स्येत्यस्य न प्रवृत्तिः। नच प्रत्यय विशेषापेक्षत्वापेक्षयान्तरङ्गत्वादत्वे रूपसिद्धौ दंव्यर्थेनादृशान्तरङ्गत्वस्य शास्त्रेनाश्रयणज्ञापनार्थत्वात् 
तएव भाष्ये ईदृशमन्तरङ्गत्वं न क्वाप्याश्रितम् ॥

पुनः प्रसङ्गेति। कृताकृतप्रसङ्गित्वमात्रेण नित्यतायां सापि सुवचा। शब्दान्तरप्राप्त्यानित्यत्वमभ्युपेत्य प्रवृत्तं भाष्योक्तं समाधिमाह। सकृदिति। अनन्त्ययोरित्येत देव सकृद्गतिन्यायज्ञापकमिति तदाशयः। न्याय्यत्वादिति। वस्तुतस्त्वेषामनभिधानमेव। एतदाशङ्क्य यथालक्षणमप्रयुक्ते इति भाष्योक्तेः। अस्वार्थत्वात्तन्त्रा दैरुक्तः। द्विवचनानोपपत्तेर्भाष्ये पृथक्पदमिति। अत्र गौरवं मत्वा प्रकारान्तरमाह। प्रथमाशब्द इति। एवं च तस्यैकत्वान्ङे शब्देन समासे द्विवचनमिति भावः। तस्या

पुनः प्रसङ्गविज्ञाने त्यदाद्यत्वसम्भवात्। सकृद्गतावपि निषेधेऽपि तदेः सः सौ वित्यस्यानन्तरमदस्त इति योगं विभज्यादस एवादस्सत्वं नान्यस्य दस्येति व्याख्या तुं शक्यत्वात्। ननु यथान्यासे द्वियपतेः किपि स्व इति प्राप्नोति नियमे तु द्व इति स्यादिति चेन्नैवम्। गौणे अत्वसत्वयोरसम्भवेन द्वेरिरुक्तस्यैव न्याय्यत्वात्। ङे प्रथमयोरमोऽङिच्छसिटष्पृथक्पदं लुप्तषष्ठीकम्। प्रथमाशब्दः प्रथमाद्वितीययोः समुदाये गौण इति व्याचष्टे ङि इत्यस्येत्यादिना। ङे सुटोरम् इति सुवचम्। अधिकरणत्वविवक्षयेति। यदि तु शेष इति विभक्तिविशेषणं स्यात्तर्हि व्यर्थमेव तत्। आत्वयत्वाभ्यां विशेषविहिताभ्यां स्वविषये लोपस्य बाधसंभवात्। न चैवमन्त्यलोप इति पक्षस्य निरालम्बनत्वापत्तिः। साम आकमिति ससुट्कनिर्देशेन तस्यापि ज्ञापितत्वादिति भावः। युवं वस्त्राणीति। शेषे लोपः। यत्तु काशिकायामुक्तं पञ्चम्याश्च चतुर्थ्याश्च षष्ठीप्रथमयोरपि। यान्यद्विवचनान्यत्र शेषे लोपो विधीयत इति। न द्वा षापेक्षया। छन्दसि तु प्रथमाद्विवचनमपि शेषे लोपस्य विषय एवेति बोद्ध्यम् ॥

७ पीति। तस्यैवेत्यर्थः। अन्त्यलोपस्यैवेत्यर्थः। अनेनायमेव पक्षः सूत्रसंमत इति सूचितम्। किं च शेषस्य लोप इत्यर्थे फलाभावः। अन्त्यलोपे प्यस्य विभक्तिसन्निपातनिमित्तकत्वात्सन्निपातपरिभाषयाबुद्धाविव त्यत्रेव टापो निवृत्तेः। शेषग्रहणं तु भाष्ये प्रत्याख्यातमेव। ससुट्निर्देशप्रत्याख्यानापेक्षया स्य प्रत्याख्यानमेव न्याय्यः। त्यदादीनाम इति सूत्रभाष्योक्तोप्ययं पक्षस्तत्रैवाहुरित्युक्त्या बोधिता रुचिक इत्यन्यत्र निरूपितम् ॥

म·शे अन्यस्य। अङ्गवृत्तशास्त्रस्य। दीर्घोभविष्यतीति । जानातीत्यादौमूलोक्तस्यदीर्घनिर्देशसामर्थ्यान्नह्रस्वइत्यस्याङ्गवृत्तपरिभाषाज्ञापनद्वारानह्रस्व
१०१ इत्यर्थइतिनतद्विरोधः । नन्वनेनदीर्घेपचामिभोइतिवद्जानाम्भोइत्यादावनन्त्यस्यापीतिप्लुतोनस्यात्। अतआदित्येवसिद्धेतत्रत्यदीर्घग्रहण
स्यप्लुतनिवर्तकत्वात्॥नचानन्त्यस्यपदस्यचटेरितितदर्थोलकथंपचामीत्यादौतत्प्राप्तिरितिवाच्यम्। दीर्घग्रहणसामर्थ्येनान्यविषयएवनत्संबन्धात्वाक्यस्योःक्लृप्त
संबन्धस्यागेमानाभावात्।तेनवाक्यस्यानन्त्यस्यपदस्यप्लुतःस्यादन्त्यस्यपदस्यचटेरित्यर्थः तपरकरणेनतुनप्लुतस्यावृत्तिः। प्लुतस्यासिद्धत्वात्।अतएवगीःपूरित्यादौ
मपर्यन्तस्यकिमिति।अधिकारसूत्रंकिमर्थमितिप्रश्नः।अङ्गकार्येइति।एतेनाङ्गवृत्तेपुनर्वृत्तावविधिरितिपरिभाषाअर्थतउपनिबद्धा। अङ्गेअङ्गाधि
कारेवृत्तंवर्तनंयस्यतदङ्गवृत्तंशास्त्रम्।तस्मिन्कृतेसतिप्रवृत्ते सतिपुनरन्यस्यप्रवृत्तौप्राप्तायाम विधिरितिहितस्याअर्थः।एषाचपरिभाषाज्यादादीयसः
ज्ञाजनोर्जेतिसूत्रद्वयेपिज्ञापितेतिभाष्येस्थितम्।अन्यथाहिज्यादादितिआकारंनब्रूयात्।बहोर्लोपइत्यतोलोपमेवानुवर्तयेत्।अकृत्सार्वेतिदीर्घेसिद्धे
न्यायात्रितिज्ञाजनोर्भ्रजंविदद्धात्।अतोदीर्घोयञीतिदीर्घोभविष्यतीति।नचैवंद्वाभ्यामित्यत्रत्यदाद्यत्वेकृतेसुपिचेतिदीर्घोनस्यादितिवाच्यम्।द्वयोरेक
नि स्येत्यादिनिर्देशेनउक्तपरिभाषायाअनित्यत्वज्ञापनात्।यत्तुकेचित्परिनिष्ठितस्येतिपठन्ति।द्वाभ्यामितितुदीर्घंविनानपरिनिष्ठितमिति चवदन्ति।तद्भाष्यविरुद्ध
म्।ज्यायान्।जानाति।जायतइत्येतेषामपिदीर्घविनाऽपरिनिष्ठितत्वेनभाष्योक्तज्ञापनस्यापिशिथिलमूलत्वापत्तेः।यदितुभ्यसोभ्यमितिसूत्रेभाष्येपिप
रिनिष्ठितस्येत्येवपाठस्तर्हिस्वचनिकतामेवाश्रित्यपक्षान्तरपरतयायोज्यः ॥
दीर्घः।अनीयानस्यापीदुदितिनपरत्वसामर्थ्यादप्रवृत्त्यापत्तिः दीर्घग्रहणेतुतत्सामर्थ्यादसिद्धत्वस्यापिबाधः।आकारान्तरप्रश्लेषेणवारणंतुक्लिष्टमस्तुवातदुपाया
न्तरमितिचेन्न। उक्तज्ञापकपरभाष्यप्रामाण्यात् प्लुतस्यतत्रानिष्टत्वेवैकल्पिकत्वेनेदृशेविषयेप्लुताप्रवृत्तेः।अतोदीर्घइत्यत्रदीर्घग्रहणंहलिलोपइतिसूत्रेहल्यहणेति राम:
क्तयेलोपग्रहणवत्स्पष्टत्वेननार्थसाधकमितिदिक्। निर्देशेनेति।अन्यथात्यदाद्यत्वेएत्वंनस्यादितिभावः ॥ १०१

वाचनिकत्वे गौरवं ज्ञापकत्वे शैथिल्यं चापरिहृतमित्यत आह। अनित्यत्वबलेति। अनुवृत्त्यर्थमिति। स्पष्टमेतद्भाष्ये नैव। अभ्यमिति च्छेदस्यैव मुख्यत्वं ध्वनयन्त्रा
कृते। त्र चेति। अतएव युष्मदस्मदोरिति सूत्रेण नादेशो हलादिरस्तीति भाष्यं संगच्छते। एत्वनिरस्येति। अङ्गवृत्तपरिभाषाया अनित्यत्वबोधनद्वारेति भावः। एवंच

अनित्यत्वबलफलितार्थकथनेनैतन्नत्रुत्राप्यांशः प्रविष्टमिति वास्तु। एवं तु काशिकादिग्रन्थोपि कथंचिन्नेतुं शक्य इति दिक्। मकारान्तरमित्युपल
क्षणम्। जसः शीत्यत्र जसः स इति सकारं प्रश्लिष्य सान्तस्य जस इति व्याख्यानात्तोमि विसूत्राद म ग्रहणमनुवर्त्य अम् अमेवेति व्याख्यानादेतिबोध्यम्।
अविभक्तिकमिति। तथाच ङे प्रथमयोरिति पूर्वसूत्रेण प्राप्तस्यामः प्रतिषेधोयमिति भाष्ये ध्वनितम्। नच तयैव किं न स्यादिति वाच्यम्। स्त्रीनपुंसकयोर्न
त्वाप्राप्तेर्युष्मान्ब्राह्मणीः कुलानि वा। अलिङ्गत्वे युष्मान्ब्राह्मणानित्यादेरसिद्धत्वप्रसङ्गाच्च। योचि। अचि किम्। युवाभ्याम्। यदि तु युष्मदस्मदोरनादेशे इत्य
त्रायोहलीत्यतो हलीत्यनुवर्तते तदा इहाचीति मास्तु परिशेषादेव सिद्धेः। युष्मदस्मदोः। हलादाविति। योचीत्यज्ग्रहणात्परिशेषात्सिद्धमिदम्। रायो हलीत्य
तोनुवृत्त्या लब्धं वा। नन्वेवं किमनादेशग्रहणेन न त्वादेशो हलादिरस्ति। मैवम्। भ्यमः सत्त्वात्। अभ्यम्प से तु योचीत्यत्रानुवृत्त्यर्थमनादेशग्रहणं बोध्यम्। प
क्षद्वयेपीति। नचान्तलोपपक्षे पररूपं बाधित्वा सवर्णदीर्घः स्यादकारोच्चारणसामर्थ्यादिति वाच्यम्। एत्वनिवृत्त्याकारोच्चारणस्य चरितार्थत्वात्।
युष्मदस्मद्भ्यां ङसोश्। शित्त्वं सर्वादेशार्थम्। अन्यथाद्यादेश परस्येति स्यात्। नच वैयर्थ्यम् ॥

पररूपेण बाधान्न सवर्णदीर्घ इति तात्पर्यम्। वैयर्थ्यमिति। अकारस्याकारविधिवैयर्थ्येनान्त्यस्यैवाकारेऽन्तो गुणे च सिद्धं तवेत्यादीति व्यर्थमेव शित्वमित्यर्थः। नच
पररूपबाधनार्थमेवादेरत्वविधानं स्यादिति वाच्यम्। विधिबाधापेक्षयादेः परस्येति परिभाषाबाधस्यान्याय्यत्वात् ॥

आदेशेति। आदेर्विधाने ष्यादेशत्वसंपादनेन यत्वनिवृत्त्यार्थे पेलोपार्थं चाकारविधानं चरितार्थमित्यादेः परस्येत्यस्य बाधे मानाभावेन सर्वादेशार्थं यत्वमिति भावः। नन्वयोऽम्ङ्सीत्यत्रैव यत्वनियमश्चैषत्वो ऽपि सिद्धावितिवाच्यम्। पर्युदासे एकवचनत्वादिनासादृश्यग्रहणापत्तेः युष्मदस्मदोरित्यादावस्याप्रवृत्तेश्च। हलादावितिहि परिशेषणसिद्धो ऽर्थस्तत्रेति भावः। अनादेशतास्त्येवेति। अनादेश इतिहि तत्पुरुषो लाघवात्। एवं च त्वमहमित्यादौ संपूर्णविभक्त्यादेशे यत्वाभावसंपादकमनादेश इति प्रकृते यत्वं स्यादेव। नन्वेवमादेरकारस्य विधानं व्यर्थमिति सामर्थ्यादन्त्यस्य स्यात् तत्र चातो गुण इति पररूपे आदेशरूपविभक्तित्वमिति यत्वाप्राप्तिः। न च वार्णादाङ्गमिति परिभाषया पररूपात्पूर्वं यत्वप्राप्तिरितिवाच्यम्। वार्णाङ्गयोरेकस्थानिकत्व एव धर्मिग्राहकमानेन तत्प्राप्तेरिति चेन्न। युष्मद

अदेशत्वस्य देशेन यत्वनिवृत्त्यर्थत्वात्। न चावयवस्यादेशे सत्यपि विभक्तेरनादेशतास्त्येवेतिवाच्यम्। सर्वे सर्वपदादेशा इति सिद्धान्तात्। इदमेव शितं ज्ञापयति सर्वे सर्वपदादेशा इति। अर्थवत्येवस्यान्यादेशभावविश्रान्तिरित्यर्थः। सिच्चङादयस्तु वचनसामर्थ्यादनर्थकस्यापि बोध्याः। इदं त्वव धेयम्। अन्त्यलोपपक्षे अशः स्यादेशः प्राप्नः। अङ्गवृत्तपरिभाषया वारणीयः ॥

स्मदोरनादेश इत्यत्र प्रत्यासत्त्या युष्मदादिग्रहणेन विहितादेशरूपविभक्तेरेव ग्रहणेनान्यादेशे पररूपेपि तादृशविभक्तेरभावेन यत्वापत्तेर्दुर्वारत्वात् पररूपादेशस्तु मतन्येति भावः। सर्वे सर्वेति। स्पष्टं चेदं भाष्ये। एवं चाकारविधानेपि यत्वव्यावृत्त्या तस्य चारितार्थ्येनादेः परस्येत्येतद्बाधे मानाभावेन सर्वादेशार्थं शित्वं सार्थकमिति भावः। अत्र पदशब्देनार्थवद्गृह्यत इत्याह। अर्थवत्येवेति। अर्थवत्त्वं च कल्पितमेव गृह्यते। एतेन कृत्वादत्यस्य कृयद इत्यादेशे प्रकृतिप्रत्ययसंमोहे कृत्वसेतितुमसादित्यपास्तम्। सिजादीनां कल्पितोप्यर्थो नास्तीत्यत आह। सिच्चङादय इति। द्योत्यार्थेन सोप्यर्थवानित्यन्ये ॥

दुराग्रह इति। ज्यादादीयसइत्यस्य ज्ञापकत्वपरभाष्यविरोधादस्य दुराग्रहत्वम्। अकारान्तत्वात्प्राप्त इति। ससुड्निर्देशाभाव इति शेषः। निर्देशसामर्थ्यादिति। अयंभावः। सामः प्रसङ्गे आकमिति सूत्रार्थस्तेन आम्सकारयोरत्र विषये स्वतन्त्रप्रयोगो बोध्यते स्यान्यादेशाभावविषये सर्वत्रैवमेव। यथार्धधातुकविषये स्तेः प्रयोगोभुवः प्रयोगस्थाऽस्तेरित्यनेन प्रतिपाद्यते न तु सतो निवृत्तिः। शब्दानित्यत्वप्रसङ्गात्। किंतु प्रसक्तबुद्धेरेव निवृत्तिः। नत्र सकारबुद्धेः प्रकृते सा प्रतिका असंभ

यदि त्विदं स्यत्कार्यं तद्विषयिण्येव सा परिभाषा न त्वङ्गाधिकारमात्रपरेति दुराग्रहः, तर्हि अशि स्यत्रातो गुण इति पररूपेणाकारान्तरं प्रश्लिष्याकाररूप एव अश् भवति न विधीयते इति व्याख्येयम्। यत्तु स्यादेशस्यापवादेऽपि नित्त्वात् अणादेशप्रवृत्तिकाले शेषेलोपाभावेन स्यादेशस्याप्रसक्तेः भाविन इति। कृते तु शेषेलोपेऽकारान्तत्वात्प्राप्तः सुट् ससुड् स्यस्यानित्वेन निर्देशसामर्थ्यान्निवर्तत इति भावः। शेषेलोपष्टिलोप इति पक्षे तु सुड्ग्रहणं व्यर्थमेव। आकमि दीर्घोच्चारणं सवर्णदीर्घार्थम्। अन्यथा पररूपं स्यात्। न चाकारोच्चारणसामर्थ्यम्। एतन्निवृत्त्यऽभ्यमइवचरितार्थत्वात्। इह युवावौ द्विवचने त्वमावेकवचन इति सूत्रद्वये द्विवचनैकवचनशब्दौ न प्रत्ययपरौ किं त्वर्थपराविति व्याख्यानम् ॥

वाङ्गावित्याग्रहणं सकारोच्चारणसामर्थ्यादिति भाष्ये स्पष्टम्। तन्निवृत्तिश्चामोऽभावात्। अत्र सामः स्थानित्वोक्त्याऽऽकमि स्थानिवत्त्वेन साम्त्वमेव न त्वाम्त्वम् अत एवानित्याकमित्यादौ प्रत्ययोत्तरपदयोरिति सूत्रभाष्योदाहृते आकमुडभावौ सिद्धौ। आम्येव साम्त्वस्याहार्यारोपेणादेशः। आदेशसाम्त्वाभावाच्चात्र न तद्। न च यत्र भावी सुट् तत्रैवायम्। साम्नो भावित्वस्य सर्वथा दुरुपपादत्वादिति भाष्यविरुद्धकल्पना व्यर्थेति दिक्। किं त्वर्थपराविति। व्याख्यानमत्र शरणं द्वयोरेकस्य च वाने बोधने समर्थयोर्युष्मदस्मदोरिति वाच्योऽर्थः ॥

म·श· भूतपूर्वेति। जहत्स्वार्थावृत्तिरित्यभिमानेनेदम्। सामर्थ्यादेवतद्बाधादिति। उभयगतिरिह शास्त्रे भवतीति संख्यासञ्ज्ञासूत्रस्थभाष्योक्तेश्चेति तत्त्वम्। अन्यथाद्वयो
१०२ रेकस्मिन्निमित्तत्वेव युष्मदादिविशेषणतयासिद्धेर्वचनग्रहणसार्थक्यं दुरुपपादमिति बोध्यम्। बाधादिति। आकमुत्पत्तिकालेन्त्यलोपाभावेन सुटोऽसत्त्वादिति

तत्फलं दर्शयति। समस्यमाने इत्यादिना। द्व्येकत्वेति। पञ्चकं प्रातिपदिकार्थ इति पक्षे संख्याया अपि प्रातिपदिकार्थत्वादिति भावः। त्रिकपक्षे तु द्व्येका
र्थवाचिनीति पाठ्यम्। संख्याया विभक्त्यर्थत्वेपि संख्येयस्य प्रातिपदिकार्थत्वादिति भावः। समासार्थो मुख्यविशेष्यम्। अन्यसंख्यश्चेत्। युष्मदस्म
दर्थगतसंख्येतरसंख्यश्चेदित्यर्थः। स्त इति। अर्थपरत्वाश्रयणसामर्थ्यादेव भूतपूर्वगतेरपि स्वीकारात्। प्रत्ययपरत्वे तु न स्याताम् इत्यव्याप्तिः स्यादि
त्यर्थः। एवं चतुर्थश्लोकेपि युवावौत्वमौ न चेत्सुक्प्रत्ययपरत्वेऽतिव्याप्तिर्ध्वनिता। एवञ्चाव्याप्त्यतिव्याप्तिपरिहारायार्थपरत्वमाश्रितमिति फलितम्। न
चकश्चिमाद्वैत्रिमन्यायविरोधः। वचनग्रहणसामर्थ्यादेव तद्बाधात्। अन्यथा हि द्वित्वे एकत्वे इत्येव ब्रूयात्। द्वित्वे एकत्वे च या विभक्तिस्तस्यामिति व्याख्या
सम्भवादिति भावः। अतित्वाकमतिमाकमिति। यत्तु वदन्ति साम आक मित्यत्र यद्यपि सुट्ग्रहणं नस्थानि विशेषणं बाधात्। तथापि उपलक्षणं भव
ति। तेन यस्याम: सुडग्रभावी तस्यैव आमआकमा भवितव्यम्। नचैतत् गौणे संभवतीत्याकम् न प्रवर्त्तते। नच समुदायनिर्देशे विशेषणत्वमुपलक्षण
त्वं वा विहाय तृतीयः प्रकारोस्ति। न च सुडामोः पृथक् स्थानित्वमिह निर्दिश्यते। चशब्दस्य द्विवचनस्य च अभावात्। यदि तु सुट् च आम् चेति समाहार
द्वन्द्वो व्याख्यायेत

भावः। नचैतद्गौणत्वे इति। सर्वनामत्वाभावादिति भावः ॥ राम: १०२

योग्यताबलाच्चेति। आम्समभिव्याहारेयुष्मदस्मद्व्यान्तस्यैवसंभवादितिभावः। सादिसाभ्युपगमादिति। समूहाभ्युपगमादित्यर्थः। कृत्सितेति। तेभ्योलिटद्व
ण्निषेधादितिभावः। उभयत्रतुल्येति। एवंचपूर्वमामआकमितततः सुटितद्विशिष्टस्यपुनराकम्सुस्येगौणत्वेनामस्य। सूत्रेसकारग्रहणंतुसुड्विशिष्टपरामर्श

योग्यताबलाच्चसश्शब्देनसुडेवगृह्येत। तथापियदिसुट्ग्रहणमन्वाचयशिष्टंततः समासोनस्यात्। अन्यत्रतुसाहित्यविवक्षयाकेवलस्यामोः
प्रसक्तेरिति॥ अत्रेदंवक्तव्यम्॥ यस्सामः सुडग्रेभावीसादितावद्बाधितम्। आकमाः परतस्तस्यसुडन्वयाभावात्। आकमः सुड्भावीतिचेत्तर्हित
मेवोपलक्षयेत्। आदेशद्वारकेणपरम्परासंबन्धेनस्थानिनमुपलक्षयतिचेत्। हन्तैवंयुष्माकमित्यादौसुट्श्रूयेत। सामइतिनिर्देशसामर्थ्यान्नश्रूय
तइतिचेन्न। निर्देशस्यगौणग्यारत्याचरितार्थत्वेनसामर्थ्याभावात्। यदपिसमाहारद्वन्द्वंप्रक्रम्यान्वाचयशिष्टत्वेदूषणाभिधानम्। तदप्यसम्भवदु
क्तिकम्। साहित्यविवक्षयाकेवलस्याप्रसक्तिरितिपरमवशिष्यते। तदपिन। प्रक्रियादशायांस्थितस्यामउत्तरकालभाविनोत्प्रेक्षितस्यसुटश्चैकबुद्ध्यु
पारोहेणैवसाहित्याभ्युपगमात्। अतीतानागतयोरयंद्रष्टेतिवत्। तत्रोभयोरेकस्मिन्दर्शनेसंबन्धइतिचेदिहाप्येकस्मिन्नादेशेइतितुल्यम्। तथा
चइरयोरितिसूत्रेदध्रेइत्यादौधात्रोभस्यइरेचिआतोलोपेरेभावेतस्यकृत्सभृप्रभृतिषुचरितार्थतयाइटिकृतेइरयोरितिद्विवचननिर्देशात्तस्यापि
कस्यापिरेभावः पुनः क्रियतइतिस्थितमाकरे। इरयोरित्येकशेषः सामइतितुद्वन्द्वः। सहविवक्षातूभयत्रतुल्यैव ॥

तिभावः। एवंपरोक्तसमाहारद्वन्द्वेपिगौणेआकममुपपाद्यसत्पदस्यसुड्विशिष्टेलक्षणामसहमानैस्तदीयैरन्यैरुक्तंप्रकारान्तरमपिस्वरूपव्याक्रियैवपरा
कृतेइतिन्यायेनदुष्टमितिबोधयन्ननुवदति। वस्तुतइत्यादिना ॥
य

फलैक्यमिति। तत्पक्षेपि प्रथमप्रवृत्त्यैव पर्यवसानादिति भावः। सिद्धान्तीत्यस्यैवं त्वदीये रुक्तमिति शेषः। एतेन साम्यदस्याम्यदेन न तत्र मसारूप्यात्सारूप्यस्यैव
तद्बीजतया हर्यादिभिरुक्तेः। पूर्वं तन्त्रकत्वात् ततः सुपदेन समासे उभयोरपि तत्त्वं बन्धबोधापत्तिः। किं चैवमपि गौणेनु ज्ञापयितुमशक्यः। नचामासहितस्यामत्या
कमित्यर्थः। गौणे तु टितत्साहितस्याप्याकमिति वाच्यम्। प्रथमप्रवृत्त्यैवेत्यादेरसंङ्गत्यापत्तेस्तन्त्रे एवमर्थस्य निरूपयितुमशक्यत्वाच्चेति वस्तुतस्त्वित्याद्युक्तिरसङ्ग-
तेत्यपास्तम्। अस्यापि ग्रन्थस्य परमतानुवादत्वेन दुष्टत्वेप्यदोषात् तदनुष्ठ दफलं च तेषां परस्परविरोधप्रदर्शनं तदेनत्तकलंध्वनयन् परमतदूषणमुपसंहर
ति। सर्वथेति। अत्र नुटो निवृत्तिस्तु पूर्वमुपपादितेतिदिक्। ननु पदस्येत्यधिकारेपि युष्मदादिरूपपदस्य विभक्त्यविशिष्टस्यापि भ्यामादौ संभवाद्विशिष्टयोरित्य

वस्तु न स्तु। साम आकमिति सूत्रे केवलोप्याम् तन्त्रेण निर्दिष्टः। नस्याकमिति स्थानिवद्भावेनाम्त्वात् ससुट्कत्वाच्च सामइति प्रवर्तने। गौणत्वे तु प्रथ
मप्रवृत्त्यैव पर्यवसानम्। अत एव शेषे लोपष्टिलोप इति पक्षेण सह फलैक्यमपि सिद्ध्यति। सर्वथापि अतित्वयामतिमयामिति केचिदुत्प्रेक्षितं समर्थ
यितुं नाभिनिवेष्टव्यम्। अतित्वाकमतिमाकमित्यादेर्भाष्यकृतैवोदाहृतत्वादितिदिक्। षष्ठ्यादिविशिष्टयोरिति। एतच्च सर्वस्य पदस्येत्यधिकाराल्लभ्यते।

र्थलाभः षष्ठीद्वितीययोरसंभवेन पदावयवयोरित्यर्थलाभेपि त्वदुक्तार्थेनमानम्। न च पदावयवत्वस्याभिचारित्वेन तदनुवृत्तिसामर्थ्यात्तदर्थलाभः। तदनु
वृत्तेरुत्तरत्रावश्यकत्वेन सामर्थ्यायोगादत आह। सर्वस्येति। तत्सामर्थ्याद्युष्मदाद्यवयवकस्य सर्वस्य पदस्येत्यर्थ इति भावः। अत एव युवाभ्यामित्यादौ प्रकृतिभाग
स्य न। असत्यपि एवमपदेशिवद्भावप्रवृत्त्या युष्मदाद्यवयवकत्वाभावाच्च। एकाज्द्विर्वचनन्यायेन समुदाये एव तत्प्रवृत्तेश्च। अतितवेत्यादीनां तु नतेदृत्यादेशः
णत्वादेः प्रकृत्याकाङ्क्षायां प्रत्यासत्त्या श्रूयमाणयुष्मदादिप्रकृतिकस्यैव ग्रहणेनादोषात्॥

तेनैवकारणेनेति। श्लोकस्थं तेनेति भक्तत्वे हेतुकथनमिति तद्भावः। विधिरिति। स चाज्ञातज्ञापनरूपो न तु प्रवर्तनारूपः। दिमिति। तदर्थस्तु भक्तत्वे हेत्वाकाङ्क्षायाम भा-
स्यग्रहणं तु विभक्तौ श्रूयमाणायामेव यथा स्यान्न तु लुप्तायामित्येतदर्थमिति वक्ष्यति। वेदैरशेषैरिति। युष्मान् रक्षतु गोविन्दो मां न कृष्णः सर्वमवतु इति तु प्रा
चः पाठस्त्यक्तो ऽस्मान्नित्यस्य समानवाक्यस्थत्वाभावादेवाप्राप्तेः। स्थग्रहणादिति। तिष्ठतिरत्रानैवर्तते। यथा समये तिष्ठ सुग्रीवेति समयं मा जहासी
ति गम्यते। तेन षष्ठ्यादीन जहतोरेवादेशा इत्यर्थः। युष्मत्पुत्र इति। युवयोर्युष्माकं वा पुत्र इति विग्रहः। पदात्परत्वं संपादयितुमिति शब्दः। प्राचा तु नासौ
प्रयुक्तस्तत्र पदात्परत्वाभावादेवादेशो न भविष्यतीति किं स्थग्रहणेन। नन्वेवा। चादिति। पञ्चकेति। पञ्चानां मध्ये न्यतमेन योग इत्यर्थः। युक्त इति। नपुंसके भावे
क्तः। पश्यार्थैः। अत एव निपातनाद्ध्रावेशः। दर्शनं पश्यः। नचेह ज्ञानमात्रम् अदर्शनं लोप इत्यत्र यथा न तु चाक्षुषज्ञानमेव। अनालोचन इति निषेधात्। तदेतदाह।
अचाक्षुषज्ञानार्थैरिति। भक्त इत्यादि। अत्र व्याचख्युः। येन हरेस्त्वं भक्तस्तेनैव कारणेनाहमपि भक्त इति योज्यम्। यदि तु तेनेत्यनेन भक्तत्वं त्राणे हेतुर्निर्दिश्यते।
ततः सापेक्षविधानेत्वमेव तदिममिति वदन्वादेशो न स्यादिति। अत्रेदं वक्तव्यम्। सापेक्षत्वविधाने ऽन्वादेशत्वं नास्तीति तावदसंगतम्। आदेशो हि विधिः किंचि
द्विधायमन्यादितरविशिष्टान्वादेशेन तु निरपेक्षत्वगर्भः शब्दार्थतान्। शास्त्रे तथा ऽपरिभाषितत्वाच्च। न च प्रयोगदर्शनादेव तथा कल्प्यत इति वाच्यम्। अन्य
द्धिपैनोन्वयिता नगस्य। अथैनमद्रेस्तनया शुशोचेत्यादौ सापेक्षत्वेपि एनादेशदर्शनात्। तत्र हेतुत्वं न शब्देनोपात्तमिति चेन्न। तदेनमुल्लङ्घितशासनं विधेर्विधि
त्सिकौ नाशनिकेतनातिथिमित्यादि माघप्रयोगविरोधात्। नक्तंभीरुरयमिति तु नायं विधिः किं त्वनुवादः। अतस्तदिममिति न विरुध्यते। एवं स्थिते ऽपेनत्वं भक्त
इति यत् शब्दाध्याहारक्लेशो व्यर्थः किं तु तेन त्रायत इत्येव संबन्धः। प्रक्रान्तार्थत्वाच्च न मच्छब्दापेक्षेति दिक् ॥
त। त्राणे आकाङ्क्षिते हेत्वर्थकस्याध्याहारे सापेक्षत्वं तवापि दुर्निवारं च शब्दमर्यादया तेनेत्यस्य त्राणे एवान्वयप्रतीतेः शब्दमर्यादात्यागश्चेति

र्द्दृति। अयंतद्‌इत्यनेनहरिस्त्वामित्यनेनशब्दोन्वयः समामित्यस्याध्याहारः। वैपरीत्यंतुनाध्याहारस्यानुपपत्तिमूलकत्वेनोत्तरत्रैवयुक्तत्वात्। किंचाध्याहृतस्यागन्तूनामन्तेनिवेशइतिन्यायेनान्त एवनिवेशेनसमामित्यस्यतदर्थकत्वमित्यस्यैवाध्याहारपदार्थत्वेनचसइत्यस्यविद्यमानपूर्वकत्वाभावः। अप्रमाणंतुनसमानवाक्यस्थमितिभावः। अनुष

अत्रतेनेतिपूर्वविद्यमानंनतोःहरेरितिप्रथमान्तंततः परस्यादेशः तथाअयतद्‌इत्यस्मापरंसइतिप्रथमान्तम्। नचत्रायतद्‌इतिभिन्नवाक्यस्थमितिभ्रमितव्यम्। सहरिस्त्वांमात्रायतइतिनन्वोअनेककारकसंबन्धात्। अनुषङ्गाभ्युपगमेप्येकतिङ्‌वाक्यमितिपरिभाषितैकवाक्यत्वानपायाच्च। सामन्त्रितम्

सञ्ज्ञाविधावपिमहासञ्ज्ञाकरणसामर्थ्यात् तदन्तग्रहणम्। आमन्त्रणमामन्त्रितमुपचारात्तत्साधनेरत्तिः। विभक्त्यन्तेनचामन्त्र्यतेनतुकेवलया। विभक्त्येत्याशयेनाहभ्रवदन्तमिति। आमन्त्रितंपूर्वमविद्यमानवत्। यत्तुप्राचोक्तंविशेष्यपूर्वसंबोधनेतरपूर्वंचसंबोधनंहित्वान्यस्मात्संबोधनात्परयोर्नैतेआदेशाइतिकेचिदिति। तत्रकेचिदित्यनुचितम्। उक्तार्थस्यप्रकृतद्विसूत्रीसिद्धत्वात्। यच्चव्याचख्युः। त्रिसूत्र्यामयमर्थइतितन्न। तृतीयसूत्रार्थस्यतेनासंस्पर्शात्। पादः पत्। तदवयवस्येति। निर्दिश्यमानस्यादेशाइतिपरिभाषयेदंलभ्यते॥ दन्ताः॥ अग्निमन्थतीति। मथ्नातेर्मन्यतेर्वाकिपिएतदेवरूपम्। इदितस्तुनलोपाभावात्। अग्निमन्। अग्निमन्थौ। अग्निमन्थः॥ थान्ताः॥ ङकारइति। आन्तरतम्यादितिभावः। ह्रस्वव्यञ्जनयोरिति। व्यञ्जनस्यहिह्रस्वईषत्सदृशोदीर्घस्तुविसदृशइतिभावः। उक्तंचेति। वार्त्तिककृतेतिशेषः। केचित्पूर्वस्यैवमुत्वादमुष्याङित्युदाहरन्ति। तद्भाष्यादौनोक्तमित्युपेक्षितम्। उदईत्। अचइत्यस्यापवादः। चान्ताः ॥ ङेति। अनुषङ्गोहितत्सजातीयशब्दान्तरकल्पनाऽपात्तस्यैवतदर्थकत्वंवा। तत्रोपात्तस्यान्वयाभावेनसमानवाक्यत्वंदुरुपपादमितिभावः। एकतिङिति। एकशब्दोहितत्रसमानवाचीतिभावः। केचित्तुपूर्वस्यैवेति। अदसोद्रेः पृथङ्मुत्वमितिपृथग्वाक्यम्। तेनकदाचित्पूर्वस्येतितदाशयः। उपेक्षितमिति। केचिदन्त्यसदेशस्येत्यस्यवैयर्थ्यापत्तेश्चेत्यपिबोध्यम् ॥

विभज्यतेइति।तन्नचासन्तस्येत्येकदेशेस्वरितत्वप्रतिज्ञानात्तावतएवतन्त्रसंबन्धइतिभावः।अतइतिवातुप्रषष्ठीकंपृथक्पदम्।कैयटेति।उगिद्चामितिसूत्रेहितेनेदमुक्तम्।हेइत्यनुवृत्त्यैवेति।अनुवृत्तंचपूर्वाभ्यासइत्यादाविवानुवादमितिभावः।समुदायेति।गर्गाःशतंदण्ड्यन्तामित्यत्रेवेतिभावः।अन्यथाब्राह्मणभोजनन्यायेन प्रत्येकंसञ्ज्ञास्यादितिभावः।अन्यथा। प्रत्येकंसञ्ज्ञायाम्।अभ्यस्तानामिति।अमिटिअजादौलसार्वधातुकेभ्यस्तानामादिरुदात्तइतितदर्थः।इतिआदिरिति।आदिशब्दःपूर्ववर्तिवाची।भाष्ये

भत्वसन्तस्यचाधातोः।इहाधातोरितियोगोविभज्यतेतस्मादनन्तरस्यासन्तस्यैवप्रतिषेधः।नात्वन्तस्येतिकैयटहरदत्तादयः।तदेतद्दर्शयति।धातुभिन्नासन्तस्येति।उभेअभ्यस्तम्।इहेत्यनुवृत्त्यैवसिद्धेउभेग्रहणंसमुदायप्रतिपत्त्यर्थमितिव्याचष्टे।उभेसमुदितेइति।अन्यथाहिनेनिजतीत्यत्राभ्यस्तानामादिरित्याद्युदात्तत्वंप्रत्येकंपर्यायेणस्यात्।जसित्यादयःषट्।जस्इतिपृथक्पदम्।इतिशब्देनजक्षितिरेवपरामृश्यतेइतिआदिर्येषामित्यतद्गुणसंविज्ञानोबहुव्रीहिरनेनदाह।षड्धातवोन्येइति।तान्ताः॥ गोपायतीतिगुपूकिपिविवक्षितेआयादयआर्द्धधातुकेवेत्यायाभावः॥पान्ताः।त्यदादिषु।अनालोचनेकिम्।तंपश्यतीतित्यदृशः।कर्मण्यण्।तादृशादयस्तुरूढिशब्दत्वादुत्तापिअवयवार्थेनव्युत्पाद्यन्ते।अतएवअज्ञानार्थाद्दृशेरितिसंगच्छते।भाष्येतुकर्मकर्तरिव्युत्पत्तिर्दर्शिता।तमिवेमंपश्यन्तिजनाःसइवायंपश्यतिज्ञानंविषयोभवतीत्यर्थोत्तत्रविषयत्वापत्तिमात्रवृत्तित्वेपिविषयीकरणावृत्तित्वादज्ञानार्थादितिसंगच्छते।नशेर्वा।अत्रभल्यपीत्यपाणिनीयम्।नष्टमित्यादावतिप्रसक्तंच।नगिति।षडगकाःप्राग्वत्। शान्ताः ॥

तुकर्मकर्तरिव्युत्पत्तिर्दर्शितेतितमिवेमंपश्यन्तिजनाःसोयंसइवदृश्यमानस्तमिवात्मानंपश्यतीतिभाष्येउक्तंतत्राध्यारोपितप्रेषणपक्षेकर्मकर्तृत्वम्।पश्यतीत्यस्यचदर्शयतीत्यर्थइतिस्पष्टमेवतत्राधिकार्थत्वादज्ञातार्थत्वबोध्यम्।निवृत्तप्रेषणकर्मकर्तर्यपिसेकुर्व्युत्पत्तिंदर्शयति।तमिवेममित्यादि।अत्रपक्षेकर्मणीत्याधिकारबाधःसामर्थ्यादितिबोध्यम्।

पूर्वस्य। विसर्गस्थानिकसस्य। अस्मिन्। संयोगान्तलोपे। पूर्वपूर्वमन्तरङ्गमित्याश्रित्येतिभावः। पदसंज्ञासापेक्षत्वेनेति। बहिर्भूतसुब्निमित्तकेत्यादिः तदपेक्षयाऽबहूपेक्षत्व
रूपं बहिरङ्गत्वं प्रबलमिति भावः। प्रागुक्तमिति। पूर्वं पूर्वमन्तरङ्गमित्याश्रित्य लोपासिद्धत्वेनेत्यादिः। अतिदेशेनेति। विभक्त्याश्रयस्यैकदेशविकृतन्यायेन लभ्यस्येत्यर्थः।
नुम्विसर्जनीयशर्व्यवायेपि। इत्वेनेति। सनः सस्य सत्वविसर्गयोः कृतयोर्वा शरीति विकल्पात् पक्षे सकारः। तेन शर्व्यवायेसुपः सस्य षत्वं पूर्वस्य त्वं न त्वादे
शप्रत्यययोरिति षः। अपादान्तस्येति निषेधादिति भावः। एवं स्थिते सकारग्रहणेन सिद्धे शर्ग्रहणस्य प्रयोजनं चिन्त्यम्। व्याख्यानादिति। असम्भवादिति हरदत्तो
क्तिर्नादर्तव्या। सुहिन्सु इत्यत्र सम्भवादिति भावः। संयोगान्तेति। ने वाक्षिन्कर्तव्ये बहिरङ्गत्वेनाऽतो लोपस्याऽसिद्धत्वं शङ्क्यम्। पदसंज्ञासापेक्षत्वेन संयोगान्तलोप
स्यैव बहिरङ्गत्वात्। कथं तर्हि काष्ठंकलत्रं घात्वं वा चक्षाणे संयोगान्तलोपो नेति प्रागुक्तमिति चेन्न। तत्र यणः प्रतिषेधो न वाच्यो झलो लोपादिति पक्षद्वयेपि लो
पाभावे निर्णीते तदेकरूप्याय पूर्वं पूर्वमन्तरङ्गमिति ग्रहीतुं युक्तम्। अतिदेशेन लभ्यस्य पदत्वस्य तत्प्रयुक्तलोपस्य च लक्ष्ये पूर्वभागे विश्रान्तेः स्पष्टत्वात्।
इह तु आद्यपक्षद्वये संयोगान्तलोपस्य स्पष्टत्वात्तदेकरूप्याय बहिर्भूतनिमित्तापेक्षं बहिरङ्गमित्यस्यैव न्याय्यत्वादिति दिक्। तक्षिरक्षिभ्यामित्यादि। यत्तु वद
न्ति। पुङ्क्ते चक्रं पुङ्क्ते वा चक्षाणे पुकलोपः। पुल्। पुङ्क्षौ। पुल्भ्याम्। चक्। चक्षौ। चभ्याम्। पूः। पुङ्क्षौ। पूर्भ्यामित्यादि तत्सर्वमनेन प्रत्युक्तम्। अयं तु विशेषः। तत्राऽगि
त्यत्र संयोगान्तलोपो निर्विवादः। नन्वत्र तु सोपि दुर्लभ इति। दिधगिति। यत्तु दहेर्होढः घढोरिति कत्वासिद्धत्वात्। संयोगान्तलोपे ढस्य जश्त्वे दिधडिति नैमिषीयेणो
क्तम्। तच्चामादिकम्। दादेर्घ इति घत्वस्य ढत्वापवादस्य जागरूकत्वात्। षान्ताः ॥
लक्ष्यपूर्वभागे इति। काष्ठादिशब्दरूपलक्ष्यस्य पूर्वभागे याधन्ते इत्यर्थः। बहिर्भूतेति। बहिर्भूतनिमित्तापेक्षत्वरूपबहिरङ्गत्वस्येत्यर्थः। वस्तुतस्तेषामनभिधानमेव पूर्वं 
पूर्वमित्यस्य च पूर्वपूर्वनिमित्तकमित्येवार्थ इत्यन्यत्र प्रपञ्चितम्। दुर्लभ इति। यरू त्वाद् झलत्वाच्चेति भावः ॥ 

स्यानिवद्भावेनापिसिद्धेरिति। ङित्ववदितिभावः। नचतदनुबन्धपरिभाषाप्रवृत्त्यर्थमेवतत्। निरनुबन्धकत्वेनापितत्सिद्धेः। कथंचिदिति। तेनपद्यन्त इतिसूत्रेछन्दसीतिनिवृत्तेः कल्प
नैपातस्यचारितार्थ्येनैतदर्थज्ञापकत्वासंभवइतिसूचितम्। प्रागेवेति। अन्तरङ्गत्वादितिभावः। निवर्तयिष्यतेइति। अकृतव्यूहपरिभाषयापूर्वमेवनप्रवर्तयिष्यतइतिभावः। अन्तरङ्गेइ
विद्वानिति। विदेः शतुर्वसुः। अदादित्वाच्छपोलुक्। सेदिवानिति। भाषायांसदवसश्रुवइतिक्वसुः। सेदुषइति। ननुतदनुबन्धकग्रहणेनातदनुबन्धकस्येतिपरिभाषयावि
देःशतुर्वसुरित्यस्यैववसोः संप्रसारणंयुक्तं नतुक्वसोः। सत्यम्। वसोरुकारानुबन्धग्रहणंक्वसोः सामान्यग्रहणार्थम्। उगित्वस्यस्थानिवद्भावेनापिसिद्धेः। इहगमिप्रभृति
भ्यःक्वसुर्नेदाह, तच्छान्दसत्वात्। कवयस्तुप्रयुञ्जते। श्रेयांसिसर्वाण्यधिजग्मुषस्तेतंतस्थिवांसंनगरोपकण्ठेइत्यादि छान्दसाअपिक्वचिद्भाषायांभवन्तीतिमासश्छन्दसी
तिसामान्यापेक्षज्ञापकमाश्रित्यकथंचित्समाधेयम्। पुंसोसुङ्। विवक्षितेइति। तेनपरमपुमानित्यत्रपरत्वादसुङि कृतेसमासान्तोदात्तत्वंभवदसुङ एवाकारस्यभवति।
परसप्तम्यांतुनैतत्सिद्ध्येत्। सर्वनामस्थानोत्पत्तेःप्रागेवपुंशब्दोकारस्योदात्तत्वेकृतेसंसतनधर्मिणोहलःस्थानेतद्धर्मिणोऽनुदात्तस्यैवादेशस्यप्रसङ्गात्। नचोकारस्यकृतो
पिस्वरोऽनन्त्यत्वान्निवर्तयिष्यते। असुङश्चान्त्यत्वात्करिष्यतइतिवाच्यम्। अन्तरङ्गे स्वरेकर्तव्येबहिरङ्गस्यासुङोऽसिद्धत्वादितिभावः। एतच्चकैयटहरदत्तानामनुरोधेनो
क्तम्। वस्तुतस्तुपरसप्तमीपक्षोऽपिसूपपादः। अकृतव्यूहपरिभाषायाअन्तरङ्गपरिभाषापवादत्वादित्यवधेयम्। नन्वेवमसमासेऽप्यसुङि कृतेप्रातिपदिकस्वरेणसति
सिद्धेनप्रत्ययस्वरस्यबाधादसुङ उदात्तत्वंस्यात् इष्यतेनूकारस्य । पुमान्संपरिपालितस्यादौतथैवपाठादितिचेत्सत्यम्। डुम्सुनोनित्करणसामर्थ्यान्प्राति
पदिकस्वरोनभवतीतिहरदत्तः ॥
ति। अकृतव्यूहपरिभाषातुनास्त्येवेतिभावः। तदेवाह। कैयटेत्यादि। भाष्येप्युपदेशिवद्भाववचनंकर्त्तव्यमित्युक्तम्। अकृतव्यूहपरिभाषायाइति। सत्त्वइतिशेषः ।

नन्वैतदिति। अन्तोदात्तत्वधारणायनित्करणसामर्थ्याश्रयणमित्यर्थः। फिट्स्वरस्येवात्राप्राप्तेरितिभावः। इदम्। इम्सुनोनित्वम्। यद्यप्यसिद्धमिति। नित्वाभावेपिफिषोन्तद तिकर्तव्ये असुङोबहिरङ्गस्यासिद्धत्वात्प्रत्ययस्वरेणोकारस्योदात्तत्वेप्राप्ते स्थितेततोसुङनुदात्तएवेतिभावः। नित्करणमिति। त्युत्पत्तिपक्षेइत्यादि। उङ्गावितावितीति। लो पेनरेफसंज्ञाप्रयुक्तकार्यार्थमितिभावः। नतु ध्वनयन्तव्याख्याता लुउगित्कार्यार्थमिति। इत्वप्रसङ्गादिति। नचेत्वविधायके आ आपौतिप्रश्लिष्टनिर्देशान्नत्वम्। कारिकेत्या

नन्वेतदयुक्तम्। प्रकृतिप्रत्ययविभागशून्येष्वेवफिषइत्यस्यप्रवृत्तेरितिचेत्सत्यम्। क्वचित्सखण्डेष्वपिप्रवृत्ताविदंलिङ्गम्। यद्यपिअसिद्धंबहिरङ्गमितिवेदं सिद्धंतथापिबहिरङ्गपरिभाषाया अनित्यत्वमपिज्ञापयितुंनित्करणमितिनिष्कर्षः। उच्चारणार्थइति। यत्तुप्राचोक्तमुङावितावितिं। यच्चतन्मात्रेणव्याख्यातमु कारउगित्कार्यार्थइतितदसंगतमितिभावः। हेपुमन्निति। असंबुद्धाविचुक्तेर्नदीर्घः। पुंस्विति। संयोगान्तलोपेमोनुस्वारः। नुम्स्थानिकस्यैवानुस्वारस्योपलक्ष णान्नुमविसर्जनीयेतिनषत्वम्। अस्यसंबुद्धाविति। एतच्चवाचनिकम्। यत्तुहरदत्तादयआहुः। सोडेतिवाच्येअनङ्सावितिवचनेनक्वचिदनङएवश्रवण स्यज्ञापितत्वादेतत्सिद्धमिति। तन्नुप्रागेवदूषितम्। अङ्गवृत्तपरिभाषयावासमाधेयम्। अदसऔसुलोपश्च। ननुसोरेवौकारोविधीयतांत्यदाद्यत्वेनासाविति सिद्धंकिंसुलोपविधानेन। मैवम्। असकौस्त्रीत्यत्रटापिप्रत्ययस्यादितीत्वप्रसङ्गात्। असुकइति। औत्वाभावेत्यदाद्यत्वंसादुत्वम्। अमुकइतित्वसाधुः। सत्वेनमु त्वस्यबाधात्। एवममुकीअमुकशर्मा इत्यादयोप्यसाधवएव। असुकाअदकःशर्मेत्यादेरेवन्याय्यत्वात् ॥

दावपिइत्वानापत्तेः। तस्मात्प्रश्लिष्टनिर्देशोनात्रेत्यत्रैवभा ष्यस्पष्टम्। एतेनविभक्ताविसस्यत्यदादीनामदृत्यत्रविषयसप्तमीत्वमपास्तम्। एवंहिविभक्त्युत्पत्तेःपूर्वंत्यदाद्यत्वेटापिसावदसइत्यन्त्यसौत्वेपिस्थानिवत्त्वेनादित्वापत्तेःअनि र्दिष्टपरिभाषायांसत्यांविषयसप्तम्यावक्तुमशक्यत्वाच्चेतिदिक्। न्याय्यत्वादिति। क्वचित्सान्तत्वेनमुत्वाप्राप्तेः। क्वचित्सत्वेनबाधादितिभावः ॥

नस्यादिति। इनादेशगुणौ चस्यातामित्यपि बोध्यम्। हशि चेत्यस्येति। नर्वर्थमित्यादावतोरोरित्यस्याप्यावृत्त्यर्थमित्यपि बोध्यम्। नन्वेवं चरितार्थत्वादिति। सामर्थ्याच्चोत्वं सर्वादेशः।
एवं च। योगविभागेनासिद्धत्वाभावे च। अशग्रहणं चेति। अत्र यद्वक्तव्यं तदुक्तं प्राक्। इति हलन्ताः पुल्लिङ्गाः; ननु सन्निपातपरिभाषया नत्वं न स्यादत आह। इष इति। धत्वे कृते
एत ईद्बहुवचने। पारिभाषिकस्य ग्रहणे अमीभिरित्यादिसिद्धावपि जसि अमी इति न सिद्ध्येत्। न ह्यत्रैकारस्य बहुवचनपरतास्त्यतो व्याचष्टे। बह्वर्थोक्ताविति। नमु
ने। न इति विषयसप्तमीत्याह। नाभावे कर्तव्ये इति। अन्यथा घेः परत्वाभावान्नाभावो न स्यादिति भावः। नन्वेवमपि कृते नाभावे सुपि चेति दीर्घः स्यात्। दीर्घप्रतिमु
त्वस्यासिद्धत्वादत आह। कृते चेति। सन्निपातपरिभाषया वा समाधेयम्। अत्रेदमवधेयम्। अधुनेतिवदमुनेति वक्तव्ये नमुन इत्युक्तिर्नेति योगविभागार्था। तेन रामः
रामेभ्य इत्यादिसिद्धिः। अन्यथा रोरसिद्धत्वे योकारस्येत्संज्ञालोपौ स्याताम्। नचानुनासिकनिर्देशसामर्थ्यादित्संज्ञालोपौ प्रत्यसिद्धत्वं नेति वाच्यम्। नरुमूलमित्या
दौ हशि चेत्यस्याप्यावृत्तये। तोरोरित्यत्रानुनासिकस्यैव निर्देशेन तत्रैव चरितार्थत्वात्। नचाऽतोरोरित्यत्र मास्त्वनुनासिकः प्रतिपदोक्तग्रहणेनैव निर्वाहादिति वाच्यम्।
एवमपि देवरुहीत्यत्र रुधातोर्दुर्वारत्वात्। रामइत्यादावप्यनु चे रोः श्रवणस्यापाद्यमानतया चरितार्थस्य सुवचत्वाच्च। एवं चैत्वस्यानिवृत्तत्वात्रस्यापि प्रवृत्तौ पदत्वा
द्विसर्गोऽपि लभ्यते। प्रत्ययः स्य इत्यादिनिर्देशाय त्वविधावशग्रहणं त्वङ्गमिति दिक्॥ इति हलन्ताः पुल्लिङ्गाः॥ नहो धः। द इत्येव नोक्तम्। तथा हि सति नद्धमित्यत्र रदाभ्या
मिति नत्वं स्यात्। झषस्तथोरिति च न स्यात्। अत्रेदमवधेयम्। सुष्ठु अनड्वाही यस्यामिति बहुव्रीहौ स्वनड्वानित्यादि पुंवदेव रूपम्। यत्तु गौरादिङीषं कृत्वा स्वनड्वाही स्युदाज
हुः तच्चिन्त्यम्। अनुपसर्जनादित्यधिकारविरोधात्। गीरिति। गॄ निगरणे शब्दे च। क्विपान्त ऋत इदिती त्वं म। र्वोरुपधाया दीर्घः। पूरिति। पॄ पालनपूरणयोः। उदोष्ठ्यपूर्वस्येत्युत्व
म्। आशिषाविति। आशासः क्वावुपसंख्यानमित्युपधाया इत्वम्। शासिवसीति षत्वम्॥ * इति हलन्ताः स्त्रीलिङ्गाः * ॥ श्रीसंकष्टनाशिन्यै नमः ॥
सन्निपातपरिभाषाया अनित्यत्वान्नद्धमित्यादौ जश्त्वं बोध्यम्। इति हलन्ताः स्त्रीलिङ्गाः * ॥ श्रीकरवीरपुरवासिन्यै नमः ॥

अम्येवेति। औशसादिषनेनैव सिद्धिरिति भावः। त्यदाद्यत्वेनेति। नचयेननाप्राप्तिन्यायेनैनदस्त्यदाद्यत्वापवादत्वेनतत्रकृतेकथंत्यदाद्यत्वम्। नचोपसर्जनएतच्चरिता
र्थम्। त्यदाद्यत्वेनसिद्धमितिभाष्यासङ्गत्यापत्तेः। एनदोप्युपसर्जनेएतदन्तसोरितिसाहचर्येणाप्रवृत्तेः स्वीकारात्। नचनपुंसकेपितच्चारितार्थ्यद्वितीयादिग्रहणस्यै
त्वमप्यचारितार्थ्यादितिवाच्यम्। आर्धधातुकेइत्येतत्साहचर्येणास्यापिद्वितीयादिविषयेपूर्वमेवप्रवृत्तेरित्याशयात्। एतत्सर्वंभाष्येयद्येनन्क्रियतइत्याद्येकदेश्युक्त्या
ध्वनितम्। स्वमोर्लुकेति। तद्विषयेनलुमतेतिनिषेधबाधेनचारितार्थ्येनबहिरङ्गलुग्विषयेतद्बाधेनमानमितिभावः। वस्तुतएतत्सर्वमत्रत्यकैयटाद्यबोधेन। नका

अन्वादेशइति। अयंचाम्येवेतिव्याख्यातारः। नस्यलुक्यपि लेपिवचनसामर्थ्यात्प्रत्ययलक्षणमित्याहुः। वस्तुतस्तुसूत्रेएवैनद्वक्तव्यः। ए
नम्। एनौ। इत्यादितुत्यदाद्युत्वेनसिद्धम्। क्लीबेऽमिलुक्लुप्तेपिनकारोच्चारणसामर्थ्याद्देशः। नचैवमेतच्छ्रित इत्यत्रापिनदापत्तिः। एकप
दाश्रयत्वेनान्तरङ्गस्वमोर्लुकिचरितार्थत्वेनबहिरङ्गेसामासिकेलुकितदप्रवृत्तेः। रोसुपि। अहर्भातीति। प्राचातुअहन्नित्सुपन्यस्तंतदिहानुवि
तम्। अहोभ्यामित्याद्यर्थंतयाकथंचिद्योज्यम्। असकृच्छब्दस्त्विति। एतच्चक्षीरस्वामिग्रन्थेस्पष्टम्। बहूर्ज्जीति। अन्त्यादितिचवाचनिकम्। त
थाचवार्तिकम्। बहूर्जिप्रतिषेधः। अन्त्यात्पूर्वोनुमित्येके इति ॥

रोच्चारणसामर्थ्येननपुंसकलुकीवात्रापिसामर्थ्यादेवैनेत्प्रवृत्तेः। नचबहिरङ्गत्वम्। लुग्विषयेबहिरङ्गपरिभाषाप्रवृत्तेः। अतएवैनदादेशेएतच्छ्रितकइतिनसिद्ध्यति। ए
नच्छ्रितकइतिप्राप्नोतीतिभाष्यंसंगच्छते। एतद्विधानेनएनत्सूत्रविषयेनलुमतेत्यस्याप्रवृत्तिरितितदाशयः। वस्तुतएषामनभिधानमेव। अस्यांशङ्कायांयथालक्षणमप्रयुक्ते
इतिभाष्योक्तेः। विषयसप्तम्यांमानाभावेत्वेनैनतौपृथग्वक्तव्यौइत्याहुः ॥

अचः परइति। नपुंसकस्येतिसूत्रे। अज्ग्रहणसामर्थ्यनावृत्त्याऽचइत्यस्यझल्विशेषणत्वमन्यथेगन्तानामिकोचीत्येवसिद्धावजन्तेषुनपुंसकह्रस्वत्वेनचाकारग्रहणमे
वकुर्यात्। आदृतौमानंचदाण्डिनायनेतिसूत्रेहिरण्मयानीति निर्देशएव। काष्ठनेंसीत्यादौझलत्वजातेरचः परत्वादृवत्त्येवनुम्। ऊर्क्शब्दादौतुनेतिभावस्तदाह। एवमिति
एतेनयुजशब्दान्नपुंसकेशौनपुंसकस्येतियुजेरितिचनुम्द्वयमित्यपास्तम्। युजेरित्यस्यनित्यत्वात्पूर्वप्रवृत्तौअचः परझलोभावेननपुंसकस्येत्यस्याप्राप्तेः। वस्तुतऊर्दीदेः

भाष्येतुअचःपरोयोझल्तदन्तस्यनुमित्यर्थमाश्रित्यप्रथमंवार्तिकंप्रत्याख्यातम्। एवंतुउर्द्मानेगर्हगर्हायामित्यादीनामपिक्विबन्तानांनुमानभाष्यमेव। य
थोनरंमुनीनांप्रामाण्यादितिदिक्। अल्लोपस्येति। कौलुप्तंनस्थानिवद्दितितुनेहाश्रीयते। तस्यकाचित्कत्वात्। क्वौविधिंप्रतिनस्थानिवदित्यस्यैवसार्वत्रिक
त्वादितिस्पष्टमाकरे। अग्न्याश्रिभूतानीति। सप्तविंशत्यधिकापञ्च शतीत्यर्थः। तथाहि। सौनवानामन्त्यस्यद्वित्वेष्ट। दश। औङि चतुर्णांमध्येपूजार्थानांत्रया
णांजद्वित्वेसप्त। अनुनासिकस्तुनास्ति,प्रगृह्यत्वात्। जसिजद्वित्वसानुनासिकस्यचविकल्पात्द्वादश। संकलनयासप्तत्रिंशत्। एवंद्वितीयायामपि। टायांच
तुर्दश। भ्यामिअष्टचत्वारिंशत्। भप्राग्वर्णयमानांद्वित्वात्। भिसिचतुर्विंशतिः। ङसिसप्त। अनुनासिकस्तुनास्ति। एकारस्यानणत्वात्। भ्यसिभ्यांवत्। ङ
सौङसादिपञ्चकेचप्रत्येकंचतुर्दश। सुपिगत्यर्थत्रयाणांककार षकारयोर्द्वित्वेनउकारस्यानुनासिकेनचतुर्विंशतिः ॥

क्विपिनपुंसकेनुम्विषयेः नभिधानमेववार्तिकानुरोधात्। अन्यथाभाष्यवार्तिकयोः फलभेदापत्तेरित्याहुः। आकरेइति। दीर्धीवेवीटामितिसूत्रेनपदान्तसूत्रेच। ग
यकेयटयोरित्यर्थः। संकलनयेति। तत्कृत्यंमन्दबोधनम्। चतुर्दशेति। पूजार्थानांत्रयाणांभद्वित्वात्सप्तानामनुनासिकविकल्पाच्च। चतुर्विंशतिरिति। भप्राग्वर्ति
नांविसर्गद्वित्वात्। विसर्गेतुनानुनासिकः। अप्रगृह्यस्येतिपर्युदासेनाक्षरसमाम्नायिकेष्वेवतत्प्रवृत्तेः ॥

ङ्षयोरिति। षकारद्वित्वं शरः खय इत्यनेन भाष्यव्यतिरिक्तमत इति। भाष्यमते च यरो योऽनुनासिके इत्यनेन प्रकृते चः परः झल् जातेरभावानुमोऽप्राप्तेरवचनेनैतान्यसाधून्येवेति भावः। उ
एवं कुक् पक्षे षण्णां ङ्षयोर्द्वित्वे अनुनासिके च अष्टचत्वारिंशत्। कुगभावे त्रयाणां ङकारद्वित्व अनुनासिके च द्वादश। सु १८ औ ७ जसि १२ अम् १८ औ ७ शस् १२ टा १४
भ्यां ४८ भिस् २४ ङे ७ भ्यां ४८ भ्यस् ४८ ङसि १४ भ्यां ४८ भ्यस् ४८ ङस् ओस् आम् ङि ओस् प्रत्येकम् १४ सुप् ४८ अत्रेदमवधेयम्। पूजायां जसि नुमागमे कृते तस्य
पाक्षिके द्वित्वे अकारत्रयसहितं रूपषट्कम्। एवं शस्यपीति संकलनया हा दृश। तथा रूपं ग्रहाग्नि ५३९ भूतान्यमिति भाष्यव्यतिरिक्तमते इति दिक्। यत्तु वदन्ति।
ऊह्यमेवं द्वित्वपुनर्द्वित्वलोपविकल्पनैः। अष्टपञ्चाशतोऽस्त्र्याम्नि संख्याधिकं शतमिति। तच्चिन्त्यम्। पुनर्द्वित्वस्याप्रमाणिकत्वात् रूपानन्त्यप्रसङ्गाच्च। अष्टपञ्चाश
तोऽत्रेत्यादावुपपत्त्यभावाच्चेति दिक्। तिरश्चीति। भत्वाद् अच इत्यल्लोपः। अल्लोप इति वचनान्नियादेशाभावः। स्वबिति। शोभना आपो ऽस्मिन् सरसीति बहुव्रीहिः। ऋक् पूरि
तिसमासान्ते प्राप्ते न पूजनादिति निषेधः। स्वनित्यत्वादिति प्राचोक्तं तत्प्रामादिकमाद्यन्तरूपसर्गेभ्य इति तु न भवति। तत्रापद इति कृतसमासान्तस्यानुकरणमिति व
क्ष्यमाणत्वात्। सुपुमांसीति। पुंसोऽसुङिति सूत्रे सुटीति व्याचक्षाणस्य प्राचो मते शसि नेतात्सिद्ध्यत्। औङि चातिव्याप्तिः। अस्माकं तु सर्वनामस्थान इति पक्षात् सूत्रं ब्रुवतां स
र्वेष्टसिद्धिरिति भावः॥ इति हलन्ता नपुंसकलिङ्गाः॥ स्वरादिनिपातमव्ययम्। स्वरादयो निपाताश्चेति समाहारद्वन्द्वः। स्वरिति स्वर्गे परलोके च। अन्तरिति मध्ये। प्रातरि
ति प्रत्यूषे। पुनरिति अप्रथमे विशेषे च। सनुतर् अन्तर्धाने। स्वराद्याः पञ्चरेफान्ताः। उच्चैस् महति। नीचैस् अल्पे। शनैस् क्रियामान्द्ये। ऋधक् सत्ये। वियोगशीघ्रसामी
प्यलोपने षितस्न्योः ऋते वर्जने। युगपदित्येककाले। आराद् दूरसमीपयोः। पृथक् भिन्ने। ह्यस् अतीतेऽह्नि। श्वस् अनागतेऽह्नि। दिवा दिवसे। रात्राविति निशि। सायमिति
निशामुखे। चिरमिति बहुकाले। मनागीषदिमावल्पे। जोषं सुखे मौने च। तूष्णीमिति मौने ॥
पपत्त्यभावादिति। नियमे मानाभावादिति भावः। प्रामादिकमिति। शास्त्रेणैव सिद्धेरिति भावः॥ इति हलन्ता नपुंसकलिङ्गाः ॥

इत्यादिभिरिति। आदिना तत्रनस्यैव तदर्हम्। इत्येक इति। अत्राह चिबीजं किमेत्तिङ इति विहितस्य तद्धितत्वेस्यनेन न सिद्धिः कास्प्रत्ययादिति विहितात्परस्याम इत्यनेन लुक्
बहिस् अवस् इमौ बाह्ये। समयेति समीपे मध्ये च। निकषेत्यन्तिके। स्वयमित्यात्मनेत्यर्थे। वृथेति व्यर्थे। नक्तमिति रात्रौ। नञ् निषेधे। हेनाविति निमित्ते। इद्धेति प्राका
श्ये। अद्धा इति स्फुटावधारणयोः। तत्त्वातिशययोरित्येके। सामीत्यर्द्धजुगुप्सनयोः। वत् तेन तुल्यमित्यादिभिर्विहितो वतिप्रत्ययः। यस्तु उपसर्गाद्धात्वर्थ इति विहितः सने
हगह्यने। यदुतो निवतो यासि। सना सनत् सनात् इत्येते नित्ये। उपधेति भेदे। तिरस् अन्तर्द्धौ तिर्यगर्थे परिभवे च। अन्तरेति मध्ये विनार्थे च। अन्तरेणेति वर्जने। ज्योगिति
कालेभूयस्त्वे प्रश्ने शीघ्रार्थे संप्रत्यर्थे च। कमिति वारि मूर्द्ध निन्दासुखेषु। शं सुखे। सहसेत्याकस्मिकाविमर्शयोः। विनेति वर्जने। नानेत्यनेकविनार्थयोः। स्वस्तीति मङ्गले।
स्वधा पितृदाने। अलं भूषणपर्याप्तिशक्तिवारणनिषेधेषु। वषट् वौषट् श्रौषट् एते हविर्दाने। अन्यदित्यन्यार्थे। अस्तीति सत्तायाम्। उपांश्वित्यप्रकाशोच्चारणरहस्ययोः।
क्षमेति शान्तौ। विहायसेति वियदर्थे। दोषेति रात्रौ। मृषा मिथ्येत्येतौ वितथे। मुधेति व्यर्थे। पुरेति विरते चिरातीते भविष्यदासन्ने च। मिथो मिथस् एतौ रहस्सहार्थयोः। प्रायस् इति
बाहुल्ये। मुहुस् पुनरर्थे। प्रबाहुकं समकाले सिद्धार्थे च। प्रवाहिके निपाठान्तरम्। आर्यहलमिति बलात्कारे। शाकटायनस्तु आर्येति प्रतिबन्धे। हलमिति प्रतिषेधविवादयोरि
त्याह। आभीक्ष्ण्यमिति पौनःपुन्ये। साकं सार्द्धमेतौ सहार्थौ। नमस् नतौ। हिरुक् वर्जने। धिक् निन्दाभर्त्सनयोः। अम् शैघ्र्येऽल्पे च। आम् अङ्गीकारे। किमेत्तिङव्ययेति कास्प्रत्य
यादित्यादिभिश्च विहितः प्रत्ययोपि हगह्यने इत्येके। पपाचतराम्। कारयामास। प्रतान् ग्लानौ। प्रशान् समानार्थे। प्रतान्विस्तारे। मा माङ् एतौ शङ्कानिषेधयोः। आकृतिगण इति।
तेनान्येपि ज्ञेयाः। तथाहि। कामं स्वाच्छन्द्ये। प्रकाममित्यतिशये। भूय इति पुनरर्थे। संप्रतमिति न्याय्ये। परमिति किं त्वर्थे। साक्षात्प्रत्यक्षे। साचिति तिर्यगर्थे। सत्यमित्यर्द्धाङ्गीकारे। मङ्क्षु आशु
एतौ शीघ्रे। संवत् वर्षे। अवश्यं निश्चये। सपदि शीघ्रे। बलवदित्यतिशये। प्रादुस् आविस् इति प्रकाशे। अनिशं नित्यं नित्यदा सदा अजस्रं संततमेते सातत्ये। उषेति रात्रौ। रोदसी द्यावापृथिव्यर्थे। ॐ
मित्यङ्गीकारे ब्रह्मणि च। भूरिति पृथिव्याम्। भुव इत्यन्तरिक्षे। झटिति झगिति तरसा इति शैघ्र्ये। सुष्ठु प्रशंसायाम्। दुष्ठु अतिकष्टे। ७) सिद्धान्तस्य तत्त्वे फलाभाव इति ॥ ॥

म॰ प्र॰ अनुपसर्गत्वादिति। अवदत्तंचेत्यादिभाष्येतकाराकरणेनगुणभूतोपसर्गत्वबाधोवोध्यइतिभावः। यदपीति। स्वरादीनुपक्रम्यान्तोदात्ताः पठ्यन्तइतिकाशिकायाम्। प्रामादिकमिति।
११० सुपूजायाम्। अहआश्चर्ये। कुइतिकुत्सितेषदर्थयोः। अञ्जसातत्त्वशीघ्रार्थयोः। मिथुइतिद्वावित्यर्थे। भाजकइतिशैघ्र्ये। चिरायचिरराचायचिरस्यचिराच्चिरेणचिरादित्येतेचि
रार्थकाः। अस्तमितिविनाशे। आनुषक्आनुपूर्व्ये। अनुषक्अनुमाने। अम्नसशीघ्रसांप्रतिकयोः। स्थानेइतियुक्ते। वरमितीषदुत्कर्षे। सुदिवशुक्लपक्षे। वदिकृष्णपक्षे। इत्यादि।
नेतिसमुच्चयादिषु। वास्यादिकल्पोपमयोरेवार्थेपिसमुच्चये। हेतिप्रसिद्धौ। अहेतिपूजायाम्। एवेत्यवधारणे। नवक्लृप्तौच। एवमितिउक्तपरामर्शे। नूनमितिनिश्चयेतर्केच। श
श्वदितिपौनःपुन्येनित्येसहार्थेच। युगपदितिएककाल्ये। भूयस्पुनरर्थेआधिक्येच। कूपदितिप्रश्नेप्रशंसायांच। कुविदितिभूर्यर्थेप्रशंसायांच। नेदितिशङ्कायांप्रतिषेधविचारसम
च्चयेषु। चेदितियद्यर्थे। चण्अयंचेदर्थे। णित्। समुच्चयादौत्वननुबन्धः। कच्चिदितिदृष्टप्रश्ने। यत्रेत्यनवक्लृप्त्यमर्षगर्हाश्चर्येषु। नावकल्पयामिनमर्षयेत्। हैआश्चर्येवा यत्रभवान्वृ
षलंयाजयेत्। नहेतिप्रत्यारम्भे। हन्तेतिहर्षेविषादेअनुकम्पायांवाक्यारम्भेच। माकिः माकिंनकिरितित्रयोपिवर्जने। माङ्नञौस्वरादिषुउक्तौ। इहपाठस्तुनिपातत्वार्थः। तेनआद्यु
दात्तत्वंसिद्ध्यतीतिप्राञ्चः। तच्चिन्त्यम्। फिट्स्वरेणापीष्टसिद्धेः। यदप्याहुः सत्त्ववचनानामपिअव्ययसञ्ज्ञार्थं स्वरादिपाठइतितदपिचिन्त्यम्। लक्ष्मीवाचकस्यापिमाशब्दस्याव्य
यत्वापत्तेः। तस्मादुभयत्रपाठेफलंचिन्त्यम्। यावत्तावत्एतौसाकल्येवधिमानावधारणेषु। साकल्ये। यावत्कार्यंतावत्कृतम्। अवधौ। यावत्गन्तव्यंतावत्तिष्ठ। माने। यावद्दत्तंतावद्भुक्त
म्। अवधारणे। यावद्मत्रंब्राह्मणानामन्त्रयस्व। तैविशेषवितर्कयोः। हैवितर्के। न्वेइतिपाठान्तरम्। रैदानेअनादरेच। रैकरोतिददातीत्यर्थः। त्वंरैकिंकरिष्यसि। श्रौषट्वौषट्एतौहविर्दाने।
स्वाहादेवताभ्योदाने। स्वधेतिपितृभ्यः। श्रौषडादीनामनेकाचामुभयत्रपाठः स्वरभेदार्थः। तुमितितुंकारे। गुरुंतुङ्कृत्यहुंकृत्य। तथाहिनिदर्शने। खलुनिषेधवाक्यालङ्कारनिश्चये
च। किलेतिवार्त्तायामलीकेच। अथेतिमङ्गलानन्तरारम्भप्रश्नकार्त्स्न्याधिकारप्रतिज्ञासमुच्चयेषु। अयंस्वरादिरपितेनमङ्गलवाचकस्यसत्त्वार्थत्वेप्यव्ययत्वंसिद्ध्यति ॥ राम:
न्यङ् स्वरौस्वरितावितिफिट्सूत्रेणस्वरितत्वात्सनाचहोतानव्यः तिरः पुरूविदद्भिन्येत्यादौसनात्तिरसोरन्तोदात्तपाठाच्च ॥ ११०

निर्मूलत्वाच्चेति। आद्युदात्तप्रापकशास्त्राभावादितिभावः ।

तथाचश्रीहर्षः।उदस्यकुम्भीरथशातकुम्भजाश्चतुष्कचारुत्विषिवेदिकोदरे। यथाकुलाचारमथावनीन्द्रजांपुरन्ध्रिवर्गः स्नपयांबभूवताम्। अन्नहिअथस्न
पयांबभूवेत्यस्यमङ्गलंस्नपनंचकारेत्यर्थः।निपातस्तुस्वरूपेणैवमङ्गलंमृदङ्गध्वनिवत्।सुष्ठुस्वरभेदर्थः पाठः।स्मेत्यतीतेपादपूरणेच।आंदहेत्युपक्रम
हिंसाकुत्सनेषु।अवदत्तमिति।इहानुपसर्गत्वादचउपसर्गात्तइतिनभवति।अहमितिसुबन्तप्रतिरूपकम्।एतेनगेयेकेनविनीतौवामितिव्याख्यातम्।यु
वामर्थेहिवामित्यव्ययम।अस्तीतितिङन्तप्रतिरूपकम्।एवमस्मीत्यहमर्थे।त्वामस्मिवच्मि।आहेत्युवाचेत्यर्थे।आसेतिबभूवेत्यर्थे।इत्यादि।अइतिसंबोधनेधिक्षेपनि
षेधेच।आइतिवाक्यस्मरणयोः।इइतिसंबोधनजुगुप्साविस्मयेषु।ईउऊएऐओऔसंबोधने।पशुसम्यगर्थे।पशुमन्यमानाः।शुकंशीघ्रे।यथाकथाचेत्यनादरे।पाट्प्याट्
अङ्ग हैहे भोः येएतेसंबोधने।घेतिहिंसाप्रातिलोम्यपादपूरणेषु।विषुनानार्थे।एकपदेइत्यकस्मादित्यर्थे।युत्कुत्सायांहेतौ आतइतोपीत्यर्थे।आकृतिगणइति।तद्यथा।
यत्तत्इतिहेतौ।आंहोस्वित्विकल्पे।सिमसर्वतोभावे।कंपादपूरणे।सुकमतिशये।अनुकंवितर्के।शंबट्अन्तःकरणेआभिमुख्येच।वपादपूरणेइवार्थेच।दिष्ट्येत्यानन्देच
इचाइ प्रियवाक्येहमितिभर्त्सने।इवेतिसादृश्ये।अद्यत्वेइदानीमित्यर्थेइत्यादि।अत्रेदमवधेयम्।स्वरादिचाद्योराकृतिगणत्वाविशेषेपियेषांनिपातस्वरोदृष्टस्तेचादिषुअ
न्येस्वरादिषुस्वरद्वयभाजस्तूभयत्रबोध्याः। यथाउतशब्दः स्वरादिषु। ईड्योनूतनैरुतेत्यन्तोदात्तप्रयोगात्।यत्तुउतशब्दस्यस्वरादितामुक्त्वानिपातस्वरमाशङ्क्यान्तोदा
त्तनिपातनमाश्रित्यसमादधुस्तद्भसात्।स्वरादेरनिपातात्।अन्तोदात्तत्वनिपातनवैयर्थ्याच्च।यदपिकाशिकायामुक्तम्।स्वरशब्दैसन्नकधकृदिवावृथानक्तमित्यादयो
न्तोदात्ताइति।यच्चसनत्सनात्एवमादयआद्युदात्ताइतितन्तत्सर्वंप्रामादिकम्।लक्ष्यविसंवादान्निर्मूलत्वाच्चेतिशब्दकौस्तुभेप्रपञ्चितम्।तद्धितश्चासर्वविभक्तिः।
सर्वेति।वचनत्रयात्मिकेत्यर्थः।नेति।किंतुएकवचमेवोत्पद्यतेइतिभावः।तद्धितः किम्।एकः द्वौत्रयः।असर्वेत्यादि किम्।औपगवः ॥

सिद्धान्तादिति। ष्यस्ययेनयगभावइतिभावः। अन्तग्रहणमिति। मेजर्भ्यांकृतौ विशेषणात्तदन्तलाभेसिद्धे इत्यादिः। लक्षणेति। क्वचिद्रूपग्रहणेपिनत्परिभाषाप्रवृत्तिज्ञाप
कंचतदनित्यत्वमात्रज्ञापकमितिभावः। भूतमिति। भूतशब्दः पौतन्यवृत्तिर्नित्यनपुंसकस्तत्रपर्जन्यवल्लक्षणप्रवृत्त्यान्तरङ्गत्वात् ह्रस्वेशब्दान्तरसन्निधानोत्तरंटापित्

कृन्मेजन्तः। जीवसे इति। तुमर्थेसेसेनितिअसेप्रत्ययः। पिबध्यै इति। तैनैवशध्यैप्रत्ययः। पाघ्रेतिपिबादेशः। यत्त्वाहुः। कर्त्तरिशबिति। तदृभसात्। अत्रपकृतोभावेद
तिसिद्धान्तात्। अन्तग्रहणमौपदेशिकत्वप्रतिपत्त्यर्थम्। तेनेहन। आधये। चीकीर्षवे। लक्षणप्रतिपदोक्तसन्निपातपरिपरिभाषाभ्यांसिद्धेतयोरनित्यत्वज्ञापनार्थेद
म्। क्त्वातोसुन्कसुनः। उदेनोरिति। उत्पूर्वादिणोभावलक्षणेस्थेणकृञ्वद्चरिहुतमिजनिभ्यः स्तोसुन्। विसृपइति। सृपितृदोः कसुन्। आब्ग्रहणमिति। तथाचवा
र्त्तिकम्। अव्ययादाप्सुपोलुग्वचनानर्थक्यंलिङ्गाभावादिति। सूत्रस्योक्तिसंभवस्तुस्त्रियामितिसूत्रेस्त्रीसमानाधिकरणादितिपक्षंगृहीत्वाबोध्यः। सचनस्थितः। भू
तमियंब्राह्मणीत्यादावतिव्याप्तेः। अलिङ्गत्वेआथर्वणविद्यागतश्रुतिविरोधमाशङ्क्याह। सदृशमिति। लिङ्गकारकेतिविभक्तिवचनशब्दौकारकसंख्यापराविति
भावः। यथावाचेति। परिगणनमिदमित्येके। अन्येतूदाहरणमात्रमित्याहुः। वगाह इति। आदिरेवाकारोलुप्यतेनान्त्यः। अपिनासाहचर्यात्॥ इत्यव्ययानि॥ खट्वेति। अभू
त्पुषिलटिखटिकणिविशिभ्यःक्वन्। पञ्चाजीति। नचतदन्तविधिविरहादेवटाब्नेतिवाच्यम्। अमहत्पूर्वग्रहणेनानुपसर्जनाधिकारेणचस्त्रीप्रत्ययेषुतदन्तविधिज्ञापनात्। मूषि
केति। वृश्चिकृषोःकिकनित्यधिकारेमुषेदीर्घश्चेतिकिकनिइकारमध्योमूषिकशब्दः। यस्तुमुषस्तेयेइतिदीर्घोपधात्सञ्ज्ञायांकुन्मूषकशब्दोमाधवेनोक्तस्ततोप्ययंटा
प्। प्रत्ययस्थादित्वमितितुविशेषः। यत्तुक्रुञ्चन्तोसौअजादिगणेपाठंनप्रयुङ्क्ते। तस्यजातिलक्षणङीषूबाधनार्थत्वात्। सञ्ज्ञायाश्चाजातित्वादित्याहुः॥

स्येलक्षणस्येतिन्यायेननपुंह्रस्वइतिभावः॥ इत्यव्ययानि॥ अनुपसर्जनाधिकारेणचेति। तस्यहिबहुकुरुचराव्यावर्त्याएवंचवनोरचेत्यत्रैवात्रापितदन्तविधिरितिभावः॥ रामः

जातित्वानपायादिति। क्रुनादिविधौ सञ्ज्ञापदेन रूढिरेव गृह्यते तेन तु शब्दप्रवृत्तिनिमित्तकत्वरूपं सञ्ज्ञात्वं गृह्यते। अतएव घ्रः सञ्ज्ञायामित्यादिना व्याघ्रादिसिद्धिरिति दि
क्। गौणी वृत्तिरिति। लाक्षणिकत्वापरपर्यायं गौणत्वमित्यभिमानेनेदम्। सदृशलाक्षणिकत्वमप्रसिद्धत्वमेव वा गौणत्वम्। गौणमुख्यन्यायश्च पदकार्यविषयो ; तत एवा
जस्य स्त्री अजेत्यर्थे अजेत्येवेति ——— सिद्धान्ते तु जातिरित्यावश्यकमिति बोध्यम्। जा
लन्तरे इति। ब्राह्मणादुग्रजातिकान्यायांमुत्पन्ने आभीरजाताविलर्थः। नृपात् शूद्रायामुत्पन्नो ग्रजातिकन्या। न तु शूद्रत्वं तत्रास्ति। अतएव शूद्रसधर्माणस्ते इत्येवमभिषूक्तं न तु शूद्रा इति।
तश्चिन्त्यम्। व्याघ्रीत्यादिवत् सञ्ज्ञात्वेऽपि जातित्वानपायात्। भस्त्रफलेति। भस्त्रेव फलानि यस्या इति विग्रहः। ड्याप्योरिति। एतच्च फलनिष्पत्तावितिधातौ माधवग्रन्थे स्थितम्। भाष्ये
तु प्रायेण दीर्घ एव पठ्यते। प्रत्यकूपुष्पेति। पाककर्णेत्यादिसूत्रस्य भाष्यवार्तिकपर्यालोचनयेदमुक्तम्। तेन सत्प्राक्काण्डेति पाठो नादर्तव्यः। शूद्रा चेति। शूद्रशब्द टापमुत्पादयति
जातिश्चेत्। महत्पूर्वस्तु न जातिश्चेदिति ह्यापि संबध्यते। पुंयोगे त्विति। पुंयोगोदाम्पत्यरूप एवेति न नियमः; किंतु जन्यजनकभावोऽपि। तेन वैश्यायां शूद्रोऽस्तु राजन्यान्माहिष्यो ग्रो सुतोऽस्य
तावितिसिद्धम्। महाशूद्रीति। आभीरी तु महाशूद्रीजातिपुंयोगयोः समेत्यमरः। अत्रेदमवधेयम्। अजादिगणे शूद्रेत्येव पाठ्यम्। जातिरिति व्यर्थम्। मुख्ये कार्यसंप्रत्ययाज्जातिलक्ष
णो ङीषेव बाधिष्यते। पुंयोगे हि गौणी वृत्तिः। अमहदित्याद्यपि व्यर्थम्। महाशूद्रशब्दो हि विशिष्ट एव जात्यन्तरे वर्तते। तत्रावयवस्यानर्थकतया शूद्रशब्दार्थसमवेतस्त्रीत्वाभावात्
टापः प्रसङ्ग एव नास्ति। या तु महती शूद्रा तत्र महाशूद्रेतीष्यत एव। कुञ्चेत्यादित्रयो मीहल्लन्ता इत्येके। कुञ्चानालभेत उष्णिहककुभौ इत्यादिप्रयोगमुदाहृत्य दन्ता अपि भाष्ये स्वीकृताः
इष्यत एवेति। अतस्संग्यावृत्त्यर्थं नैतदिति भावः। भाष्यवार्तिककारौ तु शूद्रजातिवृत्तिमत्त्वेन तां जातिं तत्रारोप्य शूद्रशब्दप्रयोग इति शूद्रशब्दार्थसमवेतस्त्रीत्वस्य सत्त्वादस्त्येव टापः प्रा
प्तिरित्यमहत्पूर्वेति। शूद्रशब्दार्थसमवेतस्त्रीत्वेऽपि शूद्रशब्दादेव टाप्स्यान्न तु तदन्तादिति तदन्तविधिज्ञापकतापि भाष्योक्ता नासंगता। अतएव शङ्खेन मातृजात्यारोपेणैव ब्राह्मणक्षत्रि
यवैश्यैः क्षत्रियावैश्याशूद्रासूत्पन्नाः क्षत्रियवैश्यशूद्रा एवेत्युक्तम्। न च जातिरित्यस्याभावे पूर्वं जातिमात्रविवक्षया कुकुटाण्डवत् शूद्रशब्देन समासे ततः स्त्रीत्वविवक्षायाममहत्पूर्वेति

म·शा· व्युत्पादितश्चेति। न्यासकृतेतिशेषः। इदंव्युत्पादनमप्रामाणिकम्। अत्रत्यभाष्यासमतेः॥ दधातेः क्वनिबिति॥ घुमास्थेतीत्वम्॥ पावानइत्यस्यवनिपासिद्धिमाश्रित्यईत्वमत्र
११२ कारादावित्यस्यतत्रैवभाष्येप्रत्याख्यानात्। स्थः कचेतिसूत्रभाष्यस्थेशंस्थादित्यत्राम्बाबेतिसूत्रभाष्यस्थेसव्येष्ठाइत्यत्रचस्यसिजित्यतोवाग्रहणंमण्डूकप्लुत्यानुवर्त्यव्यवस्थि
तविभाषाश्रयणात्तदभावः। तत्रविजेवेत्यन्ये॥ अतएवधीर्ध्यायतेर्दधातेर्वेतिध्यायतेः संप्रसारणमितिवार्तिकस्थंभाष्यंसंगच्छते॥ घुमास्थेत्यत्रहलीत्यस्यानजादावित्यर्थात्प्र

पुंयोगेपीति। यदाज्येष्ठादयः प्रथमजातादौवर्तन्तेतदाअदन्तत्वादेवटापूसिद्धः। यदातुज्येष्ठस्यस्त्रीत्यादिविवक्षातदापुंयोगलक्षणोङीष्प्राप्तः सोऽनेनबाध्यतइति
सूत्रयितुमपिशब्दः। मूलान्नञः। नञः किम्। शतमूली। अमूलेति। ओषधिजातिरियम्। उगितश्चाभवतीति। सर्वादिषुभवतुइत्युदित्पठितः भातेर्डवतुरितिव्युत्पादित
श्च। शत्रन्तानुङीपिशप्श्यनोरितिनित्योनुम्। वनोरच। सुत्वानमिति। सुयजोर्ङ्वनिप्। अतिधीवरीति। दधातेः क्वनिप्। शर्वरीति। शृधातोर्वनिप्। गुणेकृतेहशन्तात्परत्वेपि
हशन्ताद्विहितत्वाभावाद्ङीब्रयोर्निषेधोन। अवावेति। न्यासकारस्तुप्रापिकोयंनिषेधः। तेनअवावरीत्याह। नत्वेतद्भाष्यादौदृष्टम्। पक्षेडाविति। तथाचद्विवचने। बहुधीव
र्यौ। बहुधीवानौ। बहुधीवेइतिरूपत्रयंभवतीतिभावः। टाबृचि। पूर्वेणप्राप्तस्यङीपोपवादः। असिद्धत्वादिति। कार्यकालपक्षेणेदम्। यदितुयथोद्देशंषट्सञ्ज्ञायदिवाउप
देशकालेस्वान्तेतिव्याख्यानंतदा असिद्धत्वोपवर्णनंनोपयुज्यतइत्याहुः। वस्ततस्तुयथोद्देशपक्षेपिअसिद्धत्वमुपयुक्तमेव। एकदेशविकृतस्योपसंख्यानंनहिस्थानिव
त्सूत्रेपठ्यते। आदेशग्रहणसामर्थ्यात्सर्वेसर्वपदादेशाइत्याश्रित्यआनुमानिकोप्यादेशः स्थानिवदितिवाव्याख्यायते। उभयथापिअल्विधौनतत्प्रवृत्तिः ॥

त्ययलक्षणसूत्रस्यनियमार्थत्वेपिप्रत्ययलक्षणकार्यंसुलभमितिदिक्। निषेधोनेति। वनोनहशइतिवार्तिकेविहितविशेषणस्येदमेवफलमितिभावः। नत्वेतदिति। अतोऽप्रमाण रमः
मेतदितिभावः। व्याख्यानमिति॥ उपदेशइतिवक्तव्यमितिवदतोवार्तिककारस्येतिभावः॥ आनुमानिकोपीति। एरुरित्यनेनतेस्तोरनुमानादितिभावः ॥ ११२

एतच्चाकरे इति॥ अत्राहु विवीजंतु षट्त्वं नात्यर्मइतितदाश्रयविधीनां नात्विधित्वमिति॥ सिद्धे इति॥ एवंचान्यतरस्यां ग्रहणं किमर्थमिति भावः॥ ङीपेति। ऋन्नेभ्य इति विहि
तेन। अनो यो सौ विकल्प इति। अन्यतरस्यामिति तिभक्तसूत्रेण प्राप्त इत्यर्थः॥ अन इति सूत्रेप्यन्यतरस्यामित्यस्य सत्त्वाद्विकल्पनियमलाभोऽन्यथा सनित्यार्थो विधिरेवस्या
दिति भावः॥ स उपधेति। स उपधालोपिनो नुपसर्जनस्य बहुव्रीहेरेवेत्यर्थः। निषेधार्थमिति। योगविभागेन पक्ष प्राप्तस्य ऋन्नेभ्य इति ङीप इत्यर्थः॥ इत्येव ङीबिति। नियमशास्त्रा
णां निषेधमुखेन प्रवृत्तिरित्यभिमानेनेदम्। तेनेति। अनउपधेत्यस्य नियमत्वेनेत्यर्थः। ऋन्नेभ्य इति। अस्यान्यथेत्यादिः। अनउपधेत्यस्य विधायकत्वे इति तदर्थः। प्रकरणान्तरस्थे
एतच्च आकरे स्पष्टम्। बहुयज्वानाविति। नसंयोगादिति निषेधान्नायमुपधालोपी तेन अनउपधालोपिन इति न प्रवर्तते। डाबुभाभ्याम्। ननु निषेध
डापोर्वचनसामर्थ्यात् पर्यायः सिद्धः। सत्यम्। अन्यतरस्यामिति योगो विभज्यते। तत्र मन इति निवृत्तम्। अनो बहुव्रीहेर्ङीब्वा स्यात्। ङीपा सह विक
ल्पलाभार्थमिदम्। अनउपधालोपिन इति सूत्रं तु नियमार्थम्। अनो यो सौ विकल्पः स उपधालोपिन एवेति। तथा च सुपर्वेत्यादौ अनुपधालोपिनि निषे
धार्थमिदम्। बहुराज्ञीत्यादौ तु ऋन्नेभ्य इत्येव ङीप्। तेन बहुधीवरी सिद्ध्यति। ऋन्नेभ्य इति हि ङीपमनूद्य तत्सन्नियोगेन विधीयमानो रेफः प्रकरणान्तर
स्थे न ङीपि कृते न सिद्ध्येत्। ननु वनो र चेति सूत्रमेव ङीब्रौ विधत्तामिति चेन्न। उभयविधौ गौरवात्। किं चैवमपि ङीपि निषिद्धे रोपि दुर्लभः ॥
नेति। तेनानन्तरत्वं बोधितम्। गौरवादिति। मम तु ऋन्नेभ्य इति प्राप्तङीपमनूद्य तत्संनियोगेन रभावमात्रविधायकं तदिति भावः। ननु वनो र चेत्यस्योभयविधा
यकत्वे नो बहुव्रीहेरित्यनन्तरत्वादस्य निषेधकमुतयेनेति न्यायेन ऋन्नेभ्य इत्यस्य, नाद्य इत्याह। किं चेति। अनउपधेत्यनेन ङीप्यपि रो दुर्लभ एवेति भावः। किं चैवं ब
हुश्वेत्यत्र ऋन्नेभ्य इति ङीबापत्तिः। किं च बहुव्रीहौ वेति वार्तिकस्याप्यपूर्वविधायकतापत्त्या सुपर्वन् शब्दे ङीब्रयोरापत्तिः। सिद्धान्ते त्वनउपधेत्येतत्प्रापितङीबनुवादेन
रभावस्य तेन विधानान्न दोषः॥ एतेनान्यपक्षो बाध्यसामान्यचिन्तयोभयबाधकमिति पक्षश्च परास्तः॥ बहुव्रीहौ वेत्यनेन सुपर्वन् शब्दे ङीब्रयोरापत्तेरिति दिक् ॥

इत्यस्यामन्तरमिति। अनोबहुव्रीहेर्डाबुभाभ्याम्। अनुपसर्जनात् उपधालोपिनोवेति पाठ्यमिति भावः॥ यथाश्रुतेऽनुपसर्जनादित्यस्य संबंधो दुर्घटः। अत एव बहुव्रा

मानि पुराण्यतिक्रान्ता मगरीत्यत्र ङीब्न॥ ग्रहणं चेति। चेनबहुव्रीहौवेत्यस्यापि संग्रहः॥ पूर्वोक्तयोगविभागप्रकारस्तु गुरुभूत इति भाष्याशयः॥ इत्युक्तमिति। डाप्सू

त्रेऽन्यतरस्यामिति योगविभागकरणप्रसेइत्युक्तमित्यर्थः॥ पूर्वेणेति। उक्तयोगविभागेनेत्यर्थः। अकचिनस्यादिति। तदकारो हि पचतकीत्यादिसिद्धयेन प्रयोगसमवायीति

भावः। यत्नसाध्य इति। एतत्प्रयोगरूपज्ञापकसाध्य इत्यर्थः। एतच्चाकारस्येति। संनिहितत्वात्साक्षादिच्छुद्देश्यत्वेन प्राधान्याच्चेति भावः॥ तत्र सामर्थ्यादिति। कात्पूर्वस्येति

सन्नियोगशिष्टत्वात्। भाष्ये तु सूत्रभङ्गेन समाहितम्। तद्यथा। अनोबहुव्रीहेरित्यस्यानन्तरमुपधालोपिनोवेति सूत्रमस्तु। अनउपधेत्याद्युद्देशान्तरस्यं सूत्रं

डाप्सूत्रेऽन्यतरस्यांग्रहणं च मास्तु इति। अनउपधाबहुव्रीहेरूधसोऽङीपित्यतो बहुव्रीहिग्रहणं संख्याव्ययादेर्ङीप् चानुवर्तते इत्याशयेनाह। अन्नन्तादित्या

दि। नियमार्थमिदमित्युक्तम्। न चैवं पूर्वेण विकल्पसिद्धाविहान्यतरस्यांग्रहणं व्यर्थमिति वाच्यम्। असति हि तस्मिन् नित्यार्थो विधिरेवायं स्यान्न तु नियमः। प्रत्य

यस्थात्कात्पूर्वस्याकादित्यकार उच्चारणार्थः। व्यञ्जनमात्रं विवक्षितम्। विशिष्टविवक्षायां तु एनिकाश्चरन्तीत्यादौ अकचिनस्यादित्याशयेनाह। ककारादिति। वर्ण

निर्देशे हि कारप्रत्ययो विहितः। क्वचित्समुदायात् प्रयोगस्तु उच्चैस्तरां वा वषट्कार इति निर्देशरूपयत्नसाध्य इति भावः। आपि पर इति। एतच्च अकारस्य विशेष

णम्। तत्र सामर्थ्यात् ककाराकाराभ्यां व्यवायेऽपि भवति। न तु रथकट्येत्यादौ त्रिचतुरादिव्यवाये। अत एव सर्विकादौ आद्याकारस्य न भवति ॥

शास्त्रसामर्थ्यात् ककारेण व्यवधानं सह्यते। आबकारयोस्त्वेकादेशे कृते वः परस्मिन्निति स्थानिवत्त्वेनाकारव्यवधानेऽपि श्रोतमव्यवधानं गृहीत्वा प्रवृत्तिः। अकारशब्देना

त्वजातिग्रहणम्। तेनैनिकेत्यादावकारद्वयसत्त्वेऽपि न क्षतिरिति भावः। अत एव न्यासयोरिति चरितार्थम्। त्रिचतुरादीति। श्रोतत्रिचतुरादीत्यर्थः। आद्याकारस्येति। इ

दं च कात्पूर्वस्येत्यंशेऽप्यनूद्यमानविशेषणत्वान्नाव्यवधानांशप्रवृत्तिरिति वादिनां मते बोध्यम् ॥

वचनसामर्थ्यादिति। श्रोतान्यवधानमाश्रित्येत्यर्थः। अनूद्यमानस्येति। साक्षादनूद्यमानविशेषणत्वं यावानूद्यमानस्येत्यर्थः। विशेषणेषु, आपीत्यादिषु। सिद्धिरिति॥ अस्यैतेरुक्तमिति शेषः। अनेनतत्रसूत्रे एतस्यैवज्ञापकत्वंवर्णयतोऽत्रैवैवं वदतस्तव पूर्वापरविरोध इति भावः॥ यदिलन्तरङ्गत्वेमस्थानसंबन्धलाभ इत्यर्थः पष्ठीस्थानेइत्यत्रभाष्येस्पष्ट इतिस्थानेग्रहणंव्यर्थमेवतस्य परिभाषालभ्यत्वाभावेनज्ञापकासंभवात्। वृद्धसंज्ञायामिक्परिभाषानुपस्थितिस्तु मालादीनां चेतिज्ञापकात्, तद्धिप्रस्थेःवृद्धमितिपर्युदासेप्राप्तेआरभ्यतेअनुवादेइतिचनिर्मूलम्। यद्वा इक्परिभाषाच परिभाषयोर्विधीयतेइत्यध्याहारात्तत्र तस्या अप्रवृत्तिरनुवादे इति चतद्विषयमे
तदेतदुक्तम्। अकारस्येकारस्यादापिपर इति। ककारविशेषणत्वेतुविवक्षिते आपूपराक्ककारात् पूर्वस्यात इत्यवस्यत्। यत्तुप्राञ्चः। आपीतिककारविशेषणं
सर्विकेत्यादौतु एकादेशस्यस्थानिवद्भावादकारेणव्यवधानेपिवचनसामर्थ्याद्भविष्यतीति। तन्न। रथकत्यादावतिप्रसङ्गात् व्यवहितस्यापिपरत्वानपायात्। न
चनिर्दिष्टपरिभाषयानिस्तारः। अनुवादेपरिभाषाणामनुपस्थितेः। अनूद्यमानविशेषणेष्वितिहितदर्थः। अत्रचउदीचामातइतिसूत्रेस्थानेग्रहणंलिङ्गम्। फलन्तु
वृद्धसंज्ञायामिक्परिभाषानुपस्थानात् शालीयादिसिद्धिः। यदप्याहुः। आपीतिविधीयमानस्येतोविशेषणमिति। तत्तुच्छवीयः। आपीत्यस्याङ्गविशेषणत्वंत्वना
शङ्क्यमेव। रथकत्यापुत्रकाम्येत्यत्रातिप्रसङ्गात्। शकेति। पचाद्यच्। स्थग्रहणंविस्पष्टार्थम्। ककारमात्रस्यप्रत्ययस्याभावादेवतात्स्थ्यलाभात्। कूर्चस्यकिम्। सर्विके
त्या दौटाबेकादेशंबाधित्वाकात्परस्समाभूत्। तस्मादित्युत्तरस्येतिपरिभाषणात् ॥
यात एव। ञ्णोपोनइत्यत्रयजादिस्वादिपरंइत्यस्यान् विशेषणत्वेपिअव्यवधानलाभ इतिष्यङ इतिसूत्रेभाष्येध्वनितंसंगच्छते इतिविभाव्यतेतदासंनिहितत्वादिनेवा
पीत्यस्याकारविशेषणतेतिबोद्धव्यम्। तत्स्थस्त्रीप इति। विधेयस्यासिद्धत्वेनतद्विशेषणासंभवादितिभावः। अनाशङ्क्यमेवेति। श्रुतेनान्वयसंभवेश्रुतेनान्वयायोगादितिभा
वः। त्वस्यविसंवादमप्याहरयेत्यादि। तात्स्थ्यलाभादिति। कान्तात्प्रत्ययादितितुनार्थः क्षिपकादीनांनिषेधस्यव्यर्थत्वापत्तेः ॥

अपवादेइति॥येननाप्राप्तिन्यायेनबाधकविषयेतेनैवन्यायेनबाधसिद्धेरितिभावः।प्रत्ययस्थेकौनि ।प्रत्ययेकीत्येवयुक्तंनयासयोरितिज्ञापकात्कादेप्रत्ययइतिनार्थइतिकेचिन्म
एवंवाध्यस्यप्रत्ययस्थेककारपरस्यचातइदित्यर्थः।तत्रसामर्थ्यादाप्परत्वांशेककारव्यवधानंसोढव्यमेवेतिभावः॥विग्रहइति।दक्षिणापश्चादितित्यक्।अन्यथा।द्विवाच
मनुवार्णादाङ्‌मितिपरिभाषया।एकादेशोबाध्येतेत्याहुः।तन्न।अपवादेपरत्वस्यैवउक्तपरिभाषायाअपिनिष्फलत्वात्।वस्तुतस्तुप्रत्ययस्थेकिदृत्तिर्नमानि
देशएवोचितः।पूर्वग्रहणंचसुत्यजम्।अतइतितपरः किम्।कृदाधारार्चिकलिभ्यः कः।धाका।राका।मामिकेति।केवलमामकेत्यादिनासञ्ज्ञाछन्दसोरिवेतिनियमा
न्ङीप्।त्यकृत्यपोरिति।उदीचामातस्थानइतिविकल्पस्यापवादः।दाक्षिणात्यिकेति।दक्षिणस्यामदूरेदक्षिणा।आजन्तः।दक्षिणाभवेतिविग्रहः।यत्तुदक्षिणस्यांदि
शिभवेतिप्राचाविगृहीतम्।तन्न।त्यग्विधौवन्ययसाहचर्यादाजन्तस्यैवदक्षिणाशब्दस्यग्रहणात्।अन्यथासर्वनाम्नोवृत्तिमात्रेइतिपुंवद्भावापत्तेश्च।यत्तुसमा
सेएवपुंवदितितन्नेतिवक्ष्यते।त्यकिकिनिचेत्यादिवृद्धौटाप्ततोज्ञातादयर्थेकःकेणइतिह्रस्वःटाप्।इहत्यिकेति।अव्ययात्त्यप्।नयासयोः।अत्रन्यासकारः।याद्
त्येतस्योदीचामातस्थानेइतिविकल्पेप्राप्तेनिषेधोयमिति।तन्न।आन्तस्थानेइत्यंशस्येहाभावात्।यासेतियत्तदोरुपलक्षणमित्याशयेनाह।यत्तदोरिति।स्वरूप
स्याविवक्ष्यांफलमुदाहरति।यकांनका।मिति।यासयोरित्यपहायत्यत्तदोरित्येववक्तुमुचितम्।उपत्यकेति।उपाधिभ्यांत्यकन्नासन्नारूढयोः।क्षिपकादीनां
च।नेत्यनुषज्यते।क्षिपकेति।क्षिपेरिगुपधलक्षणःकः।ततोज्ञातादौकः।चटभेदने।पचाद्यच्।ततःकः।तारकेति।तरतेर्ण्वुल्।ज्योतिर्नक्षत्रं।नेत्रकनीनि
काच।वर्णकाप्रावारविशेषः।तन्तूनांविकारस्तान्तवम्।ओरञ्।अन्यत्रवर्णिकेति।ग्रन्थविशेषस्यव्याख्या।स्तोत्रकर्त्री च।वर्तयतीतिवर्तका।शकुनौइत्वं
वा।अन्यत्रनित्यमेव।पितरश्चताःदेवताश्चपितृदेवताःतदर्थंकर्मपितृदेवत्यम्।देवतान्तात्तादर्थ्येयदितियत् ॥
कस्यापिग्रहणे।चेनसाहचर्यत्यागेमानाभावःसंगृहीतः॥इहाभावादिति।अकचःसत्त्वादितिभावः।प्रावारविशेषइति।वर्णयत्याच्छादयतीतिव्युत्पत्तेः ॥

एवंचअस्यसाधुत्वंपद्यतेश्च।भावप्रधानमिति।भावकालकारकसंख्याश्चत्वारोर्थाआख्यातस्यतत्रभावःप्रधानमितितदर्थंतद्भाष्यकारआह।नामानीति।नामपदेनसुब
न्तमितिचतद्भाष्येस्पष्टम्।तत्त्वाव्ययातिरिक्तमित्यन्यत्रनिरूपितम्।नमंत्याख्यातार्थप्रतिविशेषणीभवन्तीतिनामानीतितद्व्युत्पत्तिर्निरुक्तभाष्येदर्शिता।किंचैतन्निरुक्तो
तरंयत्रोभेभावप्रधानेभवतइतिनिरुक्तेउक्तम्।यत्रोभेनामाख्यातेभवतोवाक्येतत्रतेभावप्रधानेक्रियाप्रधानेइत्यर्थकतयाचतद्भाष्येतद्व्याख्यातम्।अतःपूर्वनिरुक्त
स्यव्याख्यानान्तरमादरणीयम्।किंचकर्तृविशेष्यकबोधेःपचदोदनंदेवदत्तंपश्यतिप्रयोगःशतृविधायकभाष्यकैयटयोरापादितः।यद्यप्यतरङ्गाप्रथमातथापिप्रधाना

एवंचप्रथमान्तविशेष्यकोबोधइतिनैयायिकोद्गुणोभाष्याद्यनुसारिभिर्नादर्तव्यः।यास्कोप्याह।भावप्रधानमाख्यातंसत्त्वप्रधानानिनामानि।पश्यमृगोधावतीत्यादौ
तुमृगकर्तृकंगमनंदर्शिक्रियायाकर्म।प्रधानंदर्शिक्रियैव।उक्तंचासुबन्तंहियथानेकंतिङन्तस्यविशेषणम्।तथातिङन्तमप्याहुस्तिङन्तस्यविशेषणमिति।एवंपच
तिभवतीत्यस्यपचिक्रियाभवतीत्यर्थः।अयंतुविशेषः।तिङन्तोपस्थितायाःक्रियायाःक्रियान्तरंप्रतिविशेषणत्वेपिशब्दाध्याहृत्यादेकर्मत्वसंसर्गएवनतुप्रकारः।
अपदार्थत्वात्।अर्थाध्याहारवादेतुप्रकारत्वेपीष्टापत्तिः ॥ ७ नुरोधिनीद्वितीयांबलवतीतितदाशयः।तदनुसारेणाह।पश्येति।मृगस्यकर्मत्वेप्रधानानु
रोधिनीद्वितीयैवस्यादितिभावः।उक्तंचेति।हरिणेतिशेषः।तिङन्तसुबन्तशब्देनतदर्थक्रियादिः।पचिक्रियाभवतीत्यर्थइति।स्पष्टंभूवादिसूत्रेभाष्ये।योऽश्वमेधेनय
जतेसब्रह्महत्यांतरतीत्यादौयत्कर्तृकाश्वमेधक्रियातत्कर्तृकातरणक्रियेत्येवबोधइत्यन्यत्रविस्तरः।अपदार्थत्वादिति।तन्नयेपदजन्योपस्थितिविषयस्यैवप्रकारत्ववि
शेष्यत्वस्वीकारात्पदाध्याहारस्यात्रासंभवादितिभावः।प्रकारत्वेपीति।अपिनासर्वपक्षेविभक्त्यर्थस्यसंसर्गत्वमितिसमर्थसूत्रषष्ठीसूत्रभाष्योक्तःसिद्धान्तःसूचितः।
शब्दोपस्थितस्यापिसंसर्गत्वपक्षस्यसर्वैरङ्गीकृतमेवस्पष्टः ॥

फलस्यापीति। अपिना पक्ष इत्यादौ व्यापारस्य संग्रहः। तत्र तस्य फलं प्रति विशेषणत्वात्। इत्थमेव। कर्मत्वभानविषये उक्तप्रकारेणैवेत्यर्थः। व्यवस्थेति। सर्वसम्मतेति शेषः। तद्वत्र कृतेपीति भावः। वस्तुतस्तत्रापि संसर्गतैव घटपदे घटघटत्वयोः समवायस्येव। उपस्थितिपूर्वकं पृथगाकाङ्क्षाया अदर्शनेनाध्याहारस्योक्तिसंभवाभावादिति ध्येयम्। अत एव फलस्य कर्मत्वादेर्वीतिलिङ्गेति। तत्र तस्य करणत्वेनान्वयादिति भावः। दृष्टान्त इति। शोभनं पचतीत्यादौ। तत्र नव्यनैयायिकवैयाकरणयोरुभयोरपि म

पचतीत्यादौ धातूपात्तफलस्यापि त्वन्मते वमतभेदेन व्यवस्था। अत एव नत्समानाधिकरणे शोभनं पचतीत्यादौ द्वितीयैकवचनोत्पत्तिः। अग्निष्टोमेन यजेतेत्यादौ तृतीयोत्पत्तिश्च संगच्छते। न च दृष्टान्ते विशेष्यसमर्पकाद्दार्ष्टान्तिके विशेषणसमर्पकाच्च कर्मत्वादिवाचिकायाः सुब्विभक्तेः प्रयोगोऽस्त्विति वाच्यम्। धातुतिङन्तयोः प्रातिपदिकत्वात्। नैयायिकानां तु स्यादेष दोषः। तथा हि। धावन्तं मृगं पश्येतिवत् धावति मृगमित्यपि स्यात्। न चाप्रथमासामानाधिकरण्ये शतृशानचोर्नित्यत्वान्नैवं प्रयोग इति वाच्यम्। एवमपि द्वितीयानुत्पत्तेर्दुरुपपादत्वात्। ननु तत्र वाक्यभेद एव। पश्य एतत्र तमिति कर्माध्याहारात्। पचति भवतीत्यादि तु पाको भवतीत्याद्यर्थे अनिष्टमेवेति चेत्। मैवम्। अध्याहारे गौरवात्। तस्य च मुनिवचनविरोधेनाप्रामाणिकत्वात्। त्वदीयानिच्छामात्रस्याकिंचित्करत्वात् ॥

ते फलव्यापारयोः परस्परान्वयस्य सत्त्वेन तस्य दृष्टान्तत्वौचित्यात् पश्य मृग इत्यादौ धावनदर्शनयोरन्वयस्य नैयायिकासम्मततया साध्यत्वेन न दृष्टान्तत्वमिति बोध्यम्। दार्ष्टान्तिके। पश्य मृगो धावति पचतीत्यादौ। विशेषणसमर्पकादिति। अन्वयबोधकाल इत्यादिः। दुरुपपादत्वादिति। एवं च तथाप्रयोगविलय एव स्यादिति भावः। गौरवादिति। एकवाक्यतयान्वये संभवति अध्याहारेण वाक्यभेदे गौरवमिति भावः। ननु प्रामाणिकं गौरवं न दोषायेत्यत आह। तस्य चेति। शतृसूत्रस्थेन भूवादिसूत्रस्थेन च मुनिवचनेन विरोध इति बोध्यम्। अकिंचित्करत्वादिति। ऋषीणामेकवाक्यतया बोधे साधुत्वस्येच्छा सत्त्व इत्यादिः ॥

नास्तीति। एवं च तत्र द्वितीयादुर्वारेति भावः। न चेदृशेस्थले विशिष्टस्य देवदत्तमृगादेः कर्मत्वं विशिष्टवाचकं च न प्रातिपदिकमिति न दोषः। शुक्लाममेतन्माहात्म्यं तथाचोत्प
त्तयः शुभाद्[illegible]दिति वाच्यम्। नीलत्वविशिष्टघटस्य कर्मत्वे प्रतिपादनीये नीलं घटमित्यादौ द्वितीयानापत्तेः। शुक्लेत्यादि त्वार्षमित्यलं मुनिविरुद्धविचारेण। क्रियाप्रधानमित्य
त्र क्रियायाः प्राधान्यमाख्यातघटकप्रत्ययार्थापेक्षयैव बोद्ध्यते ऽतो दृश्यादिकं प्रतिधावनादेर्विशेषणत्वेपि न क्षतिरिति दिक्। भाष्येति। भूवादिसूत्रस्थं भाष्यं पचादयः क्रियाभ
वति क्रियायाः कर्त्रीभवन्तीति तत्रोक्तम्। वार्त्तिकम्। शत्विधायकस्थम्। तस्याः क्रियाविशिष्टक्रियाबोधस्य कर्मत्वस्वीकारे इति। क्रियान्तरनिरूपितत्वस्वीकारे इत्यर्थः। कारकस्य करणा

अपि च। अपाक्षीद्देवदत्तो वेद्धीत्यादौ शत्रादेः प्रसङ्ग एव नास्ति। एकवाक्यत्वं च भाष्यवार्त्तिकादिसकलसंमतम्। न च तिङन्तस्थले क्रियाविशिष्टक्रियान्तरबोधो न जा
यत एवेति वाच्यम्। तथैव व्युत्पन्नानां तादृशबोधस्य दुर्वारत्वात्। ईदृशेर्थे साधुत्वं नेष्टमित्यपि न। साधुत्वानुशासनार्थं प्रवृत्तैरेव तत्स्वस्वीकारात्। धातुसंबन्धाधिका
रव्युत्पादिते पुरीमवस्क[illegible]दौ तस्यावश्यकत्वाच्च। ननु सिद्धान्ते आख्यातवाच्यक्रियाया अपि कर्तृत्वकर्मत्वस्वीकारे तस्या असत्त्वरूपत्वं भज्येतेति चेन्न। लिङ्गसंख्ययोः
कर्तृकर्मेतरकारकस्य चा[illegible]भावेन तथात्वोपपत्तेः। कर्मत्वस्य प्रकारतयानभ्युपगमाद्वेत्यन्यत्र विस्तरः। अभिहितेत्विति। नन्वेवं पक्वमोदनं भुङ्क्ते इत्यत्रापि द्वितीया न स्या
दिति चेत्। मैवम्। इह हि पचिभुजिनिरूपिते द्वे कर्मत्वशक्ती। तत्र प्रधानक्रियानिरूपितामनभिहितां शक्तिमादाय द्वितीयोत्पत्तेः। उक्तं च हरिणा। प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः
पृथक्। शक्तिर्गुणाश्रया तत्र प्रधानमनुरुध्यते ॥ [illegible]दिकारकशक्तेः हरिं नमेच्चेत्सुखं यायादित्यादौ हेतुहेतुमद्भावेनान्वयो न क्रियाकारकभावेनेति न दोषः। स्ववाचकधात्वर्थं प्रति तु कर्मत्व
न्वयः करणत्वान्वयश्च नासत्त्वरूपताप्रतिबन्धकः। शोभनं पचति ज्योतिष्टोमेन यजेतेत्यादौ दर्शनात्। अन्यत्रेति। कर्मत्वस्य सर्वत्र संसर्गतैवेति भाष्यसंमतपक्षे त्वाद्यमेव सारम्। अ
भिहिते त्विति। तिङादिभिः कर्मादिशक्तेरभिधाने प्रातिपदिकस्योद्भूततच्छक्तिकेर्थे वर्तमानत्वाभावात् द्वितीयादेः कर्मादिशब्देभ्य इवाप्राप्तिरिति भावः। न स्यादितीति।
पचधातूत्तरनिष्ठया ऽभिधानादिति भावः। गुणाश्रया। गुणनिरूपिता। प्रधानम्। प्रधानक्रियानिरूपितां शक्तिम् ॥

म॰ र॰ अनुरोधमेवविशदयति।प्रधानविषयेति।गुणेनुक्तापितद्वदुक्तवत्प्रतीयते।तुल्यन्यायाद्गुणनिरूपिताउक्तापिप्रधाननिरूपितानुक्तशक्तिवत्प्रकाशतइति।अतएवप्रासादेआ
१२८ स्तेइत्यादौसप्तम्याःनिरूपिताधिकरणत्वेप्योक्तत्वेप्यासिनिरूपितस्यानभिधानेनानभिहितत्वात्सप्तमीसिद्धिः।इदंचस्वादुमिणमुलितिसूत्रेभाष्येस्पष्टम्।तत्रत्यभाष्यार्थानुवादि
न्यौचेमेहरिकारिकेइत्यन्यत्रप्रपञ्चितम्।एतेनुभयनिरूपितशक्तेरनभिधानेगुणनिरूपितशक्तेरप्यभिधायिनीविभक्तिर्भवति।यथाग्रामायगन्तुमिच्छतिग्रामंगन्तुमिच्छ
तीतिचादृश्यते।ग्रामोगन्तुमित्यादौप्रधानक्रियानिरूपितशक्तेरभिधानेगुणनिरूपितायाअप्यभिधानान्नकदापिचतुर्थीद्वितीयेगमेर्ग्रामःकर्मइष्येत्सूभेकर्मणीतितत्सूत्रेभाष्येस्पष्टम्
एवंचोभयत्राप्यावृत्त्याशाब्दोन्वयइत्येवप्रतीयते।अत्रप्रयोगेगामिक्रियापेक्षेद्वितीयावतुर्थ्योनकदापिभवतइतिकैयटात्।एवंचैतद्विरोधादोदनंपक्त्वास्यपाष्टमेवेतियत्केनचित्
प्रधानविषयाशक्तिः प्रत्ययैरभिधीयते।यदागुणेनदातद्वदनुक्तापिप्रतीयतेइति।अतएवपक्त्वौदनोभुज्यतेइत्यत्रभुजिप्रत्ययेनाभिहितेप्रथमैव।पचेरप्राधान्यात्।वस्तुतस्तु।
पक्त्वाभुज्यतइत्यादौकर्मणःपचिभुजिभ्यांनयुगपच्छाब्दोन्वयः किंत्वन्यतरेणशाब्दोपरेणार्थः।तत्रचप्रथमाद्वितीयेव्यवस्थितएव।तद्यथापक्त्वाभुज्यतेऔदनः।किंपक्त्वा।अर्था
देदनम् ॥ ७ प्राचीनेनवस्तुतस्तुपक्त्वेत्यादिनासाधितत्वन्तेनोक्तंतदमितुच्छमितिबोधयन्स्वरूपव्याकियैवपराक्रियेतिन्यायेनतथैवानुवदति।वस्तुतस्त्वित्यादिना।अतएव
स्वादुमीतिसूत्रेभाष्येतुनत्वाणमुलादयः स्वान्वयिनासमभिव्याहृतेनानुप्रयुज्यमानेनसमानाधिकरणेतद्वाच्यकारकेवक्तव्याः।तेनपक्त्वौदनोभुज्यतइत्यादावोदनेद्वितीयान।अन्यथाकृत्वा
दस्यकर्तर्यपत्तौपचक्रियाकर्मत्वस्यानाभिधानात्तास्यादेवेत्युक्त्वा.नवक्तव्यम् अव्ययकृतांभावेविधानादित्युक्तम्।अनेनद्विभाष्येणोभयत्रशाब्दान्वयएवलभ्यते।तत्रवचनारम्भेएषांप्रयोग
गाणामुपपत्यभावःतत्रत्यस्यानेपिहर्युक्तरीत्यासनादिसूत्रस्यभाष्यसम्मतयाभावएवोचितः।एवंचकैयटोक्तंसुघेप्रतिहन्तुंशक्यमित्यप्यसाध्वेव वचनारम्भेऽसिद्धेः।तुमुनाद्यन्वयिक्रि
यानिरूपितशक्तेरयंस्वभावोयत्स्वसमानाधिकरणगुणभूततुमुनादिप्रकृत्यर्थनिरूपितशक्तेः स्ववदभिहितत्वेनानभिहितत्वेनवाप्रकाशइतिसुधियोविभावयन्तु राम॰
अन्यतरेणसहेति।इदंप्रागुक्तवस्तुतस्त्वित्यादिरीत्योक्तंतद्वदेवेतिबोध्यम् ॥ १२८

र्मैवानेति। ग्रामं गच्छतीत्यादौ ईप्सिततमत्वोपलक्षितमुद्देश्यत्वं भासते एतत्सूत्रबोध्यकर्मत्वशक्तेरुद्देश्यतासमानाधिकरणत्वात्। अत एव कर्मणा यमभिप्रैतीति सूत्रे कर्मणेत्यस्याभावे गां
ददातीत्यत्र गोरप्युद्देश्यतया तत्रैव पर्यायेण संप्रदानसंज्ञा स्यादिति भाष्यकैयटोक्तं संगच्छते। चतुर्थ्या उद्देश्यत्वं वाच्यम्। तत्समानाधिकरणशक्तिर्वेति सर्वसंमतमिति भावः। कला
न्तरमप्याह। अग्नेरिति। ईप्सिततमपदाभावे वारणार्थानामित्यस्यैव तदपवादत्वापत्तेः। न च यौतच्चरितार्थम्। तस्यापि तदुपस्थाप्यसंयोगरूपफलाश्रयत्वात्। वारयते च संयोगाद्यनुकू
लव्यापाराभावानुकूलव्यापारोऽर्थः। तत्रापीप्सितशब्दः क्रियाशब्द एवदीप्सिततममित्युक्तौ ईप्सितमात्रे सावकाशस्य परत्वादीप्सिततमेनानेन बाधः। ईप्सिततमत्वं च प्रकृतधात्वर्थप्र
यदा तु ओदनं पक्वा भुज्यत इति प्रयुज्यते तदा भुज्यत इत्यत्र अर्थादोदन इति गम्यते। एवं च विवक्षाभेदेन पूजयितुं शक्यते हरिर्हरिं वेत्युभयं साधु। प्राप्तानन्द इति। आनन्दक
र्तृकप्राप्तिकर्मीभूत इत्यर्थः। यदुक्तं प्रायेणेति तस्य फलमाह। क्वचिदिति। विषवृक्ष इति। यदि तु वर्धिच्छिद्योरन्यतरेण सह कर्मतयान्वयो विवक्ष्यते तदा द्वितीया स्यादेवेति
ध्येयम्। तृणं स्पृशतीति। यथा स्पृश्यमानस्य गङ्गादेरीप्सितस्य क्रियया योगः। तज्जन्यसंयोगादिफलाधारत्वात्। तथैवानीप्सितस्य तृणादेरपीति भावः। स्यादेतत्। धातूपस्थाप्य
फलशालिकर्मत्वे वास्तु किमीप्सितानीप्सितग्रहणेन गोः पृथक्कथनेनेति चेन्। मैवम्। अग्नेर्माणवकं वारयतीत्यत्र वारणार्थानामिति सूत्रेण माणवकस्यापादनत्वं प्राप्तं तद्बाधनाय कर्तु
रीप्सिततममिति वक्तव्यमेव। एवं द्वेष्योदासीनयोः संग्रहार्थं तथा युक्तमित्यस्याप्यावश्यकत्वात्। अनीप्सितग्रहणं तु स्पष्टार्थमेव न त्वावश्यकम्। इदं त्ववधेयम्। ईप्सितानीप्सितयोः
शाब्दबोधसकरूप एव द्वेष्यानीप्सादेरपि पृथुदिवत्प्रकृतानुपयोगेऽपि द्वितीयावाच्यकोटावप्रवेशात्। अनन्यलभ्यस्यैव शब्दार्थत्वात्कर्मणि द्वितीयेति सूत्रे द्वितीयसूत्रैर्याव
त्तां कर्मसंज्ञा विहिता तेषु सर्वेषु तेनतेन रूपेणोपस्थितेः ॥ ७७ ॥ धानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयत्वम्। अत एवाग्नेर्नोद्देश्यत्वप्रतीतिस्तत्रेति भावः। न त्वावश्यकमिति। द्वेष्यसंग्रहोऽपेक्ष्या
स्यात्तदेव भविष्यतीति भावः। तस्यापीप्सिततमत्वानीप्सितत्वे एकरूप एवेति। इच्छाविषयत्वानिच्छाविषयत्वभानकृतवैरूप्यरहित इत्यर्थः। तदाह द्वेष्यानीप्सादेरिति। इच्छाविषयत्वानिच्छाविषयत्व
योरादिना ईप्सातत्प्रकर्षस्येत्यर्थः। उपयोगेऽपीति स्वरूपतः सत्त्वेऽपीति भावः। तदुपलक्षितमुद्देश्यत्वादिकं तु भासत एव तदाह। अनन्यलभ्यस्यैवेति। भासमानोद्देश्यत्वतदभावाभ्यामर्थत इच्छाविष

पद्दित्याभवः ॥

आधारवाचिकेति। इदमुपलक्षणं द्वितीयोऽधिकरणवाचकत्वात् आधारपदेन चात्राधारताशक्तिमानुच्यते कर्तुरीप्सिततममिति लक्षणे विशिष्टस्य प्रवेशात्प्रामाणिकं गुर्वेव शक्य
तावच्छे तआह। क्रियायाइति। फलस्य व्यापारस्य चेत्यर्थः देवदत्तादिशब्दैरिति। आदिनातिङन्तम्। नन्वेवमाधारस्य धर्मिणोपि प्रकृत्यालाभः आधारत्वेनालाभ इत्यस्याधारत्वं नल
भ्यमितित्यत्रैवपर्यवसानात्तस्यैव शक्तिविशेषरूपस्य वाच्यत्वं युक्तं तस्य धर्मिसाकाङ्क्षत्वाविशेषणत्वञ्चयुक्तमिति चिन्त्यम्। अभेद इति। विशेष्यविशेषणभाव इत्यर्थः। वाक्यार्थ इति।
हरिं भजतीत्यत्रेति शेषः। फलमिति। कर्तुरीप्सिततमं विहितकर्मसञ्ज्ञकविषये फलमित्यर्थः। व्यापार इति। कर्तृविषये। स्वाश्रयेति। स्थाल्यां पचति तन्दुलमित्यत्र कर्मद्वाराऽधिकरणं
भूतले देवदत्तः पचतीत्यादौ कर्तृद्वाराधिकरणम्। फलीभूत इति। पदजोपस्थितावविशेषेपि तत्फलभूते शब्दबोधे इत्यर्थः। इदमुपलक्षणं सञ्ज्ञापार्थस्य निमित्तत्वे तत्तत्सञ्ज्ञाप्रक
तेर्व्यवस्थाविधीयमाना द्वितीयाऽऽश्रयव्यापारवाचिका। लाघवात्। क्रियाया धातुना कर्तुश्च देवदत्तादिशब्दैर्लाभात्। इष्टतमत्वादेस्तु भानाभावात्। प्रकृतिप्रत्ययार्थयोश्चाभेद इह
संसर्गः। तथा च हर्याधारिका प्रीतिस्तदनुकूलो व्यापारो वाक्यार्थः। यद्यपि कर्मणि कर्तरि अधिकरणे च विहितानां द्वितीयादीनामाधारोर्थ इति तुल्यम्। तथापि तन्नि
रूपकं फलं व्यापारः स्वाश्रयद्वारा तदुभयं च तिङर्थे फलीभूते शाब्दबोधे वैलक्षण्यं संगच्छते। न चाधारतैव वाच्येति मन्तव्यम्। तन्निष्ठधर्मस्य वाच्यतावच्छेदकतापत्त्याऽतिगौर
वात्। कर्मणि द्वितीयेत्यादिसूत्रस्वरसभङ्गापत्तेश्च। अतएव भाष्यकार आह। सुपां कर्मादयोप्यर्थाः संख्या चैव तथा तिङामिति। न च तिङ्ष्वपि धर्ममात्रमर्थः। कर्तरि कृत्। लः क
र्मणि च। तयोरेव कृत्यक्तखलर्था इति सूत्राणां वैरूप्यापत्तेः॥ ७ रिकैवोपस्थितिरिति कर्मत्वादिनैवोपस्थितेस्तत्रापि वैलक्षण्यमस्तीत्यन्यत्र विस्तरः। तन्निष्ठधर्मस्येति। आधारेत
एव सिद्धे सति सकलाधारवृत्तित्वरूपस्येत्यर्थः। आधारता तु शक्तिविशेषरूपाखण्डैवेत्याशयः। नन्वाधारतैव निरूपकाश्रयसंबन्धभेदेन भिन्ना आश्रयतात्वमखण्डमिति न गौरवमत आ
ह। कर्मणीति। लोके कर्मादिपदानां धर्मिपरतायादृष्टत्वेन सूत्रेपि तत्परतैवोचितेति भावः। आधारस्य शक्यत्वेनानन्ताधारतानामाधारतात्वेनानुगमान्न शक्त्यानन्त्यमिति बोध्यम्। कर्मादयोपि
ति। अपिना संख्या। सूत्रवदेवात्रापि कर्मपदस्य धर्मिपरता। शक्तिरप्येतैर्धर्म्यभेदमापन्नैवोच्यत इति बोध्यम्। संख्या चेति। चेन कर्तृकर्मणी। वैरूप्यापत्तेरिति। कृद्विषये धर्मिपरता तिङ्विषये

१.श.
२६
इतिस्थितमिति। प्राचीनग्रन्थ इति शेषः। अत्र रु चिदत्तं तु यदापायो निश्चविभागानुकूलव्यापार एव धात्वर्थस्तदापादानत्वाविवक्षायामन्येनासिद्धेः कर्मत्वार्थमिदमावश्यकमेवमन्येष्वपि। किं
…रित्यपि षष्ठ्यपवादएव। तदभावे तत्रि ष्वपि षष्ठ्या एव प्राप्तेरतः षष्ठ्यपवादत्वमात्रेण न संबन्धत्वेन बोधकतोचिता। तस्मादत्रापि क्रियाजनकतासमानाधिकरणकर्मत्वशक्तिमत्त्वेने
बोध इत्येवोचितम्। व्यापारद्वयार्थत्वेकं तु … ने नापि द्विकर्मकत्वमस्त्येव यथा प्रयोगं बहूनां धातूनां तत्र ये व्यापारद्वयार्थत्वेन द्विकर्मकास्तेषां प्रधानकर्मणि लादयः प्रधान
… मे स्यास्ये … द्विकर्मणामित्युक्तेः। प्रधानत्वं … चकर्तृप्रत्ययसमभिव्याहारे कर्तृनिष्ठप्रधानधात्वर्थव्यापारमात्रविशेषणफलाश्रयत्वम्। ण्यन्तविषये ईदृश प्राधान्यस्यैव ग्राह्य
त्वात्। गर्गाः शतं दण्ड्यन्तामित्यादौ गर्गाणामेव तत्त्वमिति तत्रैव कर्मणि लादयः। उद्देश्यत्वरूपमार्थप्राधान्यं तु शतस्येत्यनुद्देश्यत्वेनाप्रधानगर्गानुरोधान्न शतात् वृत्तिरिति नवद्धिसूत्रस्थभाष्य
अत्रोच्यते। कर्मणः शेषत्वे … विवक्षायां न माषाणामश्नीयादितिवत् षष्ठी प्राप्ता तां बाधितुमिदं सूत्रम्। तथा चेह षष्ठीवत्संबन्धमात्रं द्वितीयार्थ इति स्थितम्। अपादानत्वमात्रविव
क्षायां तु … सारविशेषणत्वं तु षष्ठी। तेन गोः पयो दोग्धीत्यपि प्रयोगः साधुरेव। एवमग्रेप्यूह्यम्। यत्तु प्राचोक्तम् दुह्याच्पच्दण्ड्रुधिप्रच्छिचिब्रूशासुजिकर्मयुक्। नीहृकृ
ष्मथ्वहदण्डग्रहमुष्यचकर्मभाग् … म्। ग्रहेः पाठो निर्मूलः॥ ७७ विरोधः। एकव्यापारार्थकदुहादियोगे त्वप्रधानकर्मणि। अप्रधानत्वं चात्वोक्तप्रधानकर्मभि
न्नत्वम्। न चैवं तत्रार्थे गवादीनामेव। फलाश्रयत्वाभावात्। एवं च भाष्यानुक्तानां परिगणने पाठो युक्तः अर्थनिबन्धनेयं संज्ञेति चायुक्तम्। एवं द्व्यर्थत्वेन द्विकर्मत्वातिप्रसङ्गस्त्वन
भिधानेन वारणीय इति दिक्। अपादानत्वमात्रेति। विभागानुकूलव्यापारमात्रार्थकत्वविवक्षायामिति भावः। गोः क्षीरेति। न च क्रियान्वयेपि शेषत्वविवक्षायां सेनिवाच्यम्। षष्ठ्यन्तार्थकस्य
स्यान्वययोग्यार्थकनामसमभिव्याहारे तत्रैवान्वयव्युत्पत्तेः। अत एव तण्डुलानामोदनं पचतीत्यादौ द्व्यर्थश्चैव पचिर्विकारयोगे षष्ठी तण्डुलविकारमोदनं पाकेन निर्वर्तयतीत्यु
क्तं भाष्येन तु पाकान्वये षष्ठीत्युक्तमिति दिक्। निर्मूल इति। अपादानत्वाद्यविवक्षायां तत्संबन्धिनः कर्मत्वे मूलं नास्तीति भावः। द्विकर्मत्वं तु यदीष्टं तर्हि व्यापारद्वयार्थत रामः
या बोध्यम्॥ १३०

उदाहरणमप्ययुक्तमिति। शक्रान्नृपुतरुज्जग्राहेत्येव प्रतीतेः। पराक्रमातिशयद्योतनाय जहार रघुनरुमित्यस्यैवोचितत्वाच्चेति भावः। द्विकर्मकत्वमिति। अकथितसूत्रविषयतये त्यर्थः। कैयटमाधवादिसंमतत्वादिति भावः। अतस्तद्रीत्यैव दूषणमाह। एवं चेत्यादिना। प्रधानमिति। उद्देश्यत्वादिति भावः। तस्योद्देश्यत्वे मानमाह। अर्थिनश्चेति। न तु निग्रहार्थ इति। शारीरदण्डाद्यर्थ इत्यर्थः। तस्मादेव वाक्यशेषादिति भावः। एतत्सर्वं माधवादिरीत्यालाघुत्पत्तिनियामकं यदि प्रागुक्तं प्रधानकर्मत्वं तदेदं सर्वमसंगतमित्युक्तदिशोह्यम्। द्विजग्राहद्युतरुं शक्रमित्युदाहरणमप्ययुक्तम्। इतरेषां तु द्विकर्मकत्वं यद्यपि प्रामाणिकं तथापि संदर्भाशुद्धिः। तथाहि। दुह्यादीन्न्यादींश्च द्वैराश्येनेह पठित्वा भावकर्मप्रक्रियाशेषे लकृत्यक्तखलर्थाः किं द्विकर्मकेभ्यो मुख्ये कर्मणि स्युः गौणे वेत्याकाङ्क्षायां स्वयमेव पठितम्। ण्यादयो ण्यन्तनिष्कर्मगत्यर्था मुख्यकर्मणि। प्रत्ययं यान्ति दुह्यादिर्गौणेऽन्ये तु यथा रुचीति। एवं च दण्डिमन्थिभ्यामपि मुख्ये [illegible] गर्गाः शतं दण्ड्यन्तामिति भाष्यं विरुद्ध्येत। शतं ह्यत्र प्रधानं न गर्गाः। अर्थिनश्च राजानो हिरण्येन भवन्तीति वाक्यशेषात्। दण्डिश्चेह ग्रहणार्थो न तु निग्रहार्थः। अस्मिंश्च वल्लत्रसमुदाये वाक्यसमाप्तिः। गुणानुरोधेन प्रधानाकृतेरसंभवात्। तथा मन्थेरपि प्रधाने स्यात्। दृश्यते तु गौणे। तथा च भारविः। येनापविद्धसलिलस्फुटनागसद्मा देवासुरैरमृतमम्बुनिधिर्ममन्थे इति। अत्रामृतं मुख्यम्। उद्देश्यत्वात्। अम्बुनिधिस्तु गौणः। यदपि व्याख्यातार आहुः। द्विकर्मकेषु पचेरप्रामाणिकः पाठ इति। तद्भ्रमात्। तथाहि। कर्मवत्कर्मणेति सूत्रे दुहिपच्योर्बहुलं सकर्मकयोरिति वार्तिकेन दुह्येव पचेर्द्विकर्मकता लभ्यते कैयटहरदत्ताभ्यां च तत्रैव स्फुटीकृता। माधवोऽप्याह। जयतेः कर्षतेर्मन्थेर्मुषेर्दण्डयतेः पचेरित्यादि। उदाजहार च। तण्डुलानोदनं पचतीति। अकथितं चेति सूत्रे हरदत्तेनोक्तम्। अकथितशब्दो यद्यप्रधानार्थो गृह्येत तदा पाणिनाकांस्यपात्र्यां दोग्धि पयः इत्यत्र पाणिकांस्यपात्र्योरपि स्यात्। तत्करणाधिकरणयोस्तु पचत्यादिरवकाशः। न हि तत्रास्य प्रसङ्गो दुहादिपरिगणनादिति॥ ७ कर्मकेष्विति। अकथितसूत्रविषयेष्वित्यर्थः। पचेरप्रामाणिकत्वदूषणं कैयटाद्यनुरोधेनेति ध्वनयन्नाह। कैयटेति। अत्राहुः। बीजं तु पचेर्व्यापारद्वयार्थत्वे कर्तुरीप्सितमिति कर्मणो वृक्षस्यैकव्यापारपरित्यागेन कर्तृत्वविवक्षयापि भाष्यस्य सूपपादत्वेनैतत्सूत्रविषयत्वेन मानमिति ॥

सेन्मतान्तरेति। पूर्वोपपादितभाष्यसंमतमतान्तरेत्यर्थः। भाष्यानुक्तानां सर्वेषां ग्रहणमप्रमाणमित्यनेन सूचयति। उदाहृतस्वपरग्रन्थां स्व याश्रुतकैयटानुसारेणेति च ध्वनितमित्यन्यत्र विस्तरः। कैयट इति। अत्रारुचिबीजमुक्तमादितिभावइति। अर्थनिबन्धने यस्त्येति वदतां कैयटादीनामित्यादिः। द्विकर्मकत्वंतु व्यापारद्वयार्थत्वेन सिद्धमिति तत्त्वम्। कुरुपाञ्चालादिरिति न्यासव्याख्यानात्तथैव भाष्योदाहरणाच्चेति भावः। नवैयर्थ्यमिति। शीङादेर्विशयनपूर्वकव्यापनेवृत्त्या कर्तुरित्येवकर्मत्वस्य स्यादियोगइवसिद्धत्वादिति भावः। एवं चैवंकल्पनयोक्तदेशादीनां तन्मतान्तराभिप्रायेण। अन्यथा उदाहृतस्वपरग्रन्थविरोधादित्याद्यातात्। शन्तंजयतीति। जिअभिभवे। यत्तु जिजयइति व्याख्यातं तन्न। तस्याकर्मकत्वात्। यद्यपि जयत्यादयो भाष्येनपठितास्तथापि चकारेण संगृह्यन्त इति कैयटः। अर्थनिबन्धनेति। नतु स्वरूपाश्रया। अहमपीदमचोयं चोयइति तद्राजसूत्रभाष्ये एच्छिपर्यायस्य चुदेरपि द्विकर्मकत्वदर्शनादिति भावः। तथा च भट्टिः। स्याल्लुंस्योस्योस्मुखो जगाद मारीचिमुच्चैर्वचनं महार्थम्। कालिदासोपि। शिलोच्चयोपि क्षितिपालमुच्चैः प्रीत्या तमेवार्थमभाषतेव। भारविश्च। उदारचेता गिरमित्युदारां द्वैपायनेनाभिदधे नरेन्द्र इति। एवं वचनाघस्यादयो बहवो द्विकर्मका बोध्याः। देशइति। कुरुपञ्चालादिरेवेह गृह्यते। तेनाधिशीङ्स्थासामित्यादेर्नवैयर्थ्यम्। गोदोह इति। न चेह कालत्वासिद्धिः। लोके कालत्वेन प्रसिद्धस्यैव ग्रहणात्। तेन घटमास्ते इत्यादि न भवति। यत्तु प्राचोक्तम्। अकर्मकधातुभिर्योगे देशः कालोध्वभावश्चेति द्वितीयेति केचित्। नदीमास्ते इत्यादि। अत्रेदं वक्तव्यम्। कर्मसञ्ज्ञाया अनुक्तत्वात्कर्मणि लादयो न स्युः आस्यते मास इति यथा। केचिदित्यप्यसंगतम्। द्वितीयाया भाष्यसंमतत्वात्। नदीमित्युदाहरणमप्यसंगतम्। ग्रामस्तु गृहकुड्यादिभिन्नदेशो न तु प्रदेशमात्रम्। तेन ग्रामं स्वपितीत्यत्र न भवतीत्याकरात्। अध्वेति वन्नूनम्। अध्वानं स्वपितीति प्रसङ्गात्। अतएवाकरे अध्वा गन्तव्यत्वेन विशेषितः। ग्रन्तव्यत्वेन प्रसिद्धो नियतपरिमाणः क्रोशादिरिति व्याख्यातम्॥ ७ मेवकर्मत्वं नान्येषामनभिधानादिति सूचयति। प्रसिद्धस्येति। क्रियायाः कालोपाधित्वमेव प्रसिद्धमिति भावः। तेनेति। देशादीनां ग्रहणेनेत्यर्थः। यत्तु मासादेरेव ग्रहणेनेत्यर्थ इति। तन्न। जन्यमात्रस्य कालोपाधित्वेपि कालत्वाभावात्। यदि तु जन्यमात्रस्य कालत्वमिति मतमस्ति तदा घटत्वादिना नतस्य कालताकिं तु मासत्वादिनैवेति भावः। एतच्च नापूर्ववचनमित्याकरे स्पष्टम्। अध्वानं स्वपितीति। स्वापमात्रार्थकोत्र स्वपितिः॥

कार्यसंप्रत्ययादिति। कार्यसंप्रत्ययस्यौचित्यादित्यर्थः। ननु कर्तरि कर्मेति सूत्रे क्रियायाअपि कृत्रिमकर्मत्वोक्तेरिदमसंगतमत आह। कर्मेति। प्राञ्च इति। हेतुमति चेत्यत्र भाष्यकृत इत्यर्थः। गुणक्रियायाम्। णि

च्प्रकृत्यर्थक्रियायाम्। स्वातन्त्र्यादित्यस्य स्वधर्मेणाभिधाने हेतुत्वं कर्मसञ्ज्ञानियमस्य च। प्रेषणे। ण्यर्थे। तृतीययेति। स्वधर्मेणेत्यस्य स्वकार्येणेत्यर्थः। विशिष्टक्रियायाः संबन्धे हेतुमाह। हेतुमतीति। अन्तरङ्गत्वादिति।

एवं च परत्वादित्यभ्युच्चयः। अस्य विधित्वमित्ययं पक्षः आकडारसूत्रे भाष्ये ध्वनित इत्यभिमानः। तत्र हि परं कार्यमिति पाठे गत्यादीनां ण्यन्तानां कर्मकर्तृसञ्ज्ञमपि प्राप्नोति। आरम्भसामर्थ्यात्कर्मसञ्ज्ञा परे

गतिबुद्धिप्रत्यवसानंभक्षणम्। शब्दकर्मकाणामिति। शब्दः कर्मकारकं येषां तेषामित्यर्थः। नत्विह कर्तरि कर्मव्यतिहार इतिवत् कर्मशब्दः क्रियापरः। कृत्रिमे कार्यसंप्रत्ययात्। कर्मग्रहणसा

मर्थ्याच्च। अन्यथा गतिबुद्धिप्रत्यवसानशब्दार्थाकर्मकाणामित्येवावक्ष्यत्। नियमार्थं चैतत्सूत्रमिति प्राञ्चः। णिजर्थेनाप्यमानस्य यदि भवति तर्हि गत्यर्थानामेव कर्तुरिति। तेन पाचयति देव

दत्तो यज्ञदत्तेनेत्यत्र प्रयोज्ये प्रकृत्यर्थं प्रति कर्तृत्वस्यैव निरपवादत्वेनावस्थानात् तृतीयासिद्धाविति। उक्तञ्च। गुणक्रियायां स्वातन्त्र्यात्प्रेषणे कर्मतां गतः। नियमात्कर्मसञ्ज्ञायाः स्वधर्मेणाभि

धीयतइति। कर्तुः स्वधर्मेण तृतीययेत्यर्थः। ननु णिजर्थं प्रति कर्मत्वं बाधित्वा प्रकृत्यर्थं प्रति कर्तृत्वं परत्वादेव सिद्धम्। अन्तरङ्गत्वाच्च। स्वकारक विशिष्टा हि क्रिया णिजर्थेन संबद्ध्यते। हेतुम

तिणिज्विधानात्। कर्तृप्रयोजकस्य हेतुत्वात्। अत एवोपजीव्यापि कर्तृसञ्ज्ञा। एवं च परत्वादन्तरङ्गत्वादुपजीव्यतयापि च प्रयोज्यस्यास्तु कर्तृत्व इत्यादेर्विधितैवोचितेति चेत्। अस्त्वेव

मालक्ष्यस्य निर्बाधत्वात्। नियमं सूत्रमिदमिति ग्रन्थानां का गतिरिति चेत्। शृणु। णिजर्थस्य शाब्दं प्राधान्यं पुरस्कृत्य प्रधानानुरोधिन्याः कर्मसञ्ज्ञायाः प्राबल्यात् विप्रतिषेध एव नास्ति। अन्त

रङ्गोपजीव्यत्वे अपि प्रधानं प्रति निर्बलत्वं प्रयोजयत इत्याशयेन ग्रन्थानामुक्तिसंभवः। आर्थप्राधान्यपुरस्कारे तु विधायकत्वमेवोचितमिति ज्ञेयम्। ७ कार्यत्वाच्च कर्तृसञ्ज्ञा प्राप्नोतीत्युक्तम्। तत्रार

म्भसामर्थ्यादित्यस्य गत्यादिसूत्रारम्भसामर्थ्यादित्यर्थं मन्यते। पुरस्कारे त्विति। तु नाः रुचिः सूचिता। प्रयोजकव्यापारे ऽन्याधीनत्वलक्षणार्थप्राधान्यस्य शाब्दप्राधान्यस्य च सत्त्वेनोद्देश्यत्वलक्षणार्थप्रा

धान्यस्य प्रयोज्यव्यापारनिष्ठस्य पुरस्कारेण युक्त इति। किं च कर्तृग्रहणं धात्वर्थं प्रधानीभूतव्यापाराश्रयरूपस्वतन्त्रोपलक्षणं न तु तत्सञ्ज्ञकपरम्। अत उपजीव्यत्वं दुरुपपादम्। आकडारसूत्रस्थ

स्यारम्भसामर्थ्यादित्यस्यैतन्नियमारम्भसामर्थ्यादित्यर्थः। किं च परं कार्यमिति पाठे विरोधाभावात्सर्वत्र सञ्ज्ञाद्वयप्राप्त्यवस्थं नियमार्थतैवोचिता। एषां कर्मसञ्ज्ञैवेति नियमस्तु न प्राक्कडारादिति शास्त्रबा

नन्विहेति। नथायुक्तमित्यनेनापि नत्र स्थानीप्सितत्वाभावात् तत्रापि कर्तुरित्यनुवृत्तेश्चालक्षणां विनेति। कर्तृपदस्य स्वतन्त्रलक्षणां विनेत्यर्थः। अत एव सार्थो ह्रीयत इत्यत्र कर्तुरपादानत्वेपि कर्मत्वप्रयुक्तलकारसिद्धिरिति संप्रदानसंज्ञासूत्रे कैयटे स्पष्टम्। तत्प्रयोजको हेतुरिति सूत्रेप्येवमेवातएव णिच्सिद्धिः। अवधेह्यीति। किंच प्रयोजककर्तृव्यापारप्रयोज्यसंयोगरूपफलाश्रयत्वेनास्त्येतकर्मत्वम्। किंच णिजुत्पत्तेः प्रागेव स्वर्गादीनां कर्मत्वप्रवृत्तिस्तस्यामवस्थायां कर्तृत्वसत्त्वात्। अकृतव्यूहादितित्वत्यानास्त्येव वा। प्रापणमिति। उत्तरदेशसंयोगानुकूलव्यापारानुकूलव्यापारो हि तत्। तत्रापीति। अत एव प्रतिषेधो यथाकथंचिद्गत्यर्थानामण्यत्र ग्रहणमिति भावः। प्राप्तिमत्वादिति। न वेति सूत्रे भाष्ये हृक्रोरित्यस्योभयत्र विभाषात्वमुक्त्वा प्राप्ते

शत्रूनिति। स्वर्गकर्मकं शत्रुनिष्ठं यद्गमनं तदनुकूलो यन्निष्ठो व्यापारः स श्रीहरिर्गमयतीत्यर्थः। नन्विह कथं स्वर्गस्य कर्मत्वं कर्तुरीप्सिततमं हि कर्म न च शत्रवः कर्तारः। तेषां गत्यादिसूत्रेण कर्मत्वादिति चेन्नैवम्। कर्मसंज्ञायां हि कर्तृग्रहणं स्वतन्त्रस्योपलक्षणम्। स्वातन्त्र्यं च धातूपात्तव्यापाराश्रयत्वमेव। तच्च प्रयोजकसंनिधानेपि प्रयोज्यस्यास्त्येवानन्तोपलक्षणत्वे प्रमाणाभावः। प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्॥ अप्रधाने दुहादीनामित्युक्त्वा ण्यन्ते कर्तुश्च कर्मण इति वदतो भाष्यकृत एव तत्र प्रमाणत्वात्। न हि लक्षणां विना णिजन्तानां द्विकर्मकता लभ्यते येन ण्यन्ते कर्तुरिति वचनं सावकाशं स्यात्। ननु स्वतन्त्रे संकेतितस्य तत्रैव लक्षणा कथमिति चेत्तं ज्ञानान्तरानुपहिते संकेतितस्य तदुपहितसाधारणे स्वतन्त्रमात्रे सेत्स्यत्येव हि। नीवह्योरिति। यद्यप्यनयोः प्रापणमर्थो न गतिस्तथापि गतिरपि विशेषणीभूय प्रापणमध्ये प्रविष्टेत्येतावन्मात्रेण प्राप्तिमत्त्वात् प्रतिषेध उक्तः ॥ अभ्यवहरतिमुदाहृत्याप्राप्ते हरति भारं देवदत्तो हारयति भारमित्युदाहरणम्। विपूर्वो हरतिर्गत्यर्थोभ्यवपूर्वः प्रत्यवसानार्थ इति तत्रत्यकैयटाच्च न गतीति सूत्रे भाष्ये ह्वह्योरप्रतिषेधः संप्रहरन्ते राजान इति हिंसार्थेरावभाष्ये उदाहरणाच्च। तत्रैव वहिर्निगीत्यर्थः देशान्तरप्रापणं हि वहेरर्थ इति भाष्येण प्रापणस्य गतित्वाभावबोधनाच्च न गत्यर्थत्वेन तेषां ग्रहणम्। प्राप्तिश्च संबन्धमात्रं न संयोग एव। सुखं प्राप्नोधनं प्राप्नोभूः प्राप्नेत्यादिव्यवहारात्। आदिकर्मणि च कर्तेरिक्तः देशान्तरप्राप्तेः परं गतिं विनाऽनुपपत्त्या कुविन्यान्तरीयकतया गतिप्रतीतिरस्त्येवतादृशस्यापि मत्यर्थकत्वमभिमत्य वार्त्तिकारम्भवः स्तुतो प्राप्तिरेवेति अनेन सूचितम्।

हिंसेति। हिंसार्थे भक्षणे च भक्षयतेर्वृत्तिर्बोध्या। भाष्यप्रयोगादेवेति। आह्वानार्थकघटादिभिन्नस्मरतेरेव योगे तद्भाष्यप्रामाण्यात्कर्मत्वाभावो घटादेस्तु भवत्येव कर्मत्वमिति भावः।
परास्ता इति। इदं च कैयटानुरोधेनोक्तम्। वस्तुतः शब्दक्रियाणामिति पक्षे भाष्ये ह्वाययति शब्दाययति क्रन्दयतीनां निषेध उक्तो न तु शब्दकर्मकाणामिति पक्षे एवं च तत्र पक्षे शब्दायतेरप्र

न्ता।

नियन्त्रिति। नियन्ता पशुप्रेरको न तु सारथिरेव तेन वाहयति बलीवर्दान्यवानिति सिध्यति। अनिषेध इति। प्रयोज्यः कर्मेति वक्तव्यमिति फलितोऽर्थः। सूत इति। निय प्राजिता यन्ता
सूतः क्षत्ता च सारथिः। आदयतीति। अकर्त्रभिप्राये फले शेषात्कर्तरीति परस्मैपदं कर्त्रभिप्राये तु णिचश्चेत्यात्मनेपदमेव। तदपवादस्य निगरणचलनार्थेभ्यश्चेत्यस्य अदेः प्रति
षेध इति निषिद्धत्वात्। सस्यमिति। क्षेत्रस्थानां यवानां भक्ष्यमाणानां हिंसादृष्टव्यात्तस्यामवस्थायां तेषां चेतनत्वात्। स्मारयतीति। यत्तु णेरणाविति सूत्रे स्मरयत्येनं वनगुल्म
स्स्वयमेवेत्युदाहृियनेतत्र भाष्यप्रयोगादेव कर्मत्वं बोध्यम्। शब्दायतेरिति। शब्दं करोतीत्यर्थे शब्दवैरेत्यादिना क्यङ्। ततो हेतुमति णिच्। धात्वर्थेति। एतेन शब्दाययति सैनिकै
रिपूनिति कर्म प्रयुञ्जानाः परास्ताः। यत्तु प्राचा अयं क्रन्दशब्दायह्वेञां नेत्युक्तम्। तत्रायतेरुक्तिस्तावन्निर्मूलैव। क्रन्दह्वेञोस्तु शब्दक्रियत्वमात्रेण प्राप्तिसंभावना। वस्तुत
स्तु नासौ सूत्रार्थ इत्युक्तम्। यदपि ग्रहदृशामिति कर्मत्वमुक्तम्। तत्र दृशिग्रहणं प्रामाणिकमेव। शृणोतेस्तु शब्दकर्मकत्वात्सिद्धम्। ग्रहेस्तु द्विकर्मकत्वं यद्यपि सुधाकरादीनां संमतं तथा
पि बहूनामसंमतम्। अत एव अजिग्रहत्तं जनको धनुस्तदिति भट्टिप्रयोगमजिग्रहत् बोधितवानिति व्याचख्युः। तथा अयाचिनारं न हि देवदेवमद्रिः सुतां ग्राहयितुं श
शाकेत्यत्र ग्राहयितुमुद्वाह्यत्वेन बोधयितुमिति। युक्तं चैतत्। ग्राहेर्द्विकर्मकत्वे हि जायाप्रतिग्राहितगन्धमाल्यामित्यत्र क्तेन प्रयोज्याया धेनोरभिधानं स्यात्। ण्यन्ते कर्तु
श्च कर्मण इत्युक्तेः ॥ ७ तिषेधानुक्त्याऽकर्मकशब्दाययतिसत्त्वेन मानम्। शब्दस्य धात्वर्थेन संगृहीतत्वेपि बहिर्भूतपुत्रादिकर्माभावेन मानमिति बोध्यम्। व्याचख्युरिति।
तेन बोधनातिरिक्तार्थस्य न द्विकर्मकत्वम्। अन्यथाऽप्रसिद्धार्थपरिग्रहो व्यर्थ एव स्यादिति भावः। ग्राहेः। बोधनातिरिक्तार्थग्राहेः ॥

तत्श्चेति। एवं च अधिकरणत्वाद् अन्यपदार्थाभावाच्च बहुव्रीहिर्न स्यादिति भावः। प्रतिग्राहिते इति। अस्वजायपेरस्वादिः। तत्र जायाप्रतिग्राहितशब्दयोस्तृतीयातत्पुरुषत्वाद् बहुव्री-
हिः कार्य इति भावः। बहुव्रीहित्वात् तृतीयातत्पुरुषस्तु दुर्लभो विधायकाभावात्। अवयवेन सामर्थ्येऽपि समुदायेन तृतीयान्तस्यासामर्थ्याच्चेत्यत आह। जायानिष्ठेति। ननु द्विकर्म-
कत्वेऽपि धेनुरूपप्रयोज्यकर्मणः कर्मत्वाविवक्षायां गन्धमाल्यरूपकर्मण्येव क्ते इष्टसिद्धिरिति चेन्न। णिजुत्पत्त्यर्थं प्रयोजकजायायाः हेतुत्वावश्यकत्वेन हेतोश्च कर्तृप्र-
योजकत्वरूपत्वेन प्रयोज्याया धेनोः कर्तृत्वार्थं जायानिष्ठप्रेरणाविषयीभूतव्यापाराश्रयत्वविवक्षाया आवश्यकत्वेन दृशार्थस्यैवैतत्कर्मसंज्ञानिमित्तकोटौ प्रवेशे-
नेदृशविषये कर्मत्वाविवक्षाया उपपादयितुमशक्यत्वात्। कर्मत्वशक्तेरपि तत्त्वमनियतत्वेनाविवक्षाया असंभव इत्यभिमानात्। न च निवृत्तप्रेषणा प्रतिग्रहधातोर्णिचि
ततश्च जायया गन्धमाल्ये प्रतिग्राहितामिति स्यात्। सिद्धान्ते तु प्रतिग्राहिते गन्धमाल्ये ययेति विग्रहः। जायानिष्ठप्रेरणाविषयीभूतं गन्धमाल्यकर्मकं यत्प्रतिग्रहणं त-
त्कर्त्रीमित्यर्थः। अन्यपदार्थान्तर्भावेण विशेषणविशेष्यभाववैपरीत्येनैवैकार्थीभावकल्पनात्। अभिवादिदृशोरिति। अभिवादयतेरप्राप्ते दृशेस्तु प्राप्ते विभाषेयम्। अभि-
नि। नेत्याचतरत्वेन पूर्वनिपाते कर्तव्ये शिवगीतोच्चारणमाह समुदायविवक्षार्थमित्याह। संघातपूर्वकत्वेऽस्मिन्नेनेह न। निविशते यदि शूकशिखा पदे इति। क्वचिन्नेति।
एवं येषामभिनिविष्टानामिति भाष्यप्रयोगश्चेहमानम्। उपपदविभक्तिमाह। उभसर्वतसोरित्यादिना ॥ ७७ गन्धमाल्यकर्मण्येव क्ते इष्टेति। द्वितीयापदेन षष्ठीसमास इ-
ति वाच्यम्। प्रकृते वतर्पलाभे णिजुपादानस्यानुपयुक्ततापत्तेः। ननु गवादिपदानां विग्रहे स्वार्थमात्रपराणां समासेऽन्यपदार्थपरत्वमिव प्रतिग्राहितशब्दस्य धेनुपरत्वेऽपि स्त्रीगन्ध-
माल्यपरत्वं भविष्यतीत्यत आह। अन्यपदार्थेति। तदन्तर्भावेणैकार्थीभावस्य सूत्रस्थस्त्वादिबलेनाङ्गीकारेऽप्यन्यान्तर्भावेण तत्स्वीकारे मानाभाव इति भावः। अभिवादयतेरिति। वदि-
अभिवादन इति ण्यन्तस्येत्यर्थः। व्याख्यानात्तद्ग्रहणे स्थिते व्याख्याने बीजमाभासं दर्शयति। पूर्वनिपातेति। निविशते इति। अत एव सत्त्वे निविशते इति भाष्यप्रयोगः संगच्छते। भा-
ष्यप्रयोग इति। समर्थसूत्रस्थ इति शेषः ॥

उभसर्वयोस्तसाविति। उभांशे उभशब्दघटितसमुदायोद्देश्यकत्वं षष्ठ्यर्थ इति बोध्यम्। उभशब्दस्य शब्दपरत्वाद् वृत्तिविषये विनायच् वार्त्तिके। उदाहरणे तु अन्तरङ्गत्वात्पूर्वमेवायचि
कृते उभयशब्दत्वं तस्यापि तद्घटितसमुदायोद्देश्यकत्वमस्त्येवेति न दोषः। वृत्तिविषय इति। वृत्तौ कृतायामित्यर्थः। प्राचीनैर्हि उभौ साभ्यासस्येति निर्देशेन वृत्तिघटके परत एवा
यजिति व्याख्यातं तदाह। उभशब्दादित्यादि। एवं च तेषां लक्षणाश्रयणं व्यर्थमिति भावः। अविभक्तिक इति। अनुत्पन्नविभक्तिक इति तदर्थ इति व्याख्यातारः दृष्टान्तबलेन तथैव

उभसर्वयोस्तसौ उभसर्वतसौ तदन्तयोर्योगे द्वितीया कार्येत्यर्थः। अत्र प्राञ्चः। उभशब्देनोभयशब्दो लक्ष्यते। अन्यथा तसोऽसंभवादित्याहुः। वस्तुतस्तु। वृत्तिविषये
अयच्प्रवृत्तावपि उभशब्दाद्विहितो यस्तस् तदन्तत्वमस्त्येवेति यथाश्रुतं साधु॥ धिगित्यविभक्तिको निर्देशः। गवित्ययमाहेतिवदिति प्राञ्चः। तन्न। तथा सति अपदा
न्ततया हशान्ते लोपः शाकल्यस्येत्यस्येव दार्ष्टान्तिके जश्त्वस्यापि अप्रवृत्तिप्रसङ्गात्। न चायं गकारान्त एवेति भ्रमितव्यम्। कस्य च द इति सूत्रे धकिदित्युदाहरणस्या
संगतिप्रसङ्गात्। तस्मात् धिगिति विभक्त्यन्तमेव। प्रकृतिवदनुकरणमित्यतिदेशात्तु पोलुक्। उभयतः कृष्णमिति। कृष्णस्य पार्श्वद्वय इत्यर्थः। आद्यादित्वात्तसिः। ष
ष्ठ्यर्थे द्वितीया। एवमुपपदविभक्तौ सर्वत्र बोध्यम्। नाम्नो द्विधैव संबन्धः सर्ववाक्येषु व्यवस्थितः। सामानाधिकरण्येन षष्ठ्या वापि क्वचिद्भवेत् इति वृद्धोक्तौ षष्ठीग्रहणं त
दपवादविभक्तेरप्युपलक्षणम्। द्विधेत्युक्तिः सामानाधिकरण्यवैयधिकरण्याभ्यां निर्वाह्या। षष्ठीतदपवादयोरेककोटितया वा। धिक् कृष्णाभक्तमिति। तस्य निन्द्यत इत्यर्थः। कथं
धिङ्मूर्खेति। संबोधनपदस्य क्रियान्वय इति प्रागेवोक्ततया धिक्शब्दयोगाभावात्। क्रियापदं च कर्तृकं विदाक्षिप्तमित्यन्यदेतत्॥ लाभाद्दभिप्रेत्याह। जश्त्वस्येति। अतिदे
शादिति। अतिदेशेनाव्ययत्वादित्यर्थः। आद्यादित्वादिति। केनसंबन्धिपार्श्वद्वयाभ्यामागताद् इत्यर्थे पञ्चम्यास्तसिरित्यन्ये। सामानाधिकरण्येन विनापि संबन्धं विशेष्यविशेषणभा
वेन। षष्ठ्येति। भेदसंबन्धपूर्वकविशेष्यविशेषणभावेनेत्यर्थः। नाम्न इत्यनेन क्रियाकारकयोः क्रियाकारकभावरूपकारकविभक्त्यर्थसंबन्धे नान्वय इति सूचितम्। वैयधिकरण्येति। षष्ठ्या वेत्य
तद्वैयधिकरण्योपलक्षणमिति भावः। क्रियान्वय इति। बोधनीयक्रियान्वय इत्यर्थः। धिक्शब्दयोगाभावादिति। संबोधनस्य क्रियान्वयात्तत्क्रियायामेव धिकोऽयोगो न तेनापीति भावः॥

म. श. व्याख्यानमिति। तालेत्यादेर्हाशब्देनन्नयोग इति भावः। हापदस्य चाध्याहृत त्वामिहनेन मामित्यनेन वा ऽन्वय इति तात्पर्यम्॥ कारकविभक्तित्वमिति॥ कर्तृकारकविभक्तित्वमित्यर्थः। संबोधन
१२४. पदार्थस्य देवस्य त्वमित्यनेन सहाभेदे ऽपि शब्दतः क्रियाश्रयत्वादिप्रतीतेरुपपदनस्याशक्यतया कर्तृत्वं दुर्लभम्। वास्तवक्रियाश्रयत्वमादाय कर्तृत्वे तु बहूपप्लव इति भावः। नास्य प्रवृत्तिरि
ति। अतएव सर्वेषामयमस्माकमुपर्युपरि वर्त्तत इत्यादौ न द्वितीया। अत्र ह्युपर्युपरीत्यस्यातिशयोऽर्थो न सामीप्यम्। वीप्साद्विर्वचनं चात्रेति बोध्यम्। उपसर्ग इति। बुभुक्षितान्वितप्रत्यर्थसंबन्धस्य
तयो वमूर्खसंबोध्यकं निषिद्धाचरणादि निन्द्यतीति वाक्यार्थः। एतेन हा तात हा देवि धीरा भवेत्यादि व्याख्यातम्। यत्त्वाहुः। उपपदविभक्तेः कारकविभक्तिर्बलीयसीति संबोध
ने प्रथमैव भवति। संबोधनपदस्य कर्तृकारकत्वाच्चेत्यादि। तन्न। रम्। संबोधनपदस्य कर्तृकारकत्वे उक्तिसंभवाभावात्। देव प्रसीदेत्यादौ वस्तुगत्या देव एव कर्तेति चेन्न। ने
तावता कारकविभक्तित्वं लभ्यते। किंच देव त्वां भजे त्वां भजन्तीत्यादौ संबोध्यस्य वास्तवमपि न कर्तृत्वमित्यास्तां तावत्। उपर्युपरीति। कथं तर्हि उपर्युपरि बुद्धीनां चरन्तीश्वर
बुद्धयः। उच्यते। उपरि बुद्धीनामुत्तानबुद्धीनामुपरि चरन्तीत्यर्थः। एवं च आम्रेडितत्वाभावान्न द्वितीया। षष्ठ्या। प्रतिपदोक्तस्यैव पर्यध्यधसः सामीप्य इति कृतद्वित्वस्यात्र ग्रह
णम्। तेन वीप्सायां द्विर्वचने सति नास्य प्रवृत्तिः। अन्यत्रापि दृश्यत इत्युक्तं तद्दर्शयति। अभितः परित इति। प्रतिभातीति। एष प्रतिशब्दः क्रियाविशेषकत्वादुपसर्गः। न तु कर्मप्रव
चनीयः। अन्तरा त्वां मामिति। तव मम च मध्ये इत्यर्थः। सामर्थ्यादिति। अतएव हेतुत्वपर्यन्तमपि शाब्दबोधे विषय इति स्वीक्रियत इति भावः। नदीमन्ववि। द्वितीयायाः संबन्धो
र्थः। स चेह साहित्यरूप इति अनुनाद्योत्यते। लक्षणेत्थम्। वृक्षं प्रतीति। वृक्षसंबन्धिद्योतनमर्थः। संबन्धश्च लक्ष्यलक्षणभाव इति प्रत्यादयो द्योतयन्ति। भक्तो विष्णुं प्रतीति। विष्णो
र्भक्तेश्च विषयविषयिभावः प्रत्यादिद्योत्यः। लक्ष्मीरिति। लक्ष्मीरूपस्य भागस्य हरिणा सह स्वस्वामिभावः। वृक्षं वृक्षमिति। इह वीप्सा द्विर्वचनेनैव द्योत्यते। परिशब्दस्तु क्रियया संबध्यते। क
र्मणि द्वितीया। कर्मप्रवचनीयसंज्ञया उपसर्गसंज्ञाया बाधात् षत्वं न ॥ ७ क्रियागतत्वात् बुभुक्षितस्य न भातीत्यन्वय इति भावः। मध्य इति। अन्तरा इति हि मध्य इत्यर्थकम्। लक्ष्यलक्षणे। ने। प्र म.
वृक्षप्रकाशेन विद्युद्द्योतेन ज्ञानाद्वृक्षो लक्षणं विद्युद्द्योतनं लक्ष्यम्। कर्मणीति। वृक्षपदार्थस्य सेचनं प्रति कर्मत्वात्। अतएव वृक्षस्य प्रति सेवनमित्यादौ षष्ठीति भावः ॥ १२४

विषयेतयेति। अन्ययोत्या या अपि वीप्सायाः सञ्ज्ञाप्रति निमित्तत्वादितिभावः। इतरेलक्षणादयस्तुद्योत्याएवेतिवोद्यम्। इतितुनभवतीति। विशिष्टक्रियासंबन्धे विशेषणेनापिसंबन्धा
त्प्राप्तिरितिभावः। एतत्सर्वंहरदत्तानुरोधेन। कर्मत्वाविवक्षायामपिद्वितीयार्थसञ्ज्ञाया आवश्यकत्वात्। किंचपरेः क्रियाविशेषकत्वेन्वर्थत्वेनकर्मप्रवचनीयत्वस्यैवानापत्तिरित्यन्यत्र
विस्तरः। नन्वत्रार्थभागाप्रतीत्याकथंनिषेधः तआह। अत्रचेति। अर्थतोभागेपर्यवसानमादायनिषेधप्रवृत्तिरितिभावः। कालाध्वेति। येनकालेनाध्वनावात्यन्तसंयोगस्तद्वृत्तिभ्यामित्यर्थः।
एतदर्थमेवलक्षणादयोविषयतयोपात्ता इतिव्याख्यातमाकरे। पञ्चम्यपाङ्‌परिभिरिति तुनभवति। वर्जनार्थेनापेत्यनेनसाहचर्यात्। ममाभिष्यादिति। ममभागः स्यादित्यर्थः। माम
भिष्यादित्यपिप्राञ्चः प्रत्युदाहरन्ति। तत्रमांप्राप्नुयादित्यर्थः। उपसर्गवशेनअस्तेः सकर्मकत्वान्मामितिद्वितीया। अत्रचममभागइत्यर्थतः पर्यवसानात्। अभागेइतिकर्मप्रवचनी
यत्वेनिषिद्धे उपसर्गप्रादुर्भ्यामितिषत्वम्। पूजायांचेति। सुः पूजायामिति पूर्वसूत्रात् पूजाग्रहणमनुवर्त्स्यते। कालाध्वनोः। अन्तंविराममतिक्रान्तोऽत्यन्तः सचासौसंयोगे।
निरन्तरसंनिकर्षइत्यर्थः। द्वितीयास्यादिति। भुक्तत्वात्कालाध्ववृत्तिभ्यामेव। मासस्येनि। कृत्वोऽर्थप्रयोगेकालेऽधिकरणइतिषष्ठीत्याहुः। तन्न। तत्रशेषग्रहणानुवृत्त्या
द्विरह्नोभोजनमितिकृदन्तेनसहसमासवृत्तेरेवफलत्वात्। तस्मादिहषष्ठीशेषइतिसूत्रेणैवषष्ठीतितत्त्वम्॥ इतिद्वितीया॥ स्वतन्त्रः कर्ता। प्रधानीभूतधात्वर्थप्र
तिआश्रयत्वंस्वातन्त्र्यम्। आहच। धातुनोक्तक्रियेनित्यंकारकेकर्तृतेष्यतइति। साधकतमंकरणम्। प्रकृष्टेति। यद्व्यापारादनन्तरंक्रियानिष्पत्तिस्तत्प्रकृष्टम्। उ
क्तंच। क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम्। विवक्ष्यतेयदायत्रकरणंतत्तदास्मृतमिति। विवक्ष्यतइत्यनेनस्थाल्यादीनामपिवैवक्षिककरणत्वमस्तीति
ध्वनयति ॥ ७ तस्मादिति। अन्तरङ्गत्वाच्चेत्यपिवोद्यम्। एतेनशेषग्रहणाननुवृत्तौतेनैवेतिपरास्तम्॥ इतिद्वितीया॥ प्रधानीभूतेति। प्राधान्यंचकर्तृप्रत्य
यसमभिव्याहारेधात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतानाश्रयधात्वर्थत्वम्। धातुनोक्तक्रियेकारकेनित्यंकर्तृतेष्यतेइत्यन्वयः। यद्व्यापारादिति। अनन्तरशब्दयो
गेदूरान्तिकार्थैरितिसूत्रेणपञ्चमी। यत्रयेषांकारकाणांमध्येइत्यर्थः ॥

वस्तुत इति। वस्तुनीत्यर्थः। सार्वविभक्तिकस्तसिः। तत्कर्तृत्वादिकमनिर्देश्यम्। इदं वस्तु कर्त्रैवेत्यादिक्रमेण न निर्देश्यमित्यर्थः। हि यतो वस्तु न तत्तद्रूपेण व्यवस्थितम्। तामेवाव्यवस्थां दर्शयति। स्थाल्येत्यादि। कारकत्वमिति। विशेषणत्वादि यथा स्वज्ञकत्वादावव्यवस्थितम् एवं कारकत्वं तद्व्याप्यमधिकरणत्वादिकं चेत्यर्थः। तण्डुलानोदनं पचतीत्यन्यकारकस्यापि तन्दुलस्य तण्डुलानामोदनं पचतीत्यादावोदनपदार्थान्वयेन षष्ठ्यन्ततादर्शनात् कारकत्वस्य व्यभिचारो द्रष्टव्यः। प्रकृतव्यक्त्युपात्तेति। प्रकृतधातुव्यक्त्योत्पर्थ॥ अनेकधात्वमेव दर्शयति। एवं च पचेरिति। तण्डुलधारणादिपरत्वे इति। आदिना आपाकसमाप्तिधारणम्। अवयवविभागादीति। आदिना रोटिकादावयवमेलनम्। त

आह च। वस्तुतस्तदनिर्देश्यं न हि वस्तु व्यवस्थितम्। स्थाल्या पच्यत इत्येषा विवक्षा दृश्यते यत इति। अयं भावः। कारकत्वं तद्व्याप्यकर्तृत्वादिषट्कं च वस्तु विशेषे विशेषणमविशेष्यभाववत्तव्यवतिष्ठते न हि गोत्वं सर्वप्रतिभारेव न तु कंचित्तस्य गोरितिवत् विशेषणं विशेषणमेवेति सुवचम्। तथा च कथंचित् धातुव्यक्त्या उपस्थापितेऽर्थे किं कर्त्रादिकमिति प्रश्ने प्रकृतव्यक्त्युपात्तव्यापाराश्रयतया विवक्षितः कर्ता। व्यापारव्यधिकरणफलाश्रयः कर्म। कर्तृकर्मद्वारकसंबन्धेनाश्रयोऽधिकरणम्। पच्यर्थो व्यापारश्चानेकधा। एवं च पचेरधिश्रयणतण्डुलावपनैधोपकर्षणादितात्पर्यकत्वे तदाश्रयो देवदत्तः कर्ता। ज्वलनतात्पर्यकत्वे एधाः कर्तारः। तण्डुलधारणादिपरत्वे स्थाली कर्त्री। अवयवविभागादिपरत्वे तण्डुलाः कर्तारः। स्थाल्या पचतीत्यत्र तु तीयोपात्तव्यापाराश्रयोऽपि स्थाली करणमेव न तु कर्त्री। देवदत्तादिव्यापारस्यैव तद्धातूपात्तत्वात्। तथा। आदिस्वादिभ्यामुपात्तेऽर्थे प्रयोज्यः कर्ता। तस्मिन्नेवार्थे भक्षयतिनोपात्ते कर्म। अधिपूर्वैः शीङादिभिरुपात्तेऽर्थे आधारः कर्म केवलैरुपात्ते अधिकरणमित्यादि ॥ तण्डुलाः कर्तार इति। कर्मकर्तरीत्यर्थः। संप्रदानापादानयोस्तु न कर्तृत्वविवक्षा शब्दशक्तिस्वाभाव्यात् तद्व्यापारे धातोरवृत्तेरिति बोध्यम्। उपात्ते। उक्ते इत्यर्थः। स्वप्रकाशत्वे। ज्ञानविषयत्वे। कर्तृकर्मविरोध इति। अभेदे आधाराधेयभावस्य विषयविषयिभावस्य चाभावादिति भावः। शब्दविशेषोपाधिकस्य। शब्दविशेषनिमित्तकस्य। कर्तृकर्मशब्दयोराश्रयविषयोपलक्षकत्वे स्वप्रकाशत्व इत्यस्य स्वप्रकाशपदव्यवहार्यत्व इत्यर्थे वा लक्षणे वा दोष इति बोध्यम् ॥

परेति।कर्मत्वाभिमतांपस्यपरेत्यर्थः।गम्यादिकर्तर्यतिव्याप्तिवारणायेदम्।अपादानेइति।प्रयागात्काशींगच्छतीत्यादौतस्यापिक्रियाजन्यविभागाश्रयत्वादितिभावः।धात्वर्थतावच्छेदके
ति।संयोगस्यैवतथात्वंनतुविभागस्येतिभावः।तत्त्वेवेति।ण्यन्तधात्वर्थतावच्छेदकत्वेवेत्यर्थः।वचनबलात्।गत्यादिनियमबलात्।ननुविभागस्यतत्त्वेनकर्त्तुरितितथायुक्तमितिचन्न
त्रेति।अपादानप्रकरणेवक्ष्यन्वयिनोविभागस्यधात्वर्थतायावक्ष्यमाणत्वादित्यतआह।एकसञ्ज्ञेति।सावकाशत्वादिति। विषभुङ्क्ते इत्यादौसावकाशत्वादित्यर्थः।कर्त्तुरिति।कर्मसञ्ज्ञापवा

एतेनज्ञानस्यस्वप्रकाशकत्वेकर्तृकर्मविरोधइत्यादिपरास्तम्।शब्दविशेषोपाधिकस्यकर्तृत्वादेःप्रत्यक्षादौउक्तिसंभवाभावात्।एतेनपरसमवेतक्रियाजन्यफलशालित्वं
कर्मत्वंचेत्।अपादानेऽतिव्याप्तिमाशङ्क्यधात्वर्थतावच्छेदकफलशालिकर्मेतिपरिष्कुर्वन्तोऽपिप्रत्युक्ताः।ग्राममंगमयतिदेवदत्तमित्यादौगन्तर्यव्याप्तेः।तस्मतेगम
नस्यप्रकृत्यर्थत्वेपितद्व्यापारानवच्छेदकत्वात्।तत्रापितद्व्यापारार्थकत्वेनप्रकृते।नसैवाधात्वर्थःतादृशोपकर्तर्यतिव्याप्तेः।तत्रपारिभाषिकमनुशासनोपयोगिकर्मत्वंवचनबलाद्व्यवस्थितमि
तिचेत्।अपादानेपितद्दितंचास्तीत्यवधेहि।एकसञ्ज्ञाधिकारेऽनवकाशयासावकाशायाबाधात्।अतएवात्मानमात्माहन्तीत्यादौपरयाकर्तृसञ्ज्ञयाकर्मसञ्ज्ञाबाधमा
शङ्क्य अहंकारादिविशिष्टात्मभेदमाश्रित्यसमाहितंभाष्ये।रामेणेति।इहयद्यपिविभक्त्युपस्थितानांकारकाणांक्रियांप्रतिविशेषणत्वेनैवतथापिकृदुपस्थितानांवि
शेष्यत्वैव।सत्त्वप्रधानानिनामानीत्युक्तेः।धातूपस्थाप्ययोःफलव्यापारयोरपिकर्मकृत्समभिव्याहारेविशेषणविशेष्यभावव्यत्यासः।तथाचरामनिष्ठोयोव्यापा
रस्तद्विषयीभूतबाणव्यापारसाध्यप्राणवियोगाश्रयोवालीतिवाक्यार्थः ॥

ण्यन्तसञ्ज्ञायाःपरत्वाद्बाधिका।अतएवग्रामंस्वजतीत्यादौद्वितीयासिद्धिरितितात्पर्यम्।अ
पादाननिष्ठविभागीयसंबन्धस्यफलतानवच्छेदकत्वान्नदोषइत्यपिबोध्यम्।अतएवएकसञ्ज्ञाधिकारेसञ्ज्ञयोर्बाध्यबाधकभावादेव।अहंकारादीति।आदिनाशरीरम्।विभक्त्युपस्थि
तानामिति।विभक्त्यर्थस्यसंसर्गत्वमतेतदन्तोपस्थितानामित्यर्थः।व्यत्यासइति।तद्व्यत्यासेनैवधातुतस्तदुपस्थितिरित्यर्थः।तत्रव्यापारजन्यफलमेवधात्वर्थइतिभावः ॥

तदिष्टापत्तीति। तत्त्वकृत्स्वर्थक्रियायामपिकारकाणामन्वयादितिभावः। तत्रैवमानमाह। कर्त्रित्यादि। यत्तुभवतिक्रियायांप्राथमिकान्वयेनतत्तद्विभक्तौकृदन्तेनपार्ष्णिकान्वयात्तेषांत्वा रितार्थ्यमिति। तन्न। भवतिक्रियायांकर्तृत्वेनान्वयेकर्त्तुरुक्तत्वात्तृतीयानापत्त्याहरिणात्रातइत्यसिद्ध्यापत्तेः। करणत्वेनान्वयेपार्ष्णिकस्यापिहरिकर्तृकत्राणकर्मणोबोधानापत्तेः। क र्तृतृतीयान्तेनसमासविधायकासंगतेश्च। यत्कर्तृककृतिकर्मविश्वमितिविग्रहवाक्यजबोधाद्विलक्षणबोधस्वीकारेनमानमतआह। अपष्ठ्यर्थेति। आकृतीति। इदंचयश्चायंसर्व विभक्त्यपवादः। नाम्नेति। नामसंबन्धितीस्यात्त्ववानित्यर्थः॥ करणशब्दानुवृत्त्येति। एकसंज्ञाधिकारेणचेतिबोध्यम्। ननुमनसादेवदृत्यसंज्ञं नकृद्योगलक्षणषष्ठीप्राप्तेः। नचकर्तृ यनुवाजपेयाधिकरणेमीमांसकैरुक्तंकाष्ठैःपाचकइत्यपिस्यादितितदिष्टापत्तिग्रस्तम्। कर्तृकरणेकृताबहुलंकर्तृकर्मणोःकृतीत्यादिसूत्राणांकृत्स्वकृत्स्वर्थेनकारकान्व यंविनोक्तिसंभवेस्येवाभावादितिसुधीभिराकलनीयम्। अनभिहितेकिम्। हरिःकरोति। जीवन्त्यनेनजीवनः। शाब्दिकःशब्दंदर्दुरंकरोतीतिठक्। कृतंविश्वंयेनकृत विश्वः। विश्वकर्मककृत्याश्रयइत्यर्थः। अषष्ठ्यर्थबहुव्रीहौमुसल्यन्तरस्वीकारात्। यथाचैतत्तथावक्ष्यते। प्रकृत्यादिभ्यइति। आकृतिगणोयम्। तेननाम्नासुतीक्ष्णश्चरिते नदान्तइत्यादिबोध्यम्। द्वयोर्द्रोणयोःसमाहारःद्विद्रोणम्। पात्रादित्वात्स्त्रीत्वाभावः। द्रोणद्वयसंबन्धिधान्यमित्यर्थः। चादिति। करणशब्दानुवृत्त्यापरिक्रयणेसंप्रदानमित्यु त्तरस्त्रस्यान्यतरस्यांग्रहणापकर्षणेनचसंज्ञयोःपर्यायेलब्धेसमावेशार्थश्चकारः। तेनमनसादीव्यतीतिमनसादेवइत्यत्रकर्मण्यण् करणेतृतीयाचेत्युभयंसिद्ध्यतीतिमन सःसंज्ञायामित्यलुक्। किंचास्मिन्देवयतेयत्तदत्तेनेत्यत्रसकर्मकत्वादणिकर्तुर्णौकर्मत्वंनाअणावकर्मकादितिपरस्मैपदंचनेतिसिद्धान्तः॥ ५५ साहचर्यात्तत्रमुख्यव्यवहारेण धात्वर्थाश्रयस्यैवकर्मणोग्रहणम्। अतस्तोकंपाकइत्यादौषष्ठीनेतिवाच्यम्। धात्वर्थभेदेनान्वयिकर्मग्रहणेनैवतदुपपत्तावत्राप्रवृत्तौमानाभावात्। ध्वनितंचेदमाकडारसूत्रेकैयटे। ता दृशसंज्ञात्वेदृढतरमानाभावश्चेत्स्वरूचेराह। किंचेति। कर्मत्वेनेति। नचवैकल्पिकत्वेप्यत्यन्ताविद्यमानकत्वाभावात्कर्मत्वाभावःसिद्धइतिवाच्यम्। तत्रात्यन्ताविद्यमानकर्म काणामेवग्रहणेमानाभावस्यान्यत्रनिरूपितत्वादितिभावः ॥

फलान्तरमाह। णाविति। दीव्यतेर्हेर्देवदत्तेनेति भावे लकारः। भावः फलमित्यपि बोध्यम्। करणत्वाच्च तृतीयेति समावेशफलम्। द्वितीयेति। अक्षान्दीव्यतीत्यत्राक्षपदस्याक्षजेयधनेलक्षण न च तदा करणत्वमक्षैरित्यर्थे स्यादिति न भवतीति द्रष्टव्यम्। एकैव ह्यत्र शक्तिरिति। दिवधात्वर्थनिरूपितसाधकतमत्वशक्तिरित्यर्थः। सहयुक्ते। अत्राप्राधान्यं नाम शाब्दगुणाद्यन्वयित्वाभाव इत्या हा। पितुरत्रेति। आर्थ इति। पुत्रस्य हि स्वयान्यितया आगत इति बोधे साहित्यस्य पुत्रेणागमनसंबन्ध एव संभवति न पश्चात्स्याविमानसन्तं संबन्धनेनेति भावः। शाब्दत्वं चात्र स्वानिबन्धनमेवं चैषु शाब्दत्वरूपविशेषणाभावकृतो विशिष्टाभावः। सहैव दशभिः पुत्रैर्भारं वहतीत्यादौ विद्यमानतायाविसहशब्दप्रयोगे क्रियायान्वयित्वरूपविशेष्याभावकृतो विशिष्टाभावो दशानां पुत्राणां विद्यमानत्वेपीत्यर्थ इत्यन्यत्र विस्तरः। अन्तरङ्गत्वादिति। प्राचीनैरन्तरङ्गत्वमूलकतयोक्तादुपपदविभक्तेरितिन्यायादित्यर्थः॥ वस्तुतस्तु तद्वाचनिकमेवेत्यन्तरङ्गत्वं तन्न्यायोपलक्षणं बोध्यम्। प्रथम

मनुप्राप्ता कर्मसंज्ञा बाध्या स्यादिति निर्बाध्यात्मा तदा करणबाधो पाठ्यपेक्ष्यम्। स्यादेतत्। करणसंज्ञाया अवकाशः देवना अक्षाः करणे ल्युट्। कर्मसंज्ञायास्तु दीव्यन्ते अक्षाः कर्मणि लट्। अक्षैर्दीव्यतीत्यत्र तु संज्ञाद्वयप्रयुक्तकार्यद्वयप्रसङ्गे परत्वात् तृतीयैव स्यान्न तु द्वितीयेति चेन्न। अत्राहुः। कार्यकालपक्षे कर्मणि द्वितीयेत्यत्र परस्योपस्थानं तस्यानवकाशत्वाद् द्वितीयेति। ननु दीव्यन्ते अक्षा इत्यत्र कर्मण्यभिहितेपि करणस्यानभिधानात् तृतीया स्यात्। तथा देवना अक्षा इत्यत्र ल्युटा करणस्याभिधानेपि कर्मणोनभिधानात् द्वितीया स्यात्। मैवम्। एकैव ह्यत्र शक्तिः संज्ञाद्वययोगिनी तथा चोभयत्राप्यभिधानमेव न त्वनभिहितत्वम्। सहयुक्ते। पुत्रेणेति। पितुरत्र क्रियासंबन्धः शाब्दः। पुत्रस्य तु आर्थ इति तस्याप्राधान्यम्। अप्रधानग्रहणं शक्यमकर्तुम्। न चैवं पितुरपि तृतीयापत्तिः। तत्र प्रातिपदिकार्थमात्रे अन्तरङ्गत्वात् प्रथमोत्पत्तेः॥ ॐ यास्यकारकविभक्तित्वमनभिहितपादे भाष्ये बहुशः स्पष्टमन्यत्र प्रपञ्चितं च। अन्तरङ्गत्वं तु न युक्तम्। षष्ठ्यपवादत्वमिव प्रथमापवादत्वस्याप्युपपदविभक्तीनामापत्तेः। अनन्तरस्येति न्यायेन न प्रथमापवादत्वस्यैवापत्तेः। उपपदविभक्तेरिति न्यायेन वाचनिके सर्वतो बलवत्त्वे कारकविभक्तेर्बोधिते यथान्क्वे षष्ठ्यपवादत्वमुपपदविभक्तीनामवर्तिष्यते। किं च उपपदविभक्तेः पदान्तरनिमित्तकत्ववत् कारकविभक्तेः क्रियानिमित्तकत्वात् तत्त्वं दुरुपपादम्। न च संबन्धस्य क्रियाकारकभावमूलकत्वेन तत्प्रयुक्तं कार्यं बहिरङ्गं पुत्रे पितृतीयानापत्तेरेव क्रियाकर्तृत्वमूलकत्वात् इत्यस्याक्रियायाः प्राधान्यात्तन्निमित्तिका विभक्तिः प्रबलेत्यपि न युक्तम्। अप्रधानक्रियायामपि कारकान्वयदर्शनात् ॥

अपुनर्ग्रहणायेति। इदं च स्वत्वनिवृत्तेर्वाच्यतास्वीकारफलप्रदर्शनं न तु धात्वर्थनिविष्टमिति बोध्यम्। भाक्त इति। अधीनीकरणरूपेऽर्थे इत्यर्थः। न शूद्राय मतिं दद्यादित्यादि सूत्रमतिं तज्जनकं शास्त्रं नोपदिशेदित्यर्थः। आग्रह इति। अत एव क्रियाग्रहणं कर्तव्यमिति वार्त्तिकं भाष्ये प्रत्याख्यातम्। भाष्यान्तरमप्याह। खण्डिकेत्यादि। चपेटां ददातीत्यत्र संयोगोऽर्थः। शेषित्वमुद्देश्यत्वम्। शेषत्वमप्रधानत्वरूपम्। शेषित्वं नास्तीति। यद्यपि ग्रामसंस्कारार्थमजां नयनेन तदपि ग्रामस्यास्ति तथाप्यजाया इव परत्वात्कर्तुरीप्सिततमं कर्मेति कर्मसंज्ञया बाधान्न दोष इति तत्त्वम्। अस्मात्कर्मणीति। क्र्यादेश्चुरादेश्चेत्यर्थः। प्रीङ् प्रीताविति दैवादिकादित्यपि कश्चित्। हरिं प्रीणयतीति। प्रीयमाण इति निर्देशेन प्रीधात्वर्थकर्मणः संप्रदानत्वाभावज्ञापनादत्र

अन्वर्थसंज्ञाबलेनाह। दानस्येति। तेन अजां नयति ग्रामं हस्तं निदधाति दृषदित्यादौ नातिप्रसङ्ग इति भावः। दानं चापुनर्ग्रहणाय स्वस्वत्वनिवृत्तिपूर्वकं परस्वत्वापादनम्। अत एव रजकस्य वस्त्रं ददातीत्यादौ न भवति। तत्र हि ददातिर्भाक्तः। एतच्च वृत्तिमतम्। भाष्यमते तु नान्वर्थतायामाग्रहः। खण्डिकोपाध्यायस्तस्मै चपेटां ददातीति प्रयोगात्। रजकस्य ददातीति तु शेषत्वविवक्षायां बोध्यम्। नन्वेवमजां नयति ग्राममित्यत्रापि प्रसङ्गः। यमभिप्रैतीत्युक्त्या हि यमिति निर्दिष्टस्य शेषित्वं कर्मणश्च शेषत्वं लभ्यते। ग्रामस्य अजां प्रति शेषित्वं नास्ति। दानीय इति। बाहुलकात् संप्रदानेऽनीयर्। रुच्यर्थानां प्रीयमाणः। प्रीञ् तर्पणे। अस्मात्कर्मणि लट्। हरये रोचते इति। हरिं प्रीणयतीत्यर्थः। कर्मसंज्ञायां प्राप्तायां वचनम्। प्रीयमाणः किम्। देवदत्ताय रोचते मोदकः पथि। अत्र पथो मा भूत्। श्लाघह्नुङ्। श्लाघा स्तुतिः। कृष्णाय श्लाघते कृष्णं स्तौतीत्यर्थः। अन्ये त्वाहुः। कृष्णायात्मानं परं वा श्लाघ्यं कथयतीत्यर्थ इति ॥ ७७ न संप्रदानत्वमिति भावः। अत्र पथ इति। न च तद्भावे सूत्रस्य शेषत्वविवक्षायां चारितार्थ्येन परत्वात्षष्ठ्या बाधसिद्धिरिति वाच्यम्। देवदत्तं रोचत इत्यस्याप्यापत्तेः। कृष्णं स्तौतीति। स्तुत्या परस्मै कृष्णं कथयतीत्यर्थः। ज्ञीप्स्यमानपदेन प्रथमोपस्थितत्वाण्णिच्प्रकृत्यर्थकर्मैव ग्राह्यम्। तस्यापि ज्ञापनविषयेच्छाविषयत्वाच्छानुपपत्तिरिति भावः। ह्नुङादेरपि स्तुत्यादिना बोधनमर्थ इति बोध्यम्। अन्ये त्विति। प्राधान्यात् ज्ञीप्स्यमानपदेनान्यार्थकर्मण एव ग्रहणमिति तदाशयः। तदेवाह। कृष्णायेति ॥

कारकशेषत्वादिति। कर्मणायमभिप्रैतीति संप्रदानत्वाविवक्षया शेषत्वादित्यर्थः। सपत्नीभ्य इति। तत्र ह्नुवाने त्यन्तमार्थिकार्थकथनम्। स्वाभिप्रायकृत्स्नं बोधयतीत्यर्थः। एवं शपते
इत्यपि व्याख्येयम्। सिद्धमिति। स्पृहणीये कर्मण्यनीयरिति भावः। यदात्विति। कर्मणः शेषत्वे विवक्षेत्यर्थः। इति स्थितमिति। शेषत्वविवक्षायां चारितार्थ्येन कर्मसञ्ज्ञाबाधकत्वायो
गोत्रारुचिः। संप्रदाने इति। बाहुलकादिति भावः। व्याख्येयमिति। षष्ठ्यपवादत्वाच्छेषत्वविवक्षा कर्तुमशक्येत्यभिमानः। अमर्ष इति। वाक्चक्षुरादिविकारानुमेयः प्ररूढकोप
तत्राद्ये पक्षे कर्मत्वे प्राप्ते द्वितीयमितु कारकशेषत्वात् षष्ठ्यां प्राप्तायां वचनम्। ह्नुत इति। सपत्नीभ्यः कृत्स्नं ह्नुवानात्मे वार्थं कृत्स्नं बोधयतीत्यर्थः। यस्य कस्यचित् ह्नु
त इति वा। तिष्ठत इति। स्थित्यस्वाभिप्रायं बोधयतीत्यर्थः। प्रकाशनस्थेयाख्ययोरिति तद्धाधारे कर्मणः। षष्ठ्यां प्राप्तायां वचनम्। स्पृहेरीप्सितः। परत्वादिति। ते
न परस्परेण स्पृहणीययशोभिः स्पृहणीयगुणैर्महात्मभिरित्यादि सिद्धम्। यदा तु शेषत्वविवक्षा तदा षष्ठी। तेन कुमार्या इव कान्तस्य त्रस्यन्ति स्पृहयन्ति चेति सिद्धम्।
एतच्च सर्वं हरदत्तादिरीत्योक्तम्। वाक्यपदीयहेलाराजग्रन्थयोस्तु स्पृहयतियोगे कर्मसञ्ज्ञायाः शेषषष्ठ्याश्च बाधिकेयं संप्रदानसञ्ज्ञेति स्थितम्। तन्मते स्पृहणी
यमित्यत्र दानीय इतिवत् संप्रदाने कृत्यः। कुमार्या इवेत्यत्र तु विभक्तिविपरिणामेन कान्ताय स्पृहयन्तीति व्याख्येयम्। क्रुधद्रुह। क्रुध कोपे द्रुह द्रोहे। ईर्ष्य ईर्ष्यायाम्। असू
येति कण्ड्वादियगन्तः। एषामर्थ इवार्थो येषां धातूनामित्यर्थः। तत्र क्रोधोऽमर्षः। द्रोहोऽपकारः। ईर्ष्या असहनम्। असूया तु गुणेषु दोषारोपः। क्रुधद्रुहोरकर्मकत्वात्तद्योगे षष्ठी
प्राप्ता अन्ययोः सकर्मकत्वाद् द्वितीया प्राप्ता। राधीक्ष्योः। कारकमिति। कर्मकारकमिति तु प्राचः प्रमादः। एकसञ्ज्ञाधिकारात्। न च प्राथमिकप्राप्तिमात्राभिप्रायेण कर्मत्व
व्यपदेशः ॥ इत्यर्थः। अपकार इति। अपकारविषयेच्छेत्यर्थः। असहनम्। उत्कर्षविरोधिधर्मारोपानुकूलो व्यापारः। गुणेषु। गुणविषये। दोषारोपः। दोषत्वारो
पानुकूलो व्यापारः। अकर्मकत्वादिति। क्रोधजन्यस्य फलस्य देवदत्तादौ सत्त्वेपि तस्य धात्वावाच्यत्वादिति भावः। द्वितीयेति। तस्य योजिका कर्मसञ्ज्ञेत्यर्थः। प्राथमिकेति। राधी
क्ष्योः प्रश्नविषयपर्यालोचनमर्थस्तत्र प्रश्नविषयरूपफलाश्रयत्वात्कर्मत्वप्राप्तिरिति भावः ॥

इत्यर्थाभ्युपगमेनेति। तस्य प्रधानीभूतधात्वर्थाप्रयोज्यत्वेन तदप्राप्तिरिति भावः। कर्मत्वेन प्राप्ते इति। शंसितुः शंसनविषयहर्षानुकूलव्यापारलक्षणं प्रोत्साहनं तयोरर्थः शंसितुः प्रोत्साहने कर्मत्वयान्वयः होतुश्च शंसितर्यभेदान्वयः। एवं च कर्मसामानाधिकरण्यात्कर्मत्वप्राप्तिरिति भावः। धनादीति। आदिना दुर्भिक्षेऽन्नम्। अनेकधेति। साक्षात्परम्परया चेत्यर्थः। ब्राह्मणाय दधीत्यादौ तद्भोजनोपकारकत्वेन तदुपकारकत्वं बोध्यम्। ज्ञानात्मनेति। आत्मशब्दस्तद्वृत्तिधर्मपरो ज्ञानत्वेन परिणमत इत्यर्थः। एवं च तस्य विकृतिवाचकत्वाभावान्न च

कृत्स्नसंबन्धिशुभाशुभं पर्यालोचनप्रतीत्यर्थाभ्युपगमेन षष्ठ्या एव प्राप्ते। अनुप्रतीति। गृण इति श्नान्तस्यानुकरणात्सप्तमी। होत्र इति। कर्मत्वे प्राप्ते। परिक्रयणे। क्रयो धनादर्पणेनात्यन्तिकस्वीकरणम्। तस्य समीपं परिशब्द आचष्टे तच्च नियतकालम्। ततो न्यूनत्वादिति व्याचष्टे। नियतेति। भृत्या वेतनादिना। तादर्थ्य इति। तस्मै कार्याय इदं तदर्थं कारणम्। तस्य भावस्तादर्थ्यम्। ष्यञा उपकारकत्वरूपः संबन्धोऽभिधीयते। कृत्तद्धितसमासेभ्यः संबन्धाभिधानं भावप्रत्ययेनेति सिद्धान्तात्। उपकारकत्वं चानेकधा। तेन ब्राह्मणाय दधीत्यादावपि भवति। भक्तिर्ज्ञानायेति। ज्ञानात्मना परिणमत इत्यर्थः। प्रकृतिविकृत्योर्भेदविवक्षायां विकृतिवाचकाच्चतुर्थी। अभेदविवक्षायां तु परत्वात्प्रथमैव। भक्तिर्ज्ञानं कल्पत इति। यदा तु जनिकर्तुरिति भक्तेरपादानत्वं विवक्ष्यते तदा ज्ञानस्याभिहितकर्तृत्वात्प्रथमैव भक्तेर्ज्ञानं कल्पते। क्लृपीत्यर्थग्रहणमित्याशयेनाह। संपद्यत इत्यादि। उत्पातेनेति। प्राणिनां शुभाशुभसूचको भूतविकार उत्पातः। तेन ज्ञापिते इत्यर्थे वर्तमाना चतुर्थीत्यर्थः। वातायेति। वातस्य ज्ञापिकेत्यर्थः। हितेति। समासविधानाज्ज्ञापकादिति भावः। एवं सुखयोगेऽपि बोध्यम् ॥ चतुर्थी किंतु प्रकृत्यादित्वात्तृतीया ज्ञानत्वविशिष्टरूपान्तरप्राप्तिर्भक्तिकर्तृकेति यावत्। रूपान्तरप्राप्तिर्हि परिणाम इति भावः। प्रथमैवेति। भक्त्यपादानको ज्ञानरूपः परिणाम इति तदा बोधः। समासविधानादिति। चतुर्थी तदर्थेति हितसुखयोगे समासविधानाज्ज्ञापकादित्यर्थः। तदाह। एवमिति। वृत्तावाशीरर्थाप्रतीतेर्न चतुर्थी चाशिषीति चतुर्थ्या हितयोगे निर्वाहः। आशीरर्थयोगे आशीर्विषयस्य विधेयत्वं तदाश्रयस्योद्देश्यत्वं च प्रतीयते। न च वृत्तौ तथान्वयो युज्यत इति हरदत्त इति दिक् ॥

म॰ श॰ नहिफलार्थेति। यद्यपिब्राह्मणायद्धीत्यादौब्राह्मणीयभोजनोपकारकमपिदधितद्वाराब्राह्मणोपकारकंतथापिफलेनाहरणद्वारानकोपियानक्रियोपकारइत्याशयः। तु
१२९ मुनेवेति। भाववचनघञादीनांतुमुनपवादतयातत्समानार्थत्वात्। एवंचप्रथमापवादोमिति भावः। द्विषांविघातायविधातुमिच्छनइत्यत्रविघातायेतितादर्थ्येचतुर्थीविधा
तुमुन्ण्वुलौक्रियायामितिसूत्रमहिम्नाक्रियार्थकमुपपदंक्रियावाच्येवफलतीत्याशयेनाह। क्रियेति। क्रियाफलकम्। क्रियावाचकप्रकृतिकमित्यर्थः।
तुमुनिति। ण्वुलोप्युपलक्षणम्। फलेभ्योयातीत्यस्यफलान्याहारकइत्यपिविवरणेबाधकाभावात्। कर्मणीति। तथाचद्वितीयापवादोयमितिभावः। यत्तुप्राचा
व्याख्यातमप्रयुज्यमानस्यैवकर्मणियथास्यात् प्रयुज्यमानस्यमाभूदितिनियमार्थंसूत्रमिति। तन्न। अप्राप्तस्यनियमायोगात्। नचतादर्थ्यइतिप्राप्तिः। नहि
फलार्थायानक्रियाकिंत्वाहरणार्था। आहरणंतुफलकर्मकमित्यन्वदेतत्। तुमुनोभावएवविधानात्तदर्थस्यभाववचनत्वेसिद्धेपुनर्भाववचनग्रहणंसूत्रवि
शेषपरिग्रहार्थमित्याह। इतिसूत्रेणेतिनचतादर्थ्यइत्येवगतार्थताशङ्क्या। भाववचनेनैवतुमुने वनादर्थ्यस्यद्योतितयाप्रातिपदिकार्थमात्रेप्रथमाप्रसङ्गात्।
यत्तुप्राचोक्तम्। भाववचनादेवयथास्यात् पाचकोव्रजतीतिण्वुलन्तान्माभूदितिनियमार्थमिदंसूत्रमिति। तन्न। ण्वुलन्तेकर्तुः प्राधान्यात्कर्तारंप्रतिच
तादर्थ्याभावात्। गुणीभूतपाकस्यचविभक्त्यर्थानन्वयात्। ननुषष्ठ्यपीतिकुतः। षष्ठ्येवास्तु। अलंशब्दस्तुपर्याप्तीतरार्थकएवगृह्यतामित्याशङ्क्याह। त
स्मैप्रभवतीति। नत्वांतृणमित्यादि। ननुतृणादिवत् युष्मत्शब्दादपिपक्षेचतुर्थ्याभाव्यम्। मैवम्। अनादरइतिहिकर्मणोविशेषणम्। अनादरद्योत
कंयत्कर्मेति। तादृशंतृणमेवनतुयुष्मदर्थः॥ ॥इतिचतुर्थी ॥
तार्थंयद्विधानन्तदर्थेच्छावतइत्यर्थः। एतेनात्रतुमुनातादर्थ्यस्योक्तत्वात्कथंचतुर्थीत्यपास्तम्। उत्तरक्रिययोस्तद्योतनेपिपूर्वक्रिययोस्तदद्योतनात्। कर्त्तुःप्राधान्यादिति। ए राम:
वंचतादर्थ्यचतुर्थ्यास्तत्राप्राप्तेर्नियमासंभवइतिभावः। विभक्त्यर्थेति। तदर्थ्यचतुर्थ्यर्थेइत्यर्थः॥ इतिचतुर्थी ॥ १२९

प्रकृतेति। कर्तर्येति व्याप्तिवारणाय सत्यन्तम्। अन्यथा कर्तृसञ्ज्ञाया अयमपवादः स्यात्। कर्तृसञ्ज्ञा तु पचत्यादिप्रयोगे चरितार्था। कर्मणि ग्रामे इति व्याप्तिवारणाय विशेष्यम्। अ
वधित्वं न विरुध्यत इति। तदुपात्तक्रियानाश्रयत्वादिति भावः। न विरुध्यते। तदनाश्रयत्वादिति भावः। अतदावेशादिति। तद्धातूपात्तगमनावेशादित्यर्थः। तदावेशादिति
ध्रुवमिति। ध्रु गतिस्थैर्ययोः। अस्मात् कुटादेः पचाद्यच्। ध्रुवस्थैर्ये इति पाठे तु इगुपधलक्षणः कः। ध्रुवं स्थिरम्। प्रकृतधातूपात्तगत्यनाविष्टत्वे सति तज्ज
न्यविभागाश्रयः। तच्चार्थादवधेरेवेत्याह। अवधिभूतमिति। धावत इति। इह क्रियाविशिष्टस्याप्यश्वस्य प्रकृतधातूपात्तक्रियां प्रत्यवधित्वं न विरुध्यते। पर
स्परस्मान्मेषावपसरतः इत्यत्र तु सधातुना गतिद्वयस्याप्युपादानात् एकनिष्ठां गतिं प्रतीतरस्यापादानत्वं न विरुध्यते। उक्तं च। अपाये यदुदासीनं चलं वा यदि
वाचलम्। ध्रुवमेवातदावेशात्तदपादानमुच्यते। पततो ध्रुव एवाश्वो यस्मादश्वात् पतत्यसौ। तस्याप्यश्वस्य पतने कुड्यादि ध्रुवमिष्यते। मेषान्तरक्रियापेक्षमवधि
त्वं पृथक् पृथक्। मेषयोः स्वक्रियापेक्षं कर्तृत्वं च पृथक् पृथगिति। पर्वतात् पततोऽश्वात् पततीत्यत्र तु पर्वतावधिकपतनाश्रयोऽश्वस्तदवधिकं देवदत्तादिनि
ष्ठपतनमर्थः। पञ्चम्यर्थश्चावधिः अभेदेन संसर्गेण प्रकृत्यर्थो विशेषणम्। प्रत्ययार्थस्तु क्रियायां स च धर्मी न तु धर्ममात्रम्। विभक्त्यर्थे विहितस्य बहुव्रीहेर्धर्मिपरताया
निर्विवादत्वात्। उद्धृतौदना स्थालीत्यत्र हि ओदनकर्मकोद्धरणावधिभूतेत्यर्थः। जुगुप्सेति। भाष्यकारास्तु जुगुप्सादीनां तत्पूर्वकनिवृत्तिलक्षणतामाश्रित्य सूत्रेण त
त्सिद्धिमाहुः। एवमुत्तरसूत्रेऽपि। भीत्रा। कथं तर्हि कस्य बिभ्यति देवाश्च जातरोषस्य संयुगे इति रामायणम्। अत्राहुः। कस्य संयुगे इति। न चैवं संयुगस्यैवापादानसञ्ज्ञा
पत्तिः। परया अधिकरणसञ्ज्ञया बाधात् ॥ ७७ पाठे तन्मात्रावेशात्। विभागमात्रावेशादित्यर्थः। विशेषणमिति। वस्तुतोऽवध्यवधिमद्भावरूपविभक्त्यर्थसंबन्धेना
वधिक्रिययोरन्वय इत्यन्यत्र निरूपितम्। सा च क्रिया विभागरूपा। कालिकसंबन्धेन फलाश्रयेति प्रसङ्गवारणाय फलतावच्छेदकसंबन्धस्य कर्मलक्षणे निवेशान्न तदा
श्रयस्य कर्मत्वं विभागजन्यसंयोगस्य धात्वर्थत्वादित्यन्यत्र विस्तरः। निवृत्तीति। विश्लेषे इत्यर्थः ॥

इष्टापत्तिरिति। शेषत्वविवक्षयाकर्तरिति षष्ठीत्यन्ये। संबन्धिनीति। तज्जन्येत्यर्थः। अर्थासंगतिमिति। नहि धातुं प्रति कर्तृत्वं किंतु तद्वाच्यक्रियां प्रत्येवेत्यर्थः। समासानुपपत्तिस्तु नका भ्यामिति निषेधात्। उपधालोपप्रसङ्ग इत्युगमेरिडित्यादाविव जनिघसिभ्यामित्यादाविव चानुकार्यस्वरूपभङ्गाभिमानकृत इत्यन्ये। सौत्रत्वादिति परे। भाष्यकैयटेति। इदमेव युक्तम्। प्रकृतिशब्दस्य तत्रैव प्रसिद्धेः। प्रत्याख्यानपरभाष्यसंमतत्वाच्च। किंच वृत्तिमते कारक इत्यधिकृतस्य कारणसामान्यवाचिनो निर्धारणसप्तम्यन्तस्यान्वयः संभवी।

अधिकरणत्वाविवक्षायां त्वविशेषापत्तिः। अध्ययनादिति। अध्ययनसंबन्धिनी ग्लानिरित्यर्थः। जनिकर्तुः। जननं जनिः उत्पत्तिः। इञजादिभ्य इति जनेर्भावे इञ्। जनिघसि भ्यामिण् इत्युणादिसूत्रे णत्वं वा। जनिवध्योश्चेति वृद्धिप्रतिषेधः। तस्याः कर्तेति शेषषष्ठ्या समासः। तथा च धात्वन्तरयोगेपि भवति। अङ्गादङ्गात्संभवतीति यथा। तदे तदाह। जायमानस्येति। एतेन [illegible]मित्तुनिर्देश इति इकानिर्देशो यमित्याश्रित्यागमहनेत्युपधालोपप्रसङ्गमर्थासंगतिं समासानुपपत्तिं चोद्भावयन्तो मीमांसावा र्त्तिककाराः समाहिता इति भावः। इह सूत्रे प्रकृतिग्रहणं हेतुमात्रपरमिति वृत्तिकृन्मतम्। पुत्रात्प्रमोदो जायत इत्युदाहरणात्। उपादानमात्रपरमिति तु भाष्यकैयटम तम्। तदुभयसाधारणमुदाहरणमाह। ब्रह्मण इति। ब्रह्मा हिरण्यगर्भः स च हेतुरेव न तूपादानम्। किंच ब्रह्म मायाद्यवलम्। तद्धि सर्वकार्योपादानमिति वेदान्त सिद्धान्तः। भुवः। भवनं भूरिति संपदादित्वाद्भावे क्विप्। पूर्वसूत्रे समासनिर्दिष्टमपि कर्तृग्रहणमनुवर्तते स्वरितत्वादित्याह। भूकर्तुरिति। प्रभवत्यस्मादिति प्रभवः। ल्यब्लोप इति। ल्यबन्तस्य गम्यमानार्थकत्वादप्रयोग इत्यर्थः ॥ ७ नहि कारकाणां मध्ये उपादानकारणमिति वा कारणानां मध्ये कारणमिति संभवति। भावे क्विबिति व्याख्यानं ध्वनिसाहचर्याच्चेति भावः। प्रभवतीति। प्रभवनमत्र प्रथमप्रकाशः। सूत्रे भवनमध्ये तस्य च। अप्रयोग इति। तदन्तशब्दाज्ञानेपि तदर्थज्ञाने इत्यर्थः। यथा प्रविश पिण्डीमि त्यादाविभ्यण इति सूत्रभाष्योक्तरीत्या वाक्यैकदेशप्रयोगस्तस्यैव च पदस्य वृत्त्या संपूर्णवाक्यार्थबोधकता तथा प्रकृतेपीति बोध्यम्। एवं फलेभ्यो याती त्यादावपि ॥

प्रत्ययार्थस्य। संबन्धस्य। प्रकृत्यर्थं राजार्थम्। प्राधान्यादिति। संसर्गविशेष्योभयनिरूपितत्वस्य प्रकारतायां सत्त्वादिति भावः। तदर्थस्य। प्रकृत्यर्थस्य। विशेषणम्। षष्ठ्यर्थसंबन्धेनेति भावः॥
यत्तु दर्थशब्देन प्रत्ययार्थः संबन्ध इति। तन्न। तस्य संसर्गविधयैव भानस्य भाष्यादिसंमतत्वात्। उक्तन्यायेनेति। प्रकृत्यर्थस्यैव प्रत्ययार्थं प्रति प्राधान्यापत्तेरित्यर्थः। राजसंबन्धी पुरुष इत्येव बो-
धादिति भावः। शेषत्वाभावमुपपादयति। पुरुषशब्द इति। इदमपि। कर्मादीनां संबन्धसामान्येनान्वयविवक्षणमपि। नापूर्वमिति। षष्ठी शेषे इति सूत्रेण सिद्धत्वादिति भावः। अष्टसूत्री-
गतः पुरुष इति। प्रत्ययार्थस्य प्रकृत्यर्थं प्रति प्राधान्यात् प्रधानादेव षष्ठी तदर्थस्य पुरुषे विशेषणम्। प्रधानात्तु न षष्ठी। उक्तन्यायविरोधात्। शेषत्वाभावाच्च। पुरुषशब्दो हि य-
थायथं प्रातिपदिकार्थमात्रवृत्तिः कारकार्थको वा। यदा तु नैवं तदा पुरुषशब्दादपि षष्ठी भवत्येव। यत्तु प्रधाने शेष इति तन्न। प्रातिपदिकार्थमात्रे प्रयुक्तो घट इत्यादौ विशेषणे ष-
ष्ठीप्रसङ्गात्। न च प्रथमया बाधः। तस्याः प्राधान्ये चरितार्थत्वात्। कर्मादीनामपीति। यथा विशेषाविवक्षायां रूपवानिति न हि विवक्षायां तु नीलः पीत इत्यादि प्रयुज्यते तथेद-
मपि न्यायसिद्धमिति भावः। सतामिति। एवं च नपुंसके भावे क्तस्य योगे शेषत्वविवक्षायां वेति तृतीयाकरणे षष्ठी वेति च प्राचां ग्रन्थे पठ्यमानं नापूर्ववचनमिति भावः। स-
र्पिष इति। ज्ञोऽविदर्थस्य करणे [illegible] कृञः प्रतियत्ने। रुजार्थानां भाववचनानामज्वरेः। आशिषि नाथः। जासिनिप्रहणनाटक्राथपिषां हिंसायाम्।
व्यवहृपणोः समर्थयोः। कृत्वोऽर्थप्रयोगे कालेऽधिकरणे। इत्यष्टसूत्री तु नेह व्याख्याता। तस्याः समासनिवृत्तिफलकत्वात्। तथा हि। तत्र शेष इत्यनुवर्तते। शेषत्वेन
विवक्षिते च करणादौ षष्ठी सिद्धैव। तदयमर्थः। इह षष्ठ्येव न तु तल्लुक्। तथा च लुक्प्रयोजकीभूतः समास एव नेति। तथा च वार्त्तिकम्। प्रतिपदविधाना
चेत्यादि ॥ ५ ति। कृत्वोऽर्थेति सूत्रं वृत्तिरीत्या धृतम्। वस्तुतस्तत्र शेषग्रहणं नानुवर्तते मध्ये विच्छेदादित्यन्ये। तेषां सप्तसूत्रीति बोध्यम्। अनुवर्तत इ-
ति। अत एवाधीगर्थेति सूत्रे शेष इति वर्तत इति भाष्ये उक्तम्। ननु सत्यपि लुगभावे तु समासाभावः कुत इत्यत आह। तथा चेति। प्रतिपदविधाना षष्ठी न समस्यत इति वार्त्ति-
कबलात् पाकल्पमेति भावः। अत्र तु नो निषेधवार्त्तिकेऽनुवाद्यमानि सूत्राणीति बोध्यम् ॥

स्मरणमिति। करणे ल्युट्। कृद्योगषष्ठ्येति। अत एव समासनिषेधप्रकरणे एतानि नोक्तानि तथा सति कर्मत्वार्थकषष्ठ्यामपि समासनिषेधापत्तेः। दिवस्तदर्थस्येत्यत्र कर्मणीत्यस्य कर्तव्यतापत्तेश्च। ननु शेषत्वाविवक्षायां कृद्योगषष्ठ्या वैकल्पिकसमासाङ्गीकारे धीगर्थेत्यादीनां वैयर्थ्यमेवेत्यत आह। तत्रेति। करणल्युडन्तस्मरणादिशब्दैः कृद्योगषष्ठ्याः समासे नो भावकर्मवचनत्वस्याप्राप्तिरिति भावः। मातुः स्मृतमिति। आदिकर्मणि क्तः कर्तरि चेत्यत्र चशब्दं विनापि अनुदात्तो आदिकर्मबोधवदत्रापि प्र

हरिश्चाह। कारकैव्यपदिष्टैश्च श्रूयमाणक्रियेषु नः। प्रोक्ता प्रतिपदं षष्ठीसमासस्य निवृत्तये इति। तेन शेषत्वविवक्षायां सर्पिषो ज्ञानं मातुः स्मरणमित्यादीन्यसमस्तान्येव साधूनि। हरिस्मरणमित्यादीनि तु शेषत्वाविवक्षायां कृद्योगषष्ठ्या समासे बोध्यानि। तत्र च कारकपूर्वकस्य त्वकृदुत्तरपदप्रकृतिस्वरः। शेषषष्ठ्यां समासे त्वन्तोदात्तत्वं स्यात् तच्चानिष्टम्। तथा च स्वरार्थेयमष्टसूत्रीति परमनिष्कर्षः। किंच मातुः स्मृतमित्यादौ समासाभावोपि फलम्॥ नहि कारकषष्ठी लभ्यते। न लोकेति निषेधात्। आह च। निष्ठायां कर्मविषया षष्ठी च प्रतिषिध्यते। शेषलक्षणया षष्ठ्या समासस्तत्र नेष्यते॥ सिञ्चेस्स्यतेश्च त्यादिबहुग्रन्थेषु इह प्रकरणे उदाहरणं प्रत्युदाहरणं च पश्यति इह अनेन तत्सर्वमुपलक्षणतया नेयमिति हरदत्तादयः। सर्वनाम्नस्तृतीया च॥ इह सर्वनाम्न इति षष्ठी तदाह। सर्वनाम्नः प्रयोगे इति। पञ्चम्यां तु हेतुशब्दात् षष्ठी तृतीये न स्यातामिति भावः। निमित्तपर्यायेति। पर्यायग्रहणस्य फलमुदाहरति। एवमित्यादिना। प्राचा तु किमर्थमित्युदाहृतं तत्र किमः क्लीबत्वं दुर्लभम्

करणाधिकरणतद्भावसम्भवः। एतेनात्र कर्मणि क्ते कर्मण उक्तत्वाद् धीगर्थेत्यस्य विषय एव न। भावे तु क्तो दुर्लभः सकर्मकत्वात्। गत्यर्थकत्वाभावाच्च कर्तरि स दुर्लभ इत्यपास्तम्। कर्मणः शेषत्वेनाविवक्षायामविवक्षितकर्मत्वेनाकर्मकतया भावे क्तस्य सुलभत्वात् षष्ठी चेति। वस्तुतः एव च तत्र समासाभावोपि फलमिति भावः। दुर्लभमिति। अर्थशब्दस्य द्वितीयान्तत्वे तु कमर्थमित्युचितम्। प्रथमान्तत्वेऽर्थशब्दस्य पुंस्त्वान्नपुंसकत्वं दुर्लभमिति भावः।

कथंचिदिति। आद्ये क्लिष्टमन्त्ये लक्षणाभावोऽर्थासङ्गतिश्च। कोऽर्थः किमर्थमिति समासे सामान्येन नपुंसकत्वाश्रयणं चेति भावः। नेनेति। यत्तु सर्वनामसूत्रशेषे भाष्ये भवतः सर्वनामत्वे तृतीयाप्रयोजनं सर्वनाम्नस्तृतीया चेति। तत्तु यथाश्रुतसूत्रमते। अत एव सूत्रोपन्यासः न तु तद्बलादिदं सर्वनामविषयम्। कैयटादिविरोधात् हेतावित्यत्रोपन्यासस्य निर्बीजत्वापत्तेश्चेति बोध्यम्। पञ्चम्यपीति। अत्र सार्वविभक्तिकः षष्ठ्यन्तात्तसिरित्यन्ये। चिन्त्यप्रयोजनमिति। इदमत्रैव सूत्रे भाष्ये स्पष्टम्। समानाधिक

सामान्येन नपुंसकतां समासं चाश्रित्य कथंचिद्व्याख्येयम्। असर्वनाम्न इति। निमित्तकारणहेतुषु सर्वासां प्रायदर्शनमिति वार्तिकं हि वृत्तिकारेण यद्यपीहोक्तं तथापि भाष्यकृता हेतावित्यत्र पठितं तेन सर्वनाम्नः प्रयोगेऽपि प्रवर्तते किंतु प्रायग्रहणात्तत्र तृतीया इष्यत एवेत्यर्थः। वर्द्धमानस्तु प्रथमामपीच्छति। षष्ठ्यतसर्थप्रत्ययेन। पञ्चम्या इति। कथं तर्हि ततः प्रत्या[illegible] ततः पश्चात्संस्यते ध्वंस्यते चेति भाष्यप्रयोगात्सप्तम्याद्यो[illegible]म्यपि। प्रत्ययग्रहणं चिन्त्यप्रयोजनम्। एनपा। कथं तर्हि तत्रागारं धनपतिगृहादुत्तरेणास्मदीयमिति। उत्तरेणेति [illegible]यान्तो रणे नेत्यनेन समानाधिकरणं बोध्यम्। दूरान्तिकार्थैः। अन्यतरस्यां ग्रहणं समुच्चयार्थम्। तेन च विप्रकृष्टापि पञ्चमी समुच्चीयते व्याख्यानात्। न तु षष्ठी द्वितीया तृतीयाः। तदेतदाह। पञ्चमी चेति। दिवस्तदर्थस्य। तच्छब्देन व्यवहृपणौ परामृश्येते तौ च द्यूते क्रयविक्रयव्यवहारे च तुल्यार्थौ पूर्वसूत्रे गृहीतौ इत्याशयेनाह। द्यूतेति। कर्मणीति ॥

[illegible]रणं बोध्यमिति। स्त्र्यधिकारात्परेण वा सरूपविधिर्नेत्यत्र परेणेति तृतीया ततः परेण शास्त्रेण वा सरूपसंबन्धो नेत्यर्थः। ततः परेण नायमनुवर्तत इत्यत्र सार्वविभक्तिकः षष्ठ्यन्तात्तसिरिति बोध्यम्। समुच्चीयत इति। अतः षष्ठीपञ्चम्योरेवात्र विधानमित्यर्थः। न तु षष्ठीति। विधीयन्त इति शेषः। षष्ठी द्वितीया तृतीया अत्र न विधीयन्त इत्यर्थः। तत्राद्योपात्ताः अन्त्ये समुच्चेय इति बोध्यम्। समुदायविधानाभावे तात्पर्यम् ॥

उत्तरसूत्रद्वयेति। अयंभावः। अत्रशेषइत्यस्यसंबन्धेविभाषोपसर्गेइत्यत्रशेषइतिसंबध्यतेउतन। नाद्यः। दिवस्तदर्थस्येत्यनेनैवसमासाभावस्यसिद्धत्वेनसूत्रवैयर्थ्यापत्तेः।
नचपक्षेषष्ठीशेषइत्यस्यप्रवृत्त्यापक्षेसमासप्रवृत्तिःफलम्। नोपसर्गइतिन्यासेनदिवइत्यस्यनिषेधेशेषषष्ठ्यांसमासविकल्पेनरूपद्वयस्यसिद्धतयाविभाषाग्रहणस्यतथापि
वैयर्थ्यात्। नान्त्यः। वेदेपिविभाषोपसर्गइतिसूत्रेणकर्मणिद्वितीयायाःसिद्धत्वात्पाठरूपस्यतत्राभावाच्चद्वितीयाब्राह्मणइत्यस्यवैयर्थ्यापत्तेः। नचतन्निरुपसर्गेद्वितीयार्थमिति
वाच्यम्। कर्मत्वविवक्षायांदिवइत्यस्यप्रवृत्त्याकर्मणिद्वितीयेत्येवसिद्धत्वेनवैयर्थ्यस्यतदवस्थत्वात्। नचद्वितीयाब्राह्मणइतिसूत्रेशेषइत्यनुवर्ततेतेनकर्मत्वाविवक्षायांद्वितीया
र्थमितिवाच्यम्। विच्छिन्नत्वेनानुवर्तनेरयुक्तत्वात्। वक्ष्यमाणोदाहरणेकर्मत्वस्यैवप्रतीतेश्च। कृतिविदंनप्रवर्ततेइतिपुनर्विधानंसमासाभावायेत्यपिनवाच्यम्। अतए
इहशेषइतिनसंबध्यतेउत्तरसूत्रद्वयस्याप्यादिरिति भावः। अतएवेहत्रिसूत्र्यांतिङन्तमुदाहरति। शतस्यदीव्यतीति। प्रेष्यब्रुवोःइष्यतेर्हैवादिकस्यगत्यर्थस्य
लोण्मध्यमपुरुषैकवचनेप्रेष्य। नतुहवयात् ब्रुविरपितथाभूतस्यगृह्यते। अतएवेहशेषग्रहणंनसंबध्यतेतिङन्तेनसहसमासस्याप्रसक्तत्वात्। क
र्तृकर्मणोःकृति। गुणेति। तदुक्तम्। प्रधानेनियताषष्ठीगुणेतूभययाभवेदिति। कृतपूर्वीति। कृतंपूर्वमनेनेतिविग्रहः। पूर्वंकृतवानित्यर्थः। अविवक्षित
कर्मकतयाभावेक्तः ॥ ७७ ॥ वद्वितीयाब्राह्मणइतिसूत्रेभाष्यम्। किमुदाहरणम्। गांप्रतिदीव्यन्ति। पूर्वेणाप्येतत्सिद्धम्। इदन्तर्हिगामस्यतदहःसभायांदीव्ये
युरितिदिवस्तदर्थस्येतिनित्यंषष्ठीप्राप्नोतीतिकैयटश्चेति। त्रिसूत्र्यामिति। नतीयस्यवैदिक्यामुपन्यासोद्रष्टव्यः। अप्रसक्तत्वादिति। कल्याद्यन्तस्यतुनप्रैषेप्रयोगइतिभावः।
उभयथाषष्ठीतदभावे। इदंचाकयिस सूत्रभाष्येस्पष्टम्। अविवक्षितेति। तद्धितवृत्तेःपूर्वमविवक्षितेत्यर्थः। पश्चात्तुकर्मयोगोभवत्येवेतिबोध्यम्। अयंचप्रकारस्तद्धितवि
षयएव। तेनघटंक्रियतेइत्यादिना। नपुंसकेभावेक्तोप्यकर्मकेभ्यएव। भ्रान्तंदेशमित्यादितुगत्यर्थाकर्मकेतिक्तेननिर्बाधम्। तत्सूत्रोपात्तधातुभ्यएवनतत्सभावेविधाना
दित्यन्यत्रविस्तरः ॥

धायै रामोदमुत्तममिति। दधातेर्ददातिदधात्योर्विभाषेति णः। आतो युगिति जयमङ्गलाध यैरिति पाठो लेखकप्रमादात्। उत्तमपुष्पादिसंबन्ध्यामोदं धारयद्भिरित्यर्थाभिमानेन प्रश्नः। यदि त्वामोदं गृहीत्वा मादयतां दुःखस्य पोषकैरित्यर्थो जयमङ्गलाव्याख्यातरीत्या स्वीक्रियते तदा न काप्यनुपपत्तिः। निर्देशादिति। अयं भावः। तत्रैवा तस्य। अर्हमितिसूत्रन्यं कार्यम्। अर्हमित्यत्र योग्यताबलात्कर्मणि षष्ठीति तत्स्वभावद्व्यत्र च तत्स्येति न वाच्यम्। एवं सिद्धे तदिति निर्देशोऽसमस्तद्वितीयान्तत्वबोधनार्थः। एतेन सूत्रे कर्मोपपदादण्प्रत्ययेऽ

सुप्सुपेति समासः पूर्वादिनिः सपूर्वाच्चेति कर्तरिद्निः। तद्विधौ श्राद्धमनेनेतिसूत्रादनेनेत्यनुवृत्तेः। अथ कथं धायै रामोदमुत्तममिति भट्टिः। अत्राहुः। अनित्यमिदम्। तदर्हमिति निर्देशात्। स्त्रीप्रत्यययोरिति। कथं तर्हि सुदितयोरिति सूत्रे सुटा सीयुटो बाधो नेति वृत्तिः। करणत्वविवक्षायां तृतीयेति गृहाण। नलोकाव्ययनिष्ठा। उश्च उकश्च ऊकौ लश्च उकौ चेति विग्रहः। उकारेण कृतो विशेषणात्तदन्तविधिस्तदाह। हरिं दिदृक्षुरलंकरिष्णुर्वेति। शेषे षष्ठी त्विति। एतेनेक्ष्वाकूणां दुरापेऽर्थे त्वदधीना हि सिद्धयः। अपि वागधिपस्य दुर्वचं वचनं [illegible] त्यादि व्याख्यातम्। यद्वा। इक्ष्वाकूणां सिद्धय इत्यन्वयः। ननु इक्ष्वाकूणां दुराप इति। तथा वागधिपस्य विस्मयमित्यन्वयः। न तु वागधिपस्य दुर्वचमिति। तुल्यार्थैः। कथं तर्हि तुलां यदारोहयति दन्तवाससा इति कालिदासः। स्फुटोपमं भूतिसितेन शंभुनेति माघश्च। उच्यते ॥

पपदसमासोऽजन्तस्य कर्मषष्ठ्या वा समास इति निरुक्तम्। अतएव द्वितीयासमर्थादिति व्याख्यायते। राजानमर्हतीति च विगृह्यते। तत्फलं त्वनित्यत्वबोधनमेवेति। भाष्ये तु नैतद् दृश्यत इति बोध्यम्। ऊकौचेति। अव्ययं चेत्यादेरुपलक्षणमिदम्। तदन्तविधिरिति। व्यपदेशिवद्भावेन तस्यापीति बोध्यम्। ननु नपुंसके भावे क्तस्येति भाष्यवार्तिकात्कारकषष्ठीनिषेधविषये शेषत्वविवक्षा न। तत्र त्वाख्यानेत्वनभिधानात् क्तातिरिक्तविषयेऽसा न। अतएव पूरणगुणेति सूत्रे सद्ग्रहणं भाष्ये प्रत्याख्यातमित्यरुचेराह। यद्वेति।

सहयुक्त इति। स्फुटोपममित्यत्रोपमाशब्दो भावसाधनः ॥ इति षष्ठी ॥ प्रातिपदिकार्थमात्र इति। सप्तम्यधिकरणे चेति सूत्रेणाधिकरणे सप्तम्याः सिद्धत्वाच्चकारेणान्तरङ्गः प्रा
तिपदिकार्थमात्रे सप्तमी विधीयते प्रागुक्तश्चातिदेशः। इयं च सप्तमी निरवकाशत्वात्परया अपि प्रथमाया बाधिकेति भावः। इतिर्भूमिर्यस्येति यत्क्तान्तनिरूपितपरा
र्थाभिधायकत्वाश्रय इन्नन्तः शब्द इत्यर्थः। अत्रेनो विषयस्येनः प्रकृतेः क्तान्तस्येति षष्ठी तत्पुरुषोऽपि वक्तुं शक्यः। तादर्थ्य इति। फलस्य हेतुत्वेन विवक्षणात्फलार्थत्वा

सहयुक्तेऽप्रधान इति तृतीया। स्वबालभारस्य तदुत्तमाङ्गजैः समं चमर्यैव तुलाभिलाषिणः — इत्यत्र यथा। उक्तं हि। विनापि तद्योगं तृतीयेति। व्याख्यानादिति। सूत्रे
र्थ शब्दोऽपि दृष्टयङ्गिमित्तम। तथा च हृदय एव। न तु अर्थशब्दे न बहुव्रीहिरिति भावः। इति षष्ठी ॥ आधारस्त्रिधेति। एतच्च संहितायामिति सूत्रभाष्ये स्पष्टमव
तव्य इति। प्रातिपदिकार्थमात्र इति भावः। किंचदूरान्तिके इति सूत्रस्य दूरान्तिकार्थेभ्य इत्यनुवर्तनादधिकरणेऽप्येता बोध्याः। क्तस्येति। इन् इन्नन्तः शब्दो विषयः इतिः भू
मिर्यस्य क्तस्येत्यर्थः। हेतुतृतीयेति। तादर्थ्ये चतुर्थ्यपि बोध्या। सीमेत्यादि। एतच्च दुर्गवाक्यप्रबोधे कुलचन्द्रेणोक्तम्। मेदिनीकारोऽप्याह। सीमा घाटस्थितिक्षे
त्रेषण्डकोशेषु च स्त्रियामिति। अयपुष्कलकोगन्धमृगे स्पषपाकीलयोरिति च। हरदत्तादयस्तु पुष्कलकः शङ्कुः सीम्नि सीमज्ञानार्थं हतो निहतः निखात
इत्याहुः। यस्य च। निर्ज्ञातकाला क्रिया अनिर्ज्ञातकालायाः क्रियायाः कालपरिच्छेदकत्वाल्लक्षणम्। तदाश्रययोः कर्तृकर्मणोर्बोधकादिति सप्तमी। त
त्र ब्राह्मणेष्वधीयमानेषु गत इति कर्तर्युदाहरणम्। कर्मण्याह। गोष्विति ॥

चकारणस्येति भावः। ननु ज्ञाप्यज्ञापकभावरूपलक्ष्यलक्षणभावो भूयोदर्शनाश्रयो दृष्टस्तत्रोदिते आदित्ये तमो नष्टमित्यादावेवस्यान्न तु प्रकृते कदाचिद्धि गोषु दुह्यमाना राम:
स्वसौ गत इत्यत आह। निर्ज्ञातकालेति। कालो देशस्याप्युपलक्षणं तदुदाहरणं सति गुणे द्रव्यत्वमस्तीति। तदाश्रययोरिति। क्रियाश्रययोरित्यर्थः ॥ १४४

विशेषणीभूतयोरिति। शिखाविध्वस्त इत्यादौ शिखायां ध्वंसप्रतियोगित्वविश्रान्तिवद्विशिष्टवेषेणेत्वस्य लक्षकत्वात्। नत्विति। गवां कृष्णेत्यादौ गोत्वाद्याक्रान्ततायथेतिभावः। तदाह। नह्यत्रेति। वार्तिकादिति। साधुभृत्यो राज्ञ इति तु राज्ञो भृत्येनान्वये साधुः प्रत्यासत्त्या च राजविषयमेव साधुत्वं गम्यते न तु शब्देन तत्स्पृश्यते। अर्चायां प्रतियोगिनिषेधार्थत्वेन साधुग्रहणमिति तत्त्वम्। तत्परे इति। रूढत्वादेतदर्थस्यैव ग्रहणम्। तेन प्रकर्षेण सितवद्धित्यर्थेन॥ इति सप्तमी॥ इति श्रीमद्दीक्षितभट्टोजिदीक्षितपौत्रहरिविरचिते

इह अधीयमानानां ब्राह्मणानां दुह्यमानानां वा च प्रतीयमानलक्षकत्वं विशेषणीभूतयोरध्ययनदोहनक्रिययोर्विश्राम्यति। भेद एवेति। न तु शब्दान्तरोपात्तसामान्यरूपाक्रान्ततेति भावः। मथुरा इति। न ह्यत्र गवां कृष्णेत्यादाविव सामान्यविशेषभावः किंतु शब्दोपात्तयोर्धर्मयोर्विरोध एव। निपुणो राज्ञ इति। साधुशब्दप्रयोगे त्वर्चां विनापि सप्तमी भवत्येव। साध्वसाधुप्रयोगे चेति वार्तिकात्। प्रसित इति। तत्परे प्रसितासक्तावित्यमरः। मूले नेति। न सूत्रेण युक्तः काल इत्यणो लुब्विशेष इति सूत्रे ...ण्नीति। ईश्वरशब्दो भावसाधनः। यस्य स्वामिन ईश्वरत्वमुच्यते इत्येकं व्याख्यानम्। यस्येति स्वं निर्दिश्यते यस्य स्वस्य ईश्वर उच्यते इत्यपरम्। एकत्वव्याख्याभेदात्पर्यायेण विभक्तिः सा च विशेषणात्षष्ठीवदिति भावः॥ इति सप्तमी॥ सामर्थ्याश्रित इति। सूत्रे समर्थशब्दो लाक्षणिक इति भावः। कतिपयेति। यद्यपि उदात्तवता गतिमता च तिङा गतेः समासो नित्याधिकारे वार्तिककृतोक्तः। तथापि नासौ नियतः। प्र आनयत्। अभिप्रभरध्यते त्यादौ समासादर्शनात्। अत एव भाष्यकृता सहेति योगविभागेनायं साधितः। यथोत्तरं मुनीनां प्रामाण्यमिति भावः। सवेति। एतदपि योगविभागस्येष्टसिद्ध्यर्थत्वादेव लभ्यते ॥

प्रौढमनोरमाव्याख्याने लघुशब्दरत्ने कारकान्तम्॥ नित्याधिकार इति। उपपदमतिङिति सूत्र इत्यर्थः। नियत इति। अप्रतिबद्धप्रसरो नित्य इत्यर्थः । एवं चाधिकारप्राप्तमपि नित्यपदं तदंशेन संबध्यत इति भावः। योगविभागेनेति। न सा च वैकल्पिकत्वं वक्ष्यति। एतदपीति। छन्दस्येवेत्येतदित्यर्थः। एतदनन्तरं छन्दस्येवेति प्रतीकपाठो लेखकप्रमादात् ॥

 एतेच्चेति। उक्तंक्वान्दसत्वमित्यर्थः।निर्वाह इति। शयितव्यमित्यादेः क्रियावाचकस्यापि नपुंसकत्ववदस्यापि प्रातिपदिकत्वे तस्येन लुकात दश्रवणादित्यर्थः। अन्यथेति। सुबन्त
 मित्यनेनान्यतरस्यैव ग्रहणे विभिगमकाभावादिति भावः। पूर्वशब्दस्येवेति। तस्य कालवाचकत्वेन क्रियायां विशेषणत्वादिति भावः। क्वाचित्क इति। कादाचित्क इत्यपिदोद्य
म। योगविभागसिद्धत्वात्तदनुवादेन विभक्त्यलोपस्यैवानेन विधान मिति भावः। व्यस्तप्रयोग इति। समासे ह्रीवस्य परनिपातः स्यादिति भावः। अलोपश्च प्रत्यासत्त्या समास
एतच्च संप्रदानसञ्ज्ञासूत्रेपदमञ्जर्यांस्पष्टम्। यदि हि लोकेपिस्यात्तर्हि अभिप्रेति इत्यादौ समासात्वाद्यः स्युः। पचतिकल्पमित्यादौ तद्धितान्ता यथा। न चलि
ङ्ग सर्वनामनपुंसकताभ्युपगमेन निर्वाहः। प्रकुरुते इत्यादौ ह्रस्वापत्तेः। प्रकुर्वीरन्नित्यत्र नलोपापत्तेश्च। निर्देशादिति। अन्यथा हि प्रथमानिर्दिष्टत्वाविशेषेपि
उपसर्जनसञ्ज्ञाया अन्वर्थत्वेन पूर्वशब्दस्यैव पूर्वनिपातः स्यादिति भावः। द्वेनेति। अयंमपि समासः पूर्ववत्क्वाचित्क एव। तेन जीमूतस्येवेत्यादौ तैत्तिरीयाणां
यक्पदत्वेन पाठः। उद्धाहुरिव वामनइत्यादौ व्यस्तप्रयोगोपि सङ्गच्छते। गोस्त्रियोः। उपसर्जनं यद्वृति। यत्तु प्राचागोन्तस्त्रीप्रत्ययान्तयोरुपसर्जनयोरित्युक्तम् तन्न।
चित्रगुरित्यादौ गोशब्दस्योपसर्जनत्वेपि तदन्तस्यानमयात्वात् गौरीपतिरित्यादेअतिप्रसङ्गाच्च। कथंतुगोकुलं राजकुमारीपुत्र इति चेत् शृणु। उपसर्जनस्य ससंबन्धि
कतया यस्य प्रातिपदिकस्य ह्रस्वो विधीयते तेनर्थं प्रति उत्तरपदभूतयोर्गोस्त्रियोर्गुणीभावस्तदैव ह्रस्वत्वम्। द्विशयोरिति। द्विशोरिति हलन्तेन विग्रहे प्येतदेवरूपं द्वि
शशब्दस्य परत्वादित्वात् च। वचनसामर्थ्यादिति। विभक्तीत्यनेन नहि येन सुबन्तेन सह समासस्तद्घटकीभूतैव विभक्तिर्गृह्यते संनिधानात्। तदर्थद्योतकस्याधिरि
तिभावः ॥७ वयमविभक्तेरेव तेन समासादुत्पन्नस्याव्ययादितिलुग्भवत्येव। ननु गोपदार्थस्यैव चित्रगोइति समुदायार्थस्य चित्रामि न गोरूपस्यान्यपदार्थोपसर्जनत्व
मेवेत्यह चेद्दह। गौरीपतिरिति। राजकुमारीपुत्रेस्त्रीप्रत्ययान्तस्य प्रातिपदिकत्वलाभाय समस्तस्य पूर्वपदत्वकरणम्। उत्तरपदभूतयोरिति स्वरूपकथनम्। उत्तरप 
दस्यैव तथात्वसंभवात्। टजिति। यतष्टच् अतएव देवरूपमित्यन्वयः। संनिधानादिति उपस्थितत्वादित्यर्थः ॥ 

परिशिष्टे त्विति। अत्रारुचिः स्पष्टैव। द्योतकसमभिव्याहारे षष्ठ्या अप्राप्तेश्च वाचकत्वेपि संनिधानत्यागेनमानमिति। विग्रहायोगादिति। एवं च विग्रहे इति तदुक्तिरसंगतेतिभा
वः। प्रवेशस्यैवेति। एवं च तादृशविग्रहस्वरूपकथनमसंगतमिति भावः। असंस्पर्शादिति। एवं च तत्रार्थकथनत्वस्यैवाभावेन तन्मात्रत्वोक्तिरसंगतेतिभावः। दुर्लभत्वाप

परिशिष्टे तु प्रथमान्तेनापि समासः षष्ठ्यन्तेन वेत्यपि पक्षद्वयं स्थितम्। यत्तु प्राचोक्तं हरौ अधिकृत्येति विग्रहे हरावधीति स्थिते इति। तन्न। नित्यसमासत्वेन विग्रहायो
गात्। यदाहुः। अविग्रहो नित्यसमास इति। नन्वस्वपदविग्रहोपि लौकिक्रियते कुम्भंकरोतीति यथा। अयमपि तथास्तु अधिकृत्येति स्यबन्तस्य समासाप्रविष्टस्य सत्त्वा
दिति चेत्। न। समासार्थलेशमपि अबोधयतस्तस्य विग्रहे प्रवेशस्यैवासंभवात्। यत्तु व्याचख्युः। विग्रह इव विग्रहः। अर्थकथनमात्रम्। तेनाविग्रहत्वान्नित्यसमासत्वमवि
रुद्धम्। अत एव समासप्रकृतिभूतमलौकिकं वाक्यान्तरं दर्शयति। हरौ अधीनि स्थित इतीति। अत्रेदं वक्तव्यम्। विग्रह इवेत्यसंगतम्। अर्थकथनवाक्यस्यैव विग्रह
त्वेन ततो भेदाभावात्। अर्थकथनमात्रमित्यपि न। ल्यबन्तेन समासार्थासंस्पर्शात्। हरौ अधीति अलौकिकमित्युक्तम्। तदपि न। तत्र हरि ङि इत्यस्यैव प्रवेशात्। अन्तर
ङ्गानपीति न्यायात्। अन्यथा समासे हरिशब्दे कारस्य दुर्लभत्वापत्तेश्च। यदपि व्याचख्युः। अलौकिकत्वादेवाधिशब्देनाभिहितेपि सप्तमी अन्यथासानस्यात्। अनभि
हिताधिकारादिति। तदप्यापाततः। अलौकिकत्वं हि नित्यविध्यन्तरप्राप्तिविषयत्वेनापरिनिष्ठितत्वं न त्वेतावन्मात्रेणानुशिष्टायाः सप्तम्यास्तत्र प्रवेशः सूपपादः। अतिप्रस
ङ्गात्। यत्तु तत्रैव ग्रन्थारम्भे तम्। तिङ्कृत्तद्धितसमासैरिति परिगणनादधिनाभिहितेपि सप्तमीति। तन्न। परिगणनस्याकरे प्रत्याख्यातत्वात्। कर्मणि द्वितीयेति सूत्रस्थ
मपि तथैवोक्तत्वात्। क्रमादमुं नारद इत्यबोधि स इत्यादिप्रयोगविरोधाच्च। द्वितीया पञ्चम्योरिति ॥

७ तेरिति। कृतात्वेन कृतैत्वादेशौकारस्यैव लुकापहारे णेतिभा
वः। वैकल्पिके डादिविषये सेट्त्वादावलौकिकत्वधारणाय नित्येति। आकरे। अनभिहितसूत्रे भाष्ये। परिगणनफलस्य भीष्मकटामित्यस्यान्यथासिद्धिरुक्ता ॥

म॰ श॰ रक्षितमन्येइति।अत्राहुर्विबीजं तु मद्व्यार्थकसमयायोगेहिते यावि धानस्य दूरार्थका राच्छब्दयोगे पञ्चमीविधानस्य चारितार्थ्यमिति।प्रागुक्तरीत्या।अधिकरणेत्यत्रोक्तया।अधिकरणश
१४६ क्तीति।कालवाचकत्वादित्यपिबोद्ध्यम्।क्रियापदेनैवेति।कर्तृकर्मद्वारेतिभावः।निषेधोपीति।अत्यन्ताभावार्थकनञ् क्रियान्वयित्वमुत्पत्तेरितिभावः।न्वयुक्तीति।उक्तव्युत्पत्तिवि
रुद्धत्वादिसिद्धमन्येस्पष्टम्।यत्तुवदन्ति चैत्रस्य वनादारादित्यादौ सापेक्षत्वादसमासे चरितार्थत्वाद्विधानसामर्थ्यं नास्तीति।तच्चिन्त्यम्।नित्यसमासस्यन्याय्यत्वे सतिचै
त्रस्येत्यादिविशेषणप्रयोगस्यैवासंभवात्।उक्तंहि भाष्ये।वृत्तस्य विशेषणयोगोनेति।ननुसविशेषणानांवृत्तिर्नेत्यपि भाष्येउक्तमितिचेत्सत्यम्।अनित्यसमासविषयं
तत्।नित्यसमासस्यापितद्विशेषणेप्रवृत्तौमहतः कुम्भस्योपदूरमित्याद्यापद्येत।यत्तुप्राचाक्तस्सत्येत्युक्तम्।यच्च व्याख्यातुरीदृशप्रक्रियावाक्येस्थितेइतितदुभय
मपिप्रागुक्तरीत्याप्रामादिकमेव।संप्रतिनेति।संप्रतीत्ययमिदानीमित्यर्थे।एतर्हिसंप्रतीदानीमधुनासांप्रतंतथेत्यमरः।तच्चाधिकरणशक्तिप्रधानत्वात्क्रियापदेनैवा
न्वयार्हम्।निषेधोपिक्रियायाएव।तदेतदाह।युज्यतइति।असंप्रतीतिसमासे तुयुजिक्रियान्तर्भवतिइत्येतदत्र सेकक्रियामध्या।यत्तुप्राचोक्तम्।असंप्रतीतिसंप्र
त्यभावइत्यर्थः।अनेनोपभोग्यवस्तुनोयोवर्तमानःकालःतस्यैवनिषेधःक्रियतेइतितन्न।अधिकरणस्यनिषेधंप्रतिप्रतियोगित्वेनान्वयस्यसर्वतन्त्रविरुद्धत्वात्।नहिभूतलेघ
टोनास्तीत्यनेनभूतलंनिषिध्यतइतिकश्चिदभ्युपैति नवायुक्तिसहमित्यास्तांतावत्।इतिहरीति।स्वरूपपरेणपञ्चम्यन्तेनहरिशब्देनसहप्रकाशार्थस्येतिशब्दस्यसमासः।प्रतिशब्दस्येति
यत्वाहुः।ग्रामस्यदूरंप्रतीत्यत्रसापेक्षत्वेनसमासाभावेद्वितीयाविधानेसावकाशमितिनत्वागेवदूषितम्।हरदत्तस्त्वाह।अर्थमर्थंप्रतीतिभाष्यकारप्रयोगात्वाक्यमपिसाधु।यद्य
नात्राव्ययीभाववृत्तिकिंतर्हिकर्मप्रवचनीयत्वात्तेनभ्यमवच्छिनानेवोपात्तुद्वितीया नद्योत्येति।सहपूर्वाह्णमिति।साकल्येऽव्ययीभावः।गुणभूतेपीति।यदिसादृश्यइतिनोच्येत
ततोयत्रसादृश्यंप्रधानंतत्रैवस्यात् ॥ ७५ रोधादितिभावः।ततोभूतलाधारकघटाभावप्रतीतिस्त्वार्थीतिबोद्ध्यम्।भाष्यकारेति।सञ्ज्ञातुप्रतिस्थानमित्यादौ पत्वाभावा राम॰
र्थंतिसदाशयः।अत्र।अर्थमर्थंप्रतीतिवाक्ये।प्रतिशब्दस्येत्यादिमूलंतुरक्षितानुसारीतिबोद्ध्यम्।साकल्येइति।पूर्वाह्णमपरित्यज्येत्यर्थइतिभावः ॥ १४६

औत्सर्गिकत्वादिति। उन्मत्तगङ्गमित्यादौ व्यभिचारादिति भावः। नन्वाग्निग्रन्थादग्रेप्यध्ययनमस्तीत्यत आह। इदानीमिति। तदर्थे। तत्प्रतिपादके। अन्तत्वविवक्षायाम्। तस्यापि विवक्षाया
मित्यर्थः। ग्रन्थपर्यन्तमिति। तदन्तमित्यर्थः। अन्तत्वस्य सुतरामिति। प्राधान्येनेत्यर्थः। तस्येति। अन्तत्वस्येत्यर्थः। ननु सहशब्दस्यान्तवाचकत्वाभावे तेन समासो न स्यात्। अग्निग्रन्थपर्यन्तमि
मिति विग्रहप्रदर्शनेन भवतापि तस्य स्वीकारात्। अग्निरन्तोऽपस्येत्यस्य तदुक्तविग्रहसमानार्थत्वादत आह। सहयुक्ते इति। एवं च प्रथमान्तेन समास इत्यसंगतम्। साहित्यं च सहशब्दार्थः। तत्र
अव्ययार्थप्राधान्यस्याव्ययीभावे औत्सर्गिकत्वादिति भावः। अन्त इति। इदानीमेतावानत्र देशोऽध्येतव्य इति यावतः प्रदेशस्य परिग्रहः कृतस्तदपेक्षयास्य समाप्तिरिहान्तो विवक्षि
तः। स चासकलेऽप्यध्ययने भवतीति साकल्यात् पृथगुच्यते। साग्नीति। अग्निशब्दस्तदर्थे ग्रन्थे वर्तते स तृतीयान्तः समस्यते। यद्यप्यग्निना सहेति प्रयोगार्हमेव तथापि साहित्यमा
त्रे तथा। अन्तत्वविवक्षायां तु समासो नित्यः। अत एवाग्निग्रन्थपर्यन्तमित्यस्वपदविग्रहो दर्शितः। यत्तु अग्निरन्तोऽस्येति प्रथमान्तेनाग्नेरन्तत्वमिति षष्ठ्यन्तेन वा विग्रह इति प्र
थमान्तेन षष्ठ्यन्तेन वा समास इति। तन्न। सहशब्दस्यान्तवाचकत्वाभावात् अन्तत्वस्य तु सुतरामलाभात्। तस्याध्ययनेऽनन्वयाच्च। सहयुक्ते तृतीया मान्याप्यत्वाच्च। स तृणमत्ती
त्यत्र साकल्यस्यैव साग्नीत्यत्रान्तत्वस्यापि साहित्यद्योत्यतया तत्र तृतीयान्तेन समासं स्वीकृत्येह तत्परित्यागस्य निर्मूलत्वाच्च। यावच्छ्लोकमिति। यावदित्यव्ययं समस्यते विग्रह
स्तु तद्धिते नेत्यस्वपदसं बोध्यम्। विभाषा। एतंदिति। न्यायसिद्धेऽर्थे लिङ्गदर्शनमिदम्। टिघुभादिसञ्ज्ञानामिव समाससञ्ज्ञाया अपि नित्यप्राप्तत्वाद्वचनं विना विद्धान्तराणामि
व सञ्ज्ञानामपि विकल्पालाभात्। स्यादेतत्। सुप्सुपेत्यपि तर्हि नित्यं स्यात्। न चेष्टापत्तिः अपसिद्धान्तात्। ऽस्मत्सूत्रे विनिगमनाविरहादधिकार्यकसहशब्दस्य ग्रहणमिति भावः। साकल्यस्यैवेति।
यस्तृणानि भक्षयेत्स कृशमप्यपरित्यजेदिति प्रतीतेरिति भावः। एवं च यत्र न सत्त्वत्र तृणभक्षणे तात्पर्यमिति ग्रन्थस्सूचितं साहित्यप्रतीतौ न तात्पर्यं तत्रापि चेत्तृतीया तर्हि यत्र तदपि भासते तत्र
कथं न तृतीयेति तात्पर्यम्। साहित्यद्योत्यतयेति। साहित्यवत् द्योत्यतया बोध्यतयेत्यर्थः। मयूरव्यंसकादित्वात् सुप्सुपेति वा समासः। यथाश्रुते तु ग्रन्थद्वयस्य सहाध्ययनेऽपि साहित्यप्रतीति
र्जायते न त्वन्तत्वप्रतीतिरिति तस्य तद्द्योत्यतोक्तिरसंगतैव स्यादिति दिक्। न्यायसिद्धत्वमेवाह। वचनं विनेति। विकल्पबोधकशब्दं विनेत्यर्थः।

सिद्धत्वादिति। वाक्येन सञ्ज्ञानवगमान्नित्यसमासस्य इष्टत्वेन नित्यत्वादित्यर्थः। पुनर्विधानमिति। समाससञ्ज्ञाया इति भावः। अन्यथा तद्धितवृत्तिसञ्ज्ञानुवादेनान्ययी भावादिसञ्ज्ञामेव विदध्यात्। अत्र च व्याख्यानमेव शरणं वृद्धानाम्। न च तत्सञ्ज्ञाविधानमव्ययादीनां समासशास्त्रे प्रथमानिर्दिष्टत्वसंपादनेनोपसर्जनसञ्ज्ञार्थं चरितार्थ मिति कथं ज्ञापकमिति वाच्यम्। तत्र सूत्रे समास इत्यस्य समाससञ्ज्ञाव्याप्यसञ्ज्ञाविधौ प्रथमानिर्दिष्टमित्यर्थे बाधकाभावादिति दिक्। इवेन समासस्य क्वाचित्कत्वे हेतुमाह।

तथा हि। वररुचिसूत्रे इति। कृतोक्तं पूर्वं भूतो भूतपूर्वः। सुप्सुपेति समास इति। तथा शाकलसूत्रे सिन्नित्यसमासयोः शाकलप्रतिषेध इत्यत्र नित्यग्रहणेनानार्थ इ दमपि सिद्धं भवति। वाप्यामश्वो वाप्यश्व इति भाष्ये कैयटो व्याख्यत्। वाप्यश्व इति सुप्सुपेति समासः। सञ्ज्ञायामिति समासस्य नित्यत्वात् सिद्धः प्रतिषेध इति। तथा तु दात्तं पदमेकवर्जमसिद्धवदत्रेत्यादिसूत्रेष्वपि कैयटे स्पष्टम्। अत आह। सुप्सुपेतीति। समासेति। योगविभागेनैव सिद्धे समासे उत्तरसूत्रैः पुनर्विधानं प्राचीनस्य क्वा चित्कतां ज्ञापयति। एवं च इवेन समासस्यापि क्वाचित्कत्वाद् द्वाद्धरिव वामन इत्यादि सिद्धम्। इवेनेति वार्तिकं तु यद्यपि कुगतीत्यत्र पठ्यते तथापि सुप्सुपेत्यत्रैव नित्याधिकारे स्मारितमिति कैयटः। एवं स्थिते इवेन समासस्य क्वाचित्कत्वं कल्पयन्तः प्रयुक्ताः। जीमूतस्येवेत्यत्र बहूचैः समासाभ्युपगमेऽपि नैत्तिरीयैर्व्यस्तस्यै व पाठादिति दिक्। अपपरिबहिः। अत एव ज्ञापकाद्बहिर्योगे पञ्चमी। ज्ञापकसिद्धं न सर्वत्र। तेन करस्य करभो बहिरिति सिद्धम्। आबालमिति। यत्तु आपरमा णोराच भूगोलकमिति किरणावल्यां प्रयुक्तं तत्प्रामादिकम्। समासमध्ये चकारप्रयोगासंभवात्। आभूगोलकादिति तु पाठ्यम्। यपदार्थमिति। सूत्रे यदिति सा मान्ये नपुंसकम्। अव्ययं विभक्तीत्यनेन न सिद्धे विभाषार्थं सूत्रम्। तेन पक्षे वनस्यानु इत्युदाहार्यम् ॥

जीमूतस्येवेति। अत एव ज्ञापकादिति। बहिर्योगे पञ्चम्याः समासविधानात् ज्ञापकादित्यर्थः। लक्षणत्वं वस्तुसन्निमित्तं न तु तेन संबन्धे नान्वयस्तदाह। अव्ययमिति। अनोः समी पार्थत्वादिति भावः। वनस्यान्विति। कर्मप्रवचनीयसञ्ज्ञा तु नात्र तद्योत्येन लक्ष्यलक्षणभावेनेतरत्रान्वयाभावात्। वनसमीपमित्येव बोधादिति भावः। तेन संबन्धे नान्वये तु वनमन्वित्येव बोध्यम्। अ

अनुनाद्योत्यत इति। दीर्घगङ्गासदृशीतिवाच्योर्थः। गङ्गादैर्घ्य स्यादिः फलितोर्थः। द्योत्यार्थस्य विशेषणतायाएव सर्वसंमतत्वात्। यद्वाद्योत्यते इत्यस्य बोध्यते इत्यर्थः। स च
शक्त्यैवेति बोध्यम्। लक्षणत्वं च वस्तुस्वदेव निमित्तम्। एवं चात्रापि तेन संबन्धेनान्वयान्वयाभावान्न कर्मप्रवचनीयत्वप्रयुक्ता द्वितीया। सादृश्याद्यन्तर्भावश्चैकार्थीभावबलात्। उ
पलक्षितेत्यस्य विशिष्टेत्यर्थः। गङ्गादैर्घ्यसदृशेत्यादिबोधोत्तरं नियमेन मनसा तद्रूतज्ञापकत्वबोधान्नस्यामुद्योत्यतोक्ता। यथाप्रारभ्य नद इति क्रियाध्याहारकतयाः अशब्दस्य प्रार
म्भद्योतकतात इति बोध्यम्। सामान्यशब्दोपीति। तेन पञ्चनदं सप्तगङ्गमित्यादिसिद्धिः। पदान्तरसमभिव्याहारेणेति। तद्घटितमेव तत्र वाक्यं न केवलव र्ति- पदार्थघटि

अनुगङ्गमिति। इहायामोलक्षणत्वं चानुनाद्योत्यते। लक्ष्यं तु समासार्थः। अत एव वाराणस्याः सामानाधिकरण्यम्। एवं स्थिते फलितमाह। गङ्गादैर्घ्येति। वाराणसी
ति। वरं चतदनश्चवरानः श्रेष्ठोदकं तस्यादूरभवा अदूरभवश्चेत्यण्। आदिवृद्धिः। पूर्वपदात्संज्ञायामिति णत्वम्। अण्णन्तत्वान्ङीप्। नदीभिश्चेत्यस्य सञ्ज्ञा। नद्या
श्चनेह ग्रहणं बहुवचननिर्देशात् किं त्वर्थस्य। न च तस्य समासः संज्ञा भवति। अतस्तद्व्यतिनामयं समासः। ते च न केवलं विशेषशब्दाएव किंतु सामान्यशब्दोपि।
नित्यसमासः इति। एतच्च वृत्तौ स्पष्टम्। शाकलसूत्रे कैयटस्वरसोप्येवम्। नन्वेवं न्यायसाम्यादहुव्रीहेरपि नित्यसमासत्वं स्यादिति चेन्नैवम्। यस्येत्यादिपदान्तरस
मभिव्याहारेणान्यपदार्थप्रतीतेः। अत एव सञ्ज्ञानवगमात् इत्युक्तं न त्वन्यपदार्थः न वनमादिति। सञ्ज्ञायां किम्। शीघ्रगङ्गो देशः। अथाव्ययीभावेः साधार
णान्समासान्तानाह। अव्ययी। सामासान्त इति। समासस्य समासार्थोत्तरपदस्य वा चरमावयव इत्यर्थः ॥

तमितिभावः। समासस्येति। इद्वं च समासान्ता अन्त इत्यादिसूत्रेषु भाष्ये स्पष्टम्। समासार्थोत्तरपदस्य वेति। अयं पक्षः सरूपसूत्रे कैयटे स्पष्टः। परंतु चिन्त्यः। समासपद
स्य तदर्थोत्तरपदलक्षणायां मानाभावात् तदर्थवाक्यस्योपचारेण समासपदेन ग्रहणमित्यर्थस्यैव गोस्त्रियोरिति भाष्ये उक्तत्वाच्च। अन्त इति सूत्रस्य भाष्येणोत्तरपदाव
यवत्वपक्षस्य विरोधाच्च। सरूपसूत्रस्य भाष्यं तु समासावयवत्वपक्षेपि सुयोजं सुधियाम् ॥

म श॰
१४८

तद्व्यधनयनाद्यपक्षे एवफलद्वयमाह। तेनेति। अदन्ताव्ययीभावत्वप्रयुक्तामित्यर्थः। अदन्तद्विगुत्वप्रयुक्तो ङीप् चेत्यर्थः। नचद्विपुरीत्यादावकारान्तत्वाभावात्स्त्रीत्वक थंस्यादितिवाच्यम्। लिङ्गानुशासनसूत्राणांलोकसिद्धलिङ्गानुवादकत्वेनाविधायकत्वेन चात्यन्त्र द्विगोस्त्रीत्वाभावनियामकत्वाभावात्। नदु ...लिङ्गमशिष्यंलोकाश्र यत्वाल्लिङ्गस्येतिसमासान्ताइत्यादिसूत्रेषुभाष्ये। नचोत्तरपदावयवत्वेपिअवयवावयवस्यसमुदायावयवत्वेनोक्तप्रयोगयोः सिद्धिरितिवाच्यम्। अन्तइतिसूत्रेसमास स्यान्तोदात्तत्वमुत्तरपदास्यवेतिविकल्पेआद्येद्वंद्वप्रथमकांदइत्यादौकपोन्तोदात्तत्वापत्तिमुक्त्वाअस्तुतर्ह्युत्तरपदस्येत्युक्त्वातत्पक्षेनचइत्यत्रान्तोदात्तत्वासिद्धिरित्यर्थपरभा
ते नोपशरदमित्यत्र नाव्ययीभावादित्यम्। द्विपुरीत्यादौद्विगोरितिङीप्सिद्ध्यति। जरायाइति। गणसूत्रम्। प्रतिपरेति। अक्ष्णः परमिति। अविष
ए इत्यर्थः। वृत्तिविषयेऽक्षिशब्दः इन्द्रियमात्रपरः। समक्षमिति। अक्ष्णोगोचरम्। नदी। इहस्वरूपस्यैवग्रहणंनसंज्ञायाः। पौर्णमास्याग्रहाय
ण्योः टचग्रहणात्। ङीप्नदीति। टजभावेनपुंसकह्रस्वः। इदंत्ववधेयम्। नदीभिश्चेतिसूत्रे विशेषाणामिवस्वरूपस्यग्रहणं विशेषाणामेवेत्यत्र
मानाभावादित्युक्तम्। तेनपञ्चनदमितिसिद्ध्यति। अत्र वनितयोः च। तदुक्तम्। गोदावर्याश्चनद्याश्चसंख्यायाउत्तरेयदीति। एतच्च अच्प्रत्यन्व
वेत्यत्राजितियोगविभागात्सिद्धम्। पूजार्थमिति। अन्यतरस्यांग्रहणस्यप्रकृतत्वादितिभावः। इत्यव्ययीभावः ॥
क्ये विरोधेनतत्पक्षस्याङ्गीकर्तुमशक्यत्वादित्यलम्। इन्द्रियमात्रपरइति। बाह्येन्द्रियेत्यर्थः। सर्वबाह्येन्द्रियाविषयेएवपरोक्षत्वव्यवहारादितिभावः। नसञ्ज्ञा
यादिति। स्वज्ञकस्येत्यर्थः। नपुंसकंह्रस्वइति। उपलक्षणमेतत्। उपसर्जनह्रस्वस्यापि। तदुक्तमिति। माधवादिभिरितिभावः। नदीभिश्चेत्यत्रकैयटोप्येवम्।
परन्तुयोगविभागसिद्धस्यसामान्यत्वेनविशेषेणनदीपौर्णमासीत्यनेनबाधः कथंनेत्यत्र दृढमानंफलंचचिन्त्यमित्येतत्तदुक्तमित्यनेनध्वनितम् ॥*॥ राम:
इत्यव्ययीभावः * ॥ ॥श्रीसंकराभैरवाभ्यांनमः ॥श्रीविश्वेश्वरायनमः॥ रामकृष्णाभ्यांनमः ॥ श्रीगुरुचरणाभ्यांनमः ॥ १४८

श·प्रा· सापेक्षत्वेनेति। ननु कारकाशे क्रियायामनित्यसापेक्षत्वेन को दोषः। न च सापेक्षत्वेन कष्टशब्देनैकार्थीभावापन्नत्वेन ठगर्थापत्येन निष्कृष्यमाणेऽवयवेन न तस्यैकार्थीभावो दुरुपपाद
१४८ इति असामर्थ्यमिति तदर्थ इति वाच्यम्। परमगार्ग्यस्यापत्यमित्यर्थे परमगार्ग्यायण इति प्रयोगस्य येन विधिरिति सूत्रभाष्यसंमतत्वेन तदनुपपत्त्या निष्कृष्येकार्थीभावाभावेपि
यथाकथंचिदेकार्थीभावमादाय प्रवृत्तेर्भाष्यसंमतत्वादिति चेन्न। समुदायाद्विहितदादिनियमाभावेन केवलादापत्तेर्दुर्वारत्वमिति दोषस्यानेनोपलक्षणात्। दिगिति। दिगर्थस्तु उप
पदमतिङिति सूत्रस्थेन षष्ठीसमासादुपपदसमासो विप्रतिषेधेन न वा षष्ठीसमासाभावादुपपदसमास इत्यन्तरङ्गत्वाभिप्रायमुक्त्वा न तदुभयप्रत्याख्यानपरेण तदुत्तरेण
यथाविभाषा षष्ठीसमासो यदा न स तदोपपदसमासो भविष्यतीति भाष्येण यथाकथंचित्कारकोपादाने पितत्परिभाषाप्रवृत्तेः षष्ठीसमासोपि सुबुत्पत्तेः पूर्वमेव गतिकारकेति स्व
सापेक्षत्वेनासामर्थ्यात्। गतिकारकेत्यादेस्तु नायं विषयः। कृत्तृकरणे कृता — साधनं कृतेति वत् द्वितीया श्रितेति सूत्रे कारकतद्विशेषयोरनुपादानादिति दि
कृ। फलमिति। इहे स्थितादिषु गत्यर्थत्वात्कर्तरि क्तः। अयणं प्राप्तिरापत्तिश्चेह गतिरेव न तु फलम्। अत्यासत्तिस्तु व्यतिक्रमः। सोपि गतिविशेषणमेवेति प्राञ्चः।
यद्वाश्रित इत्यादावादिकर्मणि क्तः। ग्रामं गमीति। गमेरित्यौणादिक इनिः। स च भविष्यत्काले। भविष्यति गम्यादय इत्युक्तेः ॥ ७ रञ्च षष्ठीसमासेपीत्युभयोः
समत्वेनान्तरङ्गत्वाभावेपि न क्षतिः। एकसंज्ञयोरेवोभाभ्यामपि प्रवृत्त्याविरोधाभावेन युगपदेवोभाभ्यां संज्ञाद्वये जाते यदा न षष्ठीसमासो न तत्कृतैकार्थीभावस्त
दोपपदसमासस्तत्कृतैकार्थीभावो भविष्यतिस्यासत्तौ स्वार्थके न यद्यपि यथाकथंचित्कारकोपादाने पितत्प्रवृत्तिरिति लभ्यते परिभाषायां सामान्यतः कारकपदो
पादानेन तस्याः कारकमात्रविषयत्वौचित्यात्। अन्यथा कर्तृकरणोपपदानामित्येव वदेत्। तथापि तदुक्तप्रयोजनासिद्धिरेवात्र दूषणमिति। एवं च देशेषु सुपेत्यस्य
संबन्धेपि न क्षतिरिति बोध्यम्। न फलमिति। तेन मुख्यगत्यर्थत्वाभावात्कथं कर्तरि क्तः कथं वा कर्मणि द्वितीयेत्यपास्तम्। यद्वेति। अत्रापि पक्षे फलानुकूलव्यापारो धा
त्वर्थ इत्यावश्यकमेव। प्रत्यासत्तेरगतित्ववादिनां मते तदर्थमावश्यकमिदम् ॥ राम: १४८

द्वितीयाग्रहणस्येति। चतुर्थीवेत्येवसिद्धेनत्सामर्थ्यात्षष्ठीबाधकत्वमित्याशयः। प्रत्याख्यायेति। संदर्शनादिपरत्वेपात्वर्थस्यकर्मतयाकर्मणायमभिप्रैतीतिसंप्रदानत्वेचतुर्थ्या
स्तद्रूपरत्वेकर्मणिद्वितीयायाश्चसिद्धिमाश्रित्यतत्प्रत्याख्यातमाकरे। नित्येतीति। समाससमानार्थकवाक्याभावेनतत्त्वाभिमानः। अर्थद्वारकमिति। गुणवचनस्यशब्दत्वादिति
भावः। नन्वेवंकर्तृकरणेइत्येवसिद्धमतआह॥ रूढत्वेत्विति। धनरूढत्वेत्वित्यर्थः। अर्थैर्विभक्ताअपीत्यमरादितिभावः। एतदभिप्रायेणैवार्थग्रहणमितितात्पर्यम्। छलक्षणनि
अकेनोरितिकृद्योगलक्षणषष्ठीनिषेधात्कर्मणिद्वितीया। यत्तुगत्यर्थकर्मणीतिसूत्रेद्वितीयाग्रहणस्यकृद्योगलक्षणषष्ठीबाधनार्थतामाहुः। तद्भाष्यविरु
द्धम्। भाष्येतत्सूत्रंप्रत्याख्यायकृद्योगेषष्ठ्याएवस्वीकारादित्यन्यत्रविस्तरः। खट्वारूढइति। जाल्मोऽसमीक्ष्यकारीस्यादित्यमरः। वेदव्रतानिचसमाप्यसमाव
र्तनेनहिखट्वारोढव्या। ब्रह्मचर्यएवभूमिशयनार्होपियःखट्वामारोहतिसजाल्मः। रूढश्चायम्। तेनखट्वामारोहतुमावानिषिद्धानुष्ठानपरःसर्वोपिखट्वारूढइत्युच्य
ते। अतएवाह। नित्येति। मासप्रमितइति। माङ्माने। आदिकर्मणिकर्तरिक्तः। इहप्रतिपच्चन्द्रेणनास्त्यत्यन्तसंयोगः। मुहूर्तमिति। मुहूर्तंव्याप्येत्यर्थः। कालाध्वनोरत्य
न्तसंयोगइतिद्वितीया। तृतीयातत्कृतार्थेनंगुणवचनेन। तच्छब्देनतृतीयान्तपरामर्शिनातदर्थोलक्ष्यते। तदर्थकृतत्वंगुणवचनस्यार्थद्वारकंविशेषणम्। ए
वंस्थितेफलितमर्थमाह। तृतीयान्तार्थेत्यादि। कृतोयोगुणस्तद्वचनेनेत्यर्थः। धान्येनेतिकरणेतृतीया। अर्थ्यतेइत्यर्थः। प्रयोजनम्। अर्थनमर्थःअभिलाषोवा।
अर्थशब्दस्यरूढत्वेतुधान्येनेतिहेतौतृतीया। पूर्वसदृश। इहसमसदृशाभ्यांयोगेतुल्यार्थैरितितृतीया। अन्यैर्योगेहेताविति। अतएववचनाद्वा। इहसदृशग्रह
णंव्यर्थंषष्ठीसमासेनगतार्थत्वात्। नचतत्पुरुषेतुल्यार्थतृतीयेतिपूर्वपदप्रकृतिस्वरार्थमिदमितिवाच्यम्। सदृशप्रतिरूपयोःसादृश्यइतिसूत्रेणतत्सिद्धेः॥
गुणयोगेहेतुत्वसंभवेपिसर्वत्रहेतुत्वोपपादनासंभवरूपारुचेराह। वचनाद्वेति। व्यर्थमिति। सदृशशब्दयोगेप्रतिपदोक्ततयातुल्यार्थैरितितृतीयान्तेनैवसमासोनतुभोजने
नहेतुनासदृशइत्यादौ। एतेनतत्रषष्ठीसमासेनासिद्धिः हेतोःषष्ठ्यर्थत्वाभावादितिपरास्तम्॥

म दृ अभिधेयपरमिति। ऊनार्थकलहं तृतीयाया इति सूत्रे व्याख्यानादूनार्थग्रहणं वृत्तिकृतोक्तम्। ऊनार्थान्युत्तरपदान्यर्थकलहशब्दे तृतीयान्तात्पराण्यन्तोदात्तानीति तदर्थः। तत्र हि प्रतिप
१५० दोक्तत्वादस्यैव ग्रहणमतोऽत्राप्यर्थशब्दोऽभिधेयपर इति भावः। तृतीयेति सूत्रभाष्येऽत्रस्य मर्थग्रहणं प्रत्याख्यातम्। अत एव समर्थसूत्रभाष्ये तृतीयान्तस्कृते त्युपन्यस्योपादान
विकल इत्युदाहृतमुपादानेन कृतो विकल इत्यर्थः। स्वरविधायके व्याख्यानादर्थग्रहणे तु न भाष्यानुग्रहः। किं च तृतीयायाः सुत्तया प्रतिपदोक्तपरिभाषाया अप्रवृत्तिरेव बाधाकृत इत्याद्य
र्थकलहाद्यविषयमेवेति तद्भाष्यः प्रतीयते कैयटस्य तु तत्र प्रमाद एवेत्यस्मत्रापञ्चितम्। एरजन्तस्येति। ढ भयथापि सूत्रपाठदर्शनादिति भावः। अस्य वार्तिकस्य समासप्रकरणे दर्शनादाह। एतच्चे
ऊनार्थेति। पूर्वसूत्रेऽर्थशब्देन समासस्य साधितत्वादिहार्थग्रहणमभिधेयपरं तच्चोनशब्देनैव संबध्यते न तु पूर्वादिभिः समस्तदृशयोः पृथगु
पादानादिति भावः। अस्पष्टा मिश्रीकरणम्। खरं विशदमभ्यवहार्यं भक्ष्यम्। खरं कठिनम्। विशदं विविक्तावयवम्। यत्त्वत्रलपान्तस्येरजन्तस्य
च भक्ष्यते स्तस्यैव प्रयोगात्। गुणान्तरेण। एतच्च वार्तिकं सर्वगुणकार्त्स्न्ये इति सूत्रे पठितम्। नृणामिति। अत्र द्विजशब्देन समासप्रसङ्गः। तदपे
क्षया हि षष्ठी। श्रेष्ठत्वं च द्विजेतरमनुष्येभ्यः। तेषां सामान्यशब्देनोपस्थितत्वात्तान्विहायोपस्थितकल्पनाया अन्याय्यत्वात्। अथ कथं पुरुषोत्तम
इति। यस्मान्निर्धार्यते यश्चैकदेशो निर्धार्यते यश्च निर्धारणे हेतुस्त्रितयसंनिधौ सत्येवायं निषेध इह द्विवचनविभज्येति सूत्रे कैयटः॥ ७७ ति। अत्र द्विजशब्देनेति। नरसंबन्धी द्विजत्व
दितरमनुष्येभ्यः श्रेष्ठ इति बोधः। द्विजनरसमुदाययोरवयवावयविभावः संबन्धो द्विजेतरमनुष्येभ्य इत्यध्याहारः। यतः समुदायादेकदेशस्य पृथक्करणं गुणादिभिरिति
निष्कृष्यातथैवलाभात् तत्र पृथक्करणं स्वघटितसमुदायघटकस्वेतरेभ्य इति मते इदम्। ये तु व्यावृत्तत्वाख्यः संबन्धो निर्धारणविभक्त्यर्थः। नृणामित्यस्य च द्विजेतर
मनुष्यपरता। तदस्माद्व्यावृत्तः श्रेष्ठस्तद्वान् द्विज इति बोध इति वदन्ति तन्मते श्रेष्ठशब्देन समासप्राप्तिर्बोध्या। तद्ध्वनयन्नाह। कथं पुरुषोत्तम इति॥ पूर्वमते तु पुरुषस्योत्तमेन सामर्थ्या राम:
दुरुपपादम्। उत्तमत्वस्य निर्धारकगुणत्वात्। निषेध इति। इदं तु लक्षणं तत्रैव निर्धारणषष्ठीत्यपि बोध्यम्। एवं च संबन्धसामान्यषष्ठ्याऽत्र समास इति भावः॥ १५०

सामान्यतएव षष्ठीसमासनिषेधयोः प्रवृत्तिरिति वैतण्डिकमतमभ्युपेत्याह । यद्वेति। सञ्ज्ञायामिति समास इति। हलदन्तादित्यलुक् तु नालुकि सञ्ज्ञात्वभङ्गापत्तेः। कृतालुकः स
ञ्ज्ञात्वे हि तेन तस्य साधुत्वाव्याख्यानम्। अतएव वाग्घुनायादेशत्वेन। सर्वनामानीत्यत्र निपातनाण्णत्वाभाव इत्यस्य लयमाशयः। स्वापत्तसञ्ज्ञाकरणे शास्त्रानुमतायाएव कर्त्तुमौचित्येन।
कृतणत्वस्यैव सञ्ज्ञात्वेनोच्चारणं तादृशस्यैवासाधुत्वार्थम्। तदुक्तम्। बाधकान्येव निपातनानीति सञ्ज्ञायां न द्विज इत्यादि तु नेष्यत एव अभिधानलक्षणाः कृत्तद्धितसमासा इत्यक
इति द्विवचनविभज्येति सूत्रे कैयटः। यद्वा पुरुषेषूत्तम इति निर्द्धारणसप्तम्याः सञ्ज्ञायामिति समासः। नचैवं न निर्द्धारण इति व्यर्थम्। स्वरभेदात्। सप्तमीसमासे हि पूर्वप
प्रकृतिस्वरः। षष्ठीसमासे तु अन्तोदात्तत्वं स्यात्। पूरणगुण। अत्र प्राचोक्तम्। तदर्थैः षष्ठी न समस्यत इति। तन्न्यूनम्। एवं हि सुहितान्तानामेव ग्रहणं स्यात्। तावतामन्वार्थशब्दे
न समस्तत्वादिति ध्वनयन्नाह। सदादिभिश्चेति। अत्रव्याचख्युः। पूरणार्थशब्दः प्रत्ययएव गृह्यते। कृत्रिमे कार्यसंप्रत्ययादिति। तन्मन्दम्। नहि प्रत्ययविशेषाणां पूरणार्थत्वं
टिघुभादिवत्सञ्ज्ञासु [illegible]मस्ति येनोक्तपरिभाषावकाशमासादयेत्। कुतस्तर्हि पूरणप्रत्ययान्ताः षष्ठादय एवेह गृह्यन्ते। ननु पूरणोऽम्भनादिशब्दाद् इति चेत्ल्लोपे चेत्स्यादपूरणमि
ति निर्देशात्। [illegible]हि। तेन कुम्भपूरणभवः पटुरुच्चैरित्यादि सिद्धम्। कथं तर्हि नान्तुल्क्ष षष्ठाद्धि तसे कृतानीति। प्रमाद एवायमित्येके। वस्तुतस्तु उच्चैषु षष्ठः उच्चकत्रयकः ११ इति वाऽऽख्ये
यम्। [illegible]पूरणेन [illegible]स्वर्यतेनेनाधिकारावगतिः। अयं तु भागार्थकान्प्रत्ययान्त इति। तन्न। अनूप्रत्ययान्तेनापि निषेधस्य हितीयतृतीयेति सूत्रे भाष्ये स्पष्टत्वात्। अतएव मिस्राद्वितीय
मित्यादावन्यतरस्यांग्रहणसामर्थ्यात् समास इति तत्रोक्तम्। ननु ब्राह्मणस्य भुक्तमित्यत्र समासप्रसङ्ग एव नास्ति। ब्राह्मणशब्दस्य तेनैवाबाधयात्। ब्राह्मणस्येदन्त्वेन भुक्त इत्यर्था
इत [illegible] पदेति। भुक्तशब्द एवेह विशेष्यसमर्पक इति भावः ॥
[illegible]विकारके इत्यत्र भाष्ये कैरिति दिक्। पूरणार्थत्वम्। तत्सञ्ज्ञकत्वम्। कृत्रिमाकृत्रिमन्याय[illegible]स्य सञ्ज्ञाविषयत्वादिति भावः । —— उच्चैष्विति। अधिकारेण सप्त
मी। पादपूरणमिति निर्देशेन पूरणेन निर्देषस्यानित्यत्वं ज्ञाप्यते। तेन कुम्भपूरण इत्यादि उच्चैः षष्ठ्यादि च मिद्धमित्यन्ये। भाष्ये [illegible]। त्वच्चस्वरितत्वकल्पनं भाष्यविरुद्धमिति भावः

...दाहरणस्येति। ब्राह्मणस्य शुक्लादृत्यस्येत्यर्थः। गुणवाचितयेति। सदा गुणवाचितयेत्यर्थः। पूर्वग्रन्थेति। पूर्वं तेन समासप्रतिषेधस्योक्तत्वेन पुनस्तेन तत्स्वीकारो विरुद्ध इति भावः।
...प्रत्ययान्त एवेति। भावप्रत्ययान्तः सन्यो गुणमेवाहेत्यन्वयः। तदाह। तदभावे गुणं गुणिनं चेति। घटस्य शुक्लो घटः शुक्ल इत्युभयविधप्रयोगदर्शनादिति भावः। गुणमेवेति। न गुणिनमित्यर्थः।
...शमिति। भावप्रत्ययान्तो गुणवाचीति शब्देनाक्षरमर्यादया तदर्थालाभात्क्लेशः। पुनरुक्तीति। शुक्लादिरेवेत्यनेनैव गन्धादिभिर्न निषेधः इत्यर्थलाभेन सदेत्यादि पुनरुक्तिग्रस्तमित्यर्थः। निष्कृष्ट
...भावप्रत्ययान्तो गुणवाच्यत्र निषिध्यते इति प्राचोक्तम्। तन्न। उक्तोदाहरणस्य भाष्यरूढस्यासंगतिप्रसङ्गात्। यदपि सदा गुणवाचिनो न निषेध इति। तदपि न। भावप्रत्ययान्त
न्यगुणो वाश्रितया पूर्वग्रन्थाविरोधात्। यत्तु व्याचक्षते। भावेत्यादेर्भावप्रत्ययान्त एव निषिध्यत इति नार्थः किंतु भावप्रत्ययान्त एव सन्यो गुणमाह। तदभावे तु गुणं गुणिनं च स शु
क्लादिरेव निषिध्यते सदेति। अन्तरेणापि भावप्रत्ययं यो गुणमेव वक्ति गन्धादिशब्दस्तस्य न निषेध इति। तदपि क्लिष्टं पुनरुक्तिग्रस्तं च। काकस्य कार्ष्ण्यमित्यादावव्याप्तं च। उक्तव्या
ख्यायां हि शुक्लादीनामेव विशेषो लभ्यते न तु शौक्ल्यादीनाम्। न हि शौक्ल्यादिशब्दाः भावप्रत्ययं लब्ध्वा निष्कृष्टं गुणमाहुः। न वा तदभावे गुणं गुणिनं च किंतु अन्तरेणापि भाव
प्रत्ययं गुणमात्रपरत्वाद्रूपरसगन्धादिशब्दतुल्या एव। न च शौक्ल्यमिति कार्ष्ण्यमिति भावप्रत्ययोऽस्त्येवेति वाच्यम्। तस्य शुक्लकृष्णादिशब्दैर्लब्धत्वेऽपि शौक्ल्यादिश
ब्दैरलब्धत्वादन्यथा तदभावे त्वित्यादि स्वग्रन्थेनैव सह विरोधापत्तेरिति अवहितैराकलनीयम्। यदि तु प्राचो ग्रन्थोऽपि योज्य इत्याग्रहस्तर्हीत्थं योज्यताम्। सदेत्या
दितावद्यथाश्रुतम्। चन्दनगन्ध इत्युदाहरणं च। अस्यापवादं प्रथममाह। भावेति। ननु अस्तु नामेयं योजना आकरग्रन्थात्तु कथमेतावान् सिद्धान्तो लब्ध इति चेत्। गुणास
त्रे गुणार्थ इत्यनेन केवलगुणस्य गुणोपसर्जनद्रव्यस्य च प्रतिपादको गृह्यते। व्याप्तिन्यायात्। काकस्य कार्ष्ण्यं ब्राह्मणस्य शुक्ला इति द्विधा भाष्ये उदाहरणाच्च॥ ६ गुणमिति। गुणमेव नाहुः किं
तु गुणगतां जातिमाहुरित्यर्थः। तुल्या एवेति। तेन तत्र निषेधाप्राप्तिः इष्यते च तत्र समासो भाष्यादिसम्मतत्वादिति भावः। स्वग्रन्थेनैवेति। तत्र हि स शुक्लादिरेवेत्युक्तम्। अस्यापवादमिति। रामः
भावप्रत्ययान्तः सदा गुणवाच्यप्यत्र निषिध्यत इति तदर्थ इति भावः। केवलस्य गुणस्येति। भावप्रत्ययान्तोऽन्यश्च गृह्यत इति भावः। तेन ब्राह्मणस्य शुक्लो रूपमित्यत्रापि निषेध इति बोध्यम्। १५१

तत्स्थैश्च गुणैरिति। इदं षष्ठीति सूत्रे भाष्ये। तत्र गुणमात्रेति। वृत्तिवाचकतया न गुणिनि तेन तत्स्थैर्गुणैः गुणबोधकैः शब्दैरित्यर्थः। गन्धत्वेनेति। गन्धशब्देनेत्यादिः। गन्धशब्दात्तेन रूपे-
ण प्रतीयमानो गन्धः शुक्लादिशब्दाच्छुक्लगुणइव न गुणिसामानाधिकरण्येन तद्विशेषणतया प्रतीयते किंतु स्वप्रधानः स्वनिष्ठविशेष्यतावानेव प्रतीयत इत्यर्थः। तात्स्थ्यमिति। गु-
ण सामानाधिकरण्येनैव गुणवाचकत्वमित्यर्थः। अदर्शनादिति। गन्धं मालतीकुसुममित्यप्रयोगादित्यर्थः। न तत्स्थैरिति। घटः शुक्ल इत्यादौ गुणिसमानाधिकरणगुणस्यापि

चन्दनगन्ध इत्यादौ तु निषेधे प्राप्ते तत्स्थैश्च गुणैरिति वचनेन समासः प्रतिप्रसूयते। गन्धत्वेन हि प्रतीयमानो गन्धो न कदापि गुणिसमानाधिकरणः। किंतु स्वप्र-
धान एवेदमेव तात्स्थ्यम्। ननु वहति जलमियं पिनष्टि गन्धानिति प्रयोगादर्शनादयुक्तमिदमिति चेन्न। तत्र हि गन्धानिति न गुणशब्दः मालतीकुसुमादिष्व-
दर्शनात्। किंतु चन्दनत्वादिजातिनिमित्तको न्य एवासः। तस्माच्चन्दनगन्ध इत्यत्र तत्स्थत्वं सुस्थमेव। एवं घटरूपमित्यादावपि। सुरभिशुक्लादयः शब्दा-
स्तु न तत्स्था गुणप्रतिपादकाः। एवमपि शौक्ल्यसौरभादिभिः शब्दैः सह समासो दुर्वार इति चेन्नैवम्। तैर्हि शुक्लत्वादिप्रकारकएव गुणबोधः। तद्रूपापन्नानां
च द्रव्यसामानाधिकरण्यमस्त्येव। शुक्लः सुरभिरित्यादाविति दिक्। फलानामिति। करणस्य शेषत्वविवक्षायां षष्ठी। ब्राह्मणस्य कृत्वेति। तादर्थ्यरूपसंब-
न्धस्य सामान्यरूपेण विवक्षायां षष्ठी। ब्राह्मणसंबन्धिनो आक्रियात दनन्तरमित्यर्थः। इत्यादीति। तथा च भट्टिः। यत्कृते रीन्मिगृह्णीमः आदेयाः किंकृते भो-
गाः कुम्भकर्णत्वया विनेत्यादि। अनेकमन्यपदार्थ इति सूत्रे सर्वपश्चादिति भाष्यप्रयोगोपि इहानुकूलः ॥ ७७ तैः प्रतिपादनादित्यर्थः। शौक्ल्येति। तैः सर्वदागु-
ण्य समानाधिकरणस्यैव गुणस्य प्रतिपादनादिति भावः। सामानाधिकरण्यमस्त्येवेति। गुणिसामानाधिकरण्येन प्रतिपादकशब्दावाच्यगुणवाचकत्वं तत्स्थत्वं नैवं शौक्ल्यादिशब्दाना-
मतु गुणिसामानाधिकरण्येन प्रतिपादकशुक्लादिशब्दवाच्यगुणवाचकत्वादिति दिक्। तादर्थ्यरूपसंबन्धस्येति। अतएव गुर्वर्थशब्दस्य गुरोरिदमिति विग्रहप्रदर्शनं भाष्ये। सर्वपश्चादिति। ततः
पश्चादिति भाष्यप्रयोगो आद्यारित्वात् षष्ठ्यन्तात् तसोपपत्तौ तद्योगे पञ्चमीकल्पने मानाभाव इति भावः। भाष्यप्रयोगोपीति। प्रकृतसूत्रस्य भाष्यस्वरसोपीत्यस्याप्युपलक्षणमिदम् ॥

अनुन्यासकारइति। मत्वादिसूत्रेकैयटोप्येवम्। कारकषष्ठ्याएवेति। क्तादियोगेतस्याः प्रतिपदविहितत्वादितिभावः। एतेनेति। उक्तप्रकारद्वयेनेत्यर्थः। कथंतर्हीति। किमोवृत्त्यधिकर
णमित्यर्थाभिप्रायेणप्रश्नः। त्यर्थः स्यादिति। कर्मार्थतृजकाभ्यांकर्मषष्ठ्येवसमासप्रतिषेधस्तेनेतिभावः। परिशेषितेनेति। कर्मातिरिक्तेनिषेधेनकर्मणिपरिशेषितेत्यर्थः। विधिरूपे
णेति। अयमेवपक्षोयुक्तइत्यन्यत्रप्रपञ्चितम्। उपरञ्जकत्वमात्रम्। बाधाभावेनसंभवमात्रम्। जयादित्यइति। अनेनारुचिः सूचिता। तद्धि जंकर्मणिचेतिसूत्रस्वभाष्यविरो
नवज्ञानार्थएवज्ञापकम्। पूजितोयः सुरासुरैरित्यादिप्रयोगानुरोधेनसामान्यविषयकत्वस्यैवन्याय्यत्वादित्यनुन्यासकारः। अन्येतुकारकषष्ठ्याएवसमास
निषेधोयम्। शेषषष्ठ्यानुसमासइत्याहुः। एतेनकलहंसगणमहितः कृतवानितिभट्टिप्रयोगोव्याख्यातः। इदमेषामिति। क्तोधिकरणेचेतिक्तः। अधिकरणवाचिन
श्चेतिकर्त्तरि षष्ठी। अधिकरणेचेत्येवसिद्धेसूत्रस्यपि विग्रहणंस्पष्टार्थम्। कथंतर्हिकिंवृत्तंयद्वृत्तमिति। नायमधिकरणेक्तः किंतुकर्त्तरि। किमा
वृत्तमित्यन्वमित्यर्थः। कर्मणिच। यद्यत्रयाकाचनकर्मणिषष्ठीगृह्येततर्हितृजकाभ्यांनिषेधोनर्थकः स्यात्। तस्माद्व्ययानामनेकार्थत्वादितीत्यर्थेचशब्दोयम्।
तदाह। कर्मणीतियाषष्ठीति। सप्तम्येकवचनान्तंपदमुच्चार्ययाषष्ठीविहितापरिशेषितावेत्यर्थः। नियमसूत्राणांविधिरूपेणनिषेधरूपेणवेतिद्वेधाप्रवृत्तेः स्वीकृत
त्वात्। तृजकाभ्यामिदंकर्तरीत्यकस्यैवविशेषणमानतुतृचः। अव्यभिचारात्। तथापिउपरञ्जकत्वमात्रमभिप्रेत्याह। कर्त्रर्थेति। जयादित्यस्तुकर्तृषष्ठ्याइतिव्याच
ष्टे। तन्मतेतृजनर्थइनिकल्प्यंस्यात्। किंचकर्तृग्रहणंतृजकयोरेवविशेषणमितियुक्तंतयोः श्रुतत्वात्। नतुषष्ठ्याइतिभावः। शेषषष्ठ्येति। केचित्तुजनिकर्तुःप्र
कृतिस्तत्प्रयोजकोहेतुश्चेतिनिर्देशादनित्योयंनिषेधइत्याहुः। न्यासकारस्त्वाह। तृजन्तमेतत् ॥
थः। तत्रहिकर्मषष्ठीमात्रेनन्निषेधे। स्यथैवपर्युमापादितम्। आहुरिति। अत्रारुचिबीजंताभ्यांकारकषष्ठ्येवनिषेधइतिप्रत्यासत्तिलभ्यार्थस्यैवज्ञापनमुचितम्। एतत्।
त्रिभुवनविधातुरित्येतत्। सानुबन्धकस्येति। तृच्यदितनेनव्यावर्त्यइतिभावः। मतान्तरेसानुबन्धनिर्देशः कर्त्तरीतिवत्स्पष्टार्थः। अन्यपक्षेतुसाहचर्यात्कर्त्रर्थकस्यैवग्र

अतएवेति। अन्यथानकर्मधारयान्मत्वर्थीयइत्यनेनन निह्नाकल्पनलापवमूलकेनपसनस्यादितिभावः। अतएवाष्टशुशब्दान्मत्वर्थीयानेतिरस्कृतइतिसूत्रभाष्येउक्तंस्मृद्ध
लैङ्गुनदोषः। कर्मधारयान्मत्वर्थीयेकृतेयोर्थः प्रतीयतेतस्मिन्बहुव्रीहिणालभ्येहिलापवचिन्तानान्ययेतितात्पर्यम्। कृष्णसर्पवानिति। अत्रहिजातिविशेषवान्प्रतीयतेन
तथाश्रुतीतिविर्बहुव्रीहौ। सर्वधनीत्यादिनुव्रीह्यादिपाठात्सिद्धम्। अदण्डी अवामीत्यादौमत्वर्थीयान्तेननञ्समासः बहुव्रीहिणादण्डसंयोगनिषेधस्यसम्यग्बहुभाषित

नलोकेतिषष्ठीनिषेधस्त्वनिस्वअन्नकाभ्यामितिवक्ष्यमेतच्चः सानुबन्धकस्यग्रहणाज्ज्ञापकादिति। पूर्वापरा। एकदेशशब्दोऽवयवेरूढः। अतएवतस्यक
र्मधारयएवेपितनोमत्वर्थीयः कृष्णसर्पवान्वल्मीकइतिवत्। यद्यपीहएकगोपूर्वादितिठञ्प्राप्तस्तथापिअतएवनिर्देशादिनिस्तदेतदाह। अवयविनेति। ननु
किमनेनसूत्रेणकर्मधारयेणैवपूर्वकायइतिसेत्स्यति। उर्द्धकायवत्। समुदायेवृत्ताःशब्दाःअवयवेष्वपिवर्तन्तेइतिन्यायादतआह। षष्ठीत्यादि। नचावकायपू
र्वइत्यादिप्रयोगव्याहतयेसूत्रमितिभावः। नन्विहषष्ठीतुदुर्लभा। अन्यारादितिपञ्चमीप्रसङ्गात्। तत्रहिदिग्दृष्टःशब्दोदिक्शब्दइतिव्याख्यानेनसंप्रत्यदि
ग्वृत्त्विपियोगेपञ्चमीस्वीकृतेतिचेत्सत्यम्। अवयववृत्तिभिर्योगेषष्ठ्येवेष्यतेतस्यपरमाम्रेडितमितिलिङ्गात्। पूर्वेनाभेरिति। नाभेर्यःपूर्वोभागःसकायस्यावयवइत्यर्थः। ना
भेरितिदिग्योगलक्षणापञ्चमी। अत्रपूर्वस्यभागस्यनाभिरवधिःनत्वेकदेशिनी। अतोनाभ्यासहसमासोनेत्यर्थः। कायेनतुस्यादेवपूर्वकायोनाभेरिति। पूर्वशब्दस्यनित्यसापे
क्षत्वादसमर्थत्वाच्च ॥

ष्यं त्वनिषेधस्यचानवगमात्। असुब्वतोङ्स्येतिप्रत्ययस्यात्सूत्रस्यभाष्यप्रयोगेणकचित्साधुत्वानादरोपीत्यन्यत्। उभयोरवयवेकायशब्दप्रवृत्तौबीजमाह। समुदाय
इति। तथाचेति। द्वंद्वस्यादयनुसारेणसूत्राशयवर्णनमात्रम्। परवल्लिङ्गमितिसूत्रस्यभाष्यानुसत्याभिधानेषष्ठीसमासदृष्यतएवेति लभ्यतेतच्चोपरिष्टात्स्फुटीभविष्यति। नाभेर्यइति। नाभ्यव
धिकइत्यर्थस्तदाह। दिग्योगलक्षणेति। ननुपूर्वशब्दस्यनाभिसापेक्षत्वात्कथंसमासोतआह। पूर्वशब्दस्येति। प्राधान्याच्चेति। प्रधानस्यसापेक्षस्यापिवृत्तिरितिभावः ॥

समुदायात। क्वात्रसमुदायावयव पूर्वइतिबोध्यः। एकदेशिसमासंविनेति। लक्षणप्रतिपदोक्तपरिभाषयैकदेशपूर्वकस्यास्यैव तत्र ग्रहणमिति भावः। इति भाव इति। इत्य
भिमानइत्यर्थः। यथाश्रुतसूत्राशयवर्णनाभियुक्तानां ज्ञापकवादिनामिति भावः। एतच्च प्रत्याख्यातृभाष्यरीत्या तु तत्र लक्षणप्रतिपदोक्तपरिभाषायाअप्रवृत्तिः। कर्मधार
येणैव सर्वप्रयोगसिद्धेः। तत्रैवार्थे चसाधुत्वे यथोत्तरं मुनीनां प्रामाण्यात् षष्ठीसमासस्तु तद्विषये नभिधानाद्वारणीयः। यद्येवं एवं सः ज्ञापकस्य च नोपयोगः। वद्ध्वनयन्नस्पति
पूर्वं छात्राणामिति। समुदायसमुदायिसंबन्धे षष्ठी। बहुवचनं तु उद्भूतावयवभेदसमुदायविवक्षया। यथा छात्राणां पञ्चम इति। ततश्छात्राणामे
कदेशित्वे सत्यपि एकत्वसंख्याविशिष्टाभावान्न समासः। सर्वोपीति। पूर्वादिभिन्नोपीत्यर्थः। ज्ञापकादिति। न ह्यन्यथा सायपूर्वत्वमह्नस्योपपद्यतेन
चार्द्धकायवत् सामानाधिकरण्येन निर्वाहः शङ्क्यः। अह्नः सर्वैकदेशेत्यादिना विहितस्य समासान्तस्य च अह्नोह्न एतेभ्य इत्यह्नादेशस्यैकदेशिसमासंवि
नानुपपत्तेरिति भावः। इत्याहुरिति। नचैवं दिनमध्यो रात्रिमध्य इत्यादि न सिद्ध्येदिति वाच्यम्। ज्ञापकसिद्धस्यासार्वत्रिकत्वात्। यत्तु प्राचोक्तम्। सर्वेणैकदे
शेनाह्नः समास इति तन्न। एकदेशस्य तृतीयानिर्दिष्टस्य परनिपातापत्तेः धर्मिग्राहकमानविरोधात्। यदपि पाठान्तरम्। सर्वेण एकदेशिनाह्न इति। तदपि नाअह्न
रेव ह्येकदेशि। नच तेनैव तस्य समास इति संभवति। अर्द्धं नपुंसकम्। नित्यं क्लीब इति। अर्द्धमिति निर्देशादेव क्लीबत्वे लब्धे नपुंसकग्रहणं नित्यनपुंसकत्वार्थमित्यर्थः। ख
ण्डमात्रवाची तु त्रिलिङ्गः। भित्तं शकलखण्डे वा पुंस्यर्द्धोऽर्द्धं समेंऽशके इत्यमरः। अत्र वा पुंसीति पूर्वोत्तराभ्यां संबध्यते। तत्र शकलखण्डे निरूपभेदात् क्लीबत्वे निर्णीते वाक्यवचना
च्च पुंस्त्वविकल्पः स्त्रियामिति फलितम्। न च खण्डे इति स्त्रीलिङ्गमेव किं न स्यादिति वाच्यम्। भिन्नलिङ्गानां न द्वन्द्व इति तेन परिभाषितत्वात्। शकलञ्चास्त्रीति निर्देशेनैव निर्णया
त् ॥ ५॥ एषां प्रत्याख्यानमिति दिक्। निर्देशादेवेति। नच शब्दपरत्वेपि तुर्यागीतिवन्नपुंसकोच्चारणसत्त्वेन तेन क्लीबग्रहणासिद्धिरिति वाच्यम्। योगविभागपूर्वकमर्द्ध
मितिनिर्देशेन तल्लाभसूत्याशयात्। भिन्नलिङ्गत्वमुपपादयति। शकलञ्चेति। निर्देशेनेति। शकलखण्डे इति निर्देशेनेत्यर्थः ॥

म॰श॰ १५४

लम्येतेइति। तेन खण्डमात्रवाचिनः क्लीबलिङ्गत्वं सिद्धम्। अत एव दन्तार्धमाप्यायतितमित्यादयः प्रयोगा उपपद्यन्ते। अवयववाची पुल्लिङ्ग इति भाष्यं तूपलक्षणमिति भावः। अन्ये तु भाष्यानुरोधेन कोशेऽपि पुंसीति पूर्वान्वयं इच्छन्ति। दन्तार्धमित्यादौ समांशवाचित्वाभिप्रायेण नपुंसकत्वम्। शरीरार्धं हृगमिति वत्षष्ठीसमासः। स्त्रियां प्रयोगादर्शनाभावाच्चेत्याहुः। आग्रमिति। नत्वोक्तविग्रहे निग्रहमिति भावः। ननु पिप्पलीनां बहुत्वाद्बहुवचनं कुतो नेत्यत आह। परवदिति। विशेष्यैकत्वादिति। अर्द्धस्य विशेष्यस्यैकत्वादित्यर्थः। मा

अर्द्धइति रूपभेदात् पुंस्त्वावगतौ सत्यामपि वा पुंसीति विकल्पेनाविशेषात्क्लीन पुंसके लभ्येते। प्राग्वदिति। अवयविनां समस्यते इत्यादीत्यर्थः। अर्द्धं पिप्पलीनामिति। इहार्द्धपिप्पलीति प्राप्तं परवल्लिङ्गातिदेशोपि वचनातिदेशाभावात्। विशेष्यैकत्वाच्चेति भावः। कथं तर्ह्यर्द्धपिप्पल्य इति। अर्द्धानि पिप्पलीनामिति विग्रहे माभूत्। खण्डसमुच्चये तु भविष्यति। अर्द्धपिप्पली चार्द्धपिप्पली चेत्यादि विग्रहात्। एकदेशिनेति किम्। अर्द्धं पशोर्देवदत्तस्य। अत्र देवदत्तः स्वामी न त्ववयवीति न तेन समासः। एतत्सूत्रं परवल्लिङ्गमित्यत्र भाष्ये प्रत्याख्यातम्। तथाहि। अर्द्धपिप्पलीति कर्मधारयेण सिद्धम्। समुदायेदृष्टाः शब्दा अवयवेपि वर्तन्ते इति न्यायात्। समप्रविभागादन्यत्र हितार्थैवगतिः। अर्द्धाहारः। अर्द्धनरतीयम्। अर्द्धवैशसम्। अर्द्धोन्मर्दविलोकितमित्यादिदर्शनात्। न च समप्रविभागे षष्ठीसमासं बाधितुमिदं सूत्रमिति वाच्यम्। षष्ठीसमासस्यापीष्टत्वादिति। तथा च कालिदासः प्रायुङ्क्त। प्रेमणा शरीरार्द्धहरां हरस्येति। द्वितीयतृतीया निषेधं बाधित्वेति ॥

भूदिति। अवयविनः एकत्वाभावादिति भावः। खण्डसमुच्चये त्विति। एकशेषेणेति भावः। एतत्सूत्रमिति। एवस्यैकदेशिसमासस्य विधायकं सूत्रमित्यर्थः। जातावेकवचनेन सूत्रस्य मित्यर्थः। अर्द्धपिप्पलीत्युपलक्षणं सूत्रस्योदाहरणस्य एकदेशिसमासो नारभ्यते इति तत्र भाष्ये उपक्रमात्। इष्टत्वादिति। तथा च तत्रैव भाष्यम्। इष्यत एवार्द्धपिप्पलीति। तत्र प्रयोग ह्येतद्भाष्यविरोधादर्द्धपिप्पलीत्यत्रैकदेशिसमासेन सत्त्वे षष्ठीसमासो न भवतीति द्वितीयेति सूत्रस्य भाष्यं गकदेश्युक्तिरिति आहुः ॥ राम: १५४

द्विगुप्राप्तेति। तद्धि एषु तत्पुरुषेषु परवल्लिङ्गतानिषेधकम्। तत्पुरुषग्रहणप्रत्याख्याने ऽर्धादेव प्रत्याख्यानं तस्येति भावः। त्रिसूत्रीमिति। उक्तार्[illegible]त्रिस्वेत्य
र्थः। एवं हि तत्र भाष्ये तत्पुरुषग्रहणं न करिष्यते एकदेशिग्रहणात्सिद्धम्। इहैकदेशिनो ऽरितिवक्ष्यामि। तदेकदेशिग्रहणं कर्तव्यं न कर्तव्यम्। ए[illegible]समासो न[illegible]ते। कथम
र्द्धपिप्पलीति समानाधिकरणे भविष्यति। अर्द्धं चासौ पिप्पली चेति। षष्ठीसमासोपि प्राप्नोति। इष्यत एव षष्ठीसमासः। अपूपार्द्धं पिप्पल्यर्द्धमिति इति। भक्त्यादिपरस्त्रीलिङ्गे

भाष्यकारास्तु परवल्लिङ्गमिति सूत्रे तत्पुरुषग्रहणं द्विगुप्राप्तेत्यादिवार्त्तिकं पूर्वापरेत्यादित्रिसूत्रीं च प्रत्याचख्युः। तन्मते भिक्षाद्वितीयादिसिद्धये पूरणे
त्यादिनिषेधस्यानित्यत्वमाश्रयणीयम्। सञ्ज्ञाप्रमाणत्वादित्यादिनिर्देशानां सामान्यापेक्षज्ञापकात्। एवं सति तात्पुरुषत्वेत्यपि सिद्धम्। प्राप्तापन्ने। अत्र चकारे
ण विधेयसमुच्चयार्थेनाकारप्रश्लेषानुमानात्। प्राप्तापन्ने समस्येते। अच्च। अत्वं च तयोः स्यादिति भाष्ये स्थितम्। अत्र चकारात्पूर्वमेवाकारं छित्वासौ प्रश्लेषत्वात्त्वकृति
भावेनेति प्राञ्चः। इमं क्लेशं परिहरन्नाह। द्वितीयया अ इति। प्राप्नास्मीति। एकादेशस्य पूर्वान्तत्वेन ग्रहणाल्लिङ्गविशिष्टपरिभाषया वा प्राप्तापन्नयोष्टाबन्त
योरपि समासः। कालाः परिमाणिना। परिमीयते परिच्छिद्यते येन तत्परिमाणं परिच्छेदकं तद्वान्परिमाणी तदाह। परिच्छेद्यवाचिनेति। कालाइति। कालविशे
षवाचका इत्यर्थः। कालसामान्यस्यापि परिच्छेदकत्वात्। मासो जातस्येति। षष्ठीसमासे प्राप्ते वचनम्। ननु जातः पुरुषस्तस्य च ह्रस्ववितस्त्यादिकं परिच्छेदकं न कालस्तस्य क्रि
यामात्रपरिच्छेदकत्वादिति चेत्सत्यम्। स्वाश्रयक्रियां परिच्छिन्दन्नपि कालस्तद्द्वारा देवदत्तं परिच्छिनत्ति। यस्य हि जननादूर्द्ध्वं मासो गतः स मासजात इति व्यवह्रियते ॥

स्यतुर्यादिशब्दैरनभिधानात्त्व   मास एव नेति तत्रैकदेशिसमासे चतुर्थीभिक्षेति कर्मधारये तु पुंस्त्वे चतुर्थभिक्षेति भेद इति न शङ्क्यम्। इत्यादीति। आदिना लोमैः सा
इपूरणमित्यादेः संग्रहः। इमं क्लेशमिति। न चात्र पक्षे तस्य व्यवहितत्वात्प्राप्तापन्नाभ्यामन्वयक्लेशः सौत्रत्वकल्पनस्येति। धिकक्लेशत्वमित्यभिमानात्। तद्यानिति। परिच्छेद इस
र्थः। तद्वारेति। तत्परिच्छिनत्ति यस्माद्धि पुरुषस्य परिच्छेद इत्यर्थः। तदाह। यस्य हीति ॥

परिच्छिन्नस्यैवेति। तावत्काला(तीतत्व)ननाश्रयत्वेनेतिभावः। द्योतयितुं यस्य स इति। गुणीभूतमपि षष्ठ्यर्थं तच्छब्देन परामृश्यत समासजातपदप्रतिपाद्यतां प्रदर्शनेन द्योतनमितिभावः। यस्य स मासजातपदार्थ इति हि विग्रहवाक्यात् बोधः। मासजातो दृश्यतामित्यादौ जातस्यैव दर्शनकर्मत्वादिप्रतीतेः। नत्वेतावताऽन्यपदार्थप्रधानोयमिति भ्रमः कार्य इति बोध्यम्। नास्य प्रवेश इति। तत्र विशेष्यविशेषणभाववैपरीत्येनैकार्थीभावारोपादितिभावः। व्यत्यासेनेति। जातपरिच्छेदको मास इति वाक्यार्थो मासपरि

तत्रव्यवहारकालजननलक्षणयोरन्तरालभावी मासोजननद्वाराजातमपि परिच्छिनत्त्येव। इह विग्रहे षष्ठीनिर्दिष्टस्यापि वृत्तौ प्राधान्यं द्योतयितुं यस्य स इत्युक्तम्। अलौकिके तु प्रक्रियावाक्ये नास्य प्रवेशः। एवं च बहुव्रीहावपि। एतावानेव विशेषः। इह जातशब्दात् षष्ठी चित्रगुरित्यादौ तु द्वाभ्यामपि शब्दाभ्यां प्रथमैव। समानाधिकरणानां बहुव्रीहिरिति वक्ष्यमाणत्वात्। विशेषणविशेष्यभावव्यत्यासेनैकार्थीभाव इति तुल्यम्। यत्तु मीमांसकाश्चित्राणां गवामयमिति विगृह्णन्ति। तत्रेदं वक्तव्यम्। उक्तरीत्या वृत्तिवाक्ययोः क्वचित्प्रधानार्थसाम्यलाभेपि अषष्ठ्यर्थबहुव्रीहौ पञ्चविधेपि कर्मकरणादिप्राधान्यस्याभिमतस्योक्तविग्रहादलाभा द्वृत्तिवाक्ययोर्महान्विप्रकर्षः स्यात्। कृतविश्वः प्राप्तोदको ग्राम इत्यादौ कर्तृकर्मणोः समासेनाभिहितत्वान्न कारकविभक्तिरित्यादिसिद्धान्तस्य निर्विवादत्वा त्। किंचालौकिके प्रविष्टानामेव पक्षान्तरे परिनिष्ठितानां लौकिकेपि प्रवेशसंभवेउपस्थितपरित्यागेनानुपस्थितकल्पनमन्याय्यमसांप्रदायिकं च ॥

च्छेद्यो जात इति वृत्त्यर्थ इतिभावः। विगृह्णन्तीति। वृत्तिविग्रहयोः प्रधानार्थसाम्यायेतिभावः। अषष्ठ्यर्थबहुव्रीहावित्यस्य विप्रकर्षः स्यादित्यनेनान्वयः। पञ्चविधेति। कर्मकरणसंप्रदानापादानाधिकरणरूपे। तत्र प्राप्तस्योदकस्यायमिति विग्रहेपि ततः कर्मत्वादिनाऽबोधात्। निर्विवादत्वादिति। त्वदीयानां त्वासकृदादीनां त्वेति शेषः। किंचेति। षष्ठ्यन्तानामनुपस्थितिपरिहाराय लौकिके प्रवेशः शेष इत्युक्तेरिति वक्ष्यते। अनुपस्थितकल्पनम्। षष्ठ्यन्तकल्पनम्। असांप्रदायिकं चेति। सर्वादीनीति सूत्रे सर्वआदिर्येषान्तानीति भाष्ये विग्रहप्रदर्शनादितिभावः ॥

पदान्तरेति। सद्त्येतदित्यर्थः। अत एवेत्यस्य वृद्धसम्मत इत्यनेनान्वयः। प्राच्येन। सद्त्यतः पूर्वेण चित्रा गावो यस्येत्यादिना। अर्पिते। बोधिते। विषये। वाक्यार्थे। न तत्पटके यच्छब्दैर्वैतत्पदं दातुम्। तस्य देनतं परामृष्टुम् वाक्यभेदेनेति। यस्य चित्रा गावः सन्ति स चित्रगुपदत्वाच्चो भवतीत्येवं वाक्यभेदेनेत्यर्थः। इयं कारिका ग्रन्थकर्तुरेवास्यज्यतामिति। वाक्ये गवामेव प्राधान्यं वृत्तौ तु सबन्धिन इति नास्त्येव वाक्येन प्रधानार्थसाम्यमित्यर्थः। क्वचित् गुणेति। अर्थानां वृत्तिविग्रहयोर्गुणप्रधानत्वं समानमिति यत्तद्विवक्षितमिति तदर्थः। यतस्तद्धितार्थोपदर्शके आख्याते वृत्त्यपेक्षया गुणप्रधानभावस्य विपर्ययो वैपरीत्यं क्रियाप्रधानत्वादिरूपं दृष्टमित्यर्थः। तदाह। विग्रहवाक्यानीहेति। परे तु पादगो गुणप्रधानभावोऽर्थानां लोके दृष्टः स क्वचिद्विवक्षितस्तद्धितार्थविग्रहवाक्ये तिङन्ते लोकदृष्टस्य क्रियाप्रधानत्वस्य वैपरीत्यं कर्तृप्रधानत्वं दृश्यत इति हरिश्लोकार्थः।

तदनुगुणतयैव पदान्तरप्रक्षेपगौरवं तु फलमुखत्वान्न दोषावहम्। अत एव वाक्यार्थे तत्पदं दातुं प्राच्येन विषये ऽर्पिते। लौकिको वाक्यभेदेन विग्रहो वृद्धसंमतः। अथवा मास्तु तच्छब्दः प्रधानार्थसाम्यमपि औत्सर्गिकमिह त्यज्यताम्। तथा च हरिणा। क्वचिद्गुणप्रधानत्वमर्थानामविवक्षितमित्युपक्रम्य। आख्यातं तद्धितार्थस्य यत्किंचिदुपदर्शकम्। गुणप्रधानभावस्य तत्र दृष्टो विपर्यय इत्युक्तम्॥ तद्धितग्रहणं कृतामप्युपलक्षणम्। तेन आक्षिकः वैयाकरणः पाचकः इध्मप्रव्रश्चनः इत्यादीनां विग्रहवाक्यानीहोदाहरणम्। स्यादेतत्॥ ५५। तद्धितेत्युपलक्षणं वृत्तिमात्रस्य। एवं च वृत्तिसमानार्थकमेव तदर्थबोधकत्वेन इष्यमाणं वाक्यमिति भावः। तदेव प्राधान्यं तच्छब्देन दर्श्यते तच्च सर्वनाम्नामुत्सर्गतः प्रधानपरामर्शकत्वात्तच्छब्देन दर्शितं भवति। चित्रगोसंबन्धीयः स चित्रगुपदवाच्य इत्यर्थात् तत एवं तद्वहतीति सूत्रे भाष्ये तस्येदमित्येव सिद्धे इदं व्यर्थमित्याशङ्क्य वहति वोढेति शब्दस्य भेदान्न तेन विधिरित्युक्ते शब्दभेदेऽप्यर्थसामान्यात्सिद्धम्। य एवार्थो रथं वहतीति स एव रथस्य वोढेत्युक्तम्। तत्र शब्दभेदादिसस्य वहतीति क्रियाप्रधानं वोढेति कर्तृप्रधानमित्यर्थः। अर्थसामान्यादित्यस्य त्वस्यर्थोपदर्शके वहतीत्यत्रापि विशेषणविशेष्यभावव्यत्यासाद् दहनकर्तैत्येवार्थ इत्यर्थः। वर्तमानकालश्चाविवक्षितः। एवमन्यत्राप्यूह्यम्। कालाः परिमाणिनेति सूत्रे भाष्येऽपि स्फुटमिदं सूत्रमदृशामित्याहुः ॥

म॰ भा॰ हेतुकद्विग्विति। तद्धितार्थोत्तरपदेति विहितेनेत्यर्थः। वार्त्तिके उत्तरपदेनेति हेतौ तृतीयेति भावः। नियमभङ्गो नेति। इदञ्च कैयटानुरोधेन। यद्वा एतस्याधारत्वं तदन्वय
१५६ द्वारैव तस्य क्रियान्वय इति शौण्डादेरस्ति क्रिया च येन तद्द्वारा तदन्विताऽस्यापि तदन्वय इति प्रकारान्तरेणापि तदभङ्ग· सम्भवात्तदन्तर्भावेन मानम्। असंकुशल इ
त्यादौ तत्सत्त्वाद्य प्रतीतेश्चेत्यन्ये। आधेयप्रधान इति। अधिशब्दस्याधिकरणवृत्तिरित्यर्थः। ईश्वराधीन इत्यस्येश्वररूपाधिकरणवृत्तिरित्यर्थः। स्पष्टं चेदं स्वविधाय
चित्रगुर्दण्डीति समासतद्धितवृत्त्योर्लौकिके प्रक्रियावाक्ये पि च चित्रा गो दण्डः एते शब्दाः पञ्चन्ता एवेति मीमांसकाशय इति चेन्नैवम्। येषां बहुव्रीहिः त्रिकत:
शेषः। अस्तिसामानाधिकरण्ये मतुप्। समर्थानां प्रथमादित्यादिसूत्रभाष्यविरोधेन वृत्तेरेव तत्र दुर्लभत्वादिति दिक्। प्रकृतमनुसरामः। उत्तरपदेनेति। परिमाणु
त्तरपदहेतुकद्विगुसिद्धये बहूनां तत्पुरुषो वक्तव्य इत्यर्थः। सुप्सुपेत्येकत्वस्याविवक्षितत्वाद् प्राप्तेर्वचनम्। अह्नादेश इति। त्रिपदस्तत्पुरुषानन्तरमुत्तरपदेप
रतोऽवान्तरद्विगोरसत्त्वान्नेति भावः। सप्तमी शौण्डैः। बहुवचननिर्देशाद्गणपाठसामर्थ्याच्चाद्यर्थावगतिरित्यभिप्रेत्याह। शौण्डादिभिरिति। शौण्डः प्रवीणः। इ
हआसक्तिरूपा क्रिया वृत्तावन्तर्भवति तद्द्वारकं च सामर्थ्यम्। यथा दध्नोदनगुडधानादौ। तेन कारकाणां क्रिययैव संबन्ध इति नियमस्य भङ्गो नेति बोध्यम्। अधिशब्द
इति। आधेयप्रधान इति शेषः। अधिकरणप्रधानस्य तु अव्ययीभाव एव अधिहरीति यथा। अन्तःशब्दोऽप्यत्र पठ्यते स चाधिकरणप्रधानः मध्य इत्यर्थात्तद्योगेऽवयविन
आधारत्वविवक्षायां सप्तमी यथा वृक्षे शाखेति। वनेऽन्तः वनान्तर्वसति। यत्तु अधिकरणत्वमात्रवृत्तिरन्तःशब्दस्तस्य विभक्त्यर्थ इत्यव्ययीभावो नित्यसमासः। प्रनिरन्तरिति
-गालमतर्वणम् ॥ ७ के भाष्ये। अधिकरणप्रधानस्येति। अधिकरणशक्तिमात्रबोधकस्येत्यर्थः। अधिकरणप्रधान इति। मध्यगताधिकरणत्वशक्तिप्रधान इत्यर्थः। तदाह।
मध्य इत्यर्थादिति। वनेऽन्तरिति। वनवृत्तिमध्यभाग इति बोधः। अधिकरणत्वमात्रेति। नतु मध्यालिङ्गिततद्वृत्तिरित्यर्थः ॥ म॰ भा॰ १५६

असङ्गतेरिति। अव्ययीभावनित्यत्वेनापेक्षायास्तत्रासम्भवादिति भावः। अन्यथा। अतोऽधिकार्थतनितप्यव्ययीभावस्वीकारे। अतिप्रसङ्गाच्चेति। चो हेतौ। अन्यथाऽन्यथेति पदोपादानसाद्धे
दिलन्तराकथनेनतदसङ्गतिः स्पष्टैव। अवयविन इति। तद्रीत्या मध्यगताधारत्वं वनत्वेऽपि न गताधारत्वं वानकत्वं न तस्येति भावः। अधिकरणप्रधान इति। शक्तिमत्प्रधान इत्य
यत्तु हरदत्तेनोक्तम्। तत्पुरुषस्य वैकल्पिकत्वात्सेऽव्ययीभाव इति। तच्चिन्त्यम्। तत्पुरुषस्य वैकल्पिकत्वेऽपि अव्ययीभावस्य नित्यत्वाद् दूनेऽन्तरिति तदुक्तविग्र
हस्यैवासंगतेः। किंच विभक्त्यर्थमात्रवृत्तेरव्ययीभावो मध्यवचनग्रहणसामर्थ्यात्। अन्यथा वृक्षस्योपरीत्यादावतिप्रसङ्गाच्च। तत्कथं मध्यवाचिनः प्रसङ्गः। किंच प्र
क्रियावाक्यान्तर्गतविभक्त्यर्थवृत्तेरेवाव्ययस्य समासः सन्निधानात्। नन्त [illegible] र्थादे निपातेनाभिहितेऽपि सप्तमीति स्थितम्। न चैनेदिहास्ति। अवयविन आधारत्वविव
क्षायां सप्तमीति त्वयैवोक्तत्वादिति दिक्। यदप्याहुः। अन्तः शब्दोऽधिकरणप्रधानः तत्सामानाधिकरण्याद्वनात् सप्तमी वनरूपे मध्ये वृत्त्यर्थात्। वनेऽन्तर्वनान्तर्वस
ति। पूर्वपदार्थप्राधान्येतु अव्ययीभावः वनस्यान्तरन्तर्वणमिति। अत्रेदं वक्तव्यम्। सामानाधिकरण्ये सप्तमीत्यसंगतं अधिकरणसमासप्रकरणात् विशेष
णं विशेष्येणेत्यनेन गतार्थत्वात्। किंच मध्यवाचिनाव्ययीभावो दुर्लभः। लक्षणाभावात्। अथान्यपमिति योगविभागेन कथंचित् उपपत्तिं ब्रूषे अपदिशामि
तियथा। तर्हि सप्तम्येवेहापि नित्यसमासत्वाद्विग्रहत्वं स्यात्। तथा च वनस्यान्तरिति त्वदुक्तिर्विरुध्येत। दिक्संख्ये संज्ञायाम्। नियमार्थमिति। कथं तर्हि त्रिलोक
नाथेन सतां मखद्विषः इति कालिदासः। त्रिलोकशब्दस्यासंज्ञात्वान्न च समाहारे द्विगुः। द्विगोरिति ङीप्प्रसङ्गात्। न च पात्रादित्वं कल्प्यम्। यदि त्रिलोकीगण
नापरा स्यादिति प्रयोगविरोधात्। न चोत्तरपदद्वितिसमासः। त्रिपदतत्पुरुषस्येह दुर्लभत्वात्। अत्रोच्यते। लोकशब्दोऽत्र लोकसमुदायपरः। अवयवत्रो लोक
त्रिलोकः ॥ र्थः। असङ्गतमिति। विशेषणसमासेनैव गतार्थत्वात्तदाह। अधिकरणेति। एवं चैतत्प्रकरणे तत्पर्थ [illegible] नमनुचितमिति भा
वः। इह। शास्त्रे। दुर्लभत्वादिति। सुप्सुपेतिउक्तेरिति भावः ॥

शाकपार्थिवादिरिति। नचकैयटोक्तव्याख्यानेदोषः। शाकप्रियपार्थिवइत्यादिर्वारणायतद्वचनस्यावश्यकत्वेनकैयटोक्ततद्व्याख्यानस्यासङ्गतत्वादितिभावः। तद्बुधनयन्नाह। एतच्चे
ति। भाष्यएवेति। तत्रहित्रैविद्यइत्यर्थमन्यवैयाकरणैस्त्रिविद्यामधीतेइतिविग्रहइत्युक्तम्। एतेनेति। नवरसरुचिरामित्यस्यनवावयवकरससमूहेनरुचिरामित्यर्थइतिभावः। एकापिसप्तमीति। एको
च्चारणविषयापिसप्तमीतन्त्रेणोच्चारणाद्भिद्यतइत्यर्थः। द्वन्द्वसाधुत्वंतुसौत्रत्वात्। स्पष्टंचेदमादेशप्रत्यययोरितिसूत्रेमूले। विषयेइति। अतएवपौर्वशालइत्यादौतद्धितोत्पत्तिः।
अन्यथाउक्तार्थानामप्रयोगइतिनस्यादितिभावः। प्रतिपदोक्तत्वादिति। निरवकाशत्वाभावेपिप्रतिपदोक्तत्वेनशीघ्रोपस्थितिकत्वाद्न्याय्यमितिभावः। प्राचाग्रन्थमिति। भाष्यग्रन्थ
शाकपार्थिवादिः। एतच्चद्विगोर्लुगनपत्यइतिसूत्रेभाष्यएवस्पष्टम्। एतेननवरसरुचिरामित्यादिव्याख्यातम्। तद्धितार्थ। एकासप्तमीविषयभेदाद्भिद्यतेइत्याश
येनाह। तद्धितार्थविषयेइत्यादि। सर्वनाम्नइति। एतच्चपूर्वापरोदाहरणान्वयि। यद्यपिस्त्रियाःपुंवदित्यनेनापिप्रकृतेनिर्वाहःसिद्धस्तथापिदक्षिणपूर्वस्यादिशि
त्यर्थेसर्वनाम्नइत्यावश्यकंप्रतिपदोक्तत्वादिहापिन्याय्यमितिभावः। षाण्मातुरइति। मातुरुत्संख्येत्युत्। अनपत्यइत्युक्तेर्द्विगोर्लुगितिलुग्न। विकल्पेप्राप्तइति
प्राचाग्रन्थमनुसृत्योक्तम्। वस्तुतस्तुत्रयाणांसमासेकृतेऽन्यपदार्थोपसंक्रमेणपरस्परसंबन्धाभावाद्द्वन्द्वतत्पुरुषयोरप्राप्तौसत्यांवचनमितिध्येयम्। तत्रतद्धि
तार्थेतिसूत्रेणोत्तरपदेपरेतत्पुरुषोवचनसामर्थ्यात्सिद्धः। एकार्थीभावसत्त्वादेवनित्यतापिसिद्धा। नहिमहाविभाषापिसत्येकार्थीभावेसञ्ज्ञायाविकल्पिका। नच
सञ्ज्ञायाभावाभावाविष्येतेइतिभाष्यविरोधात्किंतुवैकल्पिकेकार्थीभावविषयेनित्यैवतत्सञ्ज्ञा। इहतुवैकल्पिकत्वांशोबाधितः ॥ ७ मित्यर्थः। परस्परसंबन्धा
भावादिति। निष्कृष्यपञ्चगोपदमात्रयोः परस्परंसामानाधिकरण्याभावाच्छत्रोपानहस्यचार्थमात्रेवृत्त्यसम्भवादित्यर्थः। अन्यथापञ्चगोधनपदानांपरस्परंविशेष्यविशेषणभावपूर्व
कमेवान्यपदार्थोपसंक्रमाच्छत्रोपानहप्रियइत्यत्रसमूहबोधपूर्वकमेवतदुपसंक्रमात्तदसङ्गतिःस्पष्टैव। वचनसामर्थ्यादिति। ।सामर्थ्याद्भूतपूर्वसामानाधिकरण्यमाश्रित्ये
त्यर्थः। बाधितइति। त्रयाणामेकार्थीभावेद्वयोर्व्यपेक्षायादुर्लभत्वात्। महाविभाष दिव्यपेक्षायाएवपक्षेबोधिकेतिभावः ॥

ज्ञापकसिद्धेति। वचनसामर्थ्यसिद्धतत्पुरुषस्यन्यायसिद्धनित्यत्वरूपार्थस्य वानुवादमात्रमितिभावः। ज्ञापकशब्दोबोधकपरः। अतएवेति। वार्त्तिकस्यतत्पुरुषपदस्यसूत्रसिद्धार्थानुवाद
कत्वादेवेत्यर्थः। त्रिपदेहिबहुव्रीहौखादिरीपदस्योत्तरपदत्वाभावात्पुंवत्त्वंनस्यात्। वार्त्तिकस्यापूर्वत्वेहिशम्यारूपेउत्तरपरेपूर्वयोस्तत्पुरुषेपुंवत्कर्मधारयेत्यनेनपुंवत्त्वंसिद्धमेवेतित
दाश्रयणंव्यर्थंस्यादितिभावः। पूर्वनिपातेति। त्रिपदेबहुव्रीहावितरशब्दस्यसर्वनामत्वात्पूर्वनिपातःस्यादितिभावः। नचैवंपूर्वनिपातव्यावृत्तयेतदाश्रयणस्यावश्यकत्वेकथंपू
कृतार्थसाधकत्वेनास्यकैयटस्योपन्यासइतिवाच्यम्। तपरइत्यादिनिर्देशैस्तत्पूर्वनिपातस्यानित्यत्वेनापितत्सिद्धिरितिपुंवत्त्वमेवमुख्यंफलमित्याशयात्। कर्मधारयपूर्व
पदकबहुव्रीहौतुतस्यविशेषणत्वेनपूर्वनिपातापत्तेः सनकृतः। सूत्रार्थानुवादकत्वेतुनात्रनत्प्राप्तिः। दिक्संख्ययोरभावात्। अतएवेति। ज्ञापकसिद्धार्थानुवादत्वादेवेत्यर्थः।

एवंचवार्त्तिकेतत्पुरुषइत्यंशोज्ञापकसिद्धार्थानुवादमात्रम्। अतएवखादिरेतरशम्यमितिकर्मधारयोत्तरदपदोबहुव्रीहिर्नतुत्रिपदइतिसमर्थसूत्रेकैय
टोक्तंसङ्गच्छतेपुंवद्भावंपूर्वनिपातयोः सिद्धयेहितथोक्तम्। अतएवचित्राजरद्गुरितिसङ्गच्छते। पूर्वकालैकेत्यादेर्जरद्गवादौकृतार्थतयाभूतपूर्वगत्या
प्रवृत्तेरयोगादितिदिक् ॥

अन्यथाचित्राशब्देपुंवत्त्वापत्तिरितिभावः। ननुभौतपूर्विकंसामानाधिकरण्यमादायद्विगुवत् पूर्वकालैकेत्यपिदुर्वारमि
तिटचाद्दुर्वारोऽतआह। पूर्वकालैकेति। तस्यसामर्थ्यात् प्रवृत्तावप्यस्यप्रवृत्तौमानाभावः इतिभावः। दिगर्थस्तुयदिसामानाधिकरण्यमात्रंनियामकंनतुनिष्कृष्यतयोरे
वेत्याग्रह एवमेकार्थीभावमात्रमपेक्षितंनतुनिष्कृष्येत्याग्राहः। अतएवयेनविधिरितिसूत्रेभाष्येप्रस्ययग्रहणेयस्मात्सविहितइत्यस्यपरमगार्ग्यायणसिद्धिः प्रयोजनमुक्तम्।
किंचैवंप्राचीनशालाप्रियायस्यप्राक्शालाप्रियइत्यादौसामानाधिकरण्यनिबन्धनपुंवत्त्वासिद्धिः। पुंवत्त्वेयथाकथंचित्सामानाधिकरण्यंनिमित्तम्। कर्मधारयेतुनिष्कृष्येत्यत्र
मानाभावात्। तथाचार्थवृत्तितादृन्द्वेनियामिकानतुतन्मात्रवृत्तिना। अतिप्रसङ्गस्त्वनभिधानाद्वारणीयः। अतएवभाष्येसंपूर्णवचनमेवप्रत्याख्यातमित्युच्यतेतदामूलंसम्यगेवेति ॥

वाग्दृषद्प्रियइति। अत्र वाग्दृषदोः सामानाधिकरण्याभावेपि प्रियशब्देन तयोः सामानाधिकरण्यात् बहुव्रीहिर्निर्बाधः। पूर्वतन्त्रे जैमिनीये बाधलक्षणे दशमाध्याये। पृष्ठ्यः षडहो द्वादशाहे उत्पन्नास्तत्राहः क्रमेण रथन्तरबृहद्वैरूपवैराजशाक्वररैवतानि सामानि गवामयने पृष्ठ्यः षडह इत्यादिवाक्यम्। द्वन्द्वं कृत्वेति। बृहद्रथन्तरे सामनी यस्येत्यर्थः। नेह द्वन्द्व इति। किंतु त्रिपदबहुव्रीहिरेवेत्यर्थः। स्वरे विशेषस्येति। त्रिपदबहुव्रीहौ पूर्वपदप्रकृतिस्वरेण बृहच्छब्दस्वरः। उत्तरपदे परतो द्वन्द्वे तु सति शिष्टद्वन्द्वस्वरेण बृहद्रथन्तरे इत्यन्तोदात्तमिति स्वरे विशेषः। स्वरविशेषेप्यस्य प्रवृत्तिरिति समर्थसूत्रशेषे भाष्ये स्पष्टम्। तत्रैव हेतुमाह। नित्येति। चो हेतौ। संकोचे। समासान्तमात्रकृतविशेषविषयत्वे। न चात्र द्वन्द्वे पूर्वपक्षद्वन्द्वस्य प्यहः सुउ

द्वन्द्वस्योदाहरणं तु वाक्च दृषच्च प्रिये अस्य वाग्दृषद्प्रियः। कृत्रो पामहप्रियः। इह त्रिपदे बहुव्रीहौ कृते पूर्वयोर्नित्यं द्वन्द्वः। तेन समासान्त टजपि नित्य एव। यत्तु पूर्वतन्त्रे बाधलक्षणे षष्ठस्य युगपद्विधेरेकाहवद्विमामत्वमित्यधिकरणे पृष्ठ्यः षडहो बृहद्रथन्तरसामा कार्य इत्युदाहृत्य द्वन्द्वं कृत्वा बहुव्रीहिरिति पूर्वपक्षं रचयित्वा तन्त्रोपष्टम्भकतया कात्यायनवचनमिदमुपन्यस्तम्। यच्च नेह द्वन्द्व इति सिद्धान्तयित्वा कात्यायनवचनं तु समासान्तकृतविशेषमात्रविषयमित्युक्तम्। तदुभयमपि चिन्त्यम्। उत्तरपदे द्वन्द्वं कृत्वेत्यस्यासङ्गतेः। स्वरे विशेषस्य स्पष्टतया समासान्तपर्यन्तमाग्रहे बीजाभावाच्च। नित्यसमासवचनमिति वार्तिकस्य संकोचे प्रमाणाभावाच्च। संख्यापूर्वो द्विगुः। अत्रोक्त इति। अयं भावः। पूर्वसूत्रविषय एवेयं संज्ञानन्तरस्येति न्यायात् ॥

भयोरनुष्ठानापत्तिः। एकस्मिन्नेकमितरस्मिन्नितरदिति ह्यनुष्ठानं सिद्धान्ते इष्यत इति वाच्यम्। षडहापेक्ष इतरेतरयोगेन तदवयवापेक्ष इत्यदोषात्। केषुचिदहःसु घृतेन केषुचित्तैलेन भोजने पि मासं घृततैलाभ्यां भोजयितव्यमितिवत्। यदि तु श्रुतौ बृहत्स्वर ...त्र बृहद्रथन्तरसामेत्यत्र श्रूयते। तदा छान्दसत्वात् त्रिपदे बहुव्रीहौ द्वन्द्वो नेति कल्प्यम्। यदा चार्थान्तरभाविते ऽकार्थीभावस्तदा हि द्वन्द्वस्य नित्यतावार्त्तिकं मम ता। यदा तु तदनन्तर्भाविते कार्थीभावस्तदा द्वन्द्वाप्राप्त्या त्रिपदो निर्बाध एवेत्यन्ये ॥ 

स्वरेण न संभवतीति। तत्र दिक्संख्ये संज्ञायामिति समासेन द्विगुत्वाभावादिति भावः। एवमेवेति। पूर्वनिपातार्थत्वमेवेत्यर्थः। शब्दप्रवृत्तिनिमित्तेनेति। वैयाकरणत्वादीत्यर्थः। पापाणकेति। अत्रापि सूत्रे कुत्सितशब्दः कुत्स्यमानपरः। अत एव। पूर्वपदस्य सदृशत्वात्क्षणिकत्वादेव। नच दर्शनीयायामाता दर्शनीयामातेत्यत्रापि द्वयोरेकविशेष्यकप्रतीतिजनक

एतदर्थमेव हि तत्र योगविभागः कृतः। अन्यथा दिक्संख्ये संज्ञायामिति द्वितीयोत्तरपदसमाहार इत्येव ब्रूयात्। तेन सप्तर्षय इत्यत्र इगन्तकालेति पूर्वपदप्रकृतिस्वरो न भवति किंतु समासान्तोदात्त एव। तथा च लक्ष्यं सप्तर्षयस्तपसे ये निषेदुः सप्तर्षीणां सुकृतां यत्र लोक इत्यादि। सनपुंसकमिति। एतच्च मूले व्याख्यास्यते। कुत्सितानि कुत्सनैः। कुत्स अवक्षेपणे। मत्यादिसूत्रे चकारस्यानुक्तसमुच्चयार्थत्वात् वर्तमाने क्त इत्याशयेनाह। कुत्स्यमानानीति। तदर्थकानीत्यर्थः। वैयाकरणखसूचिरिति। सूचयतेरचः। पः ९९: सन् प्रश्नं विस्मारयितुं खं सूचयति। अहो निर्मलं गगनमिति स एवमुच्यते। दुर्दुरूढ इति। डुलउत्क्षेपे। दुःपूर्वः। औणादिकः कूटप्रत्ययः। बहुलमन्यत्रापीति णिलुक्। रलयोरेकविषयत्वस्मरणाद्दुः। विशेष्यस्य पूर्वनिपातार्थं सूत्रम्। प्रायेणान्येष्वेवमेव। शब्दप्रवृत्तिनिमित्तकुत्सायामेवायम्। संनिधानात्। नेह। मीमांसको दरिद्रः। पूर्वसूत्रेति। पापाणकशब्दौ कुत्सनाभिधायिनौ तयोः पूर्वसूत्रेण समासे सति परनिपातः स्यात्। तस्मात्पूर्वनिपातार्थमिदं सूत्रमिति भावः। लाक्षणिकमिति। अत एव सामानाधिकरण्यात् मृगीव चपला मृगचपलेत्यादौ पुंवद्भावः। उत्तरपदोपस्थितश्यामत्वचापलादिद्वारकमेवेह सादृश्यं गृह्यते संनिधानात्। वागर्थाविवेत्यादावपि हि संनिहितसंकेतादिद्वारकमेव सादृश्यं प्रतीयते। कथं तर्हि उपमानपरमेति चेत्। भूतपूर्वगत्या शक्यार्थमादायेत्यवेहि। सामान्यवचनत्वं चोपमानोपमेयसाधारणधर्मविशिष्टोपमेयपरत्वं बोध्यम् ॥ ७५ त्वेन सामानाधिकरण्यात् पुंवत्त्वापत्तिः। वृत्तौ वृत्तेः प्राक् च सामानाधिकरण्यमेव तत्प्रवृत्तेः। इवशब्दस्य द्योतकत्वाच्च वृत्तेः प्रागपि सामानाधिकरण्यमत्रेति बोध्यम्। भूतपूर्वगत्येति। घनेन तुल्यः श्याम इति वाक्ये तच्छक्यार्थस्य सादृश्ये प्रतियोगित्वेनान्वयादुपमानत्वमस्तीति भावः। उपमेयपरत्वान्नेति। नत्र श्यामा

दिशब्दानां स्पष्टमेव ॥

म॰ श॰ खञ्जपाचक इति। खञ्ज इति गुण इत्यभिमानेनेदम्। नन्वप्रधानमुपसर्जनमिति महासञ्ज्ञयानेकस्य प्रथमानिर्दिष्टत्वेऽप्रधानस्यैव सञ्ज्ञा न प्रधानस्येति सिद्धेः [illegible] ननु अ
१५९ प्राधान्यं कस्येत्यत्रास्य नियामकतेत्यरुचेराह। महेति। निरूढविशेषणेति। विषयताविशेषप्रकारतावदित्यर्थः। तदेव हि लोकस्य विशेषणत्वेन प्रसिद्धम्। गुणक्रिया
उपमितम्। कथं भाष्याब्धिः क्वातिगम्भीर इति कैयटः। सामान्यप्रयोगस्त्वेनास्याप्रवृत्तेः। उच्यते। इह गाम्भीर्येण सादृश्यं न विवक्षितं किं तु विततदुरवगाहत्वादि। नात्स्य चा
प्रयोगस्त्वेवेति निर्बाधः समासः। विशेषणम्। ननु विशेषणविशेष्यभावे कामचारात्पाचकपाठकादौ विनीलोत्पलादाविव अव्यवस्थितः पूर्वनिपातः स्यादिति चेत्। अ
त्राहुः। जातिशब्दस्य गुणक्रियाशब्दयोः समभिव्याहारे विशेष्यसमर्पकतैव। तेन नीलोत्पलं पाचकब्राह्मण इति व्यवस्थित एव प्रयोगः। गुणशब्दयोः क्रियाशब्दयोर्गुणक्रि
याशब्दयोस्त्वनियम एव। खञ्जकुब्जः कुब्जखञ्जः। पाचकपाठकः। पाठकपाचकः। खञ्जपाचकः। पाचकखञ्ज इति। अत्र च मूलमुपसर्जनमिति महासञ्ज्ञा। अप्रधानं ह्यु
पसर्जनम्। गुणक्रिययोस्तु द्रव्यं प्रत्यप्राधान्यं स्पष्टमेवेति। यद्वा विशेषणविशेष्ययोर्द्वयोः सम्बन्धिकतया अन्यतरोपादानमात्रेणेतरस्यापि सम्भवे उभयोपादानं निरूढविशेष
णाविशेषपरिग्रहार्थम्। निरूढिश्च प्रागुक्ता भाष्यकारादिव्यवहारादवसीयते। पूर्वापर। अपरस्येति। एतच्च पश्चादिति सूत्रे भाष्ये स्थितम्। बाहुलकादिति। एके तु मुख्येषु वी
रयते पराक्रमते इति वा बोध्यम्। श्रेणिकृता इति। एकेन शिल्पेन पण्येन वा ये जीवन्ति तेषां समूहः श्रेणिः। कृताकृतमिति। एकदेशकरणात्कृतम्। एकदेशान्तरस्याकरणात्तदेवा
कृतम्। सन्महत्। गुणक्रियाशब्दैः सह समासे एषां पूर्वनिपातनियमार्थं सूत्रम्। तत्पुरुषः। समानाधिकरण इत्यस्यार्थः आद्यजन्तम्। औपचारिकं वा। समानाधिकरणपद
इत्यर्थः। भाषितपुंस्कादित्यादि। एतच्च स्त्रियाः पुंवदिति सूत्रे स्फुटीकरिष्यते ॥ ॐ हारकस्य तादृशविषयतात्त्वमत आह। रूढिश्चेति। रूढिविषयतादृशविषयतावत्त्वमित्य
र्थः। अत्र संज्ञात इति। गुणादेरेतादृशविषयतावत्त्वं निश्चीयत इत्यर्थः। एकेनेति। अनेकशिल्पादिजीविन एकशिल्पादिजीविन —— कृता इत्युदाहरणार्थः। असमू राम॰
हरूपाः समूहरूपाः कृता इति वा। गुणक्रियेति। सत्पाठकः सच्छुक्ल इत्यादौ ॥ १५९

रूढिशब्देति। तेच मतल्लिका मचर्चिका प्रकाण्डमुद्धतल्लजौ। प्रशस्तवाचकान्यमूनीति कोशप्रसिद्धा मतल्लिकादयः। न्याय्यमिति। नच युवत्वारोपवत् पुंस्त्वस्याप्यारोपेण सामा
नाधिकरण्यमुभयारोपापेक्षया लक्ष्यानुसारेण परिभाषाज्ञापनस्यैवौचित्यात्। पूर्वान्तग्रहणेति। पूर्वान्ततया ग्रहणे इत्यर्थः। क्वचित्तथैव पाठः। पूर्वनिपाते विशेष इति। गुणवचनत्वात् ग
ननु तेनैव कर्मधारये सिद्धम्। जातीयदेशीययोश्च तसिलादिष्विति सिद्धम्। तत्किमनेन सूत्रेणेत्यत आह। पूरणीत्यादि। तयेत्यादि च स्त्रीपुंसलक्षणेति। स्तनकेशवत्यादियुक्ता
स्त्री पोटेत्यमरव्याख्यातारः। हरदत्तस्तु नपुंसकं पोटेत्याह। तत्र मूलं मृग्यम्। अमरेण नपुंसकपर्यायेभ्यः पृथगेवास्य पाठात्। कठधूर्त इति। नात्र कठत्वं कुत्स्यते। अतः कुत्सितानि कु
त्सनैरिति गतार्थता न शङ्क्या। प्रवृत्तिनिमित्तकुत्सायामेव तस्य प्रवृत्तेः। कथं तर्हि जनयति कुमुदभ्रान्तिं धूर्तबको बालमत्स्यानामिति बकधूर्त इति युक्तम्। सत्यम्। प्रमाद एवाय
मिति प्रामाणिकाः। प्रशंसावचनैश्च। वचनग्रहणं रूढिशब्दपरिग्रहार्थम्। ये तु यौगिकाः प्रशस्तशोभनरमणीयादयः ये च विशेषवदनाः सुषिमूढादयः ये च गौण्या वृत्त्या प्रशं
सां गमयन्ति सिंहो माणवक इत्यादयस्ते सर्वेऽप्युदस्यन्ते। कुमारः। एतदेवेति। एवकारः स्फुटसिद्धत्वद्योतनार्थः। ज्ञापकान्तरस्यापि संभवात्। तथाहि। युवाखलतीति सूत्रे जर
तीग्रहणं लिङ्गम्। नहि युवन्शब्दस्य पुंस्त्वे जरतीसामानाधिकरण्यं न्याय्यम्। यत्तु अश्वादिभ्यः फञ्विधौ पुंसि जात इति गणसूत्रे पुंसीत्युक्तिरपीह ज्ञापिकेति। तन्न। एका
शस्य पूर्वान्त ग्रहणे ज्ञापकस्य मूलशैथिल्यात्। चतुष्पादो गर्भिण्या। मण्डूकप्लुत्या जातिरित्यनुवर्तते। तेनेह न। कालाक्षी गर्भिणी। चतुष्पात् किम्। ब्राह्मणी गर्भिणी। प्रत्युदा
रणे तु विशेषणमिति समासः स्यादेव। पूर्वनिपाते विशेषः। मयूरव्यंसकादयश्च। चकारोऽवधारणार्थः। समासान्तरं व्यावर्तयति। धूर्त इति। तथा च गुणवचनत्वात् पूर्वनि
पाते प्राप्ते इदं वचनमिति भावः। अन्ये त्वाहुः। मयूर इव व्यंसको मयूरव्यंसकः। उपमानानि सामान्यवचनैरिति सिद्धे पुनर्विधानं तत्पुरुषे तुल्यार्थेति स्वरो माभूदिति। मन्यु
प्रधानशब्देन विहिते समासे प्रवर्तते। अश्नीतपिबतेति। इह क्रियारूपस्यान्यपदार्थस्य प्राधान्यात्स्त्रीत्वाट्टाप् ॥
र्भिणीशब्दस्य पूर्वनिपात इति भावः। उपमानशब्देनेति। लक्षणप्रतिपदोक्तपरिभाषयेति भावः। इदं च मतं कैयटे स्पष्टम्। क्रियारूपस्येति। क्रियापदवाच्यरूपस्येत्यर्थः ॥

म॰ शे॰ भिन्नवाचीति। पूर्वपदार्थप्रधानश्चायम्। भिन्नेनेति। तेन नञा भ्यां विग्रहान् उत्तरपदार्थेति। स्पष्टं चेदं भाष्ये। आरोपितत्वं नञा द्योत्यते इति ——— आरोपितब्राह्मणत्वं ब्रा
१६० ह्मणपदप्रवृत्तिनिमित्तमित्यब्राह्मण इत्यत्र नञा द्योत्यत इत्यर्थः। एवमन्यत्रापि बोध्यम्। एतदेव भाष्यसंमतम्। नञो वाचकत्वे आह। आरोपमात्रं वेति। इदं नञ्वाच्यमेकेत्युक्तं पदार्थविशेषणं
तदाह। विषयत्वं तु संसर्ग इति। तादात्म्यारोपश्चात्र। नामार्थयोरभेदान्वयव्युत्पत्तिस्तु निपातातिरिक्तविषयेति भावः। यत्तु अत्रापि पक्षे द्योतकतैव नञ इति। तन्न। समभिव्याहृत नञ्पदशक्त्याद्युद्बो
धकत्वस्य द्योतकत्वे विशिष्टस्यैव तच्छक्तिविषयतया पृथगुपस्थित्यभावे न विषयत्वं तु संसर्ग इत्यस्यासंगतेः। पृथगुपस्थितयोर्हि संसर्गो भवतीत्याहुः। आरोपितो ब्राह्मण इति। अयं मन्दबोधाकारः।
आद्ये तु आरोपितब्राह्मणत्ववानिति प्रदर्शनीयम्। अत्राद्यमेव युक्तं नत्वन्त्यम्। तस्य नञर्थत्वे पि ब्राह्मणादिपदानां मुख्यसंबन्धेन ब्राह्मणत्वादिमति शक्तिग्रहात् तत्रारोपितत्वान्वयस्य दुर्घटत्वात्। न

एवमग्रेपि। राजान्तरमिति। अन्तरशब्दो भिन्नवाची। मात्रं कार्त्स्न्येवधारणे। अन्तरमात्रशब्दाभ्यां सह नित्यसमासः। नञ्। उत्तरपदार्थप्रधानोयं समासः। तथाहि। आरोपितत्वं न
ञा द्योत्यते। आरोपमात्रं वा। विषयत्वं तु संसर्गः। तथा च अब्राह्मणशब्दादारोपितो ब्राह्मण इति बोधे अर्थाद्ब्राह्मणभिन्न इति पर्यवस्यति। अत एवानुपसर्जनत्वादतस्मिन्निति
त्यादौ सर्वनामकार्यं सिद्ध्यति ॥ ७७ च नञ्समभिव्याहारात्तदर्थत्यागः। शब्दार्थसंबन्धस्यानित्यत्वापत्तेः। मम तु न दोषः मुख्यसंबन्धेन ब्राह्मणत्ववतद्वारोपितसंबन्धेन ब्रा

ह्मणत्ववतोपि तदर्थत्वात्। नञ् तु स्वविशिष्टस्य तदर्थकत्वतात्पर्यनिर्णायकः। इदमेव नञो द्योतकत्वं नाम। एतावतैवात्रैकार्थीभावव्यवहारोपि विशिष्टानुपूर्व्या द्योत्य। पौनर्भावेण
शक्यावच्छेदकत्वाद्विशिष्टस्यार्थवत्त्वम्। समासविधायकशास्त्रबलादत्रैवमेव कल्पनोचिता। प्रजयतीत्यादौ तु नैवम्। अडादिव्यवस्थार्थमन्यथा तत्र कल्पनात्। लोकस्तु तत्रा
पि विशिष्टशक्त्यैव बोधः। अवयवशक्तिबोधनद्वारा विशिष्टस्य विशिष्टशक्तिबोधकमेव व्याकरणमिति दिक्। पर्यवस्यतीति। भेदे एवारोपस्य संभवादिति भावः। अत एवा उ राम॰
त्तरपदार्थप्रधानत्वादेव ॥ १६०

इह लिङ्गमिति। अन्यथोपसर्जनत्वाद् त्यानापत्तौ हल्ङ्यादिलोपस्य दुर्वारत्वेन तद्वैयर्थ्यस्य स्पष्टमेव। नच वचनसामर्थ्यादुपसर्जनत्वेऽप्यत्वमिति वाच्यम्। लाघवेनोत्तरपदार्थप्राधान्यस्यैव ज्ञापयितुं युक्तत्वात्। अब्राह्मणानन्वयो विशेषश्चिन्त्यः। आर्थिकार्थमिति। आरोपितत्वबोधोत्तरं प्रकरणादितात्पर्यग्राहकवशान्नञस्तदर्थबोध इति भावः। उत्तरपदप्राधान्यम्। तदर्थप्राधान्यम्। भाष्योक्तमित्युनेन कैयटाद्युपपादितपूर्वपदार्थप्राधान्यपक्षस्य तदसम्मतत्वमुक्तं बोधितम्। तच्चान्यत्र प्रपञ्चितम्। वास्तवबहुत्वेति। नञ्समासेऽरोपे

तत्पुरुषस्यौत्सर्गिकमुत्तरपदार्थप्राधान्यमप्येवं सति निर्बाधम्। एतत्तदोरिति सूत्रे नञ्समासग्रहणं चेह लिङ्गम्। मीमांसकादयस्तु ब्राह्मणभिन्न इत्यादिशाब्दबोध एवेत्याहुः। तन्मतेऽसदित्यादेः अतिसर्वद्वित्यादिसमकक्षत्वात्सर्वनामसञ्ज्ञाकार्यं गणकार्यं च न स्यात्। यत्तु तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता। अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिता इति पठित्वा अब्राह्मणः। अपापम्। अनश्वः। अनुदरा कन्या। अपशवो वा अन्ये गोअश्वेभ्यः। अधर्मः। इत्युदाहरन्ति। तत्तु मयापि सर्वमार्थिकार्थमभिप्रेत्य कथंचिन्नेयम्। सर्वथापि नञ्समासस्योत्तरपदप्राधान्यं भाष्योक्तं नान्यथयितव्यम्। अत एवानेकमन्यपदार्थ इत्यत्रानेकशब्दादेकवचनं प्रयुक्तम्। माघेऽपि। सेव्यतेऽनेकया सन्ततायाङ्गयेति। कथं तर्हि पतन्त्यनेके जलधेरिवोर्मय इति। उच्यते। अध्यारोपितैकत्वानां प्रकृत्यर्थतया तत्र वास्तवबहुत्वाभिप्रायं बहुवचनम्। यद्वा समुदायबहुत्वे बहुवचनम्। रयोः श्वोराजश्च प्रत्येकमनेकत्वात्। अनेकश्चानेकश्चेत्येकशेषात्। यत्तु प्राचीनप्रक्रियायां व्याचक्षाणा आहुः। नञ्विशिष्टेनोत्तरपदेन सादृश्याद्योतकत्वादि।

विषये आरोपितस्योत्तरत्वेनोत्तरसंख्यायाश्च पूर्वसंख्याव्यवहारप्रतिबन्धकत्वान्न तत्र बहुत्वभानम्। शब्देनैकत्वस्यैवोपस्थितेः। अन्यथाऽनेकमन्यपदार्थ इत्यत्रापि वास्तवबहुत्वसत्त्वाद् बहुवचनापत्तिरित्यरुचेराह। यद्वेति। रयोर्गजइत्युपलक्षणं ज्ञापकसमूहस्यापि। अनेके इत्यस्य पदाभेदेनो भङ्गविशेषणत्वात्। त्वाद्रथाद्य इति। तदन्तद्इत्यर्थः। कारिकायां सदृशादीनामिति पाठदर्शनात् ॥

म॰ श तत्त्वकीयेति। तद्ग्रन्थेपि पूर्वन्तेषामार्थिकार्थत्वकथनात्। आकरविरुद्धं चेति। विशिष्टेन लक्षितस्य प्राधान्येपि आकरोक्तोत्तरपदार्थप्राधान्यहानेरिति भावः। मासजातवदिति। तत्र प
१६१ थाजातस्य प्राधान्यं तथा प्रकृते ब्राह्मणादेरारोपितो ब्राह्मण इति बोधात्। नञर्थमिलितम्। नञर्थप्रकारेण जनितबोधम्। तत्समस्तं पदम्। आकृत्या सदृशादिलक्षकमित्यर्थ इति त
द्यास्मातारः। भाष्यविरुद्धमिति। तथा प्रकारस्य भाष्येऽनुक्तेः। अर्थत एव तद्बोधसंभवेन लक्षणायाः व्यर्थत्वाच्च। समर्थयितुमिति। मीमांसकाद्युक्तपूर्वपदार्थप्राधान्यमिति शेषः। लक्ष
णीवेति। नञो भेदवत्त्यर्थे इत्यर्थः। इदमुपलक्षणम्। निपातानामनेकार्थत्वादित्यस्यापि। ज्ञापकादिति। नञ्समासे उत्तरपदार्थप्राधान्ये सति यद्यद्भवति तत्पूर्वपदार्थप्राधान्येपीति सा

तत्त्वकीयग्रन्थसंदर्भविरुद्धमाकरविरुद्धं च। यद्यपि विचारचिन्तामणावुक्तम्। समासे तूत्तरपदप्राधान्यं मासजातवत्। नञर्थमिलितं तत्सदृशादौ निलक्षये
दिति। तदप्युक्तरीत्या भाष्यविरुद्धमिति स्पष्टमेव। यदि तु स्वातन्त्र्यमेवावलम्ब्यते तर्हि कथंचित्समर्थयितुं शक्यम्। तथा हि। अस्तु लक्षणैव। तथापि नञ्समासे उत्त
रपदप्राधान्यप्रयुक्तकार्याणि न स्युः। अनञ्समास इति ज्ञापकात्। उपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिता इति न्यायात्। समासेत्विति वृत्तिवाक्येन ओऽसम
स्तत्वात् किमर्थे वान्वय इति ध्वनयति ॥

॥ मान्यापेक्षज्ञापकादनेकमित्यादावेकवचनस्यापि सिद्धिः। एवमाश्रयणेति गौरवं लाघवाद्दुत्तरपदार्थप्राधान्यं ज्ञापक
कत्वमेवोचितम्। एतदेव ध्वनयतोक्तम्। कथंचिदिति। यत्तु इदं समर्थनं विचारचिन्तामणिश्लोकोत्तराद्धीर्यस्येति। तन्न। तत्रोत्तरपदस्य तदर्थलाक्षणिकत्वे तद्विशेष्यकबो
धे चोपसर्जनत्वासंभवेनात्वादिसिद्धये ज्ञापकोपन्यासवैयर्थ्यापत्तेः। लाक्षणिकतामात्रेणोपसर्जनत्वाभावाद्विशिष्टस्य लाक्षणिकत्वे तूत्तरपदप्राधान्यमिति तदुक्तिविरोध
दित्यूह्यम्। नन्विदं भाष्येनोक्तमत आह। उपेयेति। लक्ष्येत्यर्थः। एवं समर्थनेप्यत्रासाधुत्वमेव मुनित्रयसंमते एवं शब्दानां साधुत्वस्य सर्वसंमतत्वादिति बोध्यम्। वदन्ति राम:
ति। विचारचिन्तामणिकृदिति भावः ॥ १६१

यत इति। यतोवधारितं ततो ध्वनयतीत्यन्वयः। संबोधनान्तम्। अत्र संबोधनपदं यच्च तत्क्रियाया विशेषणमिति हरियुक्तिः प्रमाणम्। कृत्वोर्थाः क्रियाजन्मगणने तद्विधानात्। कारकं
म्। कर्त्रादिषट्कम्। क्रियाजनकस्यैव कारकाधिकारेण कर्त्रादिसञ्ज्ञाविधानात्। प्रथमो भवतिः। तेन तुल्यं क्रिया चेदिति विहितः। असमस्तनञ्। प्रसज्यप्रतिषेधार्थक इति शेषः।
अत एव प्रसज्यप्रतिषेधे समर्थसमास इति तत्र तत्त्वभाष्यकृत्। एतत्। असमस्तनञः क्रियान्वयित्वम्। वचनपुरुषव्यवस्थेति। घटाभावो मद्भाव इत्यर्थे एकवचनप्रथमपुरु

यतः। संबोधनान्तं कृत्वोर्थाः कारकं प्रथमो भवतिः। धातुसंबन्धाधिकारनिष्पन्नमसमस्तनञ्। १। तथायस्य च भावेन षष्ठी चेत्युदितं द्वयम्। साधुत्वमष्टकस्यास्य क्रियये
वावधार्यताम्। २। युक्तं चैतत्। त्वं पचसि। युवां पचथ। इत्यादौ नञ्समभिव्याहारे क्रियाया एव निषेधप्रतीतेरनुभवसिद्धत्वात्। भवति प्रयोगोपि तथैव न्यायत्वात्। घ
टो नास्ति। पटौ न स्तः। अहं तत्र नास्मीत्यादौ वचनपुरुषव्यवस्थादर्शनाच्च। अन्यथार्थाभावेऽव्ययीभावस्य दुर्वारत्वाच्च। यत्तु भूतलाधेयत्वाभाववान् घट इत्यर्थवर्णनं तन्न। क्रि
यानन्वये कारकविभक्तेर्दुर्लभत्वात्। तस्मात्कारकविशिष्टक्रियायां नञर्थस्यान्वयः शाब्द इत्येव तत्त्वम्। भाष्यवार्तिकेऽप्युपलक्षणम्। सांप्रदायिकास्तु पूर्वपदार्थप्राधा
न्येऽव्ययीभावः उत्तरपदार्थप्राधान्ये तत्पुरुष इति विषयविवेकस्य सुलभत्वात्। यत्तु वदन्ति। यदा भावसामान्येन नञ् वर्तते तदाऽव्ययीभावः। अभावविशेषविवक्षा
यां तत्पुरुष एव। तस्य नञर्थत्वाभावेन पूर्वपदार्थप्राधान्यासंभवादिति। तन्न। पापाभावोऽपापमिति त्वदुक्ततत्पुरुषोदाहरणेऽपि अभावत्वेनैवाभावभाने नाव्ययीभाव
स्य दुर्वारत्वात्। यदपि विशेषस्य नञर्थत्वं नास्तीति। तदपि न। निर्विशेषस्य सामान्यस्याभावात्। विशेषणरूपेण वाच्यत्वं नास्तीति चेत् ॥

यपोरेवापत्तिरिति भावः। अन्यथा। घटाभावबोधे। वचनपुरुषव्यवस्थावदिदमपि दूषणमित्यर्थः। कारकविशिष्टक्रियायामिति। भूतले घटो नास्तीत्यादौ भूतलाधिकरणकघ
टकर्तृकसत्ताभाव इति बोध इति भावः। पूर्वपदार्थप्राधान्य इति। असंहितमित्यस्य संहिताभाव इत्यर्थात्। असंदेह इत्यत्रारोपितसंदेहो निश्चय इत्यर्थः। इति बोधेन तद्भावप्रती
तिराथीभेदेन धर्मिण आरोपात्। एवमनुपलब्धिपदेपि बोध्यम्। न्यायसिद्ध एवं च लिङ्गदर्शनं मूलोक्तमिति तत्त्वम्। अभावसामान्य इति। अत्यन्ताभावत्वादिना बोधाविषयीभावत्वे
न बोधविषयस्य सामान्यमित्यभिमानस्तेषाम्। अव्ययीभाव इति। नत्रात्यन्ताभावत्वेनैव बोधादिति भावः। नशब्देनेतीति। निषेधार्थनाशब्देनेत्यपि बोध्यम् ॥

म० श० इत्येवेति। अत्र नञा नशब्देन चैकशब्दस्य समासस्तत्तोधा। प्रकारेनेकसंख्यात्वप्रतीतेः। एकप्रकारे नानर्थान्वयाननुभवाच्च। एवमेवानेकरूपो रुद्रानुरिति विष्णुसहस्रनामप
१६२ यो नेकरूप इत्यर्थे नैकशब्देन रूपशब्दस्य बहुव्रीहिर्बोध्यः। गतिसंज्ञाविकल्प इति। तत्फलं समासविकल्पः। कथमिति। गतित्वे तेप्राग्धातोरिति धातोः प्रतिवप्रयोगः स्यादिति
तर्हि भविप्रमित्यादिरव्ययीभावो दत्तजलाञ्जलिरेव स्यादिति न किंचिदेतत्। नञो नलोप इति। तिङन्तेन समासाभावादप्राप्तेव वचनम्। अपचसीति। कुत्सितं पचसीत्यर्थः।
नशब्देनेति। नञा समासे त्वनेकधेत्येव भवतीति भावः। ऊर्यादिच्विडाचश्च। च्विडाचौ कृभ्वस्तियोगे विहितौ ऊर्यादयोऽपि स्वभावात् तत्रैव प्रयुज्यन्ते। तत्रापि आविः प्रादुःश
ब्दौ तु कान्येषां करोतिनैव योग इति माधवादिग्रन्थे स्थितम्। तथैवोदाहरति। ऊरीकृत्येति। आविः शब्दस्य तु साक्षात्प्रभृतिषु पाठात् कृञो योगे गतिसंज्ञाविकल्पः। भ्व
स्तियोगे तु अनेन नित्यमिति विशेषः। कथं तर्हि वारुणीमदविशङ्कमथाविरस्तु षोऽभवदस्तविरागइति माघः। अभवद्युगपद्विलोलजिह्वायुगलीटोभयसृक्कभा
वमाविरिति च। निरङ्कुशाः कवय इति हरदत्तः। वस्तुतस्तु तेप्राग्धातोरिति सूत्रस्य प्रयोगनियमार्थत्वे प्रकृतेऽनुपपत्तावपि संज्ञानियमार्थत्वपक्षे दोषलेशोऽपिना
स्तीति प्रपञ्चितं शब्दकौस्तुभे। एतेन पुरो रामस्य जुहवांचकारज्वलनेवपुरिति भट्टिर्व्याख्यातः। हतं परिगृह्येति। हत्वागमनं द्विधा हतं त्यक्त्वा परिगृह्येति। आ
द्यमुदाहरणं द्वितीयं प्रत्युदाहरणम्। अपरिग्रहे इति च प्रयोगोपाधिर्न तु वाच्यकोटिनिविष्टमिति भावः। कणेहत्येति। अतिशयेनाभिलष्य तच्छिवृत्तिपर्यन्तं पि
बतीत्यर्थः। ततश्च श्रद्धाया अवागमात् तत्प्रतिघातो गम्यते। प्रत्युदाहरणं तु कणेहत्वा गतः। सूक्ष्मस्तण्डुलावयवः कणस्तस्मिन् हत्वेत्यर्थः। पुरस्कृत्येति। नमस्तु
रस्तोरिति सत्वम्। कथं तर्हि अमुं पुरः पश्यसि देवदारुमिति। स्थितमित्यध्याहारेण दर्शितं प्रत्यगतित्वात् ॥
भावः। प्रयोगनियमेति। गत्युपसर्गसंज्ञा धातोः प्रागेव प्रयोक्तव्या इति तस्यार्थः। संज्ञानियमेति। धातोः प्राक्प्रयुक्तानामेव गत्यादिसंज्ञा नान्येषामिति तदर्थः। अयमेव पक्षो मुख्य शमः
लाघवादिति भाष्ये स्पष्टम्। प्रयोगोपाधिरिति। ल्यबन्तप्रयोगयोग्यत्वं पश्चान्मानसबोधविषयमित्यर्थः। श्रद्धा अभिलाषातिशयः ॥ १६२

एतेनेति। पुर इति कौतुके इत्यनेनान्वेति। तस्य च न क्रियावाचकत्वम्। तस्येत्यस्य समीप इति शेष इति भावः। सञ्ज्ञानियमपक्षे तु शङ्कते यनेति भावः। माधव इति। विभाषेति सूत्रे अन्तर्भावितण्यर्थस्य निवृत्त्यापि तत्सिद्धिरित्यन्ये। इहेति। तेन नियचने कृत्वेति सिद्धम्। गतार्थैरन्तिमिति। प्रशब्दादेरिति भावः। नित्यसमासतामिति। तेनान्तोदात्तादुत्तरपदादनित्य

एतेन तस्य स्थित्वा कथमपि पुरः कौतुकाधानहेतोरिति व्याख्यातम्। अस्तं च अव्ययमिति किम्। अस्तं काण्डं प्रक्षिप्तमित्यर्थः। अदः कृत्येति। यदास्य प्रमेयं पर्यालोचयति तदेदमुदाहरणम्। तिरोऽन्तर्द्धौ। अन्तर्द्धौ किम्। तिरोभूत्वा स्थितः। पार्श्वतोभूत्वेत्यर्थः। विभाषा कृञि। तिरःकृत्वेति। गतित्वाभावपक्षे सत्वमपि न। तिरसोऽन्यतरस्यामिति सत्वविधौ गतिग्रहणानुवृत्तेः। केचित्तु पराभवे तिरस्कारशब्दप्रयोगमनुरुन्धानाः सत्वविधौ गतिग्रहणं निवर्तयन्तीति माधवः। वाचं नियमेति। निवचने हि वचनाभावः। अर्थाभावेऽव्ययीभावः। इहांविशेषेण इदन्तानि पाल्यते ननु सञ्ज्ञासंनियोगेन। प्रगत आचार्य इति। अनेन गतार्थैरत्तिमस्य पदविग्रहेणानित्यसमासतां च दर्शयति। अतिमाल इति। एवमभिगतो मुखं मभिमुखः। उद्गतो वेलामुद्वेलः। प्रतिगतोऽक्षं प्रत्यक्षः। उपपदमतिङ्। अतिङिति नोपपदस्य विशेषणं किं तु समासस्य। एतच्च अनव क्लृप्त्यमर्षयोरिति सूत्रे भाष्य एव स्पष्टम्। तत्र हि किंवृत्तस्यानधिकाराद् किंवृत्तग्रहणानर्थक्यमित्युक्त्वा उपपदसञ्ज्ञार्थं तर्हीत्याशङ्क्यातिङिति समासप्रतिषेधात्सञ्ज्ञानर्थक्यमिति सिद्धान्तितम्। न देतदभिप्रेत्याह। अतिङन्तश्चेति। ननु सुपेत्यधिकारात्तिङन्तेन न भविष्यति तत्राह। अतिङ्ग्रहणमिति। पूर्वसूत्र इतः कुगतिप्रादयः सुबन्ताः सुबन्तेन समस्यन्ते। ततः गतिः। गतिः सुबन्तोऽतिङन्तेन समस्यत इति व्याख्येयमित्यर्थः। तथा चेति। पत्यपुक्तरीत्यागत्युपपदयोरेव लाभस्तथापि त्रितयविषयिणी प्राचां परिभाषा एकदेशानुमतिद्वारा इहापि ज्ञाप्यत इति भावः ॥

समासे इत्यनेनानित्यसमासे यदुत्तरपदं तावेकाजन्तोदात्तं ततः परा तृतीयादिर्विभक्तिरुदात्ते त्यर्थकेन न विभक्त्युदात्तत्वम्। एतेन शकपार्थिवादित्वादिदं सिद्धमित्यपास्तमिति भावः। ज्ञाप्यत इति। अतिङ्ग्रहणकरणेन तदर्थस्य स्पष्टत्वं बोध्यत इत्यर्थः ॥

उक्तार्थसाधकमिति। सुबुत्पत्तेः पूर्वं समासो बहुलग्रहणादिति भावः। सुबुत्पत्तेरित्युपलक्षणम्। स्त्रीप्रत्ययोत्पत्तेः प्रागित्यपि बोध्यम्। अनुवर्तत इति। इपरञ्जकत याच य संभवा
दिरोधाभावाच्चेति भावः। उपपदमिति महासञ्ज्ञया सुबन्तस्यैवोपपदत्वात्। अत एवेति। सुबुत्पत्तेरनन्तरमेव तेन समासादेवेत्यर्थः। व्याङोरिति। व्याङोर्मध्ये विशब्दस्य घ्रशब्देन तद
न्तेन घ्रशब्देन गतिसमासस्त्वपर्थः। आङा तूपपदसमास एव। आतश्चोपसर्ग इति सप्तमीनिर्देशात्। उपसर्गत्वपर्याप्त्यधिकरणस्यैकस्यैवोपपदत्वादिति कश्चित्। तन्न। गतिसमासेन सि

यद्वा कारकांशे कर्तृकरणे कृतेति सूत्रस्थं बहुलग्रहणमुक्तार्थसाधकं बोध्यम्। प्रागिति। कृदन्तादुत्तरपदात्सुबुत्पत्तेः प्रागित्यर्थः। प्रथमान्तं सुब्ग्रहणमिहानु
वर्तत एव। अत एव राजदर्शीत्यादौ पूर्वपदे नलोपादिपदकार्यं सिध्यति। परिभाषायाः फलं दर्शयन् गतिमुदाहरति। व्याघ्रीति। व्याजिघ्रतीति व्याघ्री। आतश्चोप
सर्गे इति कः। पाघ्राध्मेति शप्रत्ययस्तु सञ्ज्ञायां नेति वक्ष्यते। व्याङोर्घ्रशब्देन गतिसमासः स यदि घ्रशब्दस्य सुबन्ततामपेक्षेत तर्हि सुबुत्पत्तयेऽसंख्यायपेक्षमा त
तः प्रागेव लिङ्गयोगः लिङ्गनिमित्तश्च प्रत्ययष्टाबेव स्यान्न तु ङीष्। घ्रशब्दमात्रस्य जातिवाचित्वाभावात्। ततो घ्राशब्देन समासे सति अदन्तत्वाभावाज्जातिलक्ष
णो ङीष् न स्यादिति भावः। उपपदमुदाहरति। कच्छपीति। कच्छेन पिबतीति कच्छपी। व्याघ्रीवत्सुपीति योगविभागात्कः। यत्तु प्राचा उपपदमतिङन्तमि
ति व्याख्यातं तन्न। तथा सति प्रथमान्तसुब्ग्रहणनिवृत्त्या बहुविप्लवापत्तेः। तथाहि। निर्गत इत्यत्र निसो रुत्वं संयते त्सत्रमोनुस्वारः राजदर्शीत्यादौ नलोपश्च
न स्यात् ॥

ॐ इत्वात्तत्रोपपदसञ्ज्ञाया एव फलाभावेनाभावात्। अत एव कर्मण्यणिति सूत्रेऽनुपपदत्वेनायं व्यवहृतो भाष्ये। व्याङोश्च क्रमेण घ्रशब्देन तदन्तेन च गतिस
मासद्वयमित्यर्थः। कच्छेनेति। अधिकरणस्य करणत्वविवक्षया तृतीया। न च कारकत्वात् सिद्धम्। कारकत्वेऽप्युपपदत्वाहान्यापरत्वादुपपदसमासस्यैव प्रवृत्तेः। उपपदमिति महास
ञ्ज्ञामाश्रित्य प्रथमान्तस्य निवृत्तिरुच्यते उत तदनाश्रित्य। नाद्यः। तदाश्रयणे त्वतन्निवृत्त्या ग्रे मण्डूकानुवृत्त्या श्रमणे गौरवात्। नान्त्य इत्याह। तथा सतीत्यादि ॥

प्राटितेति। गतिरिति सूत्रे पितदसंबन्धेऽयं दोषः। एवं निर्गतः संपन्नेरिति च प्रत्युक्तमिति। सुबित्येतत्संबन्धेनैव तद्व्यावृत्तावतिङ्पदस्यैव वैयर्थ्यापत्तेरित्यभिमानः। शेषीकृतेनेति। भाष्यकृतेति शेषः। कथमिति। संहितायामित्यत्वादिति भावः। दिगिति। दिगर्थस्तु यदि सुबित्यनुवृत्त्यैव एधानाहरको व्रजतीत्यस्य व्यावृत्तिसिद्धावतिङ्ग्रहणमेवोभयोर्निवृत्तौ ज्ञापकम्। महासंज्ञाकरणाच्च राजदर्शीत्यादौ न दोषः। सुप्यजातावितिणिनेः सुबुत्पत्तिं विनाऽसंभवेन तं विनोपपदत्वाभावेन दोषाच्च। निर्गतदृत्यादौ शब्दान्तरसंबन्धात् पूर्वं सुबन्तत्वे लुकि च पदत्वोत्तरं पदान्तरसंबन्धेन समासेनक्षतिः। माङि लुङित्यादौ सनिसप्तमीति नोपपदत्वम्। फलाभावाच्च। प्रथमार्थे सोत्रे

प्राटितेत्यादौ अतो गुण इति पररूपं च स्यात्। एनेनातिङ्ग्रहणम्। एधानाहरको व्रजतीति प्रत्युदाहरणमपि प्रत्युक्तम्। यदपि कुगतीति सूत्रे उक्तम्। अत्र सुप्सुपेत्यननुवृत्तेस्तिङापि समासः। हुरीकरोतीत्यादि। तदप्यसत्। तत्र शेषीकृतेनातिङ्ग्रहणेनैव विरोधात्। तिङ् समासस्तु सहेति योगविभागबललभ्यश्छान्दसश्चेति प्रागेवोक्तम्। लोके तु प्रभवतीत्यादौ उपसर्गः पृथक्पदमेव। काव्यादिपाठिनामेकपदभ्रमे तु धातूपसर्गयोः संहितायामित्यत्वं मूलम्। कथं तर्हि अग्न आयाहीत्यादौ पदपाठे उपसर्गेऽवसानमिति चेत्। पदपाठस्यापि व्याख्याविशेषतया तत्रानुकरणशब्दत्वेनोपसर्गत्वाभावात्। प्रकृतिवदनुकरणमित्यतिदेशस्य वैकल्पिकत्वाद्यदेतेभ्य इति सूत्रे त्यदाद्यत्वं कुर्वता एकशेषं चाकुर्वता सूत्रकृतैव तथा ज्ञापितत्वादिति दिक्। अमैवाव्ययेन। तुल्यविधानमिति। एतच्च व्याख्याद्वारेण लभ्यम्। तदेवेति ॥

ॐ सप्तम्येव हितन्निमित्तम्। अतएव पशावित्यादीनां नोपपदत्वम्। एधानाहरक इत्यादौ तु क्रियार्थोपपदस्येतिकार्यार्थमुपपदसंज्ञावश्यकत्वेन तत्रास्य प्रवृत्तिव्यावृत्त्यर्थं तच्चरितार्थं ध्वनितं चेदं भाष्ये इत्युच्यते। तदा त्वुभयोर्निवृत्तिः। अतिङन्तश्चेत्यस्य तिङन्ताघटित इत्यर्थः। एवं चोपपदमतिङन्तमिति व्याख्यावसाणस्यानवक्लृप्त्यमर्षयोरिति सूत्रस्य भाष्यविरोधो दूषणमिति ॥

उक्तार्थसाधकमिति। सुबुत्पत्तेः पूर्वं समासो बहुलग्रहणादितिभावः। सुबुत्पत्तेरित्युपलक्षणम्। स्त्रीप्रत्ययोत्पत्तेः प्रागित्यपि बोध्यम्। अनुवर्त्तत इति। उपरञ्जकतयान्वयसंभवा द्विरोधाभावाच्चेति भावः। उपपदमिति महासञ्ज्ञया सुबन्तस्यैवोपपदत्वात्। अत एवेति। सुबुत्पत्त्यनन्तरमेव तेन समासादेवेत्यर्थः। व्याङोरिति। व्याङोर्मध्ये विशब्दस्य प्रशब्देन तद् न्तेन प्रशब्देन गतिसमासस्य स्वर्थः। आङस्तूपपदसमास एव। आतश्चोपसर्ग इति सप्तमीनिर्देशात्। उपसर्गत्वपर्यायाधिकरणस्यैकस्यैवोपपदत्वादिति कश्चित्। तन्न। गतिसमासेनासि

यद्वाकारकांशे कर्तृकरणे कृतेति सूत्रस्थं बहुलग्रहणमुक्तार्थसाधकं बोध्यम्। प्रागिति। कृदन्तादुत्तरपदात्सुबुत्पत्तेः प्रागित्यर्थः। प्रथमान्तं सुब्ग्रहणमिहानु वर्तत एव। अत एव राजदर्शीत्यादौ पूर्वपदेन लोपादिपदकार्यं सिद्ध्यति। परिभाषायाः फलं दर्शयन् गतिमुदाहरति। व्याघ्रीति। व्याजिघ्रतीति व्याघ्री। आतश्चोप सर्ग इति कः। पाघ्राध्मेति शप्रत्ययस्तु सञ्ज्ञायां नेति वक्ष्यते। व्याङोर्घ्रशब्देन गतिसमासः स यदि घ्रशब्दस्य सुबन्ततामपेक्षेत तर्हि सुबुत्पत्तेः पूर्वं समासाप्रवृत्त्या त्वपेक्षमा न तः प्रागेव लिङ्गयोगः लिङ्गनिमित्तश्च प्रत्ययष्टाबेव स्यान्न तु ङीष्। घ्रशब्दमात्रस्य जातिवाचित्वाभावात्। ततो घ्राशब्देन समासे सति अदन्तत्वाभावाज्जातिलक्ष णो ङीष् न स्यादिति भावः। उपपदमुदाहरति। कच्छपीति। कच्छेन पिबतीति कच्छपी। व्याघ्रीवत्सुपीति योगविभागात्कः। यत्तु प्राचा उपपदमतिङन्तमि ति व्याख्यातं तन्न। तथा सति प्रथमान्तसुब्ग्रहणनिवृत्त्या बहुविप्लवापत्तेः। तथाहि। निर्गत इत्यत्र निसो रुत्वं स्यात्। यते त्वन्त्र मोनुस्वारः राजदर्शीत्यादौ नलोपश्च न स्यात् ॥

ङ्कत्वात्तत्रोपपदसञ्ज्ञाया एव फलाभावेनाभावात्। अत एव कर्मण्यणिति सूत्रेनुपपदत्वेनायं व्यवहृतो भाष्ये। व्याङोश्च क्रमेण घ्रशब्देन तदन्तेन च गतिस मासइत्यक्षरार्थः। कच्छेनेति। अधिकरणस्य करणत्वविवक्षया तृतीया। न च कारकत्वात् सिद्धम्। कारकत्वेप्युपपदत्वाहान्यापरत्वादुपपदसमासस्यैव प्रवृत्तेः। उपपदमिति महास ञ्ज्ञामाश्रित्य प्रथमान्तस्य निवृत्तिरुच्यते उत तदनाश्रित्य। नाद्यः। तदाश्रयणे तु तन्निवृत्त्या ग्रेमण्डूकानुवृत्त्याश्रमणे गौरवात्। नान्त्य इत्याह। तथा सतीत्यादि ॥

प्राटितेति। गतिरितिसूत्रेपितद्संबन्धेऽयंदोषः। एवंनिर्गतः संपत्तेरितिच। प्रत्युक्तमिति। सुबित्येतत्संबन्धेनैवतद्व्यावृत्तावतिङ्पदस्यवैयर्थ्यापत्तेरित्यभिमानः। शे
षीकृतेनेति। भाष्यकृतेतिशेषः। कथमिति। संहितायानित्यत्वादितिभावः। दिगिति। दिगर्थस्तुयदिसुबित्यनुवृत्त्यैवएधानाहरकोव्रजतीत्यस्यव्यावृत्तिसिद्धावतिङ्ग्रह
णमेवोभयोर्निवृत्तौज्ञापकम्। महासञ्ज्ञाकरणाच्चराजदर्श्यादौनदोषः। सुप्यजातावितिणिनेः सुबुत्पत्तिंविनाऽसंभवेनतंविनोपपदत्वाभावेनदोषाच्च। निर्गतइत्या
दौशब्दान्तरसंबन्धात्पूर्वंसुबन्तनैलुकिचपदत्वोत्तरंपदान्तरसंबन्धेनसमासेनक्षतिः। माङिलुङित्यादौसतिसप्तमीतिनोपपदत्वम्। फलाभावाच्च। प्रथमार्थेसौत्रो

प्राटितेत्यादौअतोगुणइतिपररूपंचस्यात्। एतेनातिङ्किम्। एधानाहरकोव्रजतीतिप्रत्युदाहरणमपिप्रत्युक्तम्। यदपिकुगतीतिसूत्रेउक्तम्। अत्र
सुप्सुपेत्यननुवृत्तेस्तिङापिसमासः दुरीकरोतीत्यादि। तदप्यसत्। तत्रशेषीकृतेनातिङ्ग्रहणेनैवविरोधात्। तिङ्समासस्तुसहेतियोगविभागब
ललभ्यश्छान्दसश्चेतिंप्रागेवोक्तम्। लोकेतुप्रभवतीत्यादौउपसर्गः पृथक्पदमेव। काव्यादिपाठिनामेकपद्यभ्रमेतुधातूपसर्गयोः संहितायानित्यत्वंमूल
म्। कथंतर्हिअग्नआयाहीत्यादौपदपाठेउपसर्गेऽवसानमितिचेत्। पदपाठस्यापिव्याख्याविशेषतयातत्रानुकरणशब्दत्वेनोपसर्गत्वाभावात्प्रकृति
वदनुकरणमित्यतिदेशस्यवैकल्पिकत्वाद्याद्देतेभ्यइतिसूत्रेत्यदाद्यत्वंकुर्वताएक शेषंचाकुर्वतासूत्रकृतैवतथाज्ञापितत्वादितिदिक्। अभेदान्वयेन।
तुल्यविधानमिति। एतच्चाद्याद्वारेणलभ्यस्यात्तद्वेवेति ॥ ॐ सप्तम्येवहितन्निमित्तम्। अतएवपशाविस्यादीनांनोपपदत्वम्। एधानाहरकइत्यादौतुक्रियार्थोपपदस्ये
तिकार्यार्थमुपपदसञ्ज्ञावश्यकत्वेनतत्रास्यप्रवृत्तिव्यावृत्त्यर्थंतच्चरितार्थध्वनितंचेदंभाष्येइत्युच्यते। तदास्तुउभयोर्निवृत्तिः। अतिङन्तस्त्वेत्यस्यतिङन्ताघटि
तइत्यर्थः। एवंचोपपदमतिङन्तमितिव्याचक्षाणस्यानवक्लृप्त्यमर्षयोरितिसूत्रस्यभाष्यविरोधोदूषणमिति ॥

म·श· नियमस्वभावेति। अमैवेति नियमस्वभावलभ्येऽस्यर्थः। अमैव तुल्यविधानं यदुपपदं तदव्ययेन समस्यते। अन्येन तुल्यविधानं नेति वचनव्यक्तेरिति भावः। ननु सूत्रस्य
१६४ दृष्टि। न तु सूत्रस्य एवा दृष्ट्या द्वेधा योज्यत इति भिन्नमिति भावः। तदेवेति। उपपदमित्यर्थः। अग्रेभोजमिति। विभाषाग्रेप्रथमेति सूत्रेण क्त्वोऽपि विधानान्नास्यामैव तु
ल्यविधानता। अग्रेभुक्त्वेत्यादावमन्तेन समासाभावान्न तस्य नियमविषयतेति भावः। उत्तरपदप्रकृतिस्वर इति। उत्तरपदाद्युदात्तत्वमित्यर्थस्तदाह। आदिर्णमुलीति।

नियमस्वभावलभ्यार्थकथनपरोऽयमेवकारो न तु सूत्रस्थः। अव्ययेनेति किम्। कुम्भकारः। असति ह्यव्ययग्रहणेऽमैव यत्तुल्यविधानं तदेव समस्येत। पूर्वसू
त्रारम्भसामर्थ्यादव्ययविषयक एव नियम इति चेत्। तर्हि अमन्तविषयक एव किं न स्यात्। अमन्तेन यः समासः सोऽमैव तुल्यविधानस्येति। तथा च अग्रेभोज
मित्यत्र मा भूत्। अग्रेभुक्त्वा कालो भोक्तुमित्यत्र तु स्यादेवेति भावः। तृतीयाप्रभृतीन्यन्यतरस्याम्। उभयत्र विभाषेयम्। अमैव तुल्यविधानस्य प्राप्ते यथा उपदं
शस्तृतीयायामिति। यत्तु अमा चान्येन तुल्यविधानं तस्याप्राप्ते यथा अव्यये यथाभिप्रेताख्यान इति उच्चैःकारमाचष्टे। इह समासपक्षे कृदुत्तरपदप्रकृतिस्वर आदि
र्णमुल्यन्यतरस्यामित्याद्युदात्तत्वम्। असमासे तु उच्चैरित्यन्तोदात्तत्वम्। स्वरादिषु तथा पाठात्। अमेत्यनुवृत्तिमभिप्रेत्याह। अमन्तेनेति। तेनेह न। पर्याप्तो भो
क्तुम्। तत्पुरुषस्याङ्गुलेः। समासान्तापेक्षयाऽवयवषष्ठी। द्व्यङ्गुलमिति। द्विगोर्नित्यमिति इयसचो लुक्। इन्द्रार्थमिति। तत्पुरुषस्यासंभवादिति भावः ॥

अभ्यस्तानामिति नानुवर्तत इति मतं इदम्। पद्यपि लित्स्वरणमुल्स्वरयोरत्राविशेषः। आदिर्णमुलीति तन्नैकाजर्थं तथापि अभ्यस्तानामित्यनुवृत्त्यभावपक्षे परत्वादिदं न्याय्यमित्य
भिमानः। लितीत्यनेनापीदं सुसाधम्। अन्तोदात्तमिति। फिट्स्वरेणेति भावस्तदाह। स्वरादिष्विति। त्रैस्वर्येण पाठपक्षे इति भावः। समासान्तापेक्षयेति। तत्पुरुषस्य समासस्यान्तावयव इत्य रा·म·
र्थः। समासान्त इति सूत्रे समासेति लुप्तषष्ठीकं त्वोद्ध्यम्। इयसच इति ऊर्ध्वमानत्वे इदम्। प्रमाणत्वे तु मात्रचो लुगिति बोद्ध्यम् ॥ १६४

नन्वेवं प्रकरणविरोधस्तत्राह। हेमन्तेति। चौ हेतौ। यतो द्वन्द्वे दर्शनमतो गौणग्रहणायोग इत्यर्थः। स्पष्टं च द्वन्द्वार्थत्वं भाष्यकृतोक्तम्। एकवद्भावादिति। समाहारद्वन्द्वत्वादित्यर्थः।
आकरेति। पुल्लिङ्गस्यैव तत्रोदाहरणादित्यर्थः। रात्राह्नाहा इति पुंस्त्वे प्राप्ते आह। संख्यापूर्वमिति। स्पष्टार्थ इति। विपरीतनियमस्य स्पष्टं वारणार्थं स्यात् द्वन्द्वनयनक्लेशेन तद्वारणम्
हा। अह्न एवेति लिङ्गादिति। अह्न एवेति नियमे तद्वैयर्थ्यं स्पष्टमेव। नियमफलत्वाट्टिकमिति। अह्नान्निर्वृत्तमित्यर्थे कालादित्यनुवृत्तौ तेन निर्वृत्तमिति ठञ्। असंभवादिति। यद्य

ननु अहश्चासौ रात्रिश्चेति कर्मधारयोऽस्तु। पूर्वोत्तरपदयोरन्यतरस्य गौणत्वसंभवादिति चेत्। न। मुख्यसंभवे गौणग्रहणायोगात्। हेमन्तशिशिरावहोरात्रे च च्छन्द
सीति सूत्रे द्वन्द्वे समासान्तदर्शनाच्च। अहोरात्र इति। जातिरप्राणिनामिति समाहारद्वन्द्वः। रात्राह्नाहा इति पुंस्त्वम्। यत्तु प्राचोक्तमेकवद्भावात्क्लीबतेति। तन्न। सनपुंस
कमित्यस्य रात्राह्नाहा इति पुंस्त्वेन परत्वात् बाध इति वक्ष्यमाणत्वात्। आकरविरोधाच्च। द्विरात्रमिति। संख्यापूर्वं रात्रं क्लीबमिति वक्ष्यते। अह्नष्टखोरेव। नस्तद्धित इत्यस्य सि
द्धे नियमार्थमिदम्। एवकारः स्पष्टार्थः। अह्न एव टखोरिति विपरीतनियमस्तु न भविष्यति। आत्माध्वानौ ख इति प्रकृतिभावविधानाल्लिङ्गात्। अनित्यत्वादिति। अत्र चलि
ङ्गम् शक्तिलाङ्गलाङ्कुशेत्यत्र घटीग्रहणम्। अह्नोऽह्न एतेभ्यः। अह्नः सर्वेति सूत्रे अहरादयो निर्दिष्टाः। चकारेण संख्याप्यनुकृते। तत्र सर्वेषामुद्दिष्टत्वाविशेषेऽपि अह्नः श
ब्द इह न गृह्यतेऽसंभवादित्याशयेनाह। सर्वादिभ्य इति। समासान्ते पर इति। प्रकरणबललभ्यमेतत्। प्राचा तु टचि पर इति व्याख्यातम्। तदपि सामर्थ्यलभ्यमिति कथंचि
न्नेयम् ॥

ॐ पितृब्रह्मणोः इदमवयवीभूतमहरित्यर्थे षष्ठीसमासः संभवति तथाप्यत्र सूत्रेऽह्नः सर्वैकदेशसंख्यातपुण्याच्चेत्यस्यानुवृत्त्यैव सिद्धे एतेभ्य इत्युक्त्या अव्य
वानामहःशब्दभिन्नानामेव ग्रहणमित्यादिप्रामाण्यादिति बोध्यम्। तस्यानभिधानाच्च। प्रकरणेति। तल्लभ्यस्य सप्तम्या विपरिणाम इति भावः। सामर्थ्येति। अहन्शब्दान्ततस्तु
टच एव विधानादिति भावः। कथंचिदिति। शब्दतोऽनुपस्थितत्वाद्वाक्यार्थान्वयित्वासंभव इति भावः ॥

स्त्रीत्वसंभवेपीति। एत्राह्नाह्न इत्यस्याराज्ञान्हशब्दघटितसमाससमासार्थनिमित्तलिङ्गस्यान्तरङ्गस्यसार्वत्रिकस्यचबाधेनोपपत्तौबहिर्भूततद्धितार्थनिमित्तलिङ्गबाधकत्वेमाना
भावइतिभावः। पुण्याहमित्यत्रउत्तमैकाभ्यांचेत्यन्हादेशनिषेधात्पुण्यसुदिनाभ्यामह्नः क्लीबत्वस्यसत्त्वाच्चेत्याशयेनाह। चतुर्णामिति। परत्वादिति। अन्हाह्नान्ता इत्यपेक्ष
तत्रसंख्यापूर्वस्यतद्धितार्थद्विगोर्विशेष्यनिघ्नत्वेनस्त्रीत्वसंभवेपि टजन्तस्यतद्धितंप्रत्युपसर्जनत्वात्। अनुपसर्जनाधिकारोक्तस्य टिड्ढेतिङीपः प्राप्तिरेवनास्तीति
तत्रटजचोरविशेषः स्पष्टएव। पुण्याहमित्यत्रतुउत्तमैकाभ्यांचेत्यचोनिषेधः। अह्नादेशस्यवेतिमतभेदेनव्यवस्थितम्। इतरेषांचतुर्णां। रात्राह्नाहा इतिवचनात् स्त्रियांप्रा
प्तिर्नास्तीति। स्यादेतत्। भवेदेषवृद्धानामाशयः। यद्युक्तद्विगोर्विशेष्यनिघ्नत्वे प्रमाणंस्यात्। तदेवकिमितिचेत् ॥ उच्यते। अमरसिंहेनपुंस्त्वेसभेदाः नुचराः सपर्यायाः
सुरासुराइतिपुंस्त्वाधिकारे। अह्नाहान्ताः स्वेडभेदाः रात्रान्ताः प्रागसंख्यकाइत्युक्तम्। अर्धान्ताः प्राध्वलंभ्राद्याः पन्न पूर्वाः परोपगाः। तद्धितार्थद्विगुः संख्याः सर्वनामतदन्त
काइतिच, ततः परमुक्तम्। एवंचेहअह्नाहान्ताइत्यनेनपुंस्त्वंप्राप्तंतद्धितार्थद्विगुरितिपरोपगत्वेनपरत्वादेवबाध्यते। तथाचतेनैवपरिभाषितम्। परंविरोधेशेषं तु
ज्ञेयंशिष्टप्रयोगतइति। तस्मादमरग्रन्थः उक्तार्थेप्रमाणम्। किंचपरवल्लिङ्गमित्यस्यरात्राह्नाहा इत्यपवादः। यत्रतुद्विगुप्राप्तेस्त्वादिनोत्सर्गोनिषिद्धः। तत्रतदपवाद
स्याप्रवृत्तिः स्पष्टैवा। एतच्चमाधवेनापिध्वनितमित्यनुपदमेववक्ष्यामः। किंचभवाद्यर्थेतद्धितान्तंपरोपगमितिनिर्विवादम्। तद्धितलोपेतुयः शिष्यतेसलुप्यमानार्थो
भिधायीतिन्यायेनभवाद्यर्थवत्स्त्रीत्वादेरप्यभिधानंन्याय्यमेव। प्रकृतेर्लिङ्गानुशासनस्यकेवलायांप्रकृतावुपक्षीणस्यलुप्ततद्धितायांमप्रवृत्तेः। लुपियुक्तवदितिलि
ङ्गातिदेशोप्यत्रप्रमाणम्। प्रकृतलिङ्गानुशासनानांलुप्तप्रत्ययेषुप्रवृत्तौतद्वैयर्थ्यापत्तेः। अतएवलवणः सूपः लवणायवागूः इत्यादौनक्लीबत्वम्। अतएवचकुमारीब्रा
ह्मण इत्यादिषुआचारक्विबन्तप्रकृतिककर्तृक्विबन्तेष्वपिविशेष्यनिघ्नतेवाकरेस्पष्टा ॥
यातद्धितार्थेद्विगुरित्यस्यपरत्वादितिभावस्तदाह। तथाचेति। केवलायांप्रकृतौ। सर्वाह्न इत्यादौ ॥

अलंबहुनेति। एतेन स्त्रीत्वमेव नास्तीति सूचितम्। तथाहि। रात्रान्हाहाः पुंसीत्यनेन बहिर्भूततद्धितार्थनिमित्तलिङ्गबाधकल्पने उपस्थितरात्रान्हाहशब्दार्थविशेष्यत्वप्रयु
क्तप्राप्तिकलिङ्गस्यैव बाधः स्यान्न तु बहिर्भूतसमाहारविशेषणत्वप्रयुक्तप्राप्तिकस्यापि अतो त्रान्तरङ्गस्याप्राप्तिः। किंच प्राप्तापन्नमित्यादिवाक्यस्यापि कोपेपरत्वात्तेना
ह्न्हादिविषये पुंस्त्वबाधापत्तौ परवल्लिङ्गमिति सूत्रेएकदेशिग्रहणं कृत्वा भाष्यकृता कृतस्य द्विगुप्राप्तेति वार्तिकप्रत्याख्यानस्यासंगत्यापत्तिः। तव रात्रान्हेत्यादिकथा
र्थतस्यावश्यकत्वात्। नचेदमप्येकदेशिसमासविषयकमेव। अत्रत्याहर्ग्रहणस्य पुण्यसुदिनाभ्यामित्यादेश्चवैयर्थ्यापत्तेः। अतिरात्रः सर्वाह्न इत्याद्यसिद्ध्यापत्तेश्च

द्यह्नीति ङीपं च दत्ता प्राचाऽपि स्त्रीत्वं स्वीकृतमेवेत्यलं बहुना। यदि समर्थनीयमेवेत्याग्रहस्तर्हि आधाराधेयभावव्यत्यासेन समर्थ्यताम्। द्वे अहनी य
स्यामिति दिनद्वयाधारभूतेत्यर्थलाभात्। उपान्त्यस्यापीति। यथा प्रथमयोरिति प्रथमाद्वितीययोर्ग्रहणं द्विवचननिर्देशात्। तथेहापि उत्तमग्रहणसामर्थ्या
दन्त्ययोर्ग्रहणम्। उत्तमौ च एकश्चेति विग्रहे सौत्रं द्विवचनमिति तेषामाशयः। खार्याः प्राचाम्। द्विगोरिति। खारीशब्दान्तात् द्विगोरित्यर्थः। न्द्व्यञ्जलमि
ति समाहारे द्विगुः। आन्महतः। पदाधिकारे तदन्तस्यापि ग्रहणान्महच्छब्दान्तस्यापि ॥

। एवं चोत्सर्गस्य परवल्लिङ्गस्य द्विगुस्त्रियामित्यादिनिषेधे तद्विषये तदपवादस्याप्यप्रवृत्तिरिति निरस्तम्। अहरतिक्रान्ता रात्रिरित्यर्थे समासस्य स्त्रीलिङ्गत्वात्तत्र टजचोर्ङी
प्रदावद्र्या विशेषसत्त्वेन नास्ति टजचोर्विशेष इति कैयटासंगतिश्च। तस्मात्प्राप्तापन्नं प्राप्तेत्यादिस्तद्धितार्थे द्विगुरिति कोशाश्चान्हाहन्ताद्यतिरिक्तविषय एवन्याय्य इति दिक्।
द्वे अहनी यस्यामिति। बहुव्रीहौ रात्रान्हाहाः पुंसीत्यस्याप्राप्तेरिति भावः। बह्वादिषु अहः शब्दपाठादुपसर्जनत्वेपि ङीष् प्राप्तस्तस्यापीति। तेन परममहाबाहुः सिद्धः। अपाणिनीयत्वादि
ति। पासादिषु महत आत्वं पुंवत्कर्मधारयेति वार्तिके कृतेति भावः। आन्महतः इत्यत्र लिङ्गविशिष्टपरिभाषाभावस्याङ्याप्प्रातिपदिकादिति सूत्रे भाष्ये उक्तत्वेन पुंवद्भावात्परत्वात् ...

अतिरभसमिति। आर्द्रीप्रस्थस्येव तेन लुकोविधानादिति भाव:। द्वन्द्वेनेति। राजन्यबहुवचनद्वन्द्वे इत्यनुवर्त्तमाने संख्येयस्वनेन पूर्वपदप्रकृतिस्वरस्य तत्राप्राप्तेरित्यर्थ:। प्रक्रम
कथं तर्हि परममहत्परिमाणमिति। परममहतो द्रव्यस्य परिमाणमिति षष्ठीतत्पुरुष इति वृद्धा:। यत्तु वर्द्धमानेनोक्तम्। इष्टकेषीकामालानामित्यत्र तदन्तविद्धु
पसंख्यानेऽसामर्थ्यादुत्तरपदाधिकारे तदन्तविधिर्नास्तीति। तद्भाष्यकैयटविरुद्धम्। तथा हि। पदाधिकारप्रयोजनम्। इष्टकचितं पक्वेष्टकचितमित्यादि भाष्ये
उदाहृतम्। कैयटे न च पदशब्देनोत्तरपदं गृह्यत इति व्याख्यातम्। एतदेवार्थत: काशिकायामुपनिबद्धम्। न त्विष्टकेषीकेत्यत्र स्वतन्त्रमुपसंख्यानमस्ति। महतीश
ब्दस्येति। यत्तु प्राचोक्तं जातीयघासादौ तीशब्दस्याप्यात्वं वक्तव्यमिति। तत्र जातीये तावद्व्यर्थम्। एवं कर्मधारयेति आन्महत इति च सूत्राभ्यामेव रूपसिद्धे:। तीशब्दस्ये
त्यपि अपाणिनीयत्वादुपेक्ष्यम्। अष्टन इति। कपाले उत्तरपदे हविषि वाच्ये अष्टन आत्वं वक्तव्यमित्यर्थ:। अष्टाकपाल इति। संस्कृतं भक्षा इत्यणोऽध्यर्द्धपूर्वेति लुगिति व्याच
ख्यु:। तदतिरभसात्। द्विगोर्लुगनपत्य इति तु बोध्यम्। द्व्यधिकादिति। एतच्च भाष्यवार्तिकारूढमित्युक्तम्। यत्त्विह पूर्वपदप्रकृतिस्वरसिद्धये विस्पष्टादेराकृतिगणत्वं
स्वीचक्रुस्तच्चिन्त्यम्। उपलभ्यमानस्य तादृशस्वरस्य द्वन्द्वेन निर्वाहात्। स्वरान्तरे पीष्टापत्तौ बाधकाभावादिति दिक्। एकादि:। अदुकि अकारोच्चारणसामर्थ्यात्पररू
पं न। केचित्तु स्पष्टार्थमादुकं दीर्घादिमाहु:। रात्राह्नाहा: पुंसि। परत्वादिति। यत्तु प्राचा एकवद्भावात् क्लीबते त्युक्त्वा अहोरात्रमित्युदाहृतं तन्नेत्यवोचाम। यत्तु वदन्ति।
रात्रादीनामेवानेन पुंस्त्वं विधीयते तदन्तस्य तु परवल्लिङ्गमित्येव सिद्ध्यतीति। अतएव भिन्नविषयत्वान्न विप्रतिषेधशङ्का। एवं च समाहारे स नपुंसकमित्येव भवति परवल्लि
ङ्गापवादत्वादिति। तन्न। उक्तरीत्या ह्यहन्यहादावपि क्लीबत्वं स्यात्। न चेष्टापत्ति:। प्राचा अपि द्व्यहस्त्र्यह इत्युदाहृतत्वादाकरविरोधाच्च। अमरोऽप्याह। ते तु त्रिंशदहोरात्र इति। मा
सेन स्यादहोरात्र इति च। तस्मात्तदन्तस्यैवायं पुंस्त्वविधि:। द्वन्द्वतत्पुरुषयोरिति प्रक्रमणादिति स्थितम्

णादिति। प्रक्रमादित्यर्थ:। प्रकरणादिति यावत् ॥

प्रामादिकमेवेति। समाहारद्विगावित्यर्थः। संख्यापूर्वं रात्रमित्यस्य प्रतिप्रसवविधित्वलाघवानुरोधेन समाहारद्विगावेव प्रवृत्तेः। भविष्यति मर्यादेति सूत्रे स्थेत्रिंशा
त्रः पञ्चदशरात्र इति भाष्यप्रयोगे तु त्रिंशत् पञ्चदश वा रात्रयो यस्मिन्निति बहुव्रीहिरच् प्रत्ययश्चेवेति योगविभागात्समासान्तो बोध्यः। पृषोदरादित्वादकार इति कश्चि

संख्यापूर्वमिति। तथा च लिङ्गानुशासनसूत्रम्। अपथपुण्याहौ नपुंसकौ संख्यापूर्वा रात्रिरिति। अमरोऽप्याह। रात्रं प्राक् संख्ययाऽन्वितमिति। गणरात्रं
निशाबह्व्य इति च। पुंस्त्वाधिकारे स एवाह। रात्राह्नाः प्रागसंख्यका इति। एवं स्थिते द्विरात्रस्त्रिरात्र इति वृत्तिकारहरदत्तादिभिरुक्तं पुंस्त्वं प्रामादिकमेवेत्य
वधेयम्। अर्द्धर्चाः पुंसि च। इह केषांचिदर्थभेदेन व्यवस्था। तथा च शाश्वतः। मकरन्दस्य मद्यस्य माक्षिकस्यापि वाचकः। अर्द्धर्चादिगणे पाठात्तु नपुंसक
योर्मधुरिति। अमरस्तु माध्वीकं मधुनद्व्योरित्याह। पात्राद्यन्तस्यनेति। स्त्रीत्वमिति शेषः। सुदिनाहमिति। सुदिनशब्दः प्रशस्तपर्यायः। तथा च प्रयोगः।
सुदिनासु समासु कार्यमेतत् प्रविविच्यवीत विशेषतस्स्वयं वेति। पथः। कथं तर्हि व्यध्वो दुरध्वो विपथः कदध्वा कापथः समा इत्यमरः। व्यध्वो विपथ कापथाः
तिरभसकोशश्च। अत्राहुः। प्रमाद एवायमिति। वस्तुतस्तु पथे गताविलस्मात्पचाद्यचि पथैते व्याप्नोतीति पथः। आकारान्तोऽयम्। तथा च त्रिकाण्डशेषः। वाटः
पथश्च मार्गस्यादिति तेन समासे पुंस्त्वम्। न चैवं विपथस्ति द्वावषिका पथो न स्यात् कादेशस्य दुर्लभत्वादिति वाच्यम्। ईषदर्थे चेति तत्सम्भवात् कुत्सायाम
र्थतः पर्यवसानात्। इदं त्ववधेयम्। परवल्लिङ्गतापवादरूपत्वात्तु रूप एवेदं प्रवर्तते नान्यत्र। विपथा नगरी। बहुव्रीहिरयम्। पन्थानमतिक्रान्ता अति
पथा इत्यपि न। द्विगुप्राप्तेत्यादिना परवल्लिङ्गतायाः प्रतिषेधादिति भावः ॥

तु। पौनरुक्त्यपरिहारायाह। सुदिनशब्द इति। सुदिनत्विति। प्रशस्तास्त्वित्यर्थः। पथेते इति। एतदात्मनेपदिष्वपि पठ्यत इति मतेनेदम् ॥

म.श माधवेनोक्तप्रायमिति। अत्रारुचिबीजंतूक्तम्। किंच पथद्वास्यपरवल्लिङ्गतापवादत्वात् तत्पुरुषेप्रवृत्तिस्तत्रैवप्रवृत्तौचापवादत्वमित्यन्योन्याश्रयोऽप्यत्रबोद्ध्यः। संस्था
१६८ द्विपथाः विपथेत्यादावर्द्धनावमितिवल्लोकाश्रयत्वाल्लिङ्गस्यलिङ्गमशिष्यमितिन्यायेनसिद्धमितिबोद्ध्यम्। एवंचअध्वोविपथकापथाविलपिसमञ्जसम्। द्वितीये

एवंचन्यायसाम्येनव्यन्हेत्यत्रापिरात्रान्हाहाद्रत्सस्यंप्रवृत्तिर्नेतिमाधवेनोक्तप्रायम्। मृदुपचतीति। क्रियाविशेषणत्वाद्वितीयान्तम्। धातूपात्तभावनांप्रति हि फलांशः कर्मीभूतः तथाच फलसामानाधिकरण्ये द्वितीया। अतएवसकलत्वाविस्तादौकारकपूर्वकत्वात्। यत्रतुभावनांप्रतिकरणतयाधात्वर्थविशेषोऽन्वेति तत्रतद्विशेषणानांतृतीयान्ततैव। ज्योतिष्टोमेनस्वर्गकामोयजेतेतियथा। एतत्प्रकरणेऽजद्दतिसूत्रेतत्पदमञ्जर्योः स्पष्टम्। नचैवंज्योतिष्टोमेनभक्तिपूर्वं यजेतेतिनसिद्ध्येदितिवाच्यम्। भावनाविशेषणत्वेतदुपपत्तेः। तत्रापिसंदर्शनप्रार्थनादि भिर्व्याप्यमानत्वात् क्रियायाः कृत्रिमकर्मत्वविवक्षायांतद्विशेषणत्वाद्वितीया। अन्यथात्वप्रयमेवेतिविवेकः। सामान्येनपुंसकमितिचअनियतलिङ्गविषयकम्। तेनआदिः पचतिप्रातरादिरितिपुंस्त्वमेव। विस्तरस्तुशब्दकौस्तुभे बोद्ध्यः। पर्यायस्यैवेति। कथंतर्हिनृपतिसभामगमन्नवेपमानाइतिकीचकवधे। गजपतिवत् राजविशेषणत्वाददितिरक्षितः। विभाषासेना। श्वनिशमिति। कृत्स्नच तुर्दशीस्वाहुः तस्यांकिलकेचिद्रत्नानउपवसन्ति। तथाचतिर्यगधिकरणेशाबरभाष्यम्। शुनश्चचतुर्दश्यामुपवसतः पश्यामइति। इतितत्पुरुषः ॥

ति। क्रियाविशेषणादितिभावः। ज्योतिष्टोमेनेति। तदभिन्नेनयागेनेष्टंभावयेदितितत्रबोधात्। नसिद्ध्येदिति। कर्मभूतफलांशाभावेनद्वितीयानापत्तेस्तृतीयापत्तेश्चेत्यर्थः।
कथंतदुपपत्तिस्तत्राह। तत्रापीति। व्याप्यमानत्वादिति। तेषांधात्वर्थविवक्षयेत्यर्थः। ज्योतिष्टोमाभिन्नयागकरणिकामिष्टविषयांभावनांपश्येदितिबोधइत्यभिमानः। तथाबो रामः
धाननुभवेनाह। अन्यथेति। पुंस्त्वमेवेति। आदिशब्दस्यनित्यपुंस्त्वात्। अतएवप्रातरादिरित्यत्रप्रातरित्यस्यक्लीबत्वेऽपिलिङ्गत्वेपिवाआदिरित्यस्यपुंस्त्वमेव॥ इतितत्पुरुषः ॥ १६८

नन्वप्रथमा विभक्त्यर्थ इत्यनुचितम्। अन्यपदार्थे इति सूत्रात्। पदं च सुबन्तमित्यत आह। पदेनहीति। तत्र विभक्त्यर्थास्मिन् संबन्ध्यन्तर्भावेणाप्येकार्थीभावाङ्गीकाराच्च चि
त्रगुर्देवदत्त इत्यादौ सामानाधिकरण्यानुपपत्तिरित्यन्यत्र विस्तरः। तस्यापि। सशब्दस्यापि। अयमेवेति। कर्मग्राम एवेत्यर्थः। भिन्नैवेति। प्रत्ययार्थस्य प्रकृत्यर्थं प्रति विशेषण
ताविषयेत्यर्थः। नहीति। तस्माद्विशेषणीभूते कर्तरि तस्याभेदान्वय इति व्युत्पत्त्यन्तरमङ्गीकार्यम्। बहूनामिति। सामान्येनोक्तमर्थं विशेषतो विवृणोति। चकारादीति। आदिना

यस्य त्रिकस्येति। यद्यपि प्राद्योगताद्यर्थे प्रथमयेत्युक्तम्। तथाऽपि द्वितीयाश्रितादिभिरितिवत्प्रथमा केनचित्सह समस्यत इति नोक्तमित्यर्थः। वार्तिककृता प्रथमये
त्युक्तावपि सूत्रकृता नोक्तमिति वा। अन्यस्य पदस्येति। पदेन हि प्रकृत्यर्थोपसर्जनः प्रत्ययार्थोऽभिधीयते। तथा च द्वितीयाद्यर्थे इति फलितं तदाह। अप्रथमेति। समा
नेति। एतच्च शेषपदाल्लब्धम्। प्राप्तमित्यादि। ग्रामंकर्मकप्राप्तिकर्तृ उदकं विग्रहार्थः। उदककर्तृकप्राप्तिकर्मेति समासार्थः। विग्रहेस्त्इति प्रयोगे तु तस्याप्ययमेवार्थः।
यद्यपि क्तप्रत्ययार्थस्य कर्तुर्धात्वर्थं प्रति विशेष्यतोचिता तथाऽपि व्यपेक्षावादिभिरगत्या समासे भिन्नैव व्युत्पत्तिः स्वीकार्या। किंच कर्तृविशिष्टप्राप्तेः पदार्थत्वे तस्यैव
नामार्थतयोदकस्य तदभेदो वाच्यः स च बाधितः नहि कर्तृविशिष्टप्राप्तिरुदकमिति भवति। अपि च व्यस्ते समीचीनमुदकमितिवत्समस्तेऽपि उदकविशेषणप्र
योगः प्राप्तः। स च वृत्तस्य विशेषणयोगो नेति वचनेनैव वारणीयः। सिद्धान्ते तु बहूनां वृत्तिधर्माणां वचनैः साधनस्यान्महद्गौरवं तस्मादेकार्थीभाव आस्थितः। चका
रादनिषेधोऽप्यबहुव्युत्पत्तिभञ्जनाम् कर्तृमते न्यायसिद्धं त्वस्माकं तदिति स्थितम्। ऊढेत्यादि। अनडुत्कर्तृ [तरि] वहनकर्मीभूतो रथः। रथकर्मकोद्वहनकर्ता तु समासार्थः॥

कान्ताद्यर्थसंग्रहः। तेषां निषेधोऽभावस्तद्बोधकं लोपवचनं कार्यमित्यर्थः। बहुव्युत्पत्तीति। प्रत्ययार्थप्राधान्यादिव्युत्पत्तीत्यर्थः। कर्तव्यमिति। इदमुपलक्षणं विभाषा
धिकारादीनामपि। न्यायसिद्धमिति। तादृशतादृशार्थान्तर्भावेणैकार्थीभावाङ्गीकारादित्यर्थः। विशेषणत्वेनैवोपस्थितेर्विशेषणाद्यन्वयोऽपि नेत्यन्यत्र विस्तरः॥

समासेनाभिहितत्वादिति। एवंचतेषांकर्मत्वादिरूपतैवनास्तिविभक्तिवाच्यतावच्छेदकरूपेणकर्मादीनांकर्मादिशब्दैरुक्तेरप्यनभिधानादितिभावः। तत्तिद्धेरिति। ननु
कारकत्वेनाव्ययीभावादिसंज्ञायाअस्याबाधादितिभावः। उत्तरपदलोपइत्यस्यशेषंप्रदर्शयति। वक्ष्यइति। सूत्रजमिति। मुख्यार्थेतुनसमासोनभिधानादितिभावःनच

रुद्रसंप्रदानकोपहरणकर्मपशुः। पशुकर्मकोपहरणसंप्रदानंरुद्रः स्थाल्यधिकोद्धरणकर्मओदनः। ओदनकर्मकोद्धरणावधिः स्थालीत्यादिरर्थः। इहकर्मादी
नांसमासेनाभिहितत्वात्प्रथमा। प्रथमार्थेत्वितिहृष्टेदेवेअनयोर्नसमासः शेषत्वादित्यत्रतात्पर्यम्। व्यधिकरणानामिति। अत्राप्युक्तएवहेतुः। इत्यंशेषग्रहणमुप
निबद्धम्। नचोन्मत्तगङ्गमित्यादिव्यावृत्तिरेवतत्फलम्। एकसंज्ञाधिकारेणैवतत्सिद्धेरितिभावः। अनेकंअन्यपदार्थेवहूनामपियथास्यात्। तदुदाहरणंतुमूलएवस्फु
टीभविष्यति। एवंचात्रसुबित्येवानुवर्तते। नतुसुपेति। यत्तुसुप्सुपेत्यनुवर्त्यानेकंसुबन्तंसुपासहेतिव्याख्यातम्। तन्न। द्विपदबहुव्रीह्यसिद्धिप्रसङ्गात्। प्रादिभ्यइति।
प्रादिभ्यः परंयद्धातुजंतदन्तस्यपदान्तरेणसहसमासोव्याख्येयः। सूत्रसिद्धार्थानुवादोयम्। वाचेति। इदंतुवाचनिकम्। पूर्वपदान्तर्गतस्योत्तरपदस्यधातुजस्येति
वलोपोवाच्यः। एतच्चप्रादीनामेवहृत्तौविशिष्टार्थइतिनामाश्रित्यसुत्यजम्। स्त्रियाः पुंवत्। ऊङोऽभावइति। यदितुऊङोः न्योऽनूङितिपर्युदासः स्यात्तर्हिटाबा
द्यन्तमेवगृह्येतततः किमितिचेत्। इडविडोः परंजनपदशब्दात्क्षत्रियाद्ञ्। स्त्रीविडः। दरदोपत्यंस्त्रीतश्चेतिलुक्। इडविड्दरत्। साचासौवृन्दारिकाचऐड
विडवृन्दारिका। दारदवृन्दारिकेतिनसिद्ध्येत्। नह्यत्रस्त्रीप्रत्ययः कश्चिदस्तीतिभावः। निपातनादिति। एतच्चपूर्वत्रापियोज्यंवैयधिकरण्येनस्वरसतोबहुव्रीहेर्दुर्ल
भत्वात्॥

इयमवपेत्स्त्र् दारदः। तपोः स्त्रिया

पुंवत्कर्मधारय एवतुज्यायात्। नसिद्ध्येदिति। जातेश्चेतिनिषेधस्तुनात्रनिषेधविषयेएवपुंवत्कर्मधारयेत्यस्यप्रवृत्तेः। किंचतत्रजातेरितिपञ्चमीनिर्देशात्ततः परोय
प्रत्ययस्तदन्तस्यनिषेधोनायंतथा। एवंचसत्यभिधानेबहुव्रीहावपिऐडविडभार्यइत्येव। भाष्येउत्तरसूत्रोदाहरणंतुतत्राप्ययमेवार्थइतिसूचयितुमैडविडस्यानन्तरापत्यत्वेभाष्यमते

प्राधान्तु एभ्न्नाता तदनुरोध बीजतु प्रागुक्तार्थक भाषितपुंस्कादित्यस्याप्रसिद्धत्वम्। षष्ठ्यन्तपाठ इति। अनूङः समानाधिकरणे इत्येवं रूपः। पुमान् यस्मिन्निति। प्रवृत्तिनिमि-
त्तस्याधारत्वविवक्षया सप्तमी। सत्सप्तमीवा यस्मिन् अर्थे सति पुमान् भाषितो भवतीत्यर्थः। स्त्रीप्रत्ययेति। स्वरितत्वप्रतिज्ञया प्राप्तमित्यर्थः। अचः परस्मिन्नितीति। उत्तरपदप्रत्य
अनुगितिा इह भाषितपुंस्कं भवतीति भाषितपुंस्कात्। अत नेः क्विप्। एवं च समानाधिकरण एव बहुव्रीहिः। अनुगर्थ्यं च यत्लोमास्त्विति यद्यपि सुवचं तथापि प्राचाम
नुरोधेन क्लिष्टव्याख्यानमिति त्यवधेयम्। षष्ठ्याश्चेति। एवं च सूत्रे केषांचित् षष्ठ्यन्तपाठोऽनाकरः हरदत्तादिग्रन्थविरोधातिदितिभावः। तुल्ये इत्यादि। अयंभावः। भा
षितः पुमान् यस्मिन्नर्थे तद्भाषितपुंस्कं प्रवृत्तिनिमित्तम्। तदस्यास्तीति अर्शआद्यच्। तेन तुल्ये प्रवृत्तिनिमित्ते उक्तपुंस्कं शब्दरूपं लभ्यत इति। स्त्रीवाचकेति। एते
न स्त्रियाद्यस्य स्त्रीप्रत्ययपरतां वारयति। तथाहि सति इत्थं सूत्रार्थः स्यात्। अनूङः स्त्रीप्रत्ययस्य पुंसीव निवृत्तिरित्यर्थः। यथा मरुवदस्मिन् ग्रामे जलमित्युक्ते अ
भाव एवातिदिश्यते तद्वत्। नन्वयमेवत्वावाक्यार्थोऽस्तु। यथोक्तं प्राचा उक्तपुंस्कात्परस्यानूङः स्त्रीप्रत्ययस्य पुंसीव पुंवत्स्यात्। पुंवद्भावात्स्त्रीप्रत्ययलोप इति चेन्ने
वम्। अस्यार्थस्याकरे एव अनेकधा दूषितत्वात्। तथाहि। असिन्पक्षे पटुभार्य इत्यत्रोत्तरपदनिमित्ता याङोऽनिवृत्तेः। अचः परस्मिन्निति स्थानिवत्त्वे सति यण् स्यात्।
किंच वतण्डस्यापत्यं स्त्री वतण्डी। वतण्डाच्चेति यञ्। तस्य लुक् स्त्रियामिति लुक्यपत्ये लुक्। ङीङरवादित्वान्ङीष्। वतण्डी चासौ वृन्दारिका च वतण्ड्यवृन्दारिकेति
इष्यते। अत्र ङीनो निवृत्ताव पि अर्थेन तस्य स्त्री तस्या निवृत्तत्वात् लुक् स्त्रियामिति प्रवर्तेत। अपि चैवमेडविडत्वं तिले इत्यादि प्रागुक्तं न सिध्येत्। किंच गार्ग्यश्चता वृन्दा
रिकाश्च गर्गवृन्दारिकाः। ङीपि निवृत्तेः यञजश्चेति लुङ् न स्यात्। अस्त्रियामिति निषेधात्। तस्माद्यथा तरिग्राह्यम्। लौकिकेति। यत्तु चित्राणां गवामयमिति
मीमांसकैर्विगृहीतं तल्लौकिकालौकिक बहिर्भूतत्वादुपेक्ष्यमिति भावः। एतच्च मासजात इत्यत्र प्रपञ्चितम् ॥
निमित्तत्वादस्यानिवृत्तेरितिभावः। प्रवर्तेतैति। न निवर्तेतेत्यर्थः। अस्त्रियामितीति। तद्राजस्य बहुष्विति सूत्रात्तत्र तदनुवृत्तेरितिभावः ॥

म. श. पूर्वसवर्णदीर्घेणेति। पूर्वशब्दे सानुस्वारः पाठः समासात्पूर्वं न सवर्णदीर्घ इत्यर्थः। पूर्वसवर्णेत्यपपाठो दीर्घाज्जसीति निषेधात्। इत्थमेवेति। पूर्वपदं नास्त्येव तद्त्येव
१७० मेवेत्यर्थः। चतुर्णां द्वन्द्व इति। उपक्रमभाष्यं तु तस्यैव लाभादिति भावः। एतेन नेष्टं तद्द्वन्द्वं कृत्वा ङ्यन्तशब्दे न द्वन्द्वेन दोष इत्यपास्तम्। पूर्वपदमिति। येनानङ् स्यादिति शेषः॥

चित्राअस इति। अन्तरङ्गानपीति न्यायादिह पूर्वसवर्णदीर्घो न प्रवर्तते अन्यथा एकादेशस्य पूर्वान्तत्वेन सुपो लुकि चित्रगुरित्यत्र अकारो न लभ्येतेति भावः। नेदिति। इष्टसिद्ध्यनुरोधेन पूर्वपदं क्वचिदाक्षिप्यते न तु सर्वत्र। तथा चौजः सहोम्भस इति सूत्रे हरद्विष इत्यस्यैवोक्तमिति भावः। आनङिति। तथा च समर्थसूत्रे भाष्ये होतापोतारौ नेष्टोद्गातारौ इत्यत्र चतुर्णां द्वन्द्वे तृतीयस्य आनङ् उदाहृतः। पूर्वपदस्यैव तु स न सिद्ध्येत्। न ह्यत्र नेष्टा पूर्वपदं नापि तदन्तं होतुरेव पूर्वपदत्वादिति भावः। अत एवेति। पूर्वपदसमीपादेवेत्यर्थः। चित्राजरदिति। न चेह द्वन्द्वात्मकस्य पूर्वपदस्य पुंवद्भावोऽस्तु तथा च टाबपि निवर्तेतेति वाच्यम्। द्वन्द्वान्तर्गतयोः स्त्रीप्रत्ययप्रकृत्योः प्रत्येकं भाषितपुंस्कत्वेऽपि उदाहृतद्वन्द्वस्य तथात्वात्। तथा च पट्वीमृद्व्यौ भार्ये यस्येति विगृह्य पटुमृदुभार्य इत्युदाहरता भाष्यकारेण सर्वमिदं ध्वनितमिति भावः। द्वयोरपीति। पूर्वपदान्तर्गतमुत्तरपदस्थाश्रित्य प्रथमस्यापि पुंवद्भाव इति भावः। जरच्चित्रेति। पूर्वकालैकेति सूत्रे जरच्छब्दस्य प्रथमानिर्दिष्टत्वादुपसर्जनत्वे सति लिङ्गविशिष्टपरिभाषया जरत्याः पूर्वनिपातः। कर्मधारयोत्तरेति। एतेनादृष्टसदृशप्रजमिति प्रयोगो व्याख्यातः। इह प्रपट्टके बहूनां बहुव्रीहौ पूर्वपदं न पुंवदित्युक्तारूपे विशेष उक्तः। अनिज्विधावपि विशेषान्तरं वक्ष्यति। यत्तु प्राचा नीलोज्ज्वलवपुरित्युदाहृतं तत्र स्वरे विशेषो बोध्यः। तथाहि ॥

लिङ्गविशिष्टपरिभाषयेति। जरच्छब्दस्य प्रथमानिर्दिष्टत्वात्तेन लिङ्गविशिष्टपरिभाषया जरतीशब्दस्यापि ग्रहणेनोपसर्जनत्वे सति जरत्याः पूर्वनिपात इति शेषपू श.म.
रणेनान्वयः। विशेषान्तरमिति। परमः स्वो धर्मो यस्येति त्रिपदबहुव्रीहावपि तिजभावरूपमित्यर्थः ॥ १७०

महान्भेद इति। यदि तु कर्मधारयोत्तरपदे बहुव्रीहौ नीलपदस्वरः सिध्यतीत्युच्यते तदा चिन्त्यमेव प्राचीनोदाहृतमिति भावः। तत्करोतीति। प्रमाणं प्रमां करोतीति जन यतीत्यर्थः। क्विबन्तस्येदमिति। सवर्णदीर्घे पृषोदरादेराकृतिगणत्वाट्टाप् बोध्यः। अगतिकगतिरिति। भाष्यानुक्तत्वादिति भावः। प्रत्ययाश्रय इति। तेन लोपस्य बहिरङ्गत्वेना

बहुव्रीहि पूर्वपदे नीलशब्दस्य प्रकृतिस्वरः कर्मधारयपूर्वपदे तु कर्मधारयस्यान्तउदात्त इति महान्भेदः। स्त्री प्रमाणी यस्येति करणार्थल्युडन्तत्वात्प्रमाणश ब्दो विशेष्यलिङ्गः। टित्वान्ङीप्। कथं तर्हि प्रमाणा यां स्मृताविति शाबरभाष्यम्। भावे ल्युडन्तात्तत्करोतीति णिचि पचाद्यचि टाप्। यद्वा प्रमाणमिवाचरतीति आ चारक्विबन्तात्पचाद्यच्। भट्टास्तु। प्रमाणमयूनेर्याति मूलभूतां श्रुतिं यतः॥ क्विबन्तादथ तेस्तस्मात्प्रमाणा स्मृतिरुच्यते॥ १॥ इत्यादिग्रन्थेन अयतेः क्विबन्तस्येदं रूपमित्याहुः। तत्र ह्रस्वस्य पिती ति तुक् दुर्वारः। आगमशास्त्रमनित्यमिति तु अगतिकगतिः। इह तु गत्यन्तरमुक्तमेवायदप्याहुः। लोपो व्योर्वली ति लोपो पीह व लादिप्रत्ययाश्रय इति। तुक् प्राप्त तत। तत्र प्रत्ययग्रहणस्याप्रकृतत्वात्। गौधेरः पचेते इत्याद्युदाहरणविरोधाच्चेत्यास्तां तावत्। परिगणितानां त्रलतसिलादीन् त्रयोदशप्रकरणोक्ता इति। बह्वादिति। यद्यपि बह्वादिषु ङीषो वैकल्पिकत्वात्तदभावे बहुत्रेत्यादि सिध्यति तथापि पाक्षिकानिष्टवारणायेदम्। यत्तु प्राचा तत स्तत्रेत्युदाहृतं तत्सर्वनाम्नो त्र इत्यनेन गतार्थत्वादुपेक्ष्यम्। दर्शनीयतरेति। प्राचा पटुतमेत्युदाहृतं त्रामादिकमिति ध्वनयन्नाह। घरूपेति। बहु थेति। प्रकारवचने थाल्। तत्र हि किंसर्वनामबहुभ्य इत्यपि कृतम्। वृकतिरिति चा। वृकज्येष्ठाभ्यां तिल्तातिलौ चच्छन्दसीति तिल्। अजथ्येति। अजाविभ्यां थ्यन्। प्र सीति बहुल्यार्थादित्ययमपि शसन्तः सिलादिषु द्रष्टव्य इत्यर्थः। त्वतलो रिति। अत्र वदन्ति। जातिसञ्ज्ञाव्यतिरिक्तं धर्ममात्रं गुण इति। एवं च क्रियाशब्दानामप्यनेन पुंवद्भाव इति भावः ॥ ९७ सिद्धत्वान्न तुक्प्राप्तिरिति भावः। गौधेर इत्यादि। रशब्दे ते शब्दयोः प्रत्ययावयवत्वेपि प्रत्ययत्वाभावादिति भावः। विरोधाच्चेति। चेन तुकोपि प्रत्ययापेक्षत्वेन समत्वमित्यस्य संग्रहः। ततस्त्रेति। तस्यां तस्यामित्यर्थे इदम्। तिलिति। लिङ्गविशिष्टपरिभाषयेति भावः। परिगणनसामर्थ्यादेव जाते श्चेति निषेधाप्रवृत्तिरिति बो म॰

कैयटइति।अनेनहिकैयटेनभेदकंधर्ममात्रंगुणइत्यस्यनिरासेनशुक्लादिगुणग्रहणंसूचितम्।अत्रारुचिबीजंतुसंज्ञाजातिकृदन्ततद्धितान्तसमस्त[illegible]नामसंख्याश
ब्दातिरिक्तः शब्दोगुणवचनः शब्दइत्येकडारसूत्रस्थभाष्यविरोधः।अयंचसंख्यासर्वनामेतिचस्पष्टमेव।प्रगृह्यसञ्ज्ञेति।इग्यणइतिसूत्रेउभयइ[illegible]तेभाष्यप्र

अतएवप्राचानकोपधायाइतिसूत्रेपाचिकातापाचिकात्वमित्युदाहृतम्।तत्सौत्रेणचत्वतलोरिति[illegible]रिति[illegible]व्याख्यातम्।तदेतत्सर्वंभ[illegible]विरोधादुपे
क्ष्यम्।तथाहि।एकतद्धितेचेतिसूत्रे एकताएकत्वमित्युदाहृत्यपुंवद्भावेनसिद्धमित्याशङ्क्यभगवानाहउक्तमेवतत्त्वतलोर्गुणवचनस्येति।अत्रकैयटः।एक
शब्दस्यसंख्यावाचित्वाद्यागुणवचनत्वेपिअसहायवाचिनः तथात्वादितिभावइति।एवंहिवदताशुक्लादयएवेहगुणाइतिध्वनितम्।अतस्तथैवोदाहरति।
शुक्लत्वंशुक्लता[illegible]अतएवप्रसुइत्यत्रसि।कर्त्रीइति।कर्त्रीत्वमिति।तथाचस्त्रियामितिसूत्रेव्यापिनीत्वात्स्त्रइत्तेरितिकैयटेनप्रयुक्तम्।तथाचपुंयोगादितिसू
त्रेस्त्रियाः संविधात्रीत्वादितितेनैवप्रयुक्तम्।प्रगृह्यसञ्ज्ञाप्रकरणेपिविभक्तेरेवसञ्ज्ञिनीत्वादित्युक्तम्।स्यादेतत्।निरीक्ष्यमेनेशरइन्द्रकृतार्पता।सीवतामुप
गतास्त्वनुवेलंघृष्टतारहसिभर्तृभुस्ताभिः।सामुमोचरतिदुःखशीलतामित्यादिप्रयोगाणांकागतिरित्यतआह।शरइति।सामान्यइति।[illegible]चपत्युर्नो
यज्ञसंयोगेइतिसूत्रेपत्न्याःफलप्रतिग्रहितृत्वादितिवृत्तिग्रन्थमुपादायकर्तृत्वमात्रंविवक्षितंनतुस्त्रीत्वमितिऊपनकृतइतिहरदत्तोव्याख्यत्।पर:
संनिकर्षइतिसूत्रेएकैकवर्णवर्तित्वात्वाचइतिभाष्येकैयटोप्येवमेवाह।एतेननेष्टंपुरोहूरवतीत्वमासीत्इतिमाघोव्याख्यातः ॥

योगोपिमानम्।तस्यसमस्तत्वेनाप्यगुणवचनत्वंबोध्यम्।कृतार्थतेति।कृतार्थदुःखशीलशब्दौक्रियाशब्दाविति भावः।समस्तौचेत्यपिबोध्यम्।व्याख्यातइति।हूरवती
तिसञ्ज्ञापिनेष्टाकिमुतदीर्घोर्थइतिव्याख्यातृभिर्व्याख्यातत्वेनसञ्ज्ञाशब्दत्वात्।भाष्यरीत्यातद्धितान्तत्वेनगुणवचनत्वाच्च।त्वेनेतिह्रस्वस्यकस्यचेतिबोध्यम् ॥

रौहितेय इति। पुंवद्भावे सिद्धस्य प्रत्ययविधावित्यनाश्रित्येदम्। तदाश्रये तु रौहितिरित्यापत्तिर्बोध्या। संस्कारविशेषे इति। तद्गति [illegible] विशिष्टप
रिभाषयेत्यर्थः। इत्यविरोध इति। एवं च माधवानुसारेणायं लिखित इति सूचितम्। रूढ्यर्थं चेति। तत्र तदर्थमिदं निपातनं न विवाहनिबन्धन [illegible] इति तस्य त
स्य स्वविवाहितपुरुषविवाहितस्त्रीमात्रबोधकत्वेनान्याबोधकत्वेन चातिप्रसङ्गाभावेन रूढिकल्पने फलाभावाच्च। तस्याः भाषितपुंस्कत्वेन पुंवत्त्वाप्राप्त्या पुंवत्त्वबाधना
र्थमिति न्यासग्रन्थासंगतेश्च। किंतु तृतीयस्या। स हि योगार्थप्रवृत्तिनिमित्तक एव कल्पन्तो लोकव्यवहारेण समुदायोच्चारणेन च स्त्रीविशेषमद्यम सपत्नीशब्दबोध्ये रू

रौहिणेय इति। रोहितशब्दाद्वर्णादनुदात्तादिति ङीन्नकारौ। पुंवद्भावे तु सति तयोर्निवृत्तौ रौहितेय इति स्यादिति भावः। गृह्यत इति। आत्मानमेवात्र शरणमाश्रि
नु पर्यायादिति। अत्र च अन्त्सपत्ने इति निर्देशो लिङ्गम्। रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः इत्यमरः। वि[illegible]बन्धनमिति। तज्जन्यसंस्कारविशेषे रूढ
मित्यर्थः। सापत्न्य इति। भाषितपुंस्कत्वात्पुंवद्भावे कृते यस्येति लोपः। एतच्च सुख्यातौ वृत्तौ स्पष्टम्। यत्तु पारसण इति धातौ माधवेनोक्तम्। भावकर्मणोऽपसन्तल
सणेयकि सापत्न्य[illegible] अभाषितपुंस्कत्वात्पुंवद्भावो नेति। तत्तु द्वितीयं सपत्नीशब्दमाश्रित्येत्यविरोधः। यत्तु नित्यं सपत्न्यादिष्वित्यत्र न्यासकृतोक्तम्। समुदायोच्चा
रणं पुंवद्भावबाधक[illegible]मिति [illegible]। समानेस्य सभावार्थं रूढ्यर्थं च निपातनाश्रयणेन समुदायोच्चारणस्य तावतैवोपपद्यात्। अन्यथा संबुद्धिह्रस्वादीनामपि बाधापत्तेः।
किंच तसिलादिष्विति सूत्रे भाष्य[illegible]रा सपत्नीशब्दात्किवायणि भस्याढे इति पुंवद्भावेन सापत इति प्रापय्याशिवादिषु ॥ ७ इति भावः। अत एव समानस्वामिकदासे
नैतथाव्यवहारः क्वचित्तथाव्यवहारस्तु गौणः। किंच विवाहनिबन्धनः पतिशब्दो नास्त्येव। स्वामित्वेनैव हि स बोधकः। स्वामित्वं च प्रकरणादिना यज्ञफलनिरूपितं कदाचि
त् बुध्यते। तत् ध्वनयन् पुंवद्भावबाधकत्वे दूषणान्तरमाह। किंचेति। सापत इति। प्रापय्येति। अदेङ्गुण इत्युच्यते तत्र सापत्ने पुंवत्त्वं प्राप्नोति। एवं च सापत इति प्राप्नोतीति भाष्यकैय
टयोरुक्तम्। तृतीयस्य हि भाषितपुंस्कत्वेन पुंवत्त्वापत्तिः। स हि समानस्वामिकत्वेन पुमांसमप्याह। पुंवत्त्वबाधे हि तदसंगतिः स्पष्टैव। किंच विवाहनिबन्धनसत्त्वे तस्याः

भाषितपुंस्कत्वेन तमादाय सापत्नसिद्धेस्तदसंगतिः। नच सापत्न एव न सिध्यति सापत्नोपि प्राप्नोतीति भाष्यार्थ इति वाच्यम्। द्वितीयसत्त्वे रूढत्वेन तस्यैव शिवादौ ग्रहणे तृतीयादणोऽभावेन माधवरीत्या सापत्नप्राप्तेरिति दिक्। केवलयौगिकस्य ग्रहणं नेति। केवलयोगमात्रलभ्यसमानपतिकत्वरूपप्रवृत्तिनिमित्तकत्वेनेत्यर्थः। तेनैव स्वविवाहितपतिविवाहितां स्त्रियमाह न तु तत्तेनाव्यक्तिविशेषस्य बोधनाच्च रूढ्यर्थं निपातनमुक्तम्। अत एवास्य भाषितपुंस्कत्वमिति भावः। यद्वा। केवलयौगिकपतिशब्दघटितस्येत्यर्थः। एवं हि तत्र सिद्धान्तव्याख्या[illegible] सापत्नः प्रकृत्यन्तरत्वात्। सपत्नशब्दः प्रकृत्यन्तरमस्तीति। अस्यार्थः। अन्या प्रकृतिर्यस्य स प्रकृत्यन्तरस्तत्त्वादित्यर्थः। प्रकृत्यन्तरमाह सपत्नेत्यादि इति [illegible]पित प्रकृत्यन्तरत्वं सपत्नशब्दस्य शब्दमर्यादया [illegible]ध्यते। [illegible] निरूपितम्। लक्षणया तथा व्याख्याने च न मानम्। एवं च सपत्नीति गणपाठमाश्रित्य सपत्नप्रकृतिकसपत्नीशब्देन सापत्नसिद्धावपि सा केवलयौगिकस्य ग्रहणं नेत्याशयेन सापत्न इति प्रयोगो वारितः। निपातनस्य पुंवद्भावनिवृत्त्यर्थत्वे तु सर्वं विरुद्ध्येतेति दिक्। भावत्कादिति। ठावस्थायामेवाभत्वेपि पुंवद्भावो विधीयते ॥ पतोपि प्राप्नोतीति भाष्ये पूर्वपक्षः त्वत्संपता प्रकृतिर्गणेन पठ्यते किंतु भिन्नः सपत्नशब्दः तदाह लिङ्ग विशिष्टपरिभाषयाङीनन्तादण् सिद्ध्यति। नाद्यसामान्यचिन्तया शिवादिपाठो दृष्टकोपि बाधक इत्युत्तराशयः। एवं च केवलयौगिकपतिशब्दघटितस्य ग्रहणं नेति स्पष्टमेव। एवं च मूले द्वितीयसपत्नीशब्दमुत्सृज्य न माधवानुरोधेन। तदेतद्ध्वनयता यत्तु पारस्कर इत्यादिना माधवग्रन्थमुपन्यस्य तत्र द्वितीयसपत्नीशब्दमाश्रित्येत्युक्त्या दायविरोधाभाव उपपादितः। सापत्न्यमिति प्रयोगस्तु सपत्नप्रकृतिकादेव ब्राह्मणादित्वात् ष्यञि बोध्यः सपत्नप्रकृतिकोपि तृतीयसपत्नीशब्दार्थ एव तत्रैव लोके तत्प्रयोगात्। रूढयोरेव ग्रहणादित्यस्य सपत्नशब्दस्य लिङ्ग विशिष्टपरिभाषया तत्प्रकृतिकङीनन्तस्य चेत्यर्थः। तयोः शुद्धरूढत्वात्। तृतीयस्तु योगरूढः। अन्यथाऽस्यापि स्वयं रूढत्वे तदग्रहणे बीजाभावः। मध्यमात्[illegible]रिति व्याख्यातृणां मध्यमस्यैव तस्य रूढिघटितस्य शुद्धयौगिकस्य ग्रहणेऽस्य रूढस्य कथं त्यागः स्यात् इति सुहृदो विभावयन्तु ॥

सन्निपातपरिभाषयेति। ढादिषकारस्योच्चारणार्थत्वेन अल्विधितयास्थानिवत्त्वायोगाच्चेत्यपिबोध्यम्। निष्कर्षेत्विति। वार्तिकभाष्योक्तस्यापिसूत्रसंमतत्वमेवेति निष्कर्षे
तित्यर्थः। अतएव। सूत्रेणसिद्धत्वादेव। प्रकरणोक्तस्यैवेति। अनन्तरस्येतिन्यायादितिभावः। असमाविष्टत्वादिति। दक्षिणोत्तराभ्यामतसुच् दिङ्नामानीत्यनुयोः सूत्र
अन्यथाहिकृतेइकादेशेभत्वात्पुंवद्भावेसंनिपातपरिभाषयाकादेशोनस्यान्मापितिकवत्। भाष्यकारेष्टेति। अनेनसूत्रवार्तिकयोरुक्तिसंभवोपिध्वनि
तः। उत्तरं दृष्ट्वा पूर्वस्याप्रवृत्तत्वात्। निष्कर्षेतुवैयर्थ्यंस्पष्टमेवेतिभावः। दृष्टेरुदाहरणान्याह। सर्वमयइत्यादिना। मयडादीनांपरिगणिततत्सिलादिबहिर्भावा
त्नसूत्रेणगतार्थता। अतएवसर्वतः सर्वत्रेत्यादिनोदाहृतम्। सर्वकभार्यइति। नचस्त्रियाःपुंवदितिसूत्रेणगतार्थता। नकोपधायाइतिनिषेधात्। नचास्यापि
तेननिषेधःशङ्क्यः। स्त्रियाःपुंवदित्यादिप्रकरणोक्तस्यैवतेननिषेधात्। अस्मादृष्टेस्तुतस्मिन्प्रकरणेऽसमाविष्टत्वात्सर्वप्रियइति। अपूरणीप्रियादिष्वितिपर्युदा
सादप्राप्ते पूर्वस्यैवेति। वृत्तिघटकानेकभागमध्येकिंचिदपेक्षयापूर्वस्येत्यर्थः। अतएवतदितरेत्यादौपरस्यनपुंवद्भावः। लिङ्गादिति। अन्यथाहिएषाह्यास्तयोः
कात्पूर्वस्याः [illegible] मानर्थक्यं निर्विषयंस्यादितिभावः। यत्तुप्राचोक्तंसर्वनाम्नःसमासेपूर्वंपुंवदिति। यत्तुव्याचख्युः। वार्तिकार्थमनुवदतिसर्वनाम्नइत्यादिना
[illegible] तेज [illegible] एवेगणपठिताउपलक्ष्यन्ते। तेनसर्वानामकाचित्तस्याःपुत्रःसर्वापुत्रः। अतिसर्वापुत्रइत्यत्रनातिप्रसङ्गइति। तदेत
त्त्वेनापातरमणीयम्। तथाहि [illegible] सेइत्यनाकरम्। वृत्तिमात्रेइतिभाष्यात्। मयडाद्यन्तेआर्प्रंच। तथाचश्रीहर्षःप्रायुङ्क्त। निजामयोऽप्यामपिपावनीमयंभ
वन्मयोऽप्यापतिनावनीपविरिति ॥ ७ ॥ योर्भीष्मपाठादितिभावः। तदितरेत्यत्रसुप्सुपेतिसमासः। निर्विषयंस्यादिति। पुंवत्त्वेनापोनिवृत्तेरितिभावः। अन्या
स्वंचेति। यत्तुठक्छसोरितिनियमार्थंतद्धितेचेत्सर्वनाम्नःपुंवत्त्वंतर्हिठक्छसोरेवेति अतोमयडाद्यन्तेऽनिष्टमेवपुंवत्त्वमिति। तन्न। दक्षिणोत्तराभ्यामतसुजिति
सूत्रस्यभाष्यविरोधात्। भवन्मयइति। तत्स्वकृतवचनेइतिमयट् ॥

ब्राह्मणीपूर्व इति। सर्वनाम्नासमासत्वेन पूर्वस्य ब्राह्मणीत्यादेः पुंवत्वापत्तिरिति भावः। उक्तोदाहरणयोरिति। सर्वोपसर्जनघटितोदाहरणयोरित्यर्थः। तत्र सर्वनामसंज्ञक
त्वस्यैवाभावेन लक्षणाव्यर्थेति भावः। अतिसर्वा शब्दस्येति। उपलक्षणमिदं सञ्ज्ञाया अपि। कदापीति। वृत्तौ वृत्तेः प्राक्केत्यर्थः। वैयाकरणभार्य इति। नख्याभ्यामिति सूत्रस्थके यदह
किंच ब्राह्मणीपूर्व इत्यादावतिव्याप्तिः। न च जातेश्चेति निषेधः। सोऽत्र प्राप्तिमात्रविषयकः सदिति सिद्धान्तात्। रूपवतीपूर्व इत्यादौ जातिवाचकत्वाभावेनातिव्याप्ति
दार्ढ्याच्च। वार्तिकार्थमित्यपि स्पष्टार्थः। वार्तिकग्रन्थे एतदभावात्। न चात्र विवदितव्यम्। उक्त्कसोऽस्य ग्रन्थस्य निरालम्बनतापत्तेः। सर्वनामशब्देनास्याप्य पि
नेति। ... उक्तोदाहरणेऽपि ... स्यापि मुख्यत्वात्। दक्षिणपूर्वायै इत्यादावुपसर्जनतयाऽव्याप्त्यापत्तेश्च। ननु मात्रग्रहणसामर्थ्यात्सर्वनामता उपलक्ष
णं न तु विशेषणम्। ... सर्वनाम्नः संप्रत्यसर्वनामत्वेऽपि पुंवद्भावो लभ्यत इत्याकरे स्थितम्। मयापि स्वग्रन्थे उक्तमिति चेत्। तर्हि उपसर्जनभि
न्नाः लक्ष्यन्ते इति त्वद्ग्रन्थस्त्वदुक्त्यैव पराहत इत्यवधार्यताम्। न चैवमतिसर्वा पुत्रे अतिव्याप्तिः। अतिशर्वाशब्दस्य कदापि सर्वनामत्वेन तन्नातिव्याप्तेरुक्ति
संभवाभावादित्यास्तां तावत्। स्वभिन्नामिति। यात्वात्मानमेव दर्शनीयां मन्यते तत्राप्ति याः पुंवदित्येव सिद्धम्। एकस्या एव रूपभेदेन कर्मत्व कर्तृत्वयोः स
त्वेऽपि वास्तवाभेदेन सामानाधिकरण्याविधानादिति भावः। मद्रिकायत इति। मद्रेषु भवा मद्रिका मद्रवृज्योः कन्। पाकाभार्येति। अर्भकपृथुकपाका वयसीति क
प्रत्ययान्तोऽयमुणादिषु निपातितः। न त्विह तद्धितः नापि वुः। वयसि प्रथम इति ङीपं बाधित्वा अजादित्वाट्टाप्। वृद्धिनिमित्तस्य। वृद्धिशब्देन किम्। तावती भार्याय
स्य तावद्भार्यः। आ सर्वनाम्न इत्याकारविधौ वृद्धिशब्दो नास्ति। फलोपधानेति। निमित्तशब्दः फलोपहितपरः स्वरूपयोग्यपरत्वे तु वैयाकरणभार्यो न सिद्ध्येदिति
भावः। अकेशेति। सहनञ्विद्यमानपूर्वाच्चेति ङीष् भावः। जातेश्च। जातेः पर इति। जातिवाचकात्परत्वमात्रमिह विवक्षितं न तु जातेरित्येवं विधानपर्यन्तमाग्रहः। भाष्ये हास्ति
कमित्युदाहरणे औपसंख्यानिकस्यनायं निषेध इत्युक्तेः। ७ रदत्तानुरोधेनेदम्। भाष्य इति। नकोपधाया इति सूत्रस्य इत्यर्थः। इत्युक्तेरिति। हस्तिन्शब्दस्यादन्तत्वाभावेन ततो जा

टाबादिरिति। दृढविडौजः पत्नीस्त्री दृढविड् सा भार्या यस्येत्यर्थे समासे एतन्निषेधाभावेन पुंवत्त्वं भवत्येवेति भावः। अनूङ् इत्यस्य पर्युदासत्वे ऐड्विडवृन्दारिके इति निषेधविष
योत्तरसूत्रविषयकर्मधारयउदाहरणात् बहुव्रीहावीदृशे पुंवत्त्वनिषेध इष्ट एवेति तु न वाच्यम्। उत्तरत्राप्येतदनुवर्तितत्रापीदृशार्थकत्वमिति ध्वनयितुं तथोक्तेः। दृढविडादे
तेन हस्तिनीभार्य इत्यादौ नान्तलक्षणस्यापि निषेधः सिद्ध्यतीति भावः। यः प्रत्यय इति। टाबादिः। प्राचां तु विशिष्य ङीषेवोपात्तः। तन्निर्मूलं मूढाभार्याद्यादा
वव्याप्तेश्चेति भावः। ब्राह्मणीति। शार्ङ्गरवादित्वान्ङीप्। यत्तु प्राचा ङीष् न पुंवदिति व्याख्याय ब्राह्मणीभार्य इत्युदाहृतम्। तत्परस्परविरोधादुपेक्ष्यम्। सौत्रस्येति।
व्याख्यानमेवात्र शरणम्। संख्यया। सामानाधिकरण्यस्यान्यपदार्थवृत्तेश्च विरहात् पूर्वेणाप्राप्तौ वचनम्। उपदशा इति। उपशब्दः समीपे समीपिनि च
र्तते आद्येऽव्ययीभावः। द्वितीये तु बहुव्रीहिरिति विवेकः। सूत्रे नीति। लुप्तषष्ठीकमित्याह। तिशब्दस्येति। अन्येषामपि दृश्यते। अत्र प्राचोक्तम्। दृशिग्र
हणात् कर्मव्यतिहारबहुव्रीहौ पूर्वपदान्तस्य दीर्घत्वमात्वं वा न चीति। तत्रात्वं वेत्स पाणिनीयम्। अत एव मुष्टामुष्टि बाहाबाहवीति उदाहरणमप्यप्रमाणि
कमेव। आर्ष[illegible] अन्ये च दृशिग्रहणस्येदृशेऽर्थे तात्पर्यं न कल्प्यमिति प्रामाणिकः पन्थाः। अर्वाचीनास्तु आत्वमाहुः। तथा च पञ्जिकायां त्रिलो
[illegible] पूर्वपद[illegible]त्वं दृश्यत इति। एवं च प्राचा केचिदिति वक्तुमुचितं पाणिनीयसूत्राशयमद्धा निक्षेपस्त्वनुचित एवेति दिक्। ओर्गुणः। त
द्धिते किम्। प्रद्ध्वी। गुणोक्तिरिति। यद्यपि ओरोदिति सूत्रिते पि भस्य तद्धिते इति सञ्ज्ञाद्वयपूर्वकत्वमस्त्येव तथापि विधेयसमर्पकं पदं यत्र सञ्ज्ञारूपं स
एव सञ्ज्ञापूर्वको विधिरिति भावः। यद्यपि ओदिति तपरस्तत्कालस्य सञ्ज्ञैव। तथापीह तकार उच्चारणार्थः। ओरो इत्येव वास्तु ॥
रनन्तरापत्येजातित्वाभावाच्च। पदस्येति। ब्राह्मणीत्यत्र हितेनापि ङीनेवोक्त इति भावः। यदि तु तत्र ङीषिति पाठस्तदाकरविरोधो बोध्यः। सामानाधिक
रण्यस्येति। इदानीं समीपिन इत्यर्थोऽपि तदाह। उपशब्द इति। उच्चारणार्थ इति। तन्मात्रार्थ इत्यर्थः। फलाभावेन तपरसूत्राप्रवृत्तेरिति भावः ॥

म॰श॰ प्रत्याख्यातमिति। अव्यावर्तकत्वात्तस्या अग्रह[...]म्। तस्याः विशिष्टरूपोपादानविषयत्वाच्चेत्यपि बोध्यम्। विद्यमानतावाचीति। दशानां पुत्राणां विद्यमानत्वेद्
१७४ त्यर्थस्तत्फलितमाह। दशस्विति। अव्यभिचारादिति। पूर्वाह्णस्य सादृश्यं सह पूर्वाह्णमित्यादावपि अव्ययस्य प्रथमानिर्दिष्टत्वेनोपसर्जनत्वमस्त्येवेति भावः। अवयव
द्वारकमिति। समासस्योपसर्जनत्वासंभवादिति भावः। यद्यपि सहकृत्वप्रियइत्यादौ समासस्योपसर्जनत्वसंभवस्तथापि लक्ष्यानुसारादेवं व्याख्यानं बोध्यम्। उ
स्वरूपं शब्दस्येति तु प्रत्याख्यातमिति भावः। तेन सहेति तुल्ययोगे। तुल्ययोगे किम्। सहैव दशभिः पुत्रैर्भारं वहति गर्दभी। विद्यमानतावाची सहशब्दः। दशपु
त्रेषु विद्यमानेष्वित्यर्थः। वोपसर्जनस्य। उपसर्जनस्येति न सहस्य विशेषणम्। अव्यभिचारात्। किं तूत्तरपदेन सन्निधापितस्य समासस्य। तच्चावयवद्वारकम्। उप
सर्जनसर्वाव[...]बहुव्रीहेरिति यावत्। व्यधिकरणे च षष्ठ्यौ तदेतदाह। बहुव्रीहेरवयवस्येति। तेन हन। सहकृत्वा। सहयुध्वा। प्रापिकमिति। सपूर्वा
या उदक्षयः[...]कादित्यादिनिर्देशादिति भावः। स्वरे विशेष इति। उविसति चितः इत्यन्तोदात्तत्वं स्यात् असति तु पूर्वपदप्रकृतिस्वर इत्यर्थः। संख्याया इति। संख्यान्त
स्य तत्पुरुषस्य अन्तावयवोऽङ्ग्वास्य इत्यर्थः। एकविंशतिरित्यादौ तु न। अन्यत्राधिकलोपात् इति वार्तिककारोक्तेः। स्थूलास इति। यत्तु प्राचा प्रत्युदाहृतम्। स्थूलासिरिति।
तन्न। अस्योदर्शनादित्यस्य प्रसङ्गात्। यत्तु व्याचख्युः। समासान्तविधेरनित्यत्वात्सन्न कृत इति। तदापाततः। एवं हि षजपितथैव न भविष्यतीति प्रत्युदाहरणस्यासङ्गति
प्रसङ्गात्। नेतुर्नक्षत्र इति। नक्षत्रे यो नेतृशब्दस्तदन्ताद्बहुव्रीहेरित्यर्थः। नेता नायकः ॥७॥ उपसर्जनसर्वावयवकस्येति। कश्चिदवयवः सर्वत्रोपसर्जनमेवेति विशेषणसाम
र्थ्याद्देसल्लाभ इति भावः। तादृशश्च बहुव्रीहिरेवेत्याह। बहुव्रीहेरिति। व्याख्यानाच्चात्रोपसर्जनपदेन लौकिकं शास्त्रीयं च तद्गृह्यते। ते सपुत्र इत्यादावपि उपसर्जनसर्वावयवकत्वं
बोध्यम्। सपूर्वाया इति। एतच्च वृत्त्यनुरोधेन। अत्र सह विद्यमानः पूर्वो यस्या इति अनेकमन्यपदार्थ इति बहुव्रीहिरित्यन्ये। अन्यत्राधिकेति। अव्ययादेरित्युक्तत्वादित्यपि बोध्यम्। अत रामः
एव गोविंशतिरित्यादौ न। नक्षत्रे य इति। तद्वृत्तित्वं च नेतृशब्दस्य तत्सामानाधिकरण्यात्। तेन चन्द्रो नेता यस्य स चन्द्रनेता मृग इति सिद्धं समासविशेषणे तु बहुव्रीहेर्नक्षत्रवृत्तित्वाद्दोषः स्या १७४

उपलक्षणमिति।स्पष्टं चेदं गतिबुद्धेतिसूत्रे भाष्ये।अव्याप्तीत्यादि।प्रणीनयेत्यत्राव्याप्तिः प्रनःपूषेत्यत्रातिव्याप्तिरितिभावः।सामानाधिकरण्यासंभवादिति।यद्यपि प्रातःकल्यमित्या
दाविव वृत्तौ शक्तिमत्प्रधानत्वं संभवति।तथापि प्रातःकाले स्वरूपतः शोभनत्वस्य निरूपयितुमशक्यत्वात्तत्रैव प्रयोगाच्च कर्मपर्यन्तं लक्षणेति बोध्यम्।व्यावृत्तिरिति।मध्यमस्य
नतु स्थूलपूर्वादिति।स्थूलपूर्वाद् बहुव्रीहेरच् नेत्यर्थः।खुरखराभ्यामिति।नासिकाया इत्यपेक्ष्यते।केवलादेशवचनं प्रत्ययनिवृत्त्यर्थम्।उपसर्गाच्च।उप
सर्गग्रहणं प्रादीनामुपलक्षणम्।नासिकाशब्दस्य क्रियार्थत्वेन तं प्रत्युपसर्गत्वायोगात्।तदाह।प्रादेरिति।तद्ग्रहेति।प्रणीनय प्रतनं वस्योअच्छ प्रनःपूषाद्
त्यादौ अव्याप्त्यतिव्याप्तिप्रसङ्गादितिभावः।शोभनं प्रातरस्येति।प्रातःशब्देन प्रातस्तनं कर्म लक्ष्यते।अन्यथा प्रातःशब्दस्याधिकरणप्रधानतया सामानाधिकरण्य
स्यासंभवादित्याहुः।एणीपदादिषु त्रिषु निपातनात्पद्भावः।धर्मादनिच् केवलात्।इह बहुव्रीहिणा पूर्वपदमाक्षिप्यते इत्यनुपदमेव वक्ष्यति तच्च केवलादित्यनेन वि
शेष्यं तत्र व्याह।केवलादिति।यत्तु प्राञ्चः केवलादित्युभयविशेषणतया व्याख्यातम्।तस्यात्रेण च केवलादिति धर्मशब्दस्य पूर्वपदस्य च विशेषणमित्युक्तम्।पाणिनी
यमतदर्पणे च [illegible] धर्मप्राक्पदयोर्मतमित्युक्तं तत्सर्वमापाततः।धर्मपदविशेषणे प्रयोजनाभावात्।धर्मशब्दान्तं यत्रोत्तरपदं तत्र व्यावृत्तिः फल
मिति चेन्न।तत्र धर्मपदस्य [illegible] अवयवीभूतपूर्वपदात् परत्वस्याभावात्।त्रिपदे बहुव्रीहावित्ति। इह सर्वनामसंख्ययोरुपसंख्यानमिति स्वशब्दस्य पूर्वनिपातो न भव
ति।आहिताग्न्यादेराकृतिगणत्वादिति हरदत्तमाधवौ।आपेक्षिकमिति।नन्वत एव केवलग्रहणं व्यर्थम्।पूर्वपदशब्दस्य समासप्रथमावयवे रूढत्वेनैव मध्यमपद
व्यावृत्तिसंभवात् इति चेन्नैवम्।पूर्वपदासेपे तात्पर्यग्राहकत्वेनैव केवलपदस्य सार्थकत्वात्।कर्मधारयेति।यत्त्वाहुः।साध्वोधर्मोऽस्येति साध्वधर्मा संदिग्धश्चासौ सचेतिविग्र
हः।स च संदेहः साध्वधर्मत्वप्रकारक एव पर्यवस्यतीति।सोयं व्याक्रोशः।उक्तरीत्यैव साध्व्यस्य साक्षात् संदिग्धत्वलाभात्।ननु कर्मधारयपूर्वपदत्वेऽनिच् दुर्लभः।केवलादित्यस्य समासा
नात्मकादित्यर्थादिति चेन्नैवम्॥ [illegible] अपूर्वपदत्वम्।यत्पूर्वपदं ततः परत्वं च न धर्मशब्दस्येति भावः।पूर्वपदासेपे इति।यौगिकपूर्वपदासेपे इत्यर्थः।वस्तुतस्तु तत्फलं चिन्त्यम्।

 आकरग्रन्थे इति। केवलपदस्य लोके न तु दुर्भार्थे केवलाभ्यामित्यादौ च सजातीयान्याभावे एव प्रयोगेण त्वदुक्तार्थे मानाभावादिति भावः। एतच्चेजादेरिति सूत्रे भाष्ये स्पष्टम्। नि
 वृत्तिधर्मेति। प्रवृत्तिधर्मे सस्योपसस्यम् मा इत्यमिति। जम्भैः इत्यैः सुतमभिषुतं सोमं पिबतेति तदर्थः। प्रयुञ्जत इति। एकरूपेणेति शेषः। इति शब्दादिति। लौकिकवि व
सानुसारकत्वात्तस्येति भावः। कर्मव्यतिहारः परस्परग्रहणादिः। अव्ययीभावत्वमिति। तेन तस्याव्ययत्वं बोध्यम्। एतच्च रत्यादिप्रामाण्यादास्थितम्। एवं च स्वरार्थमपीति।

त्वदुक्तेऽसिमार्थस्याकरग्रन्थारूढत्वात्। अस्मदुक्तार्थस्तु भ्वादिगणे धृञ् धारणे इति धातौ माधवग्रन्थे स्पष्टः। निवृत्तिधर्मा हिंस्यानी भवतीति प्राचां प्र
योगोऽपि अस्माकमेवानुकूल इति दिक्। दन्तैश्चेति। तथा च दृश्यते। इमं जम्भसुतं पिबेति। दक्षिणेर्मा। लुब्धो व्याधः। अत एवाह। व्याधेनेति। कवयस्तु हिंसामात्रे
प्रयुञ्जते। वल्लीहेमाब्जमाली गुणनिधिरिपुणा निर्मितो दक्षिणेर्मेति यथा केशाकेशीति। तत्र तेनेति बहुव्रीहिः। तत्र हि ग्रहणप्रहरणयुद्धानीव कर्मव्यतिहा
रोऽपि इति शब्दाल्लभ्यते इच् प्रत्ययस्य तिष्ठद्गुप्रभृतिषु पाठात् तदन्तस्याव्ययीभावत्वम्। नन्वेवमव्ययीभावसञ्ज्ञया बहुव्रीहिसञ्ज्ञाया बाधात् समास
स्वरेणैवान्तोदात्तत्वसिद्धेः तत्किमिच्स्वरेण। अत्राहुः। विशेषणार्थं तत्। तिष्ठद्गुप्रभृतिषु इकारमात्रपाठे हि सुगन्धिरित्यादावतिव्याप्तिः स्यात्। यद्वा दण्डा
दण्डीत्यादौ सञ्ज्ञयोः समावेश एव उपजीव्यविरोधस्यान्याय्यत्वात्। एवं च स्वरार्थमपि चित्त्वम्। द्विदण्डीति। द्विदण्ड्याद्यन्तस्य नात्विच्छन ॥

इदं सति शिष्टस्वरबलीयस्त्वानाश्रयणेन। यदि तु उपजीव्यत्वेन बहुव्रीहिसञ्ज्ञया समावेशेऽपि सति शिष्टस्वरबलीयस्त्वेनाव्ययीभावत्वप्रयुक्तसमासान्तोदात्तत्वेन
सिद्धिरित्युच्यते तदा चित्त्वमेव प्रयोजनमिति बोध्यम्। समावेशफलं तु इच्प्रत्ययाव्ययत्वयोः सिद्धिः। तत्र तेनेदमित्यव्ययीभावप्रकरणे इजपि न समासान्तप्रकरणे 
एव तु न कृतः द्विदण्ड्यादिभ्यश्चेत्यत्रेच्पदस्य कर्तव्यतापत्तेः सिद्धान्ते तु परत्वादेष नङ्‌ एवेष्यते ॥ 

विषयविशेषेति। मुद्गादिरूपान्यपदार्थरूपे इत्यर्थः। उभयाहस्त्याभरेति। इदं वेदभाष्ये मद्यपि उभाभ्यां हस्ताभ्यामाभरेति व्याख्यातम्। तथापि समुदायनिपातनादेव बहुव्रीह्यधिकारेऽपि तत्पुरुषादयमव्ययत्वाद्व्याप्नोलुक्। इदमप्यव्ययत्वफलं बोध्यम्। आश्रितेति। आरोप्येत्यर्थः। स्वतन्त्रोपीति। जानुवाचीत्यर्थः। उपज्ञुरिति। जानुसमीपमित्यर्थः। एकदेशद्वित्वस्य विवरणमविभागेनेति। अवयवावयविनोर्हि अविभागलक्षणसमवायः। एवं प्रकृतेपीति। इत्वेस्युक्तं तद्दूषयन्नाह। एवं

समुदायनिपातनस्य विषयविशेषपरिग्रहार्थत्वात्। उभाहस्तीति। निपातनादेवायचं विना प्रयोगः। उभयाहस्तीति। पक्षे यच्। उभयाहस्त्याभरः। प्रसंभ्यां। जानुशब्दस्यैकत्वेऽपि अर्थगतमुपपदनिबन्धनं वा द्वित्वमाश्रित्य जानुनोरिति द्विवचननिर्देशः। तत्फलं तु स्थानष्ठीत्वस्फुटीकरणं जानुनद्युक्ते किं पञ्चमी यं प्रत्ययाधिकाराच्च ज्ञुरपि प्रत्यय इति सम्भाव्येत। तदेतद्दूषयन्नाह। ज्ञुरादेश इति। छन्दसि तु स्वतन्त्रोपि दृश्यते। उपज्ञुवाधोनमसासदेम। धनुषश्च। धनुरन्तस्येति। धनुरन्तादिति तु प्राचः प्रामादिक एव। अथ कथं स्वलावण्याशंसाधृतधनुषमह्वायतूणवदिति पुष्पदन्तः। समासान्तविधेरनित्यत्वात्। अनित्यत्वे प्रमाणं त्वंघ्रादिगणे राजन्शब्दस्य पाठः। स हि प्रतेरंश्वादयस्तत्पुरुषे इत्यन्तोदात्तार्थः। राजाहः सखीति टचोनित्यत्वे तु किं तेनेति दिक्। अविभागेनेति। एवं च गुणवाचिन एवेह ग्रहणं न तु द्रव्यवाचिन इति फलितोर्थः। द्रव्याणीति। अस्ति दगन्धशब्दो द्रव्यवचनः। वहति जलमियं पिनष्टि गन्धानियमियमुद्ग्रथते स्रजो विचित्राः इति दर्शनात् ॥

ऽ चगुणेति। गुणोपसर्जनद्रव्यवाचिन इत्यर्थः। एतद्वृत्तिविषयमेव गन्धस्यतादृशत्वमिति न पूरणगुणेति सूत्रस्थग्रन्थविरोधः। एतदेवाभिप्रेत्य भाष्ये घटयोरुक्तं कुङ्कुमाद्यनुलेपनमपि द्रवद्रत्तादेरविभागापन्नं निलीनं यदि विवक्षितं तदा सुगन्धिर्देवदत्त इति। विभागेनावस्थाने तु सुगन्ध इतीति। न तु द्रव्येति। चन्दनत्वजातिविशिष्टद्रव्येत्यर्थः। सुगन्धिर्वायुरित्यत्रापि गन्धाश्रयाणां तत्तत्स्थानां वायवविभागापन्नानामेव ग्रहणमिति न दोषः। एवं सुगन्धिपुष्पं सलिलं चेत्यत्रापि द्रष्टव्यम्। कोशेपि द्रव्यवचन इत्यस्यो

म·श आघ्रायीति। वान्वहन्वायुराघ्रातइत्यर्थः। दुर्घटेति। अत्रकेचिदित्यत्रचारुचिबीजंतुतादृशार्थत्वेउक्तभाष्यविरोधइतिदिक्। यद्वेत्यादिनोक्तंचिन्त्यम्। परनिपातापत्तिज्ञाप
१७६ कात्क्रमणस्यावश्यकत्वात्। कथंतर्हीति। सञ्ज्ञात्वाभावेनस्त्रियांसञ्ज्ञायामित्यस्याप्यप्राप्तेरितिभावः। नपूतश्चेतिसिद्धेइति। इदंतस्मीशब्दमात्रविषयंप्रकारान्तरम्। अन्येतु
गन्धस्तुसौरभेनृत्येगन्धकेगर्वलेशयोः। सएवद्रव्यवचनोबहुत्वेपुंसिचस्मृतइतिकोशाच्च। एतेनमहीभृतःपुष्पसुगन्धिरादद्दे। भग्नबालसहकारसुगन्धौइत्यादि
व्याख्यातम्। एतच्चसर्वंहरदत्तग्रन्थेस्पष्टम्। केचित्तुतदेकान्तशब्देनस्वाभाविकत्वंविवक्षित्वाआगन्तुकस्यनेत्याहुः। तथाचभट्टिः। आघ्रायिवान्गन्धवहःसुगन्धइ
ति। व्याख्यातंचजयमङ्गलायाम्। गन्धस्येदुत्पूतिसुसुरभिभ्यइतीकारःसमासान्तोन। गन्धस्यैकत्वेतदेकान्तग्रहणमितिवचनात्। सुगन्धआपाणिकइतियथेति। अतए
वभग्नबालसहकारसुगन्धाविसादीनांप्रामादिकत्वंदुर्घटवृत्तिकृतोक्तम्। अल्पाख्यायाम्। सूपस्यगन्धोलेशोयस्मिन्निति अधिकरणपदोबहुव्रीहिः। अतएवज्ञाप
कात्। ग्रहा। सूपोगन्धोस्मिन्नित्येवविग्रहः। गन्धस्यविशेषणत्वेपिअस्मादेवज्ञापकात्परनिपातः इतिविश्वइति। एतेनाल्पपर्यायोयंगन्धशब्दइतिप्राचो
ग्रन्थोव्याख्यातः। अल्पाख्यायामितिसूत्रस्यापिस्वरसः। यत्तुवदन्ति। गन्धशब्दोत्रलक्षणयाऽल्पत्वंगमयतीति। तच्चिन्त्यम्। पांक्तिग्राहकस्योक्तत्वात्। पादस्य।
यद्यपंलोपःसमासान्तोनस्यात्आदेःपरस्येत्यादेःस्यात्शैषिकःकप्प्रसज्येत। समासान्तापेक्षस्यशेषस्याश्रयणत्वात्अतआह। अयंसमासान्तइति। क
थंपुनरभावोभावस्यावयवःस्यात्तत्राह। स्यानिद्वारेणेति। औपचारिकमवयवत्वंवचनबलादितिभावः। वयसि। सादृश्येरोषात्सुदतीससर्जेति। नह्यत्रवयोगम्य
तेऽतःसुदन्तीतिभाष्यम्। अत्राहुः शोभनादन्ताअस्याःसमस्ताजातानतन्नूनाइतिकथंचिदिहापिवयोगम्यतएवेति। उरःप्रभृतिभ्यःकप्। लक्ष्मीरिति। नपूतश्चेतिसि
द्धेनियमार्थमिहपाठः। एकवचनान्तस्यैवेति। अत्रैवनित्योयथास्यात्। अन्यत्रशेषादितिविकल्पएव। तेनअकृशमकृशलक्ष्मीश्चेतसांशंसितंसइतिसिद्धम्। राम:
तुअविभक्तिकपाठात्तद्विवक्षेतिबोध्यम्। एकवचनान्तस्यैवेति। तदवयवकस्यैवेत्यर्थः। सिद्धमिति। बहुवचनान्तेनविग्रहात् ॥ १७६

तदाह। अकृशा इति। बहुलक्ष्मीक इति। बह्वी लक्ष्मीर्यस्येति विग्रहः। तत्प्रामादिकमिति। विशेषविहितत्वेनास्यैवोचितत्वमिति भावः। निषेधमुखेनेति तत्पक्षे हीत
रनिवृत्तावेवास्य तात्पर्यमिति भावः। पक्षमाश्रित्येत्यनेन सपक्षो भाष्यासंमत इति सूचितम्। इत्यादिग्रन्थानामिति। आदिना भाष्यम्। अस्य पर्यालोचनयेत्यनेना
न्वयः। तत्र प्रकृतसूत्रस्थेनानुक्तसमासान्तेत्यर्थलाभो बहुव्रीहिप्रकरण—स्थेन संख्ययाव्ययेत्यादिसूत्रस्थेन शेषाधिकारः स्यादित्यस्य लाभ इति बोध्यम्। बाधाप

अकृशा लक्ष्मीर्यस्येति विग्रहः। यत्तु प्राचोक्तम्। नघृतश्चेति कप्। बहुलक्ष्मीक इति। तत्प्रामादिकमिति व्याख्यातारः। नियमशास्त्रस्य निषेधमुखेन प्रव
त्तिरिति पक्षमाश्रित्य वा योज्यम्। अनर्थकेनापीति। कथं तर्हि सुपथी नगरीति प्राचामुदाहरणं स्वयमप्यनुसृतं कपो दुर्वारत्वात्। न च नपूजनादिति निषेधः। प
वः प्राचीनानामेव स इति वक्ष्यमाणत्वात्। सत्यम्। समासान्तविधेरनित्य इति कथंचित्समाधेयम्। सुपथीति। सुवो रनाक इति सूत्रीयभाष्याच्चेत्युक्तम्। तत्त्वादि
नेति। एतच्च प्रकृतसूत्रस्य इत्यादिग्रन्थानां बहुव्रीहिप्रकरणे कबभावार्थं चेति पुनः पुन भाष्यकारोक्तेश्च पर्यालोचनया लभ्यते। यत्तु वदन्ति। प्रतिपदोक्ताः समा
सान्ताः स्वविषये बाधका भवन्ति। तत्किमनुक्तसमासान्तपरेण शेषग्रहणेनेति। तन्न। ऋक्पूरित्यादीनां समासान्ते चरितार्थतया परेण कपो बाधापत्तेः। बहुनाडि
रिति। उपसर्जनह्रस्वः। सप्तमीविशेषणे। कण्ठेकाल इति। यदा कण्ठे किंचिदस्तीति निर्ज्ञाते काल इति विशेषणं तदेदं बोध्यम्। अन्यदा तु सप्तमीग्रहणं विनाऽ
पि विशेषणत्वादेव सिद्धम्। चित्रगुरिति। यद्यपीह उपसर्जनं पूर्वमिति सिद्धम् ॥ ॐ नेरिति। इदं च समासान्तमात्रापेक्षं शेषत्वमिति वदन्तः कैयटानुरोधे

न। अमत्तर बहुव्रीहावधिकारापेक्षं शेषत्वं न कबपेक्षं नापि समासान्तापेक्षमिति वदतो भाष्यकारस्य मते नेदं दूषणं किंतु प्रतिपदोक्तत्वमात्रेण बाधकत्वं किंत्वनव
काशत्वेन। न चात्र तदस्ति कबभावे सावकाशत्वादिति भाष्योक्तं दूषणं बोध्यम्। तदेदमिति। विशेषणशब्देन परिच्छेदकं गृह्यत इत्यभिमानः। एवं हि यदा स्यचि
त्ताः सन्तीति निर्ज्ञातं तत्परिच्छेदाय चरणावृत्तिप्रयुक्तं तदा गोवित्रहस्य स्यापत्तिः। तस्माद्विशेषणत्वेन सिद्धावपि सप्तमीग्रहणमधिकरणसमासज्ञापनार्थमित्येव तत्त्वम्॥

नन्कौण्डिन्यन्यायेनेति। द्वंद्विस्यम्। अनुवाद्यत्वात्। तस्मादन्यपदार्थापेक्षयोभयोरप्यप्रधानत्वेन प्रथमानिर्दिष्टत्वेन चानियमे प्राप्ते उत्तरपदार्थविशेषणस्यैव पूर्वनिपाता
र्थमिदं मितिवेद्यम्। जहत्स्वंपदंयमिति। यत्पदेन यस्य पदस्य समर्थस्य संग्रहणे। चार्विति। चारु स्मितं यस्येति बहुव्रीहिः॥ इति बहुव्रीहिः॥ कर्मादीति। अन्यपदार्थे इत्यर्थः। स
मप्रधानानामिति। समप्राधान्यं परस्परविशेषणत्वम्। संभवतीति। पुष्पवन्तादिवदिति भावः। समुच्चयान्वाचययोः स्यातामिति। एकार्थीभावविषयाविति शेषः। तत्रैकस्येन
-तथापि बहुव्रीहौ सप्तमीत्युक्ते तक्रकौण्डिन्यन्यायेन उपसर्जनपूर्वत्वं बाध्येत अतो विशेषणग्रहणम्। सर्वनामेति। कथं तर्हि तः परो यस्मात्स तप
र इति। कथं वजहत्स्वार्थावृत्तिरिति। इह हि जहत्स्वंपदंयंजहन् स्वः सोऽर्थो यत्रेति बहुव्रीहिगर्भो बहुव्रीहिः। तथा च स्वरशब्दयोः सर्वनामत्वात्पूर्वनि
पातेन भाव्यम्। सत्यम्। सूत्रभाष्यादिप्रयोगाद्राजदन्तादित्वाद्वा सिद्धम्। सारङ्गजग्धीति। अस्वाङ्गपूर्वपदाद्वेति ङीप्। कथं चारुःस्मितमिति। नपुंसके
भावे क्त इत्यस्य न पूर्वनिपातः। निष्ठाशब्देन विहितस्यैवेह ग्रहणमित्याहुः॥ इति बहुव्रीहिः॥ चार्थे द्वन्द्वः। चार्थ इति। चशब्दद्योत्याद्यर्थः। असाम
र्थ्यादिति। एकार्थीभावाभावादित्यर्थः। तथा हि। बहुव्रीहिघटकपदानां कर्मान्तर्भावेणेव द्वन्द्वघटकपदानां चार्थान्तर्भावेण एकार्थीभाव आवश्य
कः समर्थः पदविधिरिति परिभाषितत्वात्। चार्थे द्वन्द्व इत्युक्ते च। न चैकशक्तिविषयाणां समप्रधानानां परस्परं विहाय इतरान्वयः संभवति। येन
समुच्चयान्वाचयौ स्याताम्। किंतु मिलितानामेवान्वयो वाच्यः मेलनं च समुदायः स च वर्तिपदार्थं प्रति विशेषणं विशेष्यं चेति द्वैधम्॥
रामिलितस्यैवान्वयादिति भावः। द्वैधमिति। यथा तु चार्थ इति सूत्रे भाष्यं तथोभयत्रापि समुदायस्य विशेष्यत्वम्। आद्ये उद्भूतावयवभेदोऽन्त्ये तिरोहितावयवभेद इति अन्य
पदार्थप्राधान्ये बहुव्रीहेरिव चार्थप्राधान्ये द्वन्द्वस्येति तत्त्वम्। उद्भूतावयवभेदत्वमारोपितावयवगतसंख्यावत्त्वम्। एतदनारोपे तिरोहितावयवभेदत्वम्। अन्यथा स्वपदैः
षामृषयत्रापि तत्तद्रूपेण बोधात्तत्त्वं दुरुपपादम्। आरोपानारोपयोश्च शब्दस्वभाव एव बीजम्। अतएवाद्ये घटश्च पटश्चेत्येव विग्रहोऽन्त्येन योः समाहार इति तत्त्वम्॥

च शब्दान्तर्भावेणेति। प्रवृत्तिनिमित्तयोः सामानाधिकरण्यं तत्र चार्थः। नीलत्वसमानाधिकरणोत्पलत्ववदुत्पलं नीलमिति बोधात्। अत एव तदन्तर्भावेण वृत्तिरपीति भावः। द्वन्द्वेष्टापत्तिरिति। ननु गुणादेर्द्रव्याश्रितत्वेन तदपेक्षत्वात्तयोस्सहविवक्षासंभवेन कथं तत्रेष्टापत्तिः। स्पष्टं चेदं विशेषणं विशेष्येणेत्यत्र भाष्यकैयटयोरिति चेन्न। गुणयोः क्रिययोश्च तत्संभवात्। आशंसासंभावनयोरविशेषइत्यादिभाष्यप्रयोगाच्च। विशेषणमिति सूत्रे तिलकृष्ण इति न द्वन्द्व इति भाष्योक्तिस्तु तिलकृष्णा आनेया

इत्यत्रायेदितरेतरयोगद्वन्द्वः। द्वितीये समाहारद्वन्द्वः। उभयथापि समुदायस्य द्वन्द्वेनोक्तत्वाच्च शब्दाप्रयोगः। न चैवं नीलोत्पलमित्यादावपि च शब्दान्तर्भावेण विग्रहदर्शनादेकार्थीभावसत्त्वाच्च द्वन्द्वो दुर्वार इति वाच्यम्। सामानाधिकरण्ये विशेषविहिततया विशेषणं विशेष्येणेति तत्पुरुषसञ्ज्ञया द्वन्द्वसञ्ज्ञाया बाधात्। यत्तूक्तं चित्कर्मधारयसंज्ञया बाध इत्याहुस्तत्तुच्छम्। तस्या एकसञ्ज्ञाधिकारबहिर्भूतत्वात्सञ्ज्ञानां चकृतत्कृत्यप्रत्यायादिषु समावेशस्य सुप्रसिद्धत्वान्न्याय्यत्वाच्च। सामानाधिकर ण्याविवक्षायां तु द्वन्द्वे इष्टापत्तिरेवेति दिक्। होतपोत्रिति। अनयोरुत्तरपदपरत्वाभावादानङ्। अजाद्यदन्तम्। कथं तर्हि ससौष्ठवौदार्यविशेषशालिनीम्। लोचनाधरकृताहृतरागेति भारविः। अत्राहुः। अनित्यमिदं प्रकरणम्। समुद्राभ्राद् इत्यादिनिर्देशात्। द्वन्द्वश्च प्राणितूर्य ॥

७ इत्यादिप्रयोगपरा। कृष्णानामाप्याकाङ्क्षायामुपस्थिततिलैरेवतदाकाङ्क्षाशान्तिरिति तत्र सहविवक्षाभाव इति तात्पर्यात्। तिलकृष्णयोरभेद इत्यादि भवत्येव। एवं नीलोत्पलयोरभेद इत्यपि भवति अभेदान्वये तयोः सामानाधिकरण्यस्य पश्चान्मानसप्रतीतावपि द्वन्द्वरूपपदसंस्कारवेलायान्तदविवक्षणात्। यद्वा शब्दस्वरूपपरावेतौ। एवं च भिन्नार्थत्वान्नैकशेषः। नापि सामानाधिकरण्यप्रयुक्तः कर्मधारयः। तयोः शब्दयोरर्थभेदाभावाद्विशेषोभेदोवेति तदर्थ इत्याशंसायां भूतवच्चेत्यत्र सूत्रे कैयटे स्पष्टमिति दिक्। ससौष्ठवेति। सौष्ठवौदार्ययोर्ये विशेषास्तच्छालिनीमित्यर्थः ॥

म॰ श॰ समाहारेइति।समाहारेद्वन्द्वः प्राण्यङ्गादीनामेवेत्यर्थः।अध्वर्युशब्द इति। अध्वर्युणाक्रतोः संबन्धात्व्यभिचारादितिभावः।कथंतर्हीति।व्यक्तिप्राधान्यविवक्षयाः ननिर्वाहः।सकलनरुशैल
१७८ रञ्जनस्यविवक्षितत्वादितिभावः। चत्वार इति।नदीदेशइतिभिन्नेपदे।द्वन्द्वेद्विवचननपुंसकत्वान्यतरापत्तेरितिभावः।जनपदोहीति।जनानां।पदंस्थानं।अत्रेतिव्युत्पत्त्या

समाहारएवेति।विपरीतस्तुनियमोनभवतिसमाहारेप्राण्यङ्गादीनामेवेति।तिष्यपुनर्वस्वोरितिसूत्रेबहुवचनग्रहणात्।नहिसमाहारेकवचनस्यमाभूदि
तिकृतंतिष्यपुनर्वस्विति यथा।उदगादिति।इहयदाकठेषुकलापेषुउदितेषुप्रतिष्ठितेषुवाआवाभ्यांतत्रगन्तव्यमितिसंवादंकृत्वातंचविस्मृत्यकश्चिदासेतंप्र
तीदमुच्यते।कठेनप्रोक्तमधीयतेकठाः।वैशंपायनान्तेवासित्वाण्णिनिः।कठचरकाल्लुक्।अध्येत्रणस्तुप्रोक्ताल्लुक्।कलापिनोऽण्।सब्रह्मचारीत्याद्युपसंख्यानाट्टिलोपः।
अध्वर्युशब्दोयजुर्वेदंलक्षयतितदाह।युजुरिति।पदान्यधीतेपदकः।क्रमादिभ्योवुन्।एवंक्रमकः।पदान्यधीत्यक्रमोऽध्येतव्यइतिस्पष्टाप्रत्यासत्तिः।अध्ययनतः किम्।
पितापुत्रौ।अविप्रकृष्टेतिकिम्।याज्ञिकवैयाकरणौ।जातिरप्राणिनाम्।कथंतर्हिरञ्जितानुविविधास्तरुशैलाइतिभारविः।तरुसहिताः शैलाइतिव्याख्येयम्।विशि
ष्टलिङ्गोनदी।सूत्रेचत्वारोपिशब्दाअवयवधर्मेणावयविनिद्वन्द्वेबोध्याः।नदीग्रहणमदेशत्वात्।जनपदोहिदेशः।अतएवपर्वतानांन।कैलासश्चगन्धमादनश्चकैला
सगन्धमादने।चकारेणबाध्यतेइति।चकारःपुनर्विधानार्थइतिभावः।पात्रादिति।यैर्भुक्तेभस्मनाशुध्यतेकांस्यमित्यादिस्मृत्युक्तसंस्कारेणापिपात्रंनशुध्यतितेषामित्य
र्थः।अनिरवसितानामितिनिषेधबलादेवशूद्रशब्दोऽत्रत्रैवर्णिकेतरपरः।ननुशूद्रत्वजातिपरः।गवाश्वमिंति।इहपशुद्वन्द्वेविभाषाप्राप्ता।दासीदासमिति।अत्रपुमान्स्त्रिये
त्येकशेषोबाध्यते।अत्रवार्तिकम्।गवाश्वप्रभृतिषुयथोच्चारितंद्वन्द्ववृत्तमितिगणपाठेरूपमेषांविवक्षितंनतुपूर्वोत्तरपदनिर्देशमात्रेतात्पर्यमित्यर्थस्तेनावङादेशाभाव श्री
पक्षेनभवति ॥ रामः
ॐ मनुष्यवासयोग्यइत्यर्थः।तादृशंचग्राममनगराद्यपि।जनपदइत्यस्यविशेषइत्यर्थस्तदाह।अतएवेति।अत्रभाष्यमुदासीनम्।एकशेषोबाध्यतइति।निपातनेनेतिशे १७८

गोअश्वेभ्य इति। एवं पररूपपक्षेपि नेतिबोध्यम्। प्रतिपदविधानार्थमिति। स नपुंसकमित्यस्य प्रतिपदविधानत्वार्थमित्यर्थः। तदेवोपपादयति। तच्छब्देन हीति। एकवद्भावभाज इति। विनिगमनाविरहात् यावदेकवद्भावभाज इत्यर्थः। प्रतिपदविहितमिति। अनवकाशं चेत्यपि बोध्यम्। विधेर्ज्यायस्त्वेन न मृगशकुनिग्रहणवदस्य नियमार्थत्वम्। प्रत्युदाहृतमिति। विप्रतिषिद्धमित्यर्थः। तदभावेद्रव्यवाचिनां समाहारद्वन्द्व एवेत्यर्थे प्रवृत्ते इतरेतरद्वन्द्वानापत्तिरितितदाशयः। इत्यादाविवेति। कामक्रोधयोर्विरोधा

अपशवो वा अन्ये गोअश्वेभ्यः पशवो गोअश्वाः। पशुग्रहणमिति। विकल्पार्थमित्यनुषज्यते। नपुंसकत्वार्थमिति। अयं भावः। पशुद्वन्द्व इत्येव सिद्धे अश्ववडव ग्रहणं प्रतिपदविधानार्थम्। तेनाश्ववडवमित्येकवद्भावपक्षे पूर्ववदश्ववडवाविल्येतद्बाधित्वा स नपुंसकमित्येतदेव भवति। तच्छब्देन हि एकवद्भाव भाजं परामृश्य विधीयमानं नपुंसकत्वमेकवद्भाववदेव प्रतिपदविहितं भवतीति। अन्यथेति। न च पूर्ववदश्ववडवावित्यस्य निरवकाशत्वं शक्यम्। एक वद्भावविरहपक्षे सावकाशत्वात्। विप्रतिषिद्धं च। भवत्येवेति। विप्रतिषिद्धग्रहणाभावे तु स न स्यात्। अद्रव्यवाचिनामेवेति नियमादिति भावः। यत्तु वृत्तिकृता कामक्रोधाविति प्रत्युदाहृतम्। तन्न। तत्रापि शीतोष्णं सुखदुःखमित्यादाविव पाक्षिकस्यैकवद्भावस्यैव दुर्वारत्वात्। नियमार्थं हि इदं सूत्रमिति स्थितम्। न चाद्रव्यवाचिनां चेद्भवति तर्हि विप्रतिषिद्धानामेवेति तदाशयः कल्प्यः। शीतोष्णे उदके इत्यत्र पाक्षिकैकवद्भावापत्तेः। न चेष्टापत्तिः। अनधिकरणवा चीति किम्। शीतोष्णे उदके इति स्तोत्रसहविरोधापत्तेरिति दिक् ॥

७ भावेपि सुखदुःखादेरिव द्रव्यवाचित्वाभावेन नियमव्यावर्त्यकोटावप्रवेशात्। चे नविभाषानुकर्षणान्नियम एवोचितः। तदभावेह्येवं नियमः। वैकल्पिकोयः समाहारे द्वन्द्वः सोद्रव्यवाचिनामेवेति भावः। तदाशय इति। एवं च विप्रतिषिद्धपदाभावे द्रव्य वाचिनामेवेति नियमः स्यात्। एवं चात्राप्युभयं स्यात्तत्सत्वे तु विप्रतिषिद्धानामेवेति नियमादितरेतरयोग एवेति तदाशयः। विरोधापत्तेरिति। विपरीतनियमेनत्र पाक्षिकैकवद्भावस्येष्ट

त्वेन न विरोधः स्पष्टम् ॥

म·श· विकल्पः प्राप्त इति। जातिरप्राणिनामित्यपि न चार्थे द्वन्द्व इत्येतद्धि हितसमाहारद्वन्द्वस्य नियममात्रस्य च बाध्यसामान्यचिन्तया नेन निषेधात्। अनन्तर ब्रह्मप्रजापत्य
१७९ दि पाठ स्मारितार्थः। परिमाणनियम इति। स च संख्यानुगत व्याख्यानादिति भावः। नियमस्येति। नियमस्यैवेत्यर्थः। तदुदाहृतमिति। प्राचीनोदाहृतमित्यर्थः। निषिद्धत्वा
दिति। तथा च समाहारद्वन्द्वः स्यादिति भावस्तत्र शङ्कते न न्विति। वाक्यमेव स्यादिति। एतावदेव प्राचां पक्षे दूषणमास्त। अभ्युच्चयमाह। किं चेत्यादि। कथं तर्हीति। अवयवेन

दधिपयसी इति। व्यञ्जनत्वाद्विकल्पः प्राप्तः। अधिकरणैतावत्त्वे च। समासार्थस्याधिकरणमाश्रयो वर्तिपदार्थः। तस्य एतावत्त्वं परिमाणनियमस्तस्मि
न्गम्यमाने इति व्याचष्टे। द्रव्यसंख्येति। अत्र व्याचख्युः। समाहारद्वन्द्वस्यैवायं निषेधो न तु नियमस्य। तथा हि सति नियमे प्रतिषिद्धेऽपि चार्थे द्वन्द्व इति स
माहारे द्वन्द्वः स्यादिति तन्नेति ध्वनयन्व्याचष्टे। नियमो न स्यादिति। अयं भावः। प्राचां पक्षे दश दन्तोष्ठा इति त्वदुदाहृतमेव न सिद्ध्येत्। प्राण्यङ्गानां समाहार ए
वेत्यनेन इतरेतरयोगद्वन्द्वस्य निषिद्धत्वात्। ननु समाहारद्वन्द्व एव प्रकृतसूत्रेण निषिद्ध इति चेत्तर्हि वाक्यमेव स्यात्। द्वन्द्वद्वयस्यापि निषेधात्। एवं च पञ्च
स्विहास्माद्भिः करेषभिर्व्याभिस्साधुनामाधुकरीसदृक्षेत्यादीनामसाधुत्वं स्यात्। किं च समाहारद्वन्द्वनिषेधो व्यर्थः न्यायबलेनैव तद्वारणात्। तथा हि। वर्तिपदा
र्थस्य संख्याविशेषे बोधनीये समाहारद्वन्द्वस्य प्राप्तिरेव नास्ति सविशेषणानां वृत्तिर्नेति वचनात्सापेक्षत्वेनासामर्थ्यात्। कथं तर्हि दश पञ्च पूल्य इति समाहारे द्वि
गुरिति चेन्न प्रधानभूते समाहारे दशत्वसंख्यान्वयादिति गृहाण न चोक्तन्यायेनेतरेतरयोगद्वन्द्वोऽपि न स्यादिति वाच्यम्। तत्र प्रधानस्य सापेक्षत्वात्। उक्तं हि भाष्ये। भवति वै प्र
धानस्य सापेक्षस्यापि वृत्तिरिति। न्याय्यं चैतत्। प्रधानस्यैकदेशत्वाभावात्॥
^ दशत्वसंख्यान्वयद्रव्यमिति यतः। गृहाणेति। नं चैवं समाहारे दशत्वान्वयविवक्षायां प्राप्तसमाहारद्वन्द्व
निषेधोऽस्त्विति वाच्यम्। द्रव्यसंख्यानवगमे नैतत्सूत्राप्रवृत्तेः। प्रधानस्येति। मम तु प्राण्यङ्गादिषु द्वन्द्वस्येति नियमादितरेतरयोगाप्राप्तौ तद्विधानं नास्य चारितार्थ्यम्। नन्वनियमनिषेधे अभयोर

पक्षे। अस्माभिस्तु समाहारेतरयोगाद्भाव्यं।

राम· १७९

द्विगिति। दिगर्थस्तु यदा दन्तोष्ठद्वारकसंबन्धेन समाहारे एव दशत्वान्वयि तत्र तदास्येव समाहारे द्वन्द्वप्राप्तिः। एवं धास्यैव सापेक्षत्वाद् द्रव्यसंख्यावगमाच्च। किं चात्र रु नाहा राप्राप्तावनियमाभावेन नियमाप्राप्त्याकस्मानेन निषेधः स्यात्। तस्मात्पूर्वसूत्रवदयमप्युभयोर्निषेधः। अत एवोत्तरसूत्रविषये समाहारद्वन्द्वसिद्धिः। सामर्थ्येनासामर्थ्ये समास कल्पनापेक्षयैवमन्वयकल्पनस्यैवौचित्यादिति। अव्ययीभावस्येवेति। समानलिङ्गवचनत्वादिति भावः। यदि त्विति। एकवद्भावपक्षे इति शेषः। न च बहुव्रीह्यनुप्रयोगे उपदश

सामान्याप्रयोगे इति लिङ्गादिति दिक्। विभाषा समीपे। पद्यपीह समाहारद्वन्द्वो वेति व्याख्याने पि न क्षतिस्तथापि व्रक्रममनुरुध्याह। नियमो वा स्यादिति। उपदशमिति। एकवद्भावपक्षे ऽव्ययीभावस्येवानुप्रयोगः। यदि तु बहुव्रीहिस्तदा उपदशस्य पाणिपादस्येति षष्ठी स्यात्। उपदशं पाणिपादस्येत्येव चेष्यते इत्याकरः। आनङ् ऋतो द्वन्द्वे। इहोत्तरपदेन पूर्वपदं नाक्षिप्यते तेन मध्यस्याप्यानङ्। यदाह। होतृपोतृनेष्टोद्गातार इति। एतच्च समर्थसूत्रे भाष्यकैयटयोः स्पष्टम्। ओजः सहोम्भस्तमसस्तृतीयाया इति सूत्रे पदमञ्जर्यां तु स्पष्टतरम्। यत्तु प्राचोक्तम्। पूर्वपदस्यानङ् स्यादिति। यच्च व्याख्यातृभिर्द्वन्द्वे पूर्वपदकार्यविशेषमात्रे स्यावतारितम्। यच्चाधिकृते नोत्तरपदेन पूर्वपदमाक्षिप्यते इत्युक्तम्। तत्सर्वमाकरविरोधादुपेक्ष्यम्। प्रसिद्धसाहचर्यस्येति ॥

मित्यस्यासिद्धिः। उपदशा इत्यस्यैवोचितत्वादिति वाच्यम्। दिगर्थोन्तरीन्याऽवयवद्वारकसंबन्धेन समुदायार्थेऽन्वयेन द्वन्द्वार्थे अभेदेनान्वयाद् द्वन्द्वार्थस्यैकवद्भावेन तत्सिद्धेराह। उपदशस्येति। अव्ययीभावानुप्रयोगे तु नाव्ययीभावादित्यादिना नदोष इति भावः। अव्ययीभावानुप्रयोगे सामानाधिकरण्यं तु समीपसमीपिनोरभेदविवक्षया बोध्यम्। इतरेतरयोगे तु बहुव्रीहेरेवानुप्रयोगस्तस्य समीपिप्रधानत्वात्समानलिङ्गवचनत्वाच्च। अत एव तत्र नाव्ययीभावानुप्रयोगः ॥

अत्यन्तसहचरितेति। तत्त्वं चैकहविर्भागित्वेन। वेदसूत्रप्रसिद्धतया लोके प्रसिद्धसाहचर्येण यावेत्यन्यत्। प्रायुक्त इति। तदार्षमित्यन्ये। अकारे सतीति। तत्त्वेतस्मात्क इति वो द्धमम्। निपात्यते इति। उत्तरखण्डे तु क्रतोऽस्मिस्त्वेव सिद्धम्। पितरामातरा चच्छन्दसि मातरपितराविति सूत्रद्वयविषयपूर्वोत्तरपदयोः ररा विति भाष्यं तु पूर्वोत्तरप्रद्वयोः स

द्वन्द्वे रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिष्विति सूत्रेभिव्यक्तिग्रहणेनात्यन्तसहचरितयुगले द्वन्द्वमिति निपातनादिति भावः। ईदग्नेः। देवताद्वन्द्वइति काशिकानुरोधेनानुवर्तितम्। आश्वलायनस्तु ज्योतिर्लमयोर्देवताद्वन्द्वेऽपि प्रायुक्त अग्नीषोमौ प्रणेष्यामीति। अग्निष्टुदिति। अग्निस्तु यस्मिन्स क्रतुविशेषः संपदादित्वाद धिकरणे क्विप्। रुत्वं माभूदिति। अकारे सति सकारस्य श्रवणं भवतीति तेन प्रयोगे विकाराभावो नुमीयत इति भावः। विसर्गमिति। यथा चक्रचिद्विकारेनेत्येवमनुमेयं लस्यानुरोधादिति भावः। मातरपितरौ। मातृशब्दस्यारङादेशो निपात्यते। वाकृत्वचमिति। बहूनां द्वन्द्वे तु वाक्त्वक्स्रुचम्। द्वन्द्वगर्भे द्वन्द्वे तु वाकृत्वक्स्रुचम्॥ ॥इति द्वन्द्वः॥ ॥विरूपाणामिति। एतद्व सूत्राक्षरैरेव सुलभम्। रूप्यते इति व्युत्पत्त्यासौ त्रस्यरूपशब्दस्यार्थपरतया पि व्याख्यानात्। वृद्धो यूना। अपत्यमन्तर्हितं वृद्धमिति पूर्वाचार्यैः परिभाषितस्येह ग्रहणं यूना कृत्रिमेण साहचर्यादित्याह। गोत्रं शिष्यत इति। भागवित्तिः शब्दात् गोत्रार्थकादिञन्तायुनि वृद्धाट्ठक् सौवीरेषु बहुलमिति कुत्सायां ठक्। इह कुत्सा सौवीरत्वं चाधिकमपेक्षते न तु युवत्वमात्रकृतं वैरूप्यम्। गार्ग्यवात्स्यायनाविति। इह प्रकृतांशे वैरूप्यं न गोत्रादिकृतम्। पुंवद्भाव प्रयुक्तं केवलस्त्र्यंशस्फुटीकर्तुं द्विवचनान्तेन विग्रहमाह। गार्ग्यायणाविति। पुमान् स्त्रिया। ननु हंसश्च वरटा चेत्यत्र प्रसङ्गः ॥

व्रतोः पूर्वपदस्येत्यर्थपरतया कैयटेन व्याख्यातमिति न तद्विरोधः। अत एवोत्तरपदे द्वित्वधिकृतस्य न बाध इति दिक्। वाकृत्वचमिति। सर्वं सूत्रभाष्यप्रयोगा दिवगुर्वक्षरत्वे पि वाकृशब्दस्य पूर्वनिपातस्तत्प्रकरणानित्यत्वात्॥ इति द्वन्द्वः॥ अपत्यमन्तर्हितमिति। पौत्रप्रभृत्यपत्यमित्यर्थः। यूनेति। अपत्यविशेषवाचकेन युवशब्देनेत्यर्थः। तत्साहचर्येण

[illegible]

अनुवृत्तेरिति। सारूप्ये सति तल्लक्षणं विशेष एवैतत्प्रवृत्तिरिति भावः। नियमतो न स्यादिति। सरूपाणामित्येकशेषे तु स्त्रीवाचकस्यापि शेषापत्तिः। न चेष्टापत्तिः। कै
यटादेर्विरोधात्। नेदं पुमान् स्त्रियेत्येकशेषोऽत्रोक्तः। न च त्यदादितः शेषे पुंनपुंसकतद्द्वन्द्वके रेतावित्यस्य नियमेन सिद्धिः। गावावित्यत्र तु रूपेण विशेष इति वाच्यम्। अ
द्वन्द्वतत्पुरुषविशेषणानामित्यत्र द्वन्द्वपदेन न द्वपवादैकशेषस्याप्युपलक्षणेन तद्प्राप्तेरिति भावः। तदितरेति। ताभ्यां स्त्रीत्वपुंस्त्वाभ्यामितरः पुंयोगादिस्तत्कृतङीषादि

हंसत्वजातिसाम्ये पि शब्दवैलक्षण्यस्य स्त्रीत्वपुंस्त्वमात्रप्रयुक्तत्वादिति चेन्नैवम्। सरूपग्रहणानुवृत्तेः। अनुवृत्तौ तु यकं तु भ्रातृपुत्रावितिसूत्रम्। नन्वेव
मपि गौरियं गौश्चायं तयोः सहोक्तौ एतौ गावाविति नियमतो न स्यात् तल्लक्षणविशेषाभावादिति चेन्नैवम्। तदितरकृतविशेषविरहरूपे विशिष्टाभावेतात्पर्या
त्सेवेह विशेष्याभावादसेव। द्वन्द्वे ब्राह्मण्या वित्यादौ तु नैकशेषः। पुंयोगकृतविशेषात्। पिता मात्रा। श्वशुरः श्वश्र्वा। नन्वेतत्सूत्रं व्यर्थम्। तथाहि। यः शिष्यते स लुप्यमा
नार्थाभिधायीति न्यायेनास्मिन्विषये पितृशब्द एव मातरमपि वक्ति श्वशुरशब्दश्च श्वश्रूम्। तत्र शक्तिरेव निरूढलक्षणा वेत्यन्यदेतत्। एतच्च सूत्रं विनापि सुलभम्।
न च पूर्वसूत्रसमूहवदिदमपि सूत्रद्वयं द्वन्द्वनिवृत्त्यर्थमिति वाच्यम्। इह द्वन्द्वस्यापि पक्षे इष्टत्वादिति चेत् मैवम्। पितृश्वशुरशब्दयोरिव मातृश्वश्रूशब्दयोः उ
क्तविषये केवलयोः प्रयोगं वारयितुं सूत्रारम्भात्। अनभिधानमाश्रित्य प्रत्याख्यानं दुर्बलमिति दिक्। त्यदादीनि सर्वैर्नित्यम्। सर्वैः किम्। प्रत्यासत्त्या त्यदादिभिरेव
सहोक्तावित्यर्थो माभूत्। यत्परमिति विशब्दपरविप्रतिषेधादिति भावः। त्यदादित इति। आद्यादित्वात्तसिः ॥

७ विरहेत्यर्थः। तात्पर्यादिति। चेदेत्र षष्ठ्येपादानसा
मर्थ्येन विशेषश्चेन लक्षण एवेत्यन्वयेनेति भावः। तल्लक्षण एवेत्यस्य व्यावर्त्यमाह। द्वन्द्वे ब्राह्मण्याविति। मातरमपीति। पितृत्वारोपेणेत्यर्थः। त्यदादिभिरेवेति। सर्वपदसावधा
रणमित्यर्थः लभ्यायमेवकारः। इत्येवार्थो माभूदिति न्वयः। सर्वैरित्यस्य त्यदादिभिरन्यैश्चेत्यर्थः। शब्दपरेति। गणपाठीयेत्यादिः। आद्यादित्वादिति। पुंनपुंसकतद्धस्व त्र्येवमेव ॥

म॰ श भाष्येत्विति। अनेनविशेष्यस्यान्यलिङ्गत्वेऽस्यपुंस्त्वमसाध्विति समापोदेवयजनमितिप्रयोगासंगतइति सूचितम्। गतिश्चेति सूत्रे इति। उपसर्गाइतीति सूत्रेपि श्लो
१८२ प्रयोगौ। वद्विधांति। क्रियायोगेउपसर्गत्वेउपसर्गाच्छन्दसिधात्वर्थेपदुइतः प्रणसंमुखंप्रेपमित्यादौ। क्रियायोगाभावादुपसर्गत्वाभावेनदोषइत्याशङ्क्योपस
र्गग्रहणस्योपलक्षणत्वेनसमाहितंतन्त्रभाष्ये इतिबोध्यम्। प्रतिसाममितीति। इत्यादिष्वित्यर्थः। पद्माकारेति। तत्त्वंचपद्माश्रयत्वेनयथाकथंचिद्बोध्यम्। नद्येति। नद्यंना
भाष्येतुङ्कीबन्तद्वारिद्रियत्वेअवर्णान्तादित्यनुवृत्तिरितिसूत्रेऽपरआह। ईत्वमनवर्णादिनिवर्त्यम्। इहमाभूत्। प्रापंपरापमितिभाष्योक्तेः। गतिश्चेति सूत्रेपहिधिन
स्याभावात्वात्स्वाङ्गादिस्वरणत्वेषु दोषः। सुपक्षेम्य अवीतंप्रेपंपरेपमितिभाष्योक्तेश्चेतिभावः। उदनोदेशे। दीर्घोच्चारणमत्रग्रहार्थमित्याकरः। बह्वृचास्तु अनूपे गोम
न्गोभिरित्यादौ अनूपशब्दंनावगृह्णन्ति। अनुगतापोस्मिन्नित्यनूपोदेशः। जलप्रायमनूपंस्यादित्यमरः। प्रतिसाममिति। अव्ययीभावः। प्रादिसमासः। बहुव्रीहिर्वा। कु
लभ्रमइत्यादयोबहुव्रीहयः। पद्मनाभइति। पद्माकरोनाभिर्यस्येतिगौणेनपद्मशब्देनसामानाधिकरण्याद्बहुव्रीहिः। पद्म। मङ्कादित्वात्सप्तम्याः परनिपातः। एतेनोर्ण
नाभोव्याख्यातः। तत्रङ्याषोः संज्ञाच्छन्दसोर्बहुलमितिह्रस्वोविशेषः। गवाक्षइति। गावः किरणाः। अचतुरेतिनिपात्यन्तइति। निपातनफलंतुसमासविशेषनियमः। टि
लोपाद्येकंचतदाह। आद्यादिति। बहुव्रीहयइति। बहुव्रीहयएवेत्यर्थः। तेननञ्तत्पुरुषेअचत्वारइत्येवेतिभावः। विचतुरादिति। त्रयश्चत्वारोवेतिविग्रहः। संख्य
याव्ययेतिबहुव्रीहिः। बहुव्रीहौसंख्येतिडचोऽपवादोऽयम्। अक्षिभ्रुवमिति। प्राण्यङ्गत्वादेकवत्। ऊर्वष्ठीवमिति। सक्थिक्लीबेपुमानूरुरित्यमरः। नानूरूप
र्वाष्ठीवद्भ्यामिति च। सरजः पङ्कजमिति। कथंतर्हि सरजसमपहायकेतकीनांप्रसवमित्यादि। सरजसमकरन्दनिर्भरासुप्रसवविभूतिषुवीरुधांविरक्त
इति। प्रमादएवायमित्याहुः। गोष्ठश्वेति। एतेनसप्तमीतत्पुरुषएवेतिनियमंदर्शयति। षष्ठीतत्पुरुषेतिगोष्ठश्वस्येव ॥ ७ भैक्षस्येतिविग्रहइतिभावः। प्रमादएवेति। प्रसव राम:
शब्दस्यनपुंसकत्वमेवेतिमतेइदम्। पुल्लिङ्गत्वेतुपुष्पवाचिप्रसवविशेषणत्वेन द्वितीयान्तमापन्नोकेऽत्रं विनापिसाध्वेव ॥ १८२

न्तम्।सर्वतोव्याप्तम्।वसुमान् यज्ञ इति।एवंच वसुमच्छब्दादीयसुनि वसीय इतीति श्रुत्या लभ्यते।स्पष्टं चेदं तैत्तिरीयोपनिषद्: शाङ्करभाष्ये तद्वार्त्तिके च।
वसुमत्तरशब्दादीयसुनि अस्मादेव निपातनात् साध्विति पश्चान्तरमपि तत्र।विषयामिति।विषयभूत मित्यर्थः।आशीर्विषयतायाद्इति।तेनाशीर्लिङ्‌न्तसमभिव्याह
ब्रह्मवर्चसमित्यादौ षष्ठीतत्पुरुषः।वर्चो दीप्तिः।पलं मांसमर्हतीति पल्यः।मांसभोजी तदीयं वर्चः।पल्यवर्चसम्।अन्धतमसमित्यादि।अवहीनं संततं च
तमइति विग्रहः।अन्धमिति।गाढमिति फलितोऽर्थः।अत एव ध्वान्ते गाढेऽन्धतमसं क्षीणेऽवतमसं तमः।विष्वक् संतमसमित्यमरः।श्वसो।वसुशब्द इति।
एतेन अवसशब्दादीयसुनि अवसीय इति व्याचक्षाणा आकरविरोधादुपेक्ष्या इति ध्वनयति।वसीय इति।तथा च श्रूयते।यः कामयेत वसीयान् स्यामिति व
सुमान् यज्ञो वसीयान् भूयासमिति च।श्वस्शब्द इति।यद्यप्ययमन्यत्र कालविशेषे वर्तते।तथापीह समासे उत्तरपदार्थभूतां प्रशंसामाशिषो विषयमाह।आ
शीर्विषयतायाद्योतकोऽयमिति यावत्।एतच्च वृत्ति न्यासोक्तम्।श्वस्शब्दस्येहार्थ एव नास्तीत्यपि सुवचम्।उत्तरपदार्थमात्रवृत्तित्वं वास्तु।उक्तं च पाणिनीयमत
दर्पणे।अर्थपरपदस्येह श्वः शब्दः कोऽपि वाच्यपि।अभिधत्ते स्वभावेन तेनेमौ मङ्गलार्थकाविति।१।अन्ववारहइत्यप्रकाशमुच्यते।अनुगतमवहीनं च रह इति
प्रादिसमासः।अनुगतिरहोऽस्मिन्नित्यादि बहुव्रीहि र्वा।तत्रमिवतत्रपरेणान्‌धिगम्यं हि यद्रहो वक्षि तत्र न तत्।तत्तत्र च तद्रहश्चेति तत्तत्र रहसंविदुः।नपृ ज
नात्।इह ततः प्राग्इति।प्राक् बहुव्रीहि ग्रहणं कर्तव्यमिति वार्त्तिकोक्तेरिति भावः।प्राचा तु बहुव्रीहौ सक्थ्यक्ष्णोरनिषेध इत्युक्तम्।तन्न्यूनम्।इत्यादावि प्रध्या
हारेणवा योज्यम्।तेन सुश्री अतपश्री इत्यादि सिद्धम्।नञ स्तत्पुरुषात्।नञ इति पष्ठी।इतिसकलसमाससाधारणाः समासान्ताः ॥ ैरेवास्य साधुत्वमिति भावः।
प्राग्बहुव्रीहीति।बहुव्रीहौ संख्येयइत्यतः प्राक् समासान्तविधेरभावाद्बहुव्रीहौ सक्थ्यक्ष्णोरित्यस्येव तत्र ग्रहणमिति भावः॥इतिसाधारणसमासान्ताः ॥

म० शे० लौकान्मुक्तिरिति। स्तोकशब्दादेर्वृद्धिप्रयोजनं निषेधाश्च बलीयांस इति न्यायेन तद्धितनिमित्तलुकोऽपि निवृत्तिरिति बोध्यम्। ऐकस्वर्यमपि समासफलं बोध्यम्। सत्याम्

१८३ शास्त्रे पठिता एवेति। उत्तरपदाक्षिप्तसमासस्य प्रतिपदोक्तत्वात्स्तोकान्तिकेति विहितस्यैव ग्रहणेनोपस्थितत्वात्तत्रत्यानामेव ग्रहणं न तु करणे च स्तोकेति सूत्रेऽप

स्तोकान्मुक्त इति। समासप्रयोजनं तु स्तोकान्मुक्तस्यापत्यं स्तौकान्मुक्तिः। स्तोकान्मुक्ताया: स्तौकान्मुक्तेयः। इह स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेनेति संज्ञा

सूत्रे शास्त्रे पठिता एव स्तोकादयो गृह्यन्त इत्याशयेनाह। एवमिति। ओजः सह। कथं तर्हि सततनैशतमोवृतमन्यतदिति भारविः। अत्र दुर्घटवृत्तिकृत्। उत्त

रपदाधिकारे तदन्तग्रहणं नास्ति किंतु केवलपदाधिकार एवेति। तन्न। भाष्ये पदाङ्गाधिकार इत्यत्र इष्टकेषीकेत्यादेः प्रयोजनत्वेनोदाहरणात्। यदपिह

रदत्तादय आहुः। उत्तरपदाक्षिप्तेन पूर्वपदेनेह ओजः प्रभृतयो विशेष्यन्ते पूर्वपदभूतेभ्य ओजःप्रभृतिभ्य इति। न चात्र तमःशब्दः पूर्वपदं किं तर्हि सततने

शतमःशब्दः। यत्र तु तदन्तविधिरिष्यते तत्रोपात्तेनाक्षिप्तं विशेष्यते। यथेष्टकेषीकेत्यादाविति। तदपि चिन्त्यम्। भाष्यवार्तिकविरोधात्। विशेष्यविशेष

णभावव्यवस्थार्थमेव पदाङ्गाधिकार इत्यादीनां प्रवृत्तिरिति कैयटवदेवस्वयमपि व्याख्यातत्वात्। भारविप्रयोगस्त्वित्थं समाधेयः। वृत्तं वृत्तिः। नैशतमसो

वृत्तीति षष्ठीतत्पुरुषः। नपुंसके भावे क्तस्य योगे शेषविवक्षायां षष्ठी। ततः सततं नैशतमोवृतं यस्मिन्निति बहुव्रीहिः। यद्वा वृत्तुवर्तते पचाद्यच्क विधानमि

तिभावे कः। शेषं प्राग्वत्। पूरणगुणेति क्त इति। इह आत्मनश्चेत्यंशोऽपि वार्तिकान्तर्गतः न तु सूत्रमिति केचिद्भ्रमन्ति तन्नाद॰ तव्यमितिभावः। तथाहि

सति उत्तरसूत्रे आत्मान इति न लभ्येत ॥ ॐ ठिनानामितिभावः। भाष्यवार्तिकविरोध इत्यस्य तद्व्याख्यानग्रन्थविरोध इत्यर्थः। तमुपपादयति। विशेषणे

त्यादि। परे तु तदारम्भेऽपि पादस्य पदेति सूत्रेणाद्यपादो पहतमित्यादेः प्रावारणाय विशेष्यविशेषणभाववैपरीत्यस्य तत्र सूत्रे भाष्य एवाश्रयणेनात्रापि तथाश्रयणे राम:

बाधकाभाव इत्याहुः। आत्मनेति। आज्ञायिनि चा आत्मनश्च पूरणे आत्मनश्च पूरणे उपसंख्यानं कर्तव्यमिति भाष्यं भ्रमे मूलम् ॥ १८३

विवेकिनामिति। आत्मनश्चेति सूत्रे आज्ञायिनि चेत्यनुवृत्तिप्रदर्शनार्थं भाष्ये सूत्रद्वयग्रहणम्। अत एवात्मनश्चेति सूत्रे चः सार्थकः। व्याख्यानभाष्ये आत्मनश्चेत्युक्ते
त्वम्। वार्तिकस्याज्ञायिनि चेत्येतत्साधारणत्वभ्रमव्यावृत्तये इति निधानार्थः। भेदं परिकल्प्येति। आत्मत्वेन वर्तिपदार्थता। जनार्दनत्वेनान्यपदार्थतेति भावः। अधिक

परस्य चेति तदुत्तरसूत्रं चव्यर्थमेव स्यादिति स्पष्टमेव। विवेकिनाम्। बहुव्रीहिर्लोऽव्य इति। एकस्यापि वस्तुनो भेदं परिकल्प्य वर्तिपदार्थत्वम
न्यपदार्थत्वं च विवक्षणीयमिति भावः। वैयाकरणाख्यायाम्। व्याकरणे भवा वैयाकरणी। अण्। गयनादिभ्य इत्यण्। सा चासावाख्या चेति कर्मधार
यः। आत्मनेभाषाद् इति। यद्यपीयमाख्या शाब्द्याख्यां न दृष्टा न यापि वैयाकरणी भवत्येव। धातुसूत्रगणोणादिवाक्यात्मकं पञ्चप्रस्थानं व्याकरणमिति स्वी
कारात्। अस्याश्च धातुपाठे दृष्टत्वात्। न तु विकृतिप्रकृतिभावविरहात् रन्धनाय स्थालीतिवत् समासो न स्यादत आह योगविभागादिति। एतच्च वृत्तिं
व्यासावनुसत्योक्तम्। अलुग्विधिसामर्थ्यादित्येपीह सुवचम्। हृदिस्पृगिति। हृदयं दिवं च स्पृशतीति विग्रहः। कर्मणोऽधिकरणविवक्षायां सप्तमी। भा
ष्ये तु कर्मण्येव सप्तमीत्युक्तम्। अलुग्विधिरेव ज्ञापक इति तदाशयः। अप्सव्य इति। दिगादित्वाद्यत्। ओर्गुणः। वान्तो यि। प्राचा तु पठस्थाने जशब्दं पठि
त्वा स्पुज इत्युक्तम्। तदाकरविरोधादुपेक्ष्यम्। अप्सुज इति तु हलदन्तादित्येव सिद्धम्। अप्सुमन्ताविति। कारीष्यामाज्यभागौ ॥

रणत्व विवक्षयेति। ग्रामे गच्छतीत्यादावपि फलसमानाधिकरणव्यापारस्य धात्वर्थत्वविवक्षया तस्य तत्त्वविवक्षेति बोध्यम्। अन्यथा परत्वात्कर्मसञ्ज्ञया तस्या
बाधः स्यात्। अधिकरणसञ्ज्ञां कर्मसञ्ज्ञा बाधते। गेहं प्रविशतीति यथेत्याकडारसूत्रे भाष्यात्। वस्तुतः फलस्य हृदयनिष्ठतया प्रतीता वेवास्य प्रयोगस्य साधु
त्वमित्याह। भाष्येत्विति। हलदन्तादित्येवेति। इत्यपीत्यर्थः। नत्पुरुषे कृतीत्यस्यापि नासङ्ग्रहः ॥

म·शु नोक्तदोषेण। अनित्यत्वान्मतुपः सिद्धिस्तदाश्रयणाच्चलुकः प्राप्तिरिति भावः। ताद्रूप्यादाविति। दृश्यमानोपि भाष्ये तथा पाठः सांप्रदायिको हरदत्तस्तिरोभूदिति भा
८४ वः। उक्तत्वाच्चेति। एतत्सर्वं हरदत्तानुरोधेनोक्तमित्यन्यत्र विस्तरः। मूर्खा हीति। ब्रह्मज्ञानरहिता इत्यर्थः। ते हि पशुवद्देवानियम्यास्तदाह। देवपशुत्वादिति। पोस्तिक

अप्स्वग्ने सधिष्टव अप्सु मे सोमो अब्रवीत्। इत्यनुवाक्ये। तत्र चाप्सुशब्दोस्ति। नन्वेवं प्रकृतिवदनुकरणमित्यतिदेशेन अप्सु इति सोः प्रत्ययात्तत द्धितात्प्रथमाया अभावे मतुबेव दुर्लभः। अतिदेशप्रवृत्तौ तु सोर्लुकः प्राप्तिरेव नास्तीति चेत्। सत्यम्। अतिदेशस्य वैकल्पिकत्वान्नोक्तदोषद्वयमपि। वैकल्पिकत्वे प्रमाणं तु यत्तदेतेभ्य इति सौत्रो निर्देश उक्तः। प्रकृतवार्तिकमपि तथेति ध्येयम्। यत्तु प्राचा मनिषिति पठित्वा अप्सुमनिमित्युदाहृतम्। त द्भाष्यादौ न दृष्टम्। यत्तु वदन्ति। मनीषिति पाठे सप्तम्या नान्मतुपः कथं संभव इति चिन्त्यमिति। तदेव चिन्त्यम्। पाठान्तरस्यानाकरत्वात्। मतुपः संभवस्यो क्तत्वाच्च। पश्यतोहर इति। षष्ठी चानादर इति षष्ठी। पश्यन्तमनादृत्य हरतीत्यर्थात्। देवानामिति। मूर्खा हि देवानां प्रीतिं जनयन्ति। देवपशुत्वात्। शुनश् शेपमस्य शुनःशेपः। शेपशब्दो हि अकारान्तोप्यस्ति। शीङो नीपादित्वादौणादिकः प्रत्ययः। तथा च मन्त्रः। यस्यामुशन्तः प्रहराम शेपमिति। एवं पुच्छ लाङ्गूलाभ्यामपि बहुव्रीहिः। कृषिविशेषाणामेताः सञ्ज्ञाः। बह्वृचब्राह्मणादौ प्रसिद्धाः। मातुः पितुर्भ्यामिति सूत्रे समास इत्यनुवर्तितम्। तस्य फलमा ह। असमासे त्विति। इह पाक्षिकमपि षत्वं नेत्यर्थः॥ इत्यलुक्समासः॥ षरूप। चेलडिति पचादौ टित्त्वकृते ङीब्वर्जम्। ब्राह्मणितरेति। तसिलादिष्विति पुंवद्भावस्तु न। जातेश्चेति निषेधात्। एतेन पुंवद्भावं बाधित्वा परत्वाद्ध्रस्व इति व्याचक्षाणाः परास्ताः आमलकीतरेति॥ मपीति। नित्यस्य प्राप्तिरेव न। अवधानात्॥ इत्यलु

क्समासः॥ परत्वादिति। निषेधसत्त्वेन पुंवत्त्वप्राप्तेरेवाभावादिति भावः। पट्वितरेत्यादौ तु परत्वादिति वक्तुमुचितम् ॥

एम:
१८५

नित्यस्त्रीलिङ्ग इति।वृक्षजातिः स्त्रियामिति लिङ्गानुशासनसूत्रादिति भावः।आम्र इत्यादिदर्शनानन्त्वाचित्कामत्यन्यत्। शौनकश्चारलत्तिष्यफलात्वामलकीत्रिषि
त्यमरात्।तिष्यफलास्यामलकाविशेष्यस्य त्रिलिङ्गत्वमपि।तस्मादेव तु शब्दादन्यानित्यस्त्रीलिङ्गेति लभ्यते। नायन्तु शब्दश्चारलपर्यायस्त्वं तिष्यफलायाश्चावसेयि
आमलकीशब्दोऽवसेनित्यस्त्रीलिङ्गः।एवं कुवलीशब्दः।नद्याः पूर्वसूत्रेऽशुनादन्यः शेषः स चद्विपेत्याह।अङ्गुष्ठेनेति।निर्मूलमिति।यत्तु वृत्तिकृतोक्तं पुंवद्भावोऽत्र
पक्षे वक्तव्यः।श्रेयस्तरा।विदुष्टरा।प्रकर्षयोगात् प्राक् स्त्रीत्वस्याविवक्षितत्वात् सिद्धमिति।अत्रेदं वक्तव्यम्।इह पुंवद्भाव इत्यादि मुनित्रयानुक्तत्वादप्रामाणिकम्।
सूत्रकृताहि तसिलादिष्विति नित्य एव पुंवद्भाव उक्तः।न तु पाक्षिकः।भाष्यवार्तिकयोरपि नाधिकमुक्तम्।प्रमाणतामभ्युपेत्यापि ब्रूमः।कथमिह वचनं व्यज्यते पुंवद्भावो
यः प्राप्तः सोऽत्र पक्षे वक्तव्य इति उत पुंवद्भाव एव वक्तव्य इति।आद्ये पुंवद्भावनिषेधार्थमिदं वचनं स्यात्।तथा च ह्रनः प्रागेवत्वदुदाहृतानि श्रेयसीतमा विदुषीतमावि
दुषीतरे निदीर्घङीष्विशिष्टानि रूपाणि सिध्यन्तु नाम।प्रकर्षयोगादित्यादि त्वदीयग्रन्थस्त्वसङ्गत एव स्यात्।स हि उपसंख्यानं प्रत्याचष्टे इति न्यासकृतावतारितः।प्र
त्याख्याने च तस्य पुंवद्भावफलकत्वे सत्येव स्यात्।न तु तन्निवृत्तिफलकत्वे।वस्तुतस्तदपि न।ङ्याब्ग्रहणं तद्धितविधानार्थमित्युक्तत्वात्।स्वार्थद्रव्यलिङ्गाद्युत्तरमे
व प्रियकुत्सनप्रकर्षादि विवक्षेति भाष्ये निर्णीतत्वाच्च।द्वितीयस्तु सम्भवेद्यदि तसिलादिमध्ये तरप्तमपौ न परिगण्येयाताम्।तौ तु सर्वैरेव परिगणितौ।दर्शनीयतरा
दर्शनीयतमेति चोदाहृतम्।न च वृत्तिग्रन्थे उत्कर्षातिमेत्यादि दीर्घोपन्यासः स्थितिप्रदर्शनपरो न तु त्रैरूप्यपर इति वाच्यम्।प्रकर्षयोगादिग्रन्थशेषविरोधात्।त
स्मादसङ्गत एवायं वृत्तिग्रन्थ इति।एतच्च सर्वमिति मन्यत इति वदता हरदत्तेन ध्वनितम्।न्यासकारस्तु इदमुपसंख्यानमिति भ्रमः तत्प्रत्याख्यानं युक्तमि
ति भ्रमः स्यात्स्येवेति तदूष्यदर्शिना स्पष्टमेव ॥ ७ तुं स्त्रीलिङ्गनिर्देशेनैव न ह्याद्यन्तेरित्याहुः।न दपि नेति।प्रकर्षयोगात्प्राग्मित्यस्योक्तिसम्भवे नेत्यर्थः।इ
निरिदिगिति।दिगर्थस्तु यद्यपि विदुषीनरेति रूपासङ्गतिं शङ्कते।पुंवद्भावोऽत्रेति ॥

म·श· पसेः ह्रस्वाभावपक्षेदस्यर्थः। तत्त्वसेपुंवद्भाव एवोदाहर्तुमुचितोनतुदीर्घइतिभावः। समाधत्ते। प्रकर्षयोगादिति। एवंतथापूर्वकर्मीविवक्षायेवविद्धतरेत्यादेःसि
१८५ द्धौह्रस्वविकल्पविधानसामर्थ्यात्त्वसेदीर्घग्रहणम्। कृतपूर्वीकटमित्यादौयथापूर्वकर्मीविवक्षापश्चात्तत्संबन्धेएवंप्रकृतेपिपूर्वंसामान्येनपुंसकविवक्षायांतस्मा
ततएवतरपिपश्चात्तदर्थविशिष्टेस्त्रीत्वविवक्षास्वार्थेस्यादेरपियल्लिङ्गं पूर्वंविवक्षितंतत्त्वकार्यमन्तरङ्गमित्येषएवार्थइतिवृत्तिग्रन्थेयोजनाकर्तुंशक्या। तथापिप्र

एवंस्थितेपक्षेपुंवद्भावोवक्तव्यइति/प्राक्तिंयाग्रन्थः न्यायसिद्धमिदमित्यादितद्व्याख्यातग्रन्थश्चवृत्तिन्यासोक्तार्थानुवादीमूलशेषित्यादनादर्त
व्यइतिदिक्। पादस्यपदा। पदेनिसेतौविभक्तिर्लुक्। ऋचःशे। शइतिशस्प्रत्ययस्येदमेकदेशानुकरणम्। उदमेघइति। सादृश्यात्पुरुषस्येयंसञ्ज्ञा।
उदपेषमिति। स्नेहनेपिषइतिणमुल्। उदधिर्घटइति। उदकंधीयतेस्मिन्निति विग्रहः। कर्मण्यधिकरणेचेतिकिप्रत्ययः। उदमन्थइति। द्रवद्रव्यसंस्कृ
नाः सक्तवोमन्थाः। तृतीयेतियोगविभागात्समासः। ष्यङः संप्रसारणम्। इहतत्पुरुषइत्यनेनपूर्वपदमुत्तरपदंचआक्षिप्यतेइत्याशयेनाह। पूर्वप
दस्येति। उत्तरपदंयोरितिच। इहोत्तरपदेनपुत्रवनीतिविशेष्यतेनतुविपरीतंतेनकारीषगन्ध्यापरमपुत्रइत्यत्रनातिप्रसङ्गः। मालभारीति। मालांबिभर्तीति
ताच्छील्येणिनिः। केचित्तुहारिषितिपठन्ति। कारेसत्यागदस्य। सत्यङ्कारः ———— समयकरणम्। अशपथेपिपरत्वाद्धावंबाधित्वामुम्। अगदङ्कारोवैद्यः ॥

कृतविषयेःस्वार्थस्यभाष्यानुक्तत्वादीदृशोर्थः प्रकृतेनसाधुत्वनियामकइति। शस्प्रत्ययस्येति। लोमादिषुपादशब्दपाठाभावादितिभावः। संख्यैकवचनादितिशस्।
योगादिति। सुप्सुपेत्युचितम्। आक्षिप्यतेइति। तत्रपूर्वपदंष्यङोविशेष्यन्तेनष्यङन्तग्रहणम्। ष्यङ्मात्रस्यपूर्वपदत्वाभावादितिबोध्यम्। समयकरणम्। श राम:
पथकरणम्। मसंकारः। शपथकर्ताच। वैद्यइति। विषप्रतिपक्षद्रव्यकरणंचेत्यपिबोध्यम् ॥ १८५

अभ्युपगम इति। नञ्कृतो चेत्यपि बोध्यम्। अव्ययमिति। तिङन्तानुकरणमित्यन्ये। हरदत्त इति। केचित्त्व। पठ्यत एवेति। तेन तद्योगोऽपीति भावः। क इति। अचि विभाषेति लत्वम्। द
अस्तुङ्कारोऽभ्युपगमः। अस्त्विति तिङन्तप्रतिरूपकमव्ययम्। धेनुंभव्येति। भव्यगेयेति कर्तरि कृत्यः। धेनुश्चासौ भव्या चेति विग्रहः। भविष्यन्ती धेनुरित्यर्थः। गौतमस्मृतौ
तु स्नातकधर्मेषु अधेनुं धेनुभव्येति ब्रूयादिति प्रयुक्तं तत्रार्षत्वान्मुमागमो नेति। तद्व्याख्यायां मिताक्षरायां हरदत्तः। लोके पृण इति। पृणतिः पूरणकर्मेति हरदत्तः। प्रीणन इ
ति तु पठ्यते एव। अनभ्याशमित्य इति। अभ्याशं समीपं तद्विरुद्धमनभ्याशं दूरम्। एतिस्तुशास्वित्यादिना इणः क्यप्। भ्राष्ट्रमिन्ध इति। कर्मण्यण्। घञन्तेन वा षष्ठीसमासः।
तिमिङ्गिल इति मत्स्यविशेषः। गिरतेर्मूलविभुजादित्वात्कः। गिलगिले चेति। गिलङ्गिलतीति गिलगिलः। तिमीनां गिलगिल इति विग्रहे इदमारब्धम्। नित्यमेवेति। पूर्ववि
प्रतिषेधेनेति भावः। सज्योतिरिति। समानं ज्योतिरस्येति बहुव्रीहिः। अस्मिन् ज्योतिषि आदित्येऽनस्तं गते वा उपनिपतितं तदस्तमयपर्यन्तमनुवर्तमानमाशौचं सज्योतिरित्यु
च्यते। पृषोदरादीनि यथोपदिष्टम्। निरुक्तादिशास्त्रसिद्धानामसमासपदानामुणादयो बहुलमिति सिद्धिः। अनेन तु समासपदानामिति विवेक इति हरदत्तः। वस्तुतस्तु
समासविषयकमेवेदमिति न नियमः। हंससिंहशब्दयोरपि प्राचां कारिकायामुदाहृतत्वात्। हन्तेः पचाद्यचि समागमः। हिंसेः पचाद्यचि हकारसकारयोः स्थानव्यत्ययः। यदि तु
भवेदित्यादिश्लोकस्यापि प्रकृतसूत्रोदाहरणतायां नाग्रहः किंतु नैरुक्तव्युत्पत्तिरनेकधेत्येतावन्मात्रं तदा हरदत्तोक्तविवेकोऽपि निर्बाध एवेति दिक्। आकृतिगणोऽयमि
ति। तेनान्यदपि सिद्ध्यति। यथा लुम्पेदवश्यमः कृत्ये तुङ्काममनसोरपि। समो वा हिततयोर्मांसस्य पचि युड्घञोः। अन्तमिति शेषः। कृत्यप्रत्ययान्ते उत्तरपदे अव
श्यंशब्दस्यान्त्यमकारं पुमाल्लुम्पेत्। तथा कामशब्दे मनस्शब्दे च परे तुम्शब्दस्यान्त्यम्। तुमिति षष्ठ्यर्थे प्रथमा। युट्घञ्प्रत्ययपरो यः पचधातुः तस्मिन्परे मांसस्यान्त्यम
कारं लुम्पेदित्यर्थः। अवश्यसेव्यः। गन्तुकामः। गन्तुमनाः। संहितम्। सहितः॥ ६॥ त्यादिश्लोकस्यापीति। भवेद्वर्णागमाद्धंसः सिंहो वर्णविपर्ययादित्यादिश्लोकस्येत्यर्थः। अनेकधेति। उ
णादावेव प्रत्ययोऽन्यत्र त्वेकोऽपि नेत्युक्तस्तदा प्रत्ययातिरिक्तकार्यमेवोणादित्वादित्येवमित्यर्थः। तुंकामेत्यत्र तुमिति समोऽप्युपलक्षणम्। तेन सकामः समना इति सिद्धम्॥

निपातनादिति। दृषोदरादिषु विशिष्टपाठादित्यर्थः। समासान्तेन मांसेनादव्यंसंकर्तव्यमित्यादि सिद्धिः। मांसस्येत्यादौ शः पदन्निति सूत्रस्थेन मांसपृतनेत्यादि वार्तिकेनापि मृप
पादेः नभिधानात्पाकान्तस्यमित्यसाधु। निर्वाहं इति। तेन कार्यविशेषे भल्लन्तद्विशेषे पदत्वं चेति भावः। व्याख्यायामिति। तन्मन्त्रपाठके कृताश्धाविति पदे उक्तमित्यर्थः। तनोतीति
सततः। सन्ततः। मांसस्य चनम्। मांसपाकः। इह संयोगान्तलोपाभावोऽपि निपातनाद्बोध्यः। छन्दसि तु अयस्मयादित्वेनापि निर्वाह उक्तः। अपरस्पराः क्रियासातत्य इति सूत्रे
सातत्यनिर्देशेनैवैकदेशानुमतिद्वारा पूर्वाचार्यपठितो मंस्तोकोऽज्ञापित इत्याहुः। नहिवृतीति। एषु परेष्विति। उत्तरपदे ष्विति बोध्यम्। उपनह्यत इत्युपानत्। संपदादित्वा
त्कर्मणि क्विप्। निवर्तते इति नीवृत्। प्रवर्षतीति प्रावृट्। मर्माणि विध्यतीति मर्मवित्। रुच दीप्तौ। निरोचन इति नीरुक्। ऋतिं सहते ऋतीषट्। सहेः एतनर्तीभ्यां चेत्यत्र
सहेरिति योगविभागादनुक्तसमुच्चयाद्वास्य षत्वमिति न्यासकारः। पूर्वपदादिति षत्वमिति हरदत्तः। परितनोतीति परीतत्। गमः क्वाविति अत्र गमादीनामिष्यत इ
तिवचनात्तनोतेर्नलोपः। यत्तु वेदभाष्ये कृते न मित्रावरुणा वृताश्धाविति मन्त्रस्य व्याख्यायामुक्तं कृतस्य वर्द्धयितारा वित्यर्थे अन्तर्भावितण्यर्थात् वृधेः क्विप्। नहिवृ
तीत्यादिना पूर्वपदस्य दीर्घ इति तच्चिन्त्यम्। प्रकृतसूत्रे वृधेरनुपात्तत्वात्। तस्मादन्येषामपीति दीर्घस्तत्र बोध्यः। वनं पुरगा। व्यत्ययेन षष्ठ्याः स्थाने प्रथमेत्याह। वनश
ब्दस्येति। विद्ध्यर्थ इति। असञ्ज्ञात्वेन पूर्वपदात्संज्ञायामित्यस्याप्राप्तेरिति भावः। अतएवाह। निपातनादिति। यत्तु व्याचक्षते। हलन्तादिति सप्तम्या अलुगिति तन्नेति भावः। प्रथ
मे निसप्तम्यर्थस्य प्रातिपदिकार्थेऽन्तर्भावादिति भावः। निषाद इति। निषीदत्यस्मिन् पापमिति निषादः। पुलिन्दो मनुष्यजातिः। हलश्चेत्यधिकरणे घञ्। कथं तर्हि प्रतीहारो दौ
वारिकः। अत्राहुः। प्रतीहारो द्वारम्। तत्स्थानात् कद्व्यमिति। एकचितीक इति। शेषिकः कप्। मुनो दन्तेत्यादि। अत्र केचिद् दंष्ट्रेति ह्रस्वान्तं पठित्वा ष्वादंष्ट्र इति बहुव्रीहावेवायं दीर्घ इ
त्याहुः। अन्ये तु दीर्घान्तमेव पठन्तस्तत्पुरुषस्याप्युदाहरणतामाहुः। इहषादिति ॥७॥ सञ्ज्ञात्वाद्धलदन्तादित्यस्याप्राप्तेरित्यर्थः। सप्तम्यर्थस्येति। अयं शब्दार्थस्य प्राधान्येऽपीति भावः। 
कथमिति। दौवारिके प्रतीहारपदप्रयोगः कथं साधुरित्यर्थः। तत्पुरुषस्यापीति। एकदेशविकृतन्यायेन बहुव्रीहेरपीत्यर्थः। शौवादंष्ट्रो मणिरिति ष्वादेरिञिति सूत्रे भाष्यप्रयोगादिति बोध्यम् ॥

वक्तव्यमिति। तत्सदृपठितं वार्त्तिकमित्यर्थः। चत्वार्यङ्गान्यस्य ति। न चोत्तरपदत्वे चेति निषेधात् कथमङ्गशब्दस्य पदत्वम्। उच्यते। नयदस्यकार्ये पित्वस्य वचनत्ववृत्तेरित्यन्यत्र वि
केचित्तु काश्येति तालव्यमध्यं पठन्ति तत्प्रामादिकमिति भावः। शिरीषवणमिति। ननु यस्य फलमेव न पुष्पं स वनस्पतिः। वानस्पत्यः फलैः पुष्पात्तैरपुष्पाद्वनस्पतिरित्य
मरकोशात्। स च उदुम्बरादिः। शिरीषस्तु न तथा तस्य पुष्पफलोभयसत्त्वात्तत्कथमिह णत्वमिति चेत्। सत्यम्। इह वनस्पतिशब्देन समासस्य पदलक्ष्यते। अत्र च लिङ्गं लुपियु
क्तवदिति सूत्रे व्यक्तिवचने इति। किं शिरीषाणामदूरभवो ग्रामः शिरीषास्तस्य वनं शिरीषवनम्। वनस्पतित्वमतिदिश्येन तत्र णत्वं स्यादिति भाष्यकारोक्तिः। इरिकादिभ्य इति।
ओषधित्वात्प्राप्तिः। क्षीरपाणा उशीनरा इति। उशीनरशब्दो देशवाची। तद्वासिषु औपचारिकः। गिरिनद्यादीनामिति। वक्तव्यमेतत्। संज्ञायां प्राप्ते असंज्ञायामप्राप्ते उभयत्र विभाषे
यम्। माषवापिणाविति। बहुलमाभीक्ष्ण्ये इति णिनिः। व्रीहिवापाणीति। कर्मण्यण्। उत्तरपदं यदिति। अत्र व्याख्यानमेव शरणम्। प्राञ्चस्तु नुम्ग्रहणमिह ज्ञापकमित्याहुस्तद्दूषय
ति। अत एवेति। ज्ञापकं शिथिलमिति ध्वनयति। किं चेति। परिपक्वानीति। अत्र कुमति चेति नित्यं णत्वं प्राप्तम्। हरिमाणीति। मनेर्ण्यन्तात्क्विप्। प्राक् सुबुत्पत्तेः समासात् नकारा
न्तमुत्तरपदम्। नान्तत्वान्ङीब् लम्। चतुरङ्गयोगेनेति। चत्वार्यङ्गान्यस्य तेन योग इति विग्रहः। अतद्धित इति। व्यवधायकस्य पदस्य तद्धितश्चेत्तदा णत्वं न भवति तदा निषेध इत्यर्थः।
आर्द्रगोमयेणेति। अत्र गोशब्दः पदम्। पारस्कर इति। पारङ्करोतीति विग्रहे कृञो हेतुताच्छील्येति टः। किष्किन्धेति। किंकिं दधातीति विग्रहे अतोऽनुपसर्गे कः। पूर्वस्य किमो न लोपः सु
ट् षत्वं च निपात्यते। रूढिशब्दाश्चैते कथंचित्साध्याः। तद्बृहतोरिति गणसूत्रम्। तादिति। तलोपश्चेत्यत्रेति भावः। चन्द्रेनेत्युपलक्षणम्। भरोभरीति लोपस्यापि सुवचत्वात्। दकारत
काराविति। तद्बृहद्भ्यां यथासंख्यं बोध्यम्। प्रायस्येति। प्रायः पापं विनिर्दिष्टं चित्तं तस्य विशोधनमिति स्मरन्ति। आहितिगणोऽयमिति। तेन नरः शतादित्यादि सिद्धम्। अधिश्रयणीर्जन
नाः परः शताः इति माघः। शतात्परा इति विग्रहे पञ्चमीति योगविभागात्समासः। राजदन्तादित्वात्परनिपातः। सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः। लोकाश्रयत्वाल्लिङ्गस्य विशेष्यनिघ्न
ता। पारस्करादित्वात्सुडिति दिक्॥ ॥ इति समासाश्रयविधयः ॥ ७ स्तरः। पञ्चमीति योगविभागादिति सुधुपेतीत्यन्ये॥ ॥ इति समासाश्रयविधयः ॥ ॥

म. श १८७ समर्थानाम्। अलुग्विधानाद्वेति। तेनहि स्वार्थे परिपूर्णस्यैव पदान्तरसंबन्ध इति बोध्यम् इति सुबन्ताद् उत्पत्तिः। कुत्सित इति सूत्रभाष्योक्तरीत्यातस्मि द्धे तिभावः। किंचतत्संबन्ध्यपत्यमिति अ
र्थे प्रत्यय इत्यादिरीत्या तस्यापत्यमित्यादेर्वाक्यार्थ इति संबन्धादिबोधनार्थ विभक्त्युत्पत्तिरावश्यकी निदिक्॥ उचितमिति। अ इदं त्वस्यैकल्पिकत्वे विभाना उष्ट। अधर्माधिकाद् इति नमित्यर्थ
समर्थानाम्। ननु प्रकृतसूत्रे एकार्थीभावरूपं सामर्थ्यं ग्रहीतुं नोचितम्। समर्थः पदविधिरिति परिभाषया गतार्थत्वात् घकालतने ... ते अलुग्विधानाद्धि सुबन्तात्तद्धितोत्प
त्तिः तथाच पदविधित्वं स्पष्टमेव अत आह। सामर्थ्यमिति। कृतेत्यादि। अस्य फलं तु तस्यापत्यमिति सूत्रे मूल एव स्फुटीभविष्यति। इह समर्थानां प्रथमादिति उक्तं वक्तुम्। महे। तत्रगा
नाह। प्राग्दीव्यतोऽण्। अश्वपत्यादिभ्यश्च। प्राग्दीव्यतीयेष्विति। दीव्यतः प्राक् प्राक्दीव्यत्। अपपरिबहिरञ्चवः पञ्चम्येत्यव्ययीभाव इत्याहुः। प्राग्दीव्यतमिति तु उचितम्। अ पदतिट
त्र प्रवृत्तेः। ततो भवार्थे वृद्धाच्छः। स्वपुन। अमेहेत्यादि परिगणनात्। अव्ययीभावस्याव्ययत्वे प्रयोजनं लुङ्मुखस्वरोपचारा इति परिगणनाच्च। अ वामादेरिति निर्धारणे षष्ठी। ते
नार्थसिद्धमाह। अत इञ्। अचोञ्णितीति सूत्रादचइत्यस्यानुवृत्तिरपीह सुवचा। ग्रामादिकमेवेति। यद्यपि चातुर्वर्ण्या देराकृतिगणत्वात्ष्यञ् एतत्सूपपादं त
थापिहरदत्तग्रन्थानुरोधादेवमुक्तम्। दित्यदित्यादिपूर्वे पतिशब्दस्योत्तरपदशब्देन बहुव्रीहिं कलादित्यादिभिर्द्वन्द्वः कार्य्य इति आच् ष्टे। दित्यादिभ्यः पत्युत्त
रपदाच्चेति। पत्यन्तादिति तु नोक्तम्। बहुच्पूर्वादपि प्रसङ्गात्। दैत्य इति। ननु दितेर्ण्यप्रत्ययो देवताद्यर्थे सावकाशः। अपत्ये तु परत्वादितः श्चादिञ इति इञ् स्यात्।
सत्यम्। पठ्यते तत्र पूर्वविप्रतिषेधः ण्यादयोऽर्थविशेषलक्षणादणपवादात्पूर्वविप्रतिषिद्धमिति। अर्थविशेषे किम्। औत्सपतम्। उत्सपतिर्नाम पत्रम् ॥
। अतएव दीव्यदित्ययुक्तमितिगोक्तम्। तान्ताच्चे अव्ययानाम मात्रे इति टिलोपवारणार्थं तस्यानित्यत्वाश्रयणे क्लेशः स्यादित्यप्यस्योचितत्वं बोध्यम्। परिगणनाच्चेति। इयमभ्यु शमः
च्चयमुक्तिः। भाष्ये तत्प्रत्याख्यानात्। एवमुक्तमिति। व्यञ्जिन पुंसकत्वापत्तिः। स्वरे भेदश्चेति। हरदत्ताशय इति नदनुरोध इति भावः ॥ १८८

परिषद्श्वेत्यञिति। नच परत्वात् बाह्यादिस्युक्तेरयमप्यर्थविशेषलक्षण इति वाच्यम्। इदमिति सामान्यशब्देन तद्विशेषसङ्ग्रहात्। विशेषलक्षणप्रत्ययस्त्वेवि शेषशब्दोपादानेन बोधि
नार्थकप्रत्ययत्वमिति भावः। दितिशब्दादिति। क्तिजन्तादिति शेषः। एवमदितेरपि। ङीषि कृते इति। क्तिजन्ताभ्यामिति शेषः। नपदान्तेति। पूर्वत्रासिद्धे नेति निषेधोऽप्यत्र बोध्यः। निर्वा
तस्येदम्। एकत्राध्वर्युपरिषद्श्चेत्यञ्। अथ कथं दैतेय इति। अत्राहुः। दितिशब्दात् कृदिकारादक्तिन इति ङीषि कृते स्त्रीभ्यो ढक्। एवं सुनाम्नि लिङ्गविशिष्टपरिभाषया। अनित्यत्वा
दिति। आदित्य इति। आदित्यशब्दात् ण्यप्रत्यये यस्येति लोपे हलो यमां यमि लोप इति यलोपः। न चाल्लोपस्य स्थानिवद्भावः। नपदान्तेति यलोपे तन्निषेधात्। काशिकायामिति। हरदत्तमाध
वादिग्रन्थेष्वेवम्। तथा च प्रयोगः। नाप्नुयाम शतशो याम्यः पुनर्यातनादिति। भाष्ये तु नैतद्दृष्टम्। तत्रत्यस्तु प्रयोगो निर्वाह्यः। बहिषदिति। टिलोपवचनमव्ययानां भमात्रइत्यस्य
नित्यत्वज्ञापनार्थम्। तेनारातीय इत्यादि सिद्धम्। एण्ये प्रकृते यञ्वचनमाद्युदात्तार्थम्। प्राचो ग्रन्थे तु यण्वेति पठ्यते तत्राकरम्। अश्वत्थाम इति। भाष्योदाहरणादेवेह तदन्तवि
धिः। अन्यथा बलवाचिनः स्थामन्शब्दस्य केवलस्यापत्येन योगाभावे पिजादिष्वेव विधिः स्यात्। अश्वस्येव स्थाम यस्येति बहुव्रीहौ पृषोदरादित्वात्सस्य तः। गोरिति। नकेव
लमपत्य एव किं तु सर्वेषु प्राग्दीव्यतीयेषु। गव्यमिति। गवि भवं गोरिदं गौर्देवतास्येत्यादिरर्थः। अनेन हि गव्यमिति जैमिनीयसूत्रे विद्यमानं दूषयन्तो वार्तिककाराः स
माहिताः। केचित्तु प्राग्दीव्यतीयेभ्योऽन्यत्राप्यर्थे अयं यदिति व्याचक्षाणाः गवा चरति गव्य इत्याद्यप्याहुः। गोरूप्यमित्यादि। हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः मयट् चेति
रूप्यमयटौ। उत्सादिभ्योऽञ्। अणस्तदपवादानामिञादीनां चापवादोऽयम्। इह पठ्यते त्वष्कयासे। असे असमासे। पूर्वाचार्यसंज्ञेयम्। वष्कयस्यापत्यं वाष्कयः। असे
किम्। गोवष्कयिः। असइत्येतदेवेह तदन्तविधिं ज्ञापयति। तेन अधेनूनां समूहः आधेनव इति सिध्यति। धेनुशब्दस्येह पाठात् ॥
त्य इति। ण्यञः पित्त्वं ण्यजादिपाठादिति भावः। स्त्रीत्वं तु लिङ्गमशिष्यं लोकाश्रयत्वादिति न्यायेन बोध्यम्। वस्तुतस्त्वेषोऽपि प्रागुपपादितहरदत्तादिरीत्या प्रमाद एवेति तत्त्वम्।
याम्याः शंसन्तीति वैदिकप्रयोगनिर्वाहस्तु छान्दसत्वादित्यन्ये। आहुरिति। युक्तं चैतत्। भाष्ये सर्वत्र गोरजादिप्रसङ्गे यदित्युक्तेः। अपवाद इति। बाधक इत्यर्थः। तदप
वादेञादीनां ण्यादयोऽर्थविशेषलक्षणादिति पूर्वविप्रतिषेधेन बाधक इति भावः। धेनुरनञिति अत्र चानञ इत्युक्ते नञ्पूर्वेऽन ढगिति बोध्यम् ॥

म० श० धेनोः कादेशसत्त्वेनेकनित्यनुचितमत आह। ठकमित्यर्थ इति। कैयट इति। तदर्थात इति प्रकरणे इति शेषः। सूत्ररूपमिति। विद्यालक्षणसूत्रान्तादिति वार्त्तिके वार्त्तिकसूत्रिक
१८८ इतिभाष्योदाहरणात्। सूत्राच्चकोपधादिति सूत्रे संख्याप्रकृतेः सूत्रवाचकादिति वाच्यम्। यथाष्टक इति नेहमाहा वार्त्तिक इति भाष्याच्चत्तनल प्रकरणस्य भाष्यप्रामाण्याच्च स्वरि

नचैवंधेनुकं गोधेनुकं चन सिद्ध्येदिति वाच्यम्। धेनुरनञ्इकमुत्पादयतीति विशेषवचनस्य भाष्ये आपिशलिमतत्वेनोदाहृतत्वात्। इकमिति। ठकमित्यर्थ इति कैयटः। अग्निकलिभ्यामिति। अयमर्थः। सूत्रकृता सास्य देवतेत्यधिकारे अग्नेर्ढगिति सूत्रितं दृष्टं सामेत्यधिकारे कलेर्ढगिति वार्त्तिककृता पूरितम्। तदिदम् सूत्रद्वयमपनीय प्राक्दीव्यत इति प्रकरणे अग्निकलिभ्यां ढगिति पाठ्यम्। तेन अग्नेरपत्यम् अग्निना दृष्टं साम अग्नेर्भवं वा येनागतम् अग्नेः स्वं वा आग्नेयं कालेयमिति सिद्धम्। एतेन मीमांसकैर्यदुक्तं कलेर्ढगिति पाणिनीयसूत्रमपार्थकमित्यादि तत्सर्वमवैयाकरणमीमांसकसन्तोषार्थमिति प्रपञ्चितं शब्दकौस्तुभे। इत्यपत्यादिविकारान्तार्थसाधारणाः प्रत्ययाः। स्त्रीपुंसाभ्यामप्रागित्यनुवर्तते स्त्रैणं इति। स्त्रीषु भवः स्त्रीभिस्तरति स्त्रीभ्यो हितं इत्यादि। वत्यर्थ इति। सामान्यापेक्षं ज्ञापकमिति भावः। अत एवोदाहरति स्त्रीवदिति। कथं तर्हि त्वतलौ। स्त्रीत्वं स्त्रीता पुंस्त्वं पुंस्तेति। आ च त्वादिति चकारादिति वक्ष्यते। द्विगोर्लुगनपत्ये। द्विगोरिति षष्ठी। तदर्थश्च हेतुत्वम्। तद्धरथन्तरसामत्वादेरिव भावि नोऽपि बुद्ध्या ह्यवसायात्। तदेतदाह। द्विगोर्निमित्तमिति। अजादिरिति। एतच्चोत्तरसूत्रादचीत्यस्यापकर्षाल्लभ्यते ॥

तोथानुदात्त इति सूत्रभाष्याच्च वार्त्तिकेऽपि सूत्रत्वाङ्गीकारादिति भावः ॥ इत्यपत्यादिविकारान्तार्थसाधारणाः प्रत्ययाः ॥ सामान्यापेक्षमिति। स्त्रीपुंसाभ्यामिति योगापेक्षमित्यर्थः। हेतुत्वमिति। ननु स्थानसंबन्धः प्रत्ययादर्शनस्यैव लुक्त्वात्। नाप्यानन्तर्यसंबन्धः। पञ्चकपालस्य पुरोडाशस्येदं पाञ्चकपालमित्यादावतिप्रसङ्गादिति भावः। रथन्तरसाम राम:
त्वादेरिति। यदि रथन्तरसामा सोमः स्यात् ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात् इति श्रुताविति भावः । १८८

नन्वचीत्यपकर्षे हि रयद्स्यत्र नस्येदमित्यधिकारविहितयतो लुक् न स्यात्। न चेष्टापत्तिः। येन विधिस्तदन्तस्येति सूत्रस्थभाष्यविरोधादत आह। वाग्रहणमिति। समर्थानामिति सूत्रस्थमित्यर्थः। तेन कस्यचिदजादेरपि लुक्सिद्धिरिति भावः। अग्रे तु न संबन्धः। फक्फिञोरिति सूत्रेऽन्यतरस्यांग्रहणात्। वस्तुतोऽचीति नापकृष्यते। अनभिधानान्नातिप्रसङ्ग इति तत्त्वम्। तस्यैवेति। अत्र गोत्रप्रत्ययस्यालुकः संभवो बीजम्। स चोपपादयिष्यते। गोत्रे इत्यस्य फलमाह। कुवलस्येति। अत्र फले लुगभावेन गोत्रप्रत्यय इति स्पष्टम्। तस्यैवालुग्यथा स्यादिति। गोत्रे इतीत्युक्तिस्तत्त्वेन तदर्थलाभ इति एतन्मात्रेणैवेति बोध्यम्। तद्राजस्येत्यंशोऽत्र बहुष्वित्यनुवृत्तेस्तदध्येनतत् प्रकरणस्थमिति बोध्यम्। अतश्च जनपदशब्दात्क्षत्रियादञिति सूत्रेण तद्राजलुकोऽप्ययमलुगुक्तः। यत्तु गोत्रस्त्रिया इति सूत्रेण स्य णित्वं किमर्थम्। वतण्डस्य गोत्रापत्यं स्त्री वातण्ड्या वतण्डाच्चेति विहितयञो लुक् स्त्रियामिति लुकि शार्ङ्गरवादित्वात् ङीन्। तस्या अपत्यं वातण्डो जाल्म इत्यादौ वृद्ध्यर्थम्। न च गोत्रे लुगचीति लुक्प्रतिषेधः ईकारेण व्यवधानादित्युक्तम्। तत्र किङ्कार

वाग्रहणमनुवर्त्यं व्यवस्थितविभाषाश्रयणेन वा ॥ गोत्रेऽलुगचि ॥ गोत्रे किम्। यस्कादिभ्यो गोत्रे इति प्रकरणेन यस्य प्राप्तं तस्यैवालुग्यथा स्यात्। नेह। कुवलस्येदं कौवलम्। बादरम्। यूनि लुक् ॥

णम्भस्याढ इति पुंवद्भाव इत्युक्तम्। तत्त्वेकदेश्युक्तिः। पुंवत्त्वेन ङीन इव लुकोऽपि निवृत्तेरिति तच्चात्र बाधकम्। यद्वा। तन्नेत्यस्य तत्प्रयोजनं न पुंवद्भावेन ङीलुकोर्निवृत्तिसिद्धेरित्यर्थ इति तत्तद्विरोधः। यदपि वान्यस्मिन्निति सूत्रेण गोत्रयुवसंज्ञयोः समावेशे पीलाया अपत्यं पैलः पीलाया वेत्यण्। तस्यापत्यं युवा पैलो ह्यच इति फिञः पैलादिभ्यश्चेति लुक्। पैलस्य छात्राः पैलीयाः। अत्रापि गोत्रे लुगचीति फिञो लुक्प्रसङ्गः। असमावेशे त्वक्प्राप्तौ अन्तरङ्गत्वात्पैलादिलुगित्युक्तम्। तस्यायं भावः। समावेशे हि तीयाद्यापस्य लुङ्मात्रस्य मध्येऽपवादन्यायेनायमलुक् स्यात्। असमावेशे तु युवप्रत्ययविषये स्याप्रवृत्तेस्तेन न्यायेन भूम्नि प्राप्तस्येत्यर्थलाभ इति मतद्विरोधो लेशतोऽप्यस्माकमिति दिक् ॥

इहेति। द्विगोर्लुगनपत्य इत्युत्तरम्। अचि। यूनिफक्फिञोरन्यतरस्यां गोत्रेनेति कार्यमित्यर्थः। एतेनैवं न्यासे द्विरयदृ‍...सिद्धिरित्यपास्तम्। ननुद्वयोः सावकाशयोरेक ... अभ्व इत्यत्र दीर्घत्वयोरिवैकस्य द्विकार्ययोगमूलकेनासंभवेन केवलेनासम्भवेन वा विप्रतिषेध इतीको गुणवृद्धी इत्यादिषु भाष्ये स्पष्टम्। एवं च प्रकृते न तस्य विषयोऽतआह। अत्र च ज्ञापकमिति। एवं च ज्ञापकादेव बाध्यबाधकभाव इति भावः। आदिवृद्धिप्राप्तिविषये तद्बाधो ज्ञाप्यते। अतएव व्यापदि भवं वैयापदमित्यादावपि नोपधावृद्धिः। तत्रा

इह द्विगोर्लुगनपत्येचि। यूनि गोत्रेनेत्येव सूत्र्यताम्। तथा च लुगलुग्ग्रहणं शक्यमकर्तुम्। अजादावितिकिम्। ग्लौचुकायनरूप्यम्। प्राग्दीव्यतीयेकिम्। तस्मै हितं ग्लौचुकायनीयम्। ननु उपगु अ इति स्थिते ओर्गुणं बाधित्वा परत्वाद् वोञ्णितीति वृद्ध्या भाव्यम्। गुणस्तु पिचव्य इत्यादिरवकाशः किंच कृते गुणेऽवादेशे च अत उपधाया इति वृद्ध्या भाव्यं तत्राह। आदिवृद्धिरिति परत्वादिति भावः। अन्त्योपधावृद्ध्योरवकाशः। नौः। पावकः। आदिवृद्धेरवकाशः। शुम्भुत्। सौम्भुतः। औपगवः। त्वाष्टः। जागत इत्यादौ उभयप्रसङ्गे परत्वादादिवृद्धिरेव भवति। न च पुनः प्रसङ्गविज्ञानं सकृद्गतिन्यायाश्रयणात्। अत्र च ज्ञापकम्। अनुशतिकादिषु पुष्करसच्छब्दस्य पाठः। अन्यथा उपधावृद्ध्यापौष्करसादेः सिद्धत्वादुत्तरपदवृद्ध्यर्थस्तत्र पाठोऽनर्थकः स्यात्। अकृतेति परिभाषायाश्च समर्थग्रहणमेव ज्ञापकम्। तद्धि परिनिष्ठितपरमित्युक्तम्। परिनिष्ठितत्वं च ङ्याप्प्रातिपदिकांश एव ननु सुब्विशिष्टे इत्यवधेयं तेन औपगवः दण्डिमानित्यादिसिद्धम्। अश्विमानणितिसौत्रप्रयोगश्चेह लिङ्गम्॥ ७) पिवृद्धिप्राप्त्या तद्विषयस्त्वा

त। एजविधायकेन निषेध इत्यन्यदिति दिक्। ज्ञापकमिति। एतच्च के यटेत्रैव स्पष्टम्। ङ्याबिति। तदंशे परिनिष्ठितत्वफलं तु शालीयसिद्धिः। अन्यथैकादेशात् प्राग्यस्येति लोपे शाल् शब्दाकारश्रवणापत्तिः। प्रविष्ठासुजातः प्रविष्ठ इत्यादौ अन्तरङ्गानपीति न्यायादेकादेशेन। अतएवाकारश्रवणम्। तद्धि षयतद्धितोपि ततः प्रागेव। एतद्बलादेव तद्धि षयेसमर्थादित्यस्यानुपस्थितिः। उपगोरित्यत्र तु गुणोत्तरं लोपे ओसित्यस्य निवृत्तौ औपगवासिद्धिः। दण्डीमानित्यापत्तिश्चेति भावः ॥

नङ् इति। तद्धितत्वं हि विग्रहस्यात्र गुणनिषेधार्थम्। ह्रस्वविनाशोन्मुखत्वेन तु गभावे हि गुणप्राप्तिरिति तस्य तज्ज्ञापकता बोध्या। शक्यमकर्तुमिति। यदि तथा ज्ञापकं तदाऽकर्तुं शक्यमित्यर्थः। यदि तु तत्राकृतसन्धेरिति स्यात् तत्राकृतसन्धेरेव। अन्यत्र तु अनियम इत्यर्थस्तदा परिनिष्ठितादेवेत्यर्थमावश्यकं तदिति बोध्यम्। अकृतव्यूहपरिभाषायास्तु न फलम्। सेदुष इत्यादौ पदावधिके व्याख्याने सेदुस् अस् इति स्थिते इट्संप्रसारणयोः प्राप्तौ प्रतिपदविधित्वेन शीघ्रोपस्थितिकत्वात् पूर्वं संप्रसारणे। वलादित्वाभावादिटः

यदि तु नङो ङित्करणेनाकृतव्यूहपरिभाषा ज्ञाप्यते। पामादिगणे विष्वगित्युत्तरपदलोपश्चाकृतसन्धेरित्यत्राकृतसन्धिग्रहणेन परिनिष्ठितात्तद्धितोत्पत्तिस्तर्हि समर्थग्रहणं शक्यमकर्तुम्। ननु समासस्तद्धितेन नित्यं बाध्येत। न च तद्धितस्यैव वैकल्पिकत्वात्पक्षे सोऽपीति वाच्यम्। यत्रोत्सर्गापवादौ महाविभाषया विकल्प्येते तत्रापवादेन मुक्ते उत्सर्गो न प्रवर्तत इति पारे मध्ये षष्ठ्या वेति वाग्रहणेन ज्ञापितत्वादित्याशङ्क्याह। दैवयज्ञीत्यादि। जातित्वादिति। यत्तु प्राचोक्तम्। अणन्तत्वान्ङीबिति। यच्च व्याचख्युः टिड्ढाणञित्यनेनेति तदुभयं प्रामादिकमिति भावः। औत्स इति। उत्सः प्रस्रवणं वारिप्रवाहो निर्झरो झर इत्यमरः। तस्यापत्ययोरस्तु गाङ्गेयो भीष्म इतिवत्। जीवति तु वंश्ये युवा। पितृपितामहादिरुत्पादकप्रबन्धो वंशः। तत्र भवो वंश्यः। दिगादित्वाद्यत्। पौत्रप्रभृतीत्यनुवृत्तं षष्ठ्या विपरिणम्यते व्याख्यानादित्याह। पौत्रादेरिति। तु शब्दो भिन्नक्रमः युवेत्यस्मात्परो बोध्यः। स च एवकारार्थ इत्याचष्टे। युवसंज्ञमेवेति ॥

प्राप्तिरेवनेति तत्सिद्धेः स्पष्टं चेदमप्यत्रैव वक्ष्यते। तत्तत्त्वं यदि तु ज्ञाप्यत इत्यनेन सूचितम्। ज्ञापितत्वादिति। न च षष्ठीसमासविधानं व्यर्थम्। अन्ततस्तद्विषये तस्येदमित्यस्य प्राप्तेरिति वाच्यम्। अनन्तरादिपदैस्तस्य चरितार्थत्वात्। अनभिधानेन हि तत्र तद्धिताभावस्य भाष्ये स्पष्टमुक्तत्वादिति भावः। प्रामादिकमिति। उपगोः प्रवराध्यायप्रसिद्धत्वात् उपगोरपत्यमिति तद्व्याख्यातृभिर्विग्रहप्रदर्शनाच्चेति भावः। पितृपितामहादीति। अत एव पितृव्यमातुलादीनां न वंश्यत्वम् ॥

तृतीयेद्वयोरिति। उपगोस्तृतीयेद्वाभ्यां णिचोरित्यर्थः। त्रयाणामणिञ्फकाम्। नन्वत्रपक्षेऔपगवादिञिप्रत्ययद्वयमनिष्टं प्राप्नोति। औपगवइतीष्टंच नृतीयेनसिद्ध्यति। गर्गा
दिभ्योयञित्यादेश्चानर्थक्यंप्राप्नोति। गोत्रेपक्षेइत्यस्यविरोधाद्गार्ग्यादिञितः प्रत्ययान्तरेनिष्टंच प्राप्नोति। यद्वित्वस्यात्रपक्षेविद्यार्थत्वंमदाननियमत्वमितिप्रत्ययान्तात् प्रत्य
यनिषेधस्यावश्यवक्तव्यत्वम्। नचगोत्रपदेनगोत्रागोत्रसमुदायउच्यतेतत्रपूनोनग्रहणं गोत्रग्रहणात्। एकपदंचसामर्थ्यात्सावधारणम्। पुत्रेएकः पौत्रेऽपरस्तदपत्येचापर
इतिगोत्रसमुदायेबहूनांप्राप्तौएकएवापत्यप्रत्ययइतिनियमेनैकाभ्यनुज्ञाद्वारापरमप्रकृतेर्विधिरपिपरंपरापत्यापत्यवत्संबन्धेप्रवर्त्ततइत्यनुमीयतइतिनदोषइतिवाच्य

एकोगोत्रे। अपत्यप्रत्ययइति। एतच्चाधिकारबलाल्लभ्यते। औपगवइत्यादि। उपगोरण्। गर्गादिभ्योयञ्। नडादिभ्यः फक्। सूत्रारम्भफलं मतभेदेनव्य
वस्थापयति। गोत्रइति। स्वज्ञोत्रन्तदपेक्षयाएकोनसंख्यानांतृतीयेद्वयोः चतुर्थेत्रयाणामित्यादौत्यर्थः। यद्वेति। तृतीयेएकस्मादनिष्टोत्पत्तिः। चतुर्थेद्वाभ्या
मित्यादौत्यर्थः। पितुरेवेति। तथाचामरः। आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियांत्वमी। आहुर्दुहितरंसर्वेपत्यन्तोकन्तयोः समेइति ॥

म्। तथाविधेरनुमानेगौरवात्। एतदेवाभिप्रेत्यैवंनियमोपपादनोत्तरंभाष्येउक्तम्। इहोत्पादयितर्यपत्ययुक्तेप्रत्ययान्तात्प्रतिषेधोवक्तव्यः। परमप्रकृतेश्चोत्पत्ति
र्वक्तव्येतिविधित्वेप्रतिषेधोवक्तव्यः। गोत्रपदलक्षणयानियमत्वेउत्पत्तिर्वक्तव्या। एकेनवाक्येनोभयार्थत्वलभ्यम्। एकोपत्यप्रत्ययोभवतिनतुनद्विषयेगोत्रेप्रत्ययइ
त्येवार्थः स्यादित्येकाभ्यनुज्ञैवदुर्लभेतितद्भावइत्यरुचेराह। यद्वेतीति। अत्रपक्षेइष्टस्यसिद्ध्यासर्वेष्वपत्ययुक्तेषुप्रत्ययान्तात्प्रतिषेधोवक्तव्यइतिभाष्योक्तानिष्टवारणा रा म॰
यनियमार्थमिदम्। गोत्रशब्दस्यगोत्रजातिपरत्वेतिनियमोपपत्तिः ॥

अग्रपक्षे युक्त्यन्तरमाह। न पतन्तीत्यादि। अपत्यं तोकं तयोः समे इत्यमरस्तत्र स्वयमर्थः। तद्घटितसन्तानपरंपरयोरिति। किं चैकाभ्यनुज्ञाद्वारा परंपरापत्यापत्यवत्त्वं बंध्ये प्र
सृत्यनुमानापेक्षया पितामहादीनामपत्यमित्यनुमानस्यैव युक्तत्वम्। न देतत्सर्वं पितामहादीनामपीति मुख्यमसेत्स्यतीति वदतां मूले ध्वनितम्। ननु मुख्यपक्षे स्वनियमस्त्वेष्यन
न्तरापत्यप्रत्ययान्ताद्ध्रौत्रे प्रत्ययो दुर्वारस्तावतापि गोत्रे एकस्मैव न स्यात्। तत्त्वेन नियमाबाधात्। एतदभिप्रायेणैव सर्वेष्वपत्ययुक्तेष्विति पक्षे नियमार्थत्वमुपपाद्य पुनरुक्तं भाष्ये
सर्वेष्वपत्ययुक्तेषु प्रत्ययान्तात् प्रतिषेधो वक्तव्य इति। न च गोत्रपदेनापत्यसमुदायो लक्ष्यते। तेन परमप्रकृतेरेव भविष्यतीति वाच्यम्। अपत्यमित्यनुवृत्त्येव सिद्धे गोत्रग्रह

णात्: प्राचामित्यत्र व्याहितपक्षस्यानेनैवापत्यमित्यनुवृत्तिः पाङ्क्तविंशतीति सूत्रे भाष्यकृता दर्शिता। व्यवहितोपि पितामहादीनामुद्देश्येति प्रसिद्धं जरत्कारवा
युपास्यामेतु। स एव प्रकारोप्याह। अपत्यं पौत्रप्रभृतीति। आद्यपक्षे अपत्यमिवापत्यमिति गौणी इति राज्ञयणीयास्यात्। औपगवादिजिनि। यस्यापत्यन्तद्वारका
देव प्रत्यय इतिभावः। एवं सत्यनुपदं वक्ष्यमाणस्य पितामहादीनामिति मुख्यपक्षस्य विवरणे उपगोरण इष्टसिद्ध इत्याद्युक्तिः संगच्छते। मूलादिति पञ्चमी तु
अवधिसमर्पणमात्रार्था नतूपगुरूपमूलस्य संख्यान्तःपातित्वार्था। अत एव वृत्तौ मपक्षे मूलपदमनुपादाय शततमत्वेनोक्तत्वान्मूलस्य संख्यान्तःपातित्वं ज्ञे
यम्। इअपीत्यपि भिन्नक्रमोः ण्यन्तादित्यस्य गे वो ह्यः। गोत्राद्यूनि गोत्रप्रत्ययान्तादेवेति। न तु युवप्रत्ययान्तादिति प्रथमपक्षेर्थः ॥

णवैयर्थ्यापत्तेः। गोत्राद्यूनीत्यस्य सत्त्वेन यूनि ग्रहणे व्यर्थं वा इति चेन्न। भाष्ये प्रत्याख्यातत्वेनेष्टापत्तेः। स्पष्टं चेदं सर्वं सूत्रशेषे भाष्ये इति दिक्। न तु युवेति। अपत्यं
पितुरेवेति पक्षे पञ्चमे यूनि विवक्षिते चतुर्थान्तस्य यान्तादेव प्रत्ययः इत्यनिष्टं प्राप्नोति। तृतीयादिष्टापोत्पत्तिर्न सिध्यति। अत एको गोत्रे इति साहचर्याद् स नियमः स्वं युवप
र्यं च तत्तु टितापत्यसमुदायपरं विधेयं भ्यग्रुश्रानेव प्राप्यदिति भावः ॥

म.श. अत्रपक्षे स्वविधित्वमेव स्यान्न नियमत्वमित्याशङ्क्याह वेत्याह। द्वितीयपक्षे त्विति। पितामहादीनामपीति मुख्यपक्षे लिङ्गित्यर्थः। अत्रेदं सिद्धिरस्त्येव किं त्वलिङ्गमपि प्राप्नोती
१८१ तितन्निद्दनये नियमार्थत्वमेवेत्यर्थः नन्वस्त्रियामित्यस्य स्त्रीभिन्ने यूनीति नार्थः। स्त्रीविषये यूनि प्रत्ययमालाप्रसङ्गात्। एको गोत्रे इत्यस्य तु न प्रवृत्तिः युवसञ्ज्ञया गोत्रसञ्ज्ञा
याबाधात्। न च स्त्रियां यूनि न प्रत्यय इति वाक्यभेदेन संबन्धः। गोत्रप्रत्ययेन स्त्रिया अभिधानानापत्तेः किं तु वाक्यमेव स्यादत आह। अयं भाव इति। विशेषस्याविवक्षायामिति।

द्वितीयपक्षे तु मूलप्रकृत्यनन्तरयुवन्यो नेत्यर्थः। स्त्रियां त्विति। अयं भावः। अस्त्रियामिति योगो विभज्यते। यूनि शब्दस्वरूपपरम्। पश्चिमावेयं यत्र युवसञ्ज्ञा
विधीयते तत्रास्त्रियामित्युपतिष्ठत इत्यर्थः। सिद्धस्य गतिरियम्। जीवति तु वंश्य इत्यत्र अस्त्रियामिति तु सूत्रयितुमुचितम्। अतदन्यत्र परकिमस्युर्भयः अपत्यं शो
भयः। कथं तर्हि प्रक्षिप्यतां हा शरयायमेपिलीति। अपत्यरूपविशेषस्याविवक्षायां शैषिको णो वाहविरिति। यत्तु बाप्लोडुने इति धातोमाधवेनोक्तम्। केवल
स्यवाह्लोऽपत्येना योगात्सामर्थ्यात्तद्व्यविधिः सौवाहविरिति तच्चिन्त्यम्। जानन्ति वाहवीत्यास्यलापनसूत्राह्लाद्यभ्यश्चेति सूत्रे वाहविरिति भाष्यवृत्त्योरुदा
हरणाच्च बाहोः सञ्ज्ञाशब्दत्वात्। औडुलोमिरिति यद्यपि लोमन्शब्दो गणे पठ्यते तथापि सामर्थ्यात्तदन्तग्रहणम्। उडुमी व शरा इव लोमानि यस्य तस्यापत्य
मौडुलोमिः शारलोमिः। बहुत्वे तु इञ्पवादोऽकारः प्रागेवोक्तः। उडुलोमाः शारलोमाः। इदं यः पुराणादिप्रसिद्धः सञ्ज्ञात्वाभ्य एव प्रत्ययो बोध्यः। निरूढ
त्वेन प्रथमोपस्थिताभिरेव विधेर्निराकाङ्क्षत्वात्। यस्तु इदानीं तनो बाहुस्तस्यापत्यं बाहव इत्येव। उक्तं च हरिणा ॥

सर्वनाम्नां च सामान्यरूपेण विशेषरूपेण च सर्वार्थबोधकत्वमिति तस्यापत्यमिति सूत्रे भाष्यकैयटयोः स्पष्टमिति भावः। अत एवापत्यं गोत्रमिति वार्तिकप्रयोगः संगच्छ राम:
ते। अपत्यस्येदमापत्यं पौत्रप्रभृतीति तदर्थः। इह। प्रतिपद्विधानविषये। निरूढत्वेन। प्रसिद्धतरत्वेन ॥ १८१

अभिव्यक्तेति। आद्यपादस्यानर्थकं व्यावर्तयति तद्धि विधेयं सर्वथार्थरहितमप्रसिद्धार्थकं च। गौणं वत्रलक्षणायामनियमात्तत्तदिन्धार्थकं तस्य स्वतन्त्रत्वाद्स्यनेन गुणयोगादि क्रमनपेक्ष्य प्रवर्तमानाद्व्यावर्थकेन व्यावृत्तिः। अप्रयुक्तं प्रसिद्धार्थकमपि यल्लोकेन प्रयुक्तं तदुक्तिषित्यस्य तत्त्वदर्शेषित्यर्थः। इदं च विशिष्टरूपोपादाने पदकार्यस्यवातत्त्वस ञ्ज्ञाप्रतिषेधो वार्तिककृता सर्वादिसूत्रे उक्तः। अत एव महदूतेत्यत्र पुंस्त्वं विशिष्टरूपोपादानाभावात्। अमहान्महानित्यादौ दीर्घादि च सिद्ध्यति। पदकार्यस्याभावादिति

अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः। शास्त्रार्थस्तेषु कर्तव्यः शब्देषु न तदुक्तिषु॥ इति। अनर्थकं संदिग्धार्थकमप्रयुक्तं च क्रमेण विशेषणाभ्यां व्यावर्त्यम्। तदुक्तिषु तत्तद्दशेषित्यर्थः। अत एव सज्ञा श्वशुरस्यापत्यं श्वासुरिरित्यत्र राजश्वशुरादिति यत्। मिमीते माता तस्य स्वसा मातृष्वसा। मातृपितृभ्यां स्वसेति षत्वं न। वा रूढ इकिरिति यरूढाद्यो जातिविशेषः इत्यादीति। आदिशब्दान्नैषादकिः। चाण्डालकिः। वैश्वकिः। श्वस्य न इति। ब्राह्मणः अणो रिति विहितस्य तस्य प्रत्ययस्येति शेषः। यञिञोश्च गोत्रे यावितिः गोत्रे किम्। द्वीपादनुसमुद्रं यञ्। द्वैप्यः। सुतंगमादिभ्य इञ्। सौतङ्गमिः। तदपत्ये माभूत्। अनृष्यानन्तर्ये। अनृषीति पञ्चम्याः सौत्रो लुक्। सूत्र इति। आनन्तर्ये इत्यत्रेत्यर्थः। वैदिरित्यत्र ऋष्यणमाशङ्क्याह बाह्वादेरिति प्रवराध्याये इति। एनत्रस्त्रीपुंसाभ्यां नञ्स्नञाविति सूत्रे कैयटग्रन्थे स्पष्टम्। कापेय इति ढक् तस्यानिमद्गि इति ढक्। कपेर्गर्गादित्वात्तेनाङ्गिरस एवेति नियमार्थं सूत्रम्। गणपाठस्तु लोहितादिकार्यार्थः। काप्यायनी बोधिरिति। अनृषित्वादिञ् ॥

दिक्। तुल्यन्यायात्नाम धातुप्रकृतिकप्रातिपदिकानामप्यप्रसिद्धार्थकत्वं शास्त्रबोधितत्वेपि लोके प्रकरणादिनिरपेक्षतयाप्रतीत्यजनकत्वात्। प्रवराध्याये इत्यादेस्तादृशमपत्यप्रत्ययान्तमित्यर्थः। कैमटेइति। तत्सूत्रे भाष्ये च ध्वनितम्। यूनि लुक्सूत्रे भाष्येऽपत्याधिकारादन्यत्र लौकिकं गोत्रमित्युक्तम्। प्रवराध्याये प्रसिद्धत्वमेव लौकिकत्वमिति गोत्रावयवादिति सूत्रे भाष्ये अगस्त्याष्टमर्षीणामपत्यं यातानि गोत्राणि इति तत्रोक्तानि लोके गोत्रत्वेन प्रसिद्धानीति तदर्थः ॥

ऋषित्वेप्याह। बाह्वादित्वादिति। यञणोरिति। गर्गादौ शिवादौ च पाठादिति भावः। शिवादिपाठे मा ऽस्तु तत्। गङ्गा चेति योगविभाग एवा ऽन्यथा लुक् स्त्रियामित्यनेन संयुज्यैव पठेत्। परिशेषितस्य चेति। आङ्गिरसे परिशेषप्राप्तस्येत्यर्थः। निषेधमुखेन नियमानां प्रवृत्तिरिति प्रौढवादः पक्षाश्रयेणेदं लभ्यते इति विधिमुखेन प्रवृत्तावनन्तरस्येति न्यायेनाप्येतल्लभ्यते इति बोध्यम्। तस्मादिति। जात इति पञ्चम्यर्थे सप्तमीति भावः। कैयटेति। इदं च प्रकृतसूत्रे भाष्ये ध्वनितम्। तथाहि। अत्राण्ग्रहणमर्थं शिवादिभ्यो यथाविहितमित्येव।

बाह्वादित्वात्तावत्तण्डाद्यपत्यञणोः प्राप्तयोः आङ्गिरसे यञेवेति नियमार्थं सूत्रम्। लुक् स्त्रियां विहितस्येति। परिशेषितस्यैवेति बोध्यम्। एतच्च आङ्गिरस इत्यनुवृत्त्या लभ्यते। अत एवाह। अनाङ्गिरसे त्विति। वक्ष्यमाण इति। अपिञोरनार्षयोरिति सूत्रेणेति भावः। अश्वादिभ्यः फञ्। गोत्रे इति। क्वचित् यून्यपि तथाहि। अश्वादिगणे गोत्रप्रत्ययान्तानामल्पः पठ्यन्ते। आत्रेयः आनडुह्यः आत्रेय इति। खिलिनीमराजर्षिः। ततो वृद्धे कोसलेति ञ्यङ्। आनडुह्यशब्दो गर्गादियञन्तः। आत्रेयशब्दो ढगन्तः। ततः सामर्थ्यात् युनि फञ्। न हि युवानं विना अपत्यप्रत्ययद्वयं लब्धुं शक्यते। पुंसि जात इति गणसूत्रम्। पुंसि विद्यमानो यो जातशब्दस्तस्मात् फञित्यर्थः। जातायाः इति लिङ्गविशिष्टपरिभाषया एकदेशस्य पूर्वान्तत्वेन ग्रहणाद्वा प्राप्तः फञ्। शिवादिभ्योऽण्। गोत्र इति निवृत्तमिति। इतः प्रभृति अपत्यसामान्ये प्रत्यया इति भावः। एतच्च वृत्तौ कैयटादिग्रन्थे च स्पष्टम्। यस्तु यूनि लुक् सूत्रे भाष्यकैयटपर्यालोचनया गोत्रसंज्ञासूत्रपर्यन्तं गोत्राधिकार इति लभ्यते ॥

ऽण्सिद्धेः। नैवमिञ्स्यात्। पुनर्वचनवैयर्थ्यापत्तेः। न च बाधकबाधनार्थं तत्। तस्यैवाभावादित्यनन्त्रोक्तम्। गोत्र इत्यनुवृत्तौ तु शिवादिभ्यो गोत्र एवेञ्नान्यत्रेति नियमेन चारितार्थ्यात्। अण्ग्रहणं विना ऽणो सिद्धेस्तस्य सार्थक्येन संगतिः स्यादस्तु निवृत्तिरत्रेति तद्भावः। भाष्यकैयटेति। तत्र हि सर्वत्र शास्त्रीयगोत्रग्रहणे गार्ग्यायणादिभ्यो युवप्रत्ययान्तेभ्यः समूहादौ गोत्रत्वप्रयुक्तो वुञ् नस्याद् इत्याशङ्क्यापत्याधिकारादन्यत्र लौकिकं गोत्रमपत्यं गोत्राद्येति सूत्रस्य राजन्यग्रहणं ज्ञापकमुक्तं भाष्ये। गोत्रसंज्ञासूत्रपर्यन्तं गोत्राधिकार इति च कैयटेन व्याख्यातम् ॥

मतान्तरमिति। विशिष्टमतमित्यर्थः। अनयोरेतदन्तरमित्यादौ विशेषवाचिनोऽप्यन्तरशब्दस्य सत्त्वात्। नियमविधिसम्भवे विधेरवज्यायस्त्वेन तदनुरोधेनाण एव विधानमिति प्रकृतसूत्रस्थोक्तभाष्याशयसत्त्वेनेदं भाष्यं न तन्निवृत्तौ मानम्। गाङ्गेयादावनन्तरापत्ये प्रत्ययस्तु द्रोणायनवदुपचारेण साधुः। किंचात्रैव तन्निवृत्तौ मनुषीशब्दात्कु

तन्मतान्तरमिति भावः। विपाश्शब्दोऽत्र पठ्यन्ते। तस्य कुञ्जादिष्वपि पाठात् स्फक्। वैपाशः। वैपाशायनः। जरत्कारुशब्दः पठ्यते। ततः शुभ्रादित्वाड्ढ
गपि ढे लोपोऽकद्र्वाः इत्युलोपः। जारत्कारवः। जारत्कारेयः। विश्रवणरवणशब्दौ पठ्यते। तौ विश्रवःशब्दस्यादेशौ प्रकृत्यन्तरे एव वा इति विषये तत्समानार्थौ। वैश्रवणः। रावणः। इतश्चानिञः। द्व्यचः। किम्। उदधेरपत्यमौदधः। यत्तु काशिकायां मरीचेर्मारीच इति प्रत्युदाहृतम्। तच्चिन्त्यम्। बाह्वादित्वेनेञ्प्रसङ्गा
त्। तथा च मिरचोऽत्यात्सरहनिसूत्रे भाष्यम्। मरीचिशब्दो बाह्वादिषु पठ्यत इति। शुभ्रादिभ्यश्च। मृकण्डशब्दोऽत्र पठ्यते। स च अदन्तः। एतच्च मृगयादयश्चे
ति सूत्रे उज्ज्वलदत्तग्रन्थे स्पष्टम्। मृकण्डस्य मुनेस्तीर्थं तद्यामात्मति निर्मलमिति स्कान्दे मार्कण्डेयः। उकारान्तपाठे तु ढे लोपोऽकद्र्वाः। कल्याण्यादीनामिनङ्।
परस्त्रीशब्दोऽत्र पठ्यते। पारस्त्रैणेयः। अनुशतिकादित्वादुभयपदवृद्धिः। परभार्यायामुत्पन्न इत्यर्थः। बिदादिगणे तु परस्त्री परशु च इति पठ्यते। आपद्यत इति
शेषः। परस्त्रियाम् अपत्यं पारशवः। ब्राह्मणाच्छूद्रायामूढायामुत्पन्नः। सा च जात्यन्तरगोत्रात्परस्त्री। तदिह परस्त्रीति कल्याण्यादिपु षष्ठीतत्पुरुषः। बि
दादौ तु कर्मधारय इति विवेकः। तथा च याज्ञवल्क्यः। विप्रान्मूर्द्धावसिक्तो हि क्षत्रियायां विशः स्त्रियाम् ॥

त्तितमपत्यमित्यर्थविवक्षायां मानुषो जात्य इति ण प्रत्ययस्य भाष्यकृतदृष्टस्यासिद्धिरितीदमेव युक्तं मतम्। शास्त्रीयं गोत्रं च युवत्वानाक्रान्तपौत्रप्रभृत्यपत्यरूपम्। तद
र्थकत्वं च वास्तवं शास्त्रप्रक्रियानिर्वाहाय कल्पितं चेति भावः ॥

म॰श॰ अंबष्ठः शूद्र्यामिति। शूद्रकन्यायामित्यर्थः। जातौ ङीष्प्रयोगआर्षः। अत्रानुलोमप्रस्तावात्ताविवाहितैवेत्याहुः। तृतीयं रूपमिति। उभयोरप्यत्र कुलटाशब्देन ग्रहणमि
१९३ अम्बष्ठः शूद्र्यां निषादो जातः पारशवोपि चेति। न चैवं पारशवेपि स्यानिवद्भावात् अनुशतिकादिकार्यं स्यादिति वाच्यम्। पूर्वोत्तरपदसंप्रमोहात्। न हीह एतावा
न्पूर्वपदस्यादेशः इति विषयविभागो गम्यते। सतीभिक्षुकी चेति। अत्र इनङ् वि॰ धौ। उक्तं चामरसिंहेन अथवान्धकिनेयः स्यादिहन्युलस्यासतीसुतः। कौलटेरः कौलटेयो
भिक्षुकी तु सती यदि। तस्यां कौलटिनेयोस्याः कौलटेयोपि चात्मजः इति। केचित्तु क्षुद्राया अपि इनङा तृतीयं रूपमाहुः। स्त्रीतु क्षुद्राभ्यः परत्वाड्ढ्गिलुक्तं सच्चिन्त्यम्। तस्य
वैकल्पिकतया स्वयमपि पक्षे ढकः स्वीकाराच्च। इनङः प्राप्तेर्दुर्वारत्वात्। तयोरेवेति। तत्र टाबन्तात्तद्धिते लुप्ते लुक्तद्धितलुकीति टापो लुकि पुनरजादिलक्षणष्टाप्
जातिलक्षणस्य ङीषो बाधक इति भावः। यत्त्विह न्यासकृतोक्तम्। चटकादैरगित्येव सांप्रदायिकः सूत्रपाठ इति। तद्भाष्यवार्त्तिकविरोधादुपेक्ष्यम्। आरगुदीच्यामु
दीचां ग्रहणं पूजार्थम्। वंचकादेवढकृढगारकौः पर्यायसिद्धेः। अन्यत इति। अनक्षारान्तात् कुतश्चिदित्यर्थः। जडस्येति। अलघातनौ। इलयोरभेदाज्जडः। पश्मिनौ।
षण्डः। एतच्च उक्तधात्वोर्माधवीयवृत्तौ स्पष्टम्। तत्र षण्डस्यापत्यं त्रिमादिबोध्यम्। गार्ष्टेय इति। न तु गृष्टिः सकृत्प्रसूता गौरिति कोशाच्चतुष्पाद्भ्यो ढञ् इत्येव
सिद्धम्। अत्राहुः। कोशे गौरिति प्रायोवादः। सकृत्प्रसूता सर्वापि गृष्टिः। अतो यमारम्भ इति। वस्तुतस्तु गृष्टिशब्दः शुभ्रादिः। तथा चानोदात्तं ढगन्तं प्रयुज्यते। स
न्नार्ष्टेयो वृषभो गोभिरानडिति ॥

तिभावः। पूजार्थमिति। इदं च गोधाशब्दमात्रविषयं सूत्रमिति मते। जडादिभ्यो विधानार्थत्वे तु तत्र विकल्पार्थमावश्यकमेतदिति बोध्यम्। अरकुन्नकृतः। गोधार इत्यस्ति राम॰
व्याप्तेः। कोशस्य यथाश्रुतन्त्वमभ्युपेत्याप्याह। वस्तुतस्त्विति ॥ १९३

पाक्षिकेति। अन्यथा शुभ्रादिढकाच तु स्याद् ढञो बाध एव स्यादिति भावः। ऋषिशब्द इति। प्रवराध्यायप्रसिद्ध इति शेषः। तदा बोध्यमिति। तदापि वुञर्थमावश्यकमिदमिति भावः। पारिभाषिकेऽपि गोत्रे न स्यादिति। अत्र प्रयोगे स्वत्वभावमात्रमनेन प्रतिपाद्यते न त्वेतावता तत्र पारिभाषिकग्रहणमिति भ्रमितव्यम्। अपत्याधिकारादन्यत्वेन लौ

अतः पाक्षिकाद्युदात्तार्थमिह सूत्रे ऋषिशब्दग्रहणम्। ढञिति। गृष्ट्यादित्वादिति भावः। केकयमित्रयु। केकयस्यापत्यं स्त्री कैकेयी। जनपदशब्दात्क्षत्रियादञ्। मैत्रेयिकयाश्लाघते मित्रयूनां भावेनेत्यर्थः। गोत्रचरणाच्छ्लाघात्याकारेति वुञ्। अत्र हि लौकिकं गोत्रं गृह्यते। लोके च ऋषिशब्दो गोत्रमिति प्रसिद्ध इति काशिका। एतच्च यदा मित्रयुशब्दोऽभेदोपचारात् तदपत्ये समूहे वर्तते तदा बोध्यम्। यदा तु गृष्ट्यादित्वाड्ढञो यस्कादित्वाद्बहुषु लुक् तदा पारिभाषिकेऽपि गोत्रे न सतिः। प्रलयादागतं प्रालेयम्। इयादेशेन वृद्धिर्न बाध्यते। विषयभेदात्। अचो ञ्णिति वृद्धिर्यादेरियादेशः। अङ्गत्वं उभयोर्विशेषणं। नकार्यमिति हरदत्तः। दाण्डिनायन। एतानीति। दण्डिन् हस्तिन् आभ्यां नडादित्वात्फक्। येस्तु नडादिष्वेतौ न पठ्येते तेषामत एव निपातनाल्लुक्। टिलोपाभावस्तु निपातनादेव। आथर्वणिकेति वसन्तादिषु पठ्यते। अथर्वणा प्रोक्तो ग्रन्थः अथर्वा। उपचारात् तमधीते आथर्वणिकः। जिह्माशिनिति शुभ्रादिः। जिह्माशिनोपत्यं जैह्माशिनेयः। वाशिनोपत्यं वाशिनायनिः। उदीचां वृद्धादिति फिञ्। भ्रूणहन् धीवन् एतयोः ष्यञि तकारादेशो निपात्यते। भ्रूणघ्नो भावो भ्रौणहत्यम्। धैवत्यम्। इह हन्तेस्तत्वे हनस्तोऽचिण्णलोरित्येव सिद्धे निपातनं ज्ञापयति ॥

किकग्रहणेऽस्यैव न्याय्यत्वादिति बोध्यम्। एतत्सर्वमपि नासूचितम्। निपातनमिति। न च कुत्वाभावार्थं निपातनम्। तदर्थत्वेऽपि धैवत्यसाहचर्येणास्यां परिभाषायामस्य ज्ञापकत्वपरत्वम्। जेर्ह्रिरिति सूत्रस्य भाष्यस्य प्रामाण्येन च तत्त्वनिपातनस्यापि सूत्रकृतास्मर्यविषयत्वेन ज्ञापकत्वाप्तेः ॥

म॰ श॰ स्वरूपग्रहण इति। इदं प्रायिकम्। धातोः कार्यमुच्यमानमित्येव सारम्। एतच्च मृजेर्वृद्धिरित्यत्र भाष्ये स्पष्टम्। ज्ञापितं च तत एव भौणहत्ये कुत्वं नापादेरिति। युइत्यस्येत्यर्थः।
१९४ निपातनबलादेवालोऽन्त्यस्येत्यस्याप्रवृत्तिः। एकस्यश्रुत्येति। एतेन सूत्रे द्वन्द्वनिर्देशस्तत्र तदलौकिकविग्रहे विरुद्धस्वरकयोर्द्वयोः प्रवेशासंभवेन कथं द्वयोर्ग्रहणमित्यपास्तम्

धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानमिति। तेन वार्त्रघ्नमित्यत्र न त्वम्। सरयु इत्यस्याणि परे यादेर्वो निपात्यते। सरय्वां भवं सारवमुदकम्। दविकायां सर य्वां च भवे दाविकसारवावित्यमरः। तत्र दविकाशिंशपादित्वादण्। दीर्घसत्रश्रेयसामात् इति सूत्रेण दविकाशब्दस्य वा मादेराकारादेशो बोध्यः। ऐक्ष्वाक इति। अणन्तमञन्तं च। एकश्रुत्या पाठात्। उभयत्राप्युकारलोपः। इक्ष्वाकोरपत्यम्। जनपदशब्दात्क्षत्रियादञ्। ऐक्ष्वाको राजा। बहुत्वे लुक्। इक्ष्वाकूणामनुरागो इक्ष्वाकुषु जनपदेषु भवः। कोपधादण्। अस्य बहुत्वेऽपि न लुक्। ऐक्ष्वाकेषु च मैथिलेषु च फलं त्वस्माकमद्याशिष्व इति मुरारिः। हिरण्यशब्दस्य मयटि यादिलोपो निपात्यते। हिरण्यस्य विकारो हिरण्मयः। यस्कादिभ्यो गोत्रे। अपत्याधिकारादन्यत्र लौकिकं गोत्रमित्यभिप्रेत्याह। अपत्यप्रत्ययस्येति। राजश्वशुराद्यत्। यथाक्रममणिञोरपवादः। जाताद्वेति। प्रकृतिप्रत्ययसमुदायेन जातिश्चेद् द्योत्येत्यर्थः। प्रत्ययस्तु अपत्य एव। व्यस्तपत्नी। सपत्नशब्दः शत्रुपर्यायः अव्युत्पन्नं प्रातिपदिकम्। वस्तुतस्तु सपत्नीशब्दादिवार्थेऽल्प्रत्ययो निपात्यते ॥

म्। तत्रैकश्रुतियुक्तस्यैव प्रवेशात्। लौकिकमिति। न च प्रवराध्यायप्रसिद्धमस्त्यप्रत्ययान्तम्। अपत्य एवेति। गोत्र एवेत्यर्थः। तदधिकारे पाठेन आरोपितेन तेन साधुत्वान्वाख्यानात् राम॰
तत्काले राज्ञोऽपत्यं गोत्रमिति विग्रहोऽदर्शनीय इति भावः। लोके तु न तथा बोधः। एतत्सर्वं वार्तिके एवकारं पठता सूचितम्। अव्युत्पन्नमिति। सबलघावन्ते इति मञ्जोदातः ॥ १९४

अवग्रह इति। सशब्दे इति शेषः। मध्योदात्त इति। सपत्नशब्द इति शेषः। परे त्विदं चिन्त्यम्। लघावन्ते इत्येव सिद्धे लित्स्वरस्य फलाभावात्। अस्मादेव इत्यन्ते सपत्नप्रकृतिकतायाः सपत्नीशब्दे भाष्यकृताङ्गीकाराच्च। तेन रूपेण ततो बोधाभावाच्च। अवग्रहे तु संप्रदाय एव शरणमित्याहुः। इत्याहेति। तन्मते पि पाद... चेतन धर्म शत्रुत्वासं

संपत्नीवत्सपत्नः। अत एव येनः सपत्ना अयते भवन्त्वित्यत्र सपत्नाः इत्यविग्रहः पठ्यते। लित्स्वरेण मध्योदात्तः पाप्मनेति। न ह्यत्र भ्रातृपुत्रत्वरूपोऽवयवार्थोऽस्तीति भावः। वृत्तिकारस्तु इहापत्यग्रहणं न संबध्यते। अनर्थकादेव प्रकृतिप्रत्ययौ समुदायार्थः परं सपत्न इत्याह। गार्ग्या अपत्यमिति। पितुरसंविज्ञाने मात्रा व्यपदेशः कुत्सा पुंवद्भावादिति। अस्माढे इत्यनेन। गार्ग्यशब्दादिति। यद्यपि अहः प्रकृतेर्वृद्धत्वात्तस्य णिलं नोपयुज्यते तथापि ग्लुचुकायन्याः अपत्यं ग्लौचुकायन इत्यत्र वृद्ध्यर्थं न द्वेध्यम्। गोत्रेति किम्। कारिकेयः। स्त्रियाः किम्। औपगवस्यापत्यं युवा औपगविः। कुत्सने किम्। गार्गेयः। कौरव्या ब्राह्मणा इति। यत्तु कुरुनादिभ्यो ण्य इति वक्ष्यते तत्र क्षत्रियादित्यधिकृतम्। तद्राजत्वाल्लुक्। कुरवः क्षत्रिया इति विशेषः। जात्व इकः इति। वदेर्यङन्ता इक प्रत्ययः स च कुर्वादिगणे वावदूकेति पाठसामर्थ्यादेवेति माधवः। उलूकादयश्च त्वुणादिसूत्रेणेत्यन्ये। सम्राज इति गणसूत्रम्। हारिषेण्य इति। एति संज्ञायामगादिति षत्वस्यासिद्धत्वात् सेनान्तोयम्। नापित्य इति। प्राचां मते नेदम् ॥

भवाद्युपचार आवश्यक इति बोध्यम्। पितुरसंविज्ञाने इति। उभयोः संविज्ञाने तु न सा। देवकीतनयं वन्दे इति यथा। ग्लौचुकायन इति। नचात्र केष्वेवेति शङ्क्यम्। इद्दादित्यनुवृत्त्या तत्र फिञ एव ग्रहणात् असौवीरत्वाच्च। तथा च शेष इति सूत्रे भाष्ये उक्तं न च फिञन्तं सौवीरगोत्रमस्तीति ... वत्स्येति। तदसिद्धत्वेन णत्वाभावो प्येव इत्येतिभावः ॥

फिञिति। वृद्धेभ्य इति शेषः। अवृद्धेभ्यस्तु फिञिति बोध्यम्। वृत्तिकार इति। अत्राहुः चिबीजं तु बाध्य सामान्यचिन्तायां सर्वबाधापत्तिः विशेषचिन्तायां तु पुरस्तादिति न्यायेन ण्यपक्षे
वबाधापत्तिः इष्टिस्तु भाष्ये नास्ति उपसंख्यानपाठेन शिवादिपाठस्य निर्मूलत्वं चाण्येन बाधितत्वादिति। तस्यापत्यमित्यौत्सर्गिकस्य तेन बाध इति भावः। भाष्येति। भाष्यकृतो
पसंख्यानपाठात् वृत्तिकृता शिवादौ पाठादिति भावः पुंवद्भावप्रतिषेधार्थ इति। पाण्ड्याद प्रितइत्यादौ अनन्तरापत्ये जातित्वाभावाज्ज्ञातेश्चेत्यनेन न सिद्धिः ॥ तदपि पतिवा
उदीचां तु परत्वात्फिञिति वक्ष्यते। तक्ष्ण इति उदीचामित्येवाइञोपवादः। वृत्तिकारस्तु तक्षन्शब्दं शिवादिषु पठित्वा कारिलक्षणमुदीचामित्रं मत्यमणा बाधते ण्य
स्यतु बाधो नेष्यते इत्याह सर्वथाप्यण्याभ्यां रूपद्वयं निर्विवादम्। षस्तु पूर्वे हन्धृतराज्ञामणीति सूत्रे हरदत्तेनोक्तम्। ताक्ष्णः तस्येदमित्यण् न त्वपत्ये कारिल
क्षणेन ण्येन बाधितत्वादिति. तदिहत्यभाष्यवृत्तिस्वग्रन्थविस्मरणमूलकम्। नैकायनिरिति। तिकआस्कन्दने तिक्नोतीति तिकः इगुपधत्वात्कः। वृद्धात्किम्। दा
क्षिरिति। दक्षशब्दोत्र प्रौढपरः। नामधेयत्वे तु वा नामधेयस्येति वृद्धत्वात्पक्षे फिञ् भवत्येव दाक्षायण्यो श्विनीत्यादिताराइत्यमरः। पञ्चालानां राजेति। इह अवृद्धाद
पि बहुवचनविषयादिति प्राप्तो वुञ्बाध्यते। पूरोरिति। पूरुशब्दस्य जनपदवाचित्वाभावात्प्राद्दीव्यतीयेः णिसिद्धे तद्राजसञ्ज्ञार्थं वचनम्। जनपदवाचित्वे तु ह्यञ्मगधे
त्येव सिद्धम्। पाण्डोर्ड्यण्। णकारो वृद्धिनिमित्तस्येति पुंवद्भावप्रतिषेधार्थः। युधिष्ठिरपितृवाचिनो गुणवाचिनश्च पाण्डोर्नेह ग्रहणम्। जनपदशब्दादित्युक्ते हि तदधि
पतिवाच्येवोपतिष्ठते। कुरुनादिभ्यो ण्यः। कुरोव्यञ्ज्लक्षणे णि प्राप्ते नकारादिभ्यस्तु अञि प्राप्ते वचनम्। तेतद्राजाः। अञ इयइति ततः प्राचीनास्तु तच्छब्देन नप
राम्रष्यन्ते गोत्रयुवसञ्ज्ञाकाण्डेन विच्छेदादिति भावः। तद्राजस्य बहुषु तदर्थेनेति। तद्राजस्यार्थेन कृत इत्यर्थः ॥
च्येवेर्षि। प्रत्यासत्त्या तज्जनपदस्वामित्वेन यो पत्यत्रियस्त्राचीस एवोपतिष्ठते इत्यर्थः। तद्राजस्यार्थेनेति। तद्राजान्तस्यार्थेनैव कृत इत्यर्थः। तावन्मात्रान्वयीति यावत्। अत रामः
एवाङ्ग देवदत्तयज्ञदत्ताइत्यादौ लुग्व्यावृत्तिस्तत्र बहुत्वस्य देवदत्तादावप्यन्वयेन तदर्थमात्रान्वयित्वाभावादित्यन्यत्र विस्तरः ॥ १८५

कौशल्येतीति। आम्बष्ठ्येतीत्यपि बोध्यम्। अप्रत्यये इति। न चौदमेध्याया अपत्यमित्यर्थे ठक्यल्लोपे यस्यात्। प्रत्ययान्ताल्लोपो न स्यात् भस्याढे इति पुंवत्त्वं स्यादेवेति निषिद्धः स्यादेशो वेत्यापत्यत्वं तद्वत् तम्भवत्वस्यापत्यमित्यर्थात्। प्रत्ययत्वे तु स्त्रीप्रत्ययानां स्वार्थिकत्वेऽपि स्त्रीत्वद्योतकत्वेन नन्तत्वं वक्तुमशक्यं योधेयीत्या। दावओत्यन्तस्वार्थिकत्वात् गोत्रत्वमस्त्येवेति शार्ङ्गरवाद्यञ इति ङीन्सिद्धिः। अत एवापत्याणन्ताभिजितशब्दादभिजिद्विदभृदिति सूत्रेणात्यन्तस्वार्थिके यञि गोत्रत्वरणादिति बुञि आपत्यस्येति यलोपः आभिजितकसिद्धिः।

________________ रघुयदुशब्दयोरिति। एतच्च वन्ध्वचङ्ञ इति सूत्रे पदमञ्जर्यां स्थितम्। सिंधुतक्षेति। कम्बोजशब्दस्य सिन्ध्वादिषु पठ्यमानत्वादिति भावः। अवन्तीकुन्तीति। ञ्यङो लुक्। इतो मनुष्यजातेरिति ङी। प्राकुरूरिति। ण्यस्य लुक् ऊङ्। तद्राज इह। अतश्चादहतद्राजेन अकारो विशेष्यते न तु विपरीतम्। विशेषणेन तदन्तविधेः ञ्यङ् ण्यादीनामपि अनेनैव लुक् सिद्धो भवन्ति कुन्तिकुरूभ्यो लुग्वचनं वै यर्थ्यापत्तेः तेन कौशल्येति सिद्धम्। तदेतदाह। तद्राजस्याकारस्येति। कारूशीति। कृञ उः करुः तं वष्टि मूलविभुजादित्वात्कः करूशः। एतेन करूषेति मूर्द्धन्यपाठः प्रत्युक्तः। अणिञोः। यद्यपि स्त्रीप्रत्ययाः प्रकृताः ष्यङः प्रत्ययत्वेलस्यसिद्धिरप्यप्रत्यूहा तथाप्यादेशत्वमेवोचितम्। पत्युर्नो यज्ञसंयोगे इति नकारस्य यथा ॥

औदमेध्यानां सङ्घ औदमेधः इत्यत्राण्तु भस्याढे इति प्रागेव पुंवत्त्वे इञन्तत्वादेव सिद्धो यकारनिवृत्तिश्च पुंवत्त्वादेवेति वाच्यम्। आदेशत्वेऽपि स्त्रीत्वस्यापिकस्य योत्यतया दुर्वारत्वेन तत्रापि लोपस्य दुर्लभत्वात् स्यानिवत्त्वेनापत्यत्वं तु न मूलभमशास्त्रीयत्वात्। यदि तु आपत्यस्य चेति सूत्रे आपत्यत्वमपत्यार्थकत्वमात्रं न त्ववधारणगर्भमित्युच्यते तदा ममाप्यदोष इत्याशयात्। एनचकैयटे स्पष्टम्। प्रत्ययत्वपक्षश्चायेचतद्धिते इति सूत्रे भाष्ये दृश्यते आदेशत्वपक्षश्च अक्रुतसूत्रे भाष्ये। चाद्यभाष्यं तु एकदेश्युक्तिरिति तत्त्वम् ॥

म॰श॰ षष्ठीस्वरसादिति। नचव्रीहिशाल्योरितिवदानन्तर्ये षष्ठीतत्रनस्यादादर्थं किंत्करणास्यषष्ठीस्थाने इत्यस्यबाधेप्यत्रतद्बाधेमानाभावादितिभावः। नन्वत्रपक्षेहस्तिशिरसोऽपत्यंहास्तिशीर्षिर्बाह्वादित्वादिञ्
१९६ अचीशीर्षइतिशीर्षादेशस्तत्रइञ्यङ्‌हस्तिशीर्ष्णःअत्रस्थानिवत्त्वेनशीर्षशब्दस्यशिरसशब्दत्वाद्येचतद्धितेइतिशीर्षन्नादेशः
प्राप्नोति। टिलोपस्तुनयेचाभावकर्मणोरितिप्रकृतिभावात्। स्पष्टंचेदंयेचतद्धितेइत्यत्रभाष्येइतिचेन्न। अन्आत्माध्वानावितिसाहचर्यात् अन्नन्ताद्धितयादावेव

अणिञोरितिषष्ठीस्वरसात्। इत्यभिप्रेत्याह: ष्यङादेशः स्यादिति। नन्वयंतातङ्‌न्यायेनसर्वादेशःस्यात् ङित्त्वेत्यस्यानन्यार्थङित्त्वेपनङनदित्युचरितार्थत्वात् ष्यङोङित्त्वस्यपङ्श्चेतिविशेषणार्थत्वादित्यतआह। निर्दिश्यमानस्येति। कौमुदगन्ध्येति। अणःष्यङ्। वाराह्येति। इञः ष्यङ्। अणिञोःकिम्। आर्तभागी। ऋतभागस्यबिदादित्वादञ्। इत्यपत्याधिकारः। रज्यतेऽनेनेति। शुक्लस्यवर्णान्तरोपादानमिहरञ्जेरर्थः। कथंहरिद्रोकुक्कुटस्यपादाविति। उपमानाद्भविष्यति। लाक्षारोचनात्। वृत्तिकृत्तुवार्तिकस्थांशाकलकर्दमावपिसूत्रेप्रचिक्षेप। आभ्यामिति। भाष्यादौतुनैतदस्ति। नील्येति। नीलीऔषधिविशेषः। नक्षत्रेण। नक्षत्रवाचकाः शब्दाः वृत्तिविषयेतद्युक्तंचन्द्रमसमभिदधानाः प्रत्ययंलभन्ते। पुष्येणेति। पुष्यसमीपस्थेनचन्द्रमसेत्यर्थः। ॥

प्रकृतिभावस्वीकारेणादोषात्। नस्तद्धितइत्यत्रतुनतथार्थव्याख्यानात्। हास्तिशीर्षेत्यस्यभगवतोच्चारणात्। ध्वनितंचेदंप्रकृतसूत्रेआदेशत्वस्यापयताभगवता॥ इत्यपत्याधिकारः। शुक्लस्येति। उपलक्षणमेतत्। भाष्यादाविति। आदिनावार्तिकम्। चन्द्रमसमभिदधानादिति। तादृशाख्यसंकल्पवाक्येप्रसिद्धाः। अश्विन्यादेः केवल राम:
नक्षत्रवाचकस्यतुनग्रहणंतेनकालयोगस्याव्यभिचारात्। अप्राप्तिपूर्वकप्राप्तिरूपयोगस्यासंभवाच्च ॥ १९६

पूर्वसूत्रेति। तेन प्रत्यासत्त्या नक्षत्रस्य यावन्तं कालं चन्द्रमसा संबन्ध औत्सर्गिकस्तत्कालसंबन्धविशेषो गृह्यते स च षष्टिदण्डात्मक इति भावः। ह्विरण् इत्यस्य प्रतिप्रसूतोणित्यर्थस्तदाह। इह ही
गृह्यत इति। अयमत्र विशेषः। पूर्वसूत्रानुवृत्तिबलाल्लभ्यते नायं त्वत्त्यानह्योनम्ब इति विशेषे गम्यमाने पिलुब्भवत्येवेति भावः। हस्ताच्छ्वः। विशेष उदाहरणमाह। तिष्यपुनर्वसवीय
न्न्ह्रीरिति। अविशेषे तु अयराधानुराधीयम्। न खलु अविशेष इति अणद्वच्छस्यापि लुप्स्यादिति वाच्यम्। पूर्वोपस्थितेन अणैव तस्य निराकाङ्क्षत्वात् एतदेव हि मन्द्योपयाद्न्यायेपितत्व
म्। अस्मिन्नर्थ इति। तथा च श्लोकवार्त्तिकम्। दृष्टे सामनि जाते चाप्यण् डिद् द्विर्वा विधीयते इति। जातार्थे योद्विरण् स च वा डिदित्यन्वयः। शतभिषजि जातः। शातभिषः। शातभिषजः। इह
हि प्रादीव्यत इति प्राप्तेण कालाट्ठञा बाधितः। सन्धिवेलादिसूत्रेण प्रतिप्रसूतः। इत्यसंद्विरु क्तोण् अतो वा डित्त्वम्। एतच्च मूले स्वस्थाने वक्ष्यते। वा पद्देश्यात्। यस्येति लोपेन सिद्धे टच्य इत्य
योर्डित्करणं स्वरार्थम्। यथतोऽत्रेति सूत्रेण विधीयमानेन ञ उत्तरस्य यथदान्तस्य अन्तोदात्तत्वम्। अवामदेव्यशब्दे मा भूत्। किन्तु अव्ययपूर्वपदस्य एव यथा स्यात्। ननु कृतेऽपि डित्त्वे यय
तोरित्यस्याप्रवृत्तिः कुतो नेति चेत्। परिभाषाबलादित्यवेहि। तथा हि निरनुबन्धकग्रहणे न सानुबन्धकस्येति निरनुबन्धकग्रहणे सानुबन्धकग्रहणं न भवति। तदनुबन्धकग्रहणे नातदनुबन्धकस्येति यद्ग्रहणे ड्य ग्रहणं
न भवति। इमे च परिभाषे इहैव डित्त्वेन ज्ञाप्येते। तत्राद्यायाः प्रयोजनं पूरणगुणेति सूत्रे तव्यग्रहणे तव्यद्ग्रहणं मा भूत्। दिव औदित्यत्र दीव्यतेर्मा भूत्। द्वितीयस्यास्तु अङ्ग्रहणे चङ्ग्रहणं मा भू
त्। स्तवनेरः अम्बत्। नेह अशिश्वियत्। परिवृतो रथः। न देकान्तग्रहणं कर्तव्यम्। नेह पुत्रैः पौत्रैः परिवृतः। तत्रोढतम्। शारवत्इति। भुक्तोच्छिष्ट इत्यर्थ इति वृत्तिकाराः। अवशिष्ट इति तदर्थः। त
थाच कल्पसूत्रे व्यवहारः। उच्छिनष्टि नसर्वं जुहोतीति। सास्मिन्पौर्णमासीति सूत्रात्प्राकृतञ्रेत्यनुवर्तते। तेन सप्तम्यन्तादेव प्रत्ययाः। स्थण्डिलात्। व्रतं शास्त्रेण विहितो नियमः। तस्मिन्समु
दायेन गम्ये ऽत्रेत्यमिति। कथं तर्हि उत्त्योऽग्निः। नह्यसौ भव इति चेत्सत्यम्। भवार्थे दिगादित्वाद्यदिसाहुः। दध्नष्ठगिति। संस्कार श्चेह लवणादिना। यस्तु संस्कृतार्थे प्राग्वहतेरितिठग्वक्ष्यते
स तत्रैव न्नानात्। ततश्च दध्नासंस्कृतोपि दाधिक एव। उदश्वितोऽन्यतरस्यामिति। किंस्तुक् इहेव सूत्रे निपातनात्संप्रसारणाभाव इति शब्दादिति। सहि लौकिकीं विवक्षामनुसारयति। सूत्रे सञ्ज्ञा
यामिति वृत्तिकृता प्रक्षिप्तम् ॥ ञ्तीति। तदनुबन्धकेति। स उपात्त एवानुबन्धो यस्य स तदनुबन्धकः स चान्यश्चानुबन्धो यस्यासौ तदतदनुबन्धक इति बोध्यम्। लौकिकीं विवक्षामिति। तेन साबनातिरिक्त

मासार्धमासयोर्वानेन प्रत्यय इति भाष्ये स्पष्टम् ॥

अनन्तवचनइति। प्रकृतइतिशेषः। विशेषणसमासः। शतत्वसंख्यावाविशतशब्देनतुतद्धितार्थेतिसमासेशतश्लोकीत्यादिसिद्धिः। अयंतुनसंख्यावाचीतिभावः। ओर्गुणइति। परत्वादकृतसार्वेतिदी
र्घेङ्कृतपरिभाषयाअनित्यत्वेनपुनः प्रसङ्गविज्ञानादोर्गुणइत्यर्थः। मरुत्वतीयमिति। मरुत्वानिन्द्रः। अग्नीषोमीयमिति। ईद्ग्नेरितीत्वम्। निपातनादिति। तत्पुरुषेकृतीतिबहुलग्रहणादलुक्
पौर्णमासीति। महाराजप्रोष्ठपदाट्ठञित्यत्रतदस्मिन्वर्ततइत्यर्थेपूर्णमासादण् उपसंख्यानादण्। शतंरुद्राइति। शतशब्दोऽनन्तवचनः। सौमीति। हलस्तद्धितस्येतियलोपः।
वायव्यमिति। ओर्गुणः। वान्तोयीत्यवादेशः। उषस्यमिति। उषस्शब्दः स्त्रीलिङ्गोदिवोदुहितरंदेवतां वक्ति। एतच्चसुपेशसंसुखंरथमित्यादिमन्त्रेषुप्रसिद्धम्। शुना
सीरीयमिति। शुनश्चसीरश्चेतिद्वन्द्वः। शुनोवायुः सीरआदित्यइतिवृत्तिकारः। अन्येत्वेकमेवशुनासीरमिन्द्रस्यगुणमाहुः। तथाचाश्वलायनः। इन्द्रोवाशुनासीरइति।
मन्त्रवर्णश्चइन्द्रंशुनासीरमस्मिन्यज्ञेहवामहइति। मरुत्वतीयम्। मरुत्वत्यम्। अग्नीषोमीयम्। अग्नीषोम्यम्। वास्तोष्पत्यम्। वास्तोष्पतीयम्। वेश्मभूर्वास्तुरस्त्रि
याम्। वास्तोः पतिर्वास्तोष्पतिः। इहैवसूत्रेनिपातनात्साधुः। गृहमेधीयम्। गृहमेध्यम्। गृहमेधशब्दोऽकारान्तः। मरुद्भ्योगृहमेधेभ्यइत्याश्वलायनः। गृहमेधासआगतेति
मन्त्रलिङ्गाच्च। कालेभ्योभववत्। कालेभ्योयेभवेप्रत्ययावक्ष्यन्तेतेसास्यदेवतेत्यस्मिन्विषयेऽनेनसूत्रेणातिदिश्यन्ते। वत्करणंसर्वसादृश्यार्थन्तेनयस्माद्योविहितः ततः
सएवभवति। तथैवोदाहरति। मासिकंप्रावृषेण्यमिति। सकारेति। अन्यथाप्रक्रियालाघवायषकारमेवपठेदितिभावः। तस्यसमूहः। चित्तवदाद्युदात्तमगोत्रान्त
-र्थकम्। काकबकवृकशब्दाआद्युदात्ताः ॥
कत्वादिषदस्त्वम्। वाचस्पतिर्दिवस्पतिवदित्यन्ये। मासिकमित्यादि। कालाट्ठञ्। प्रावृषएण्यो। षकारमेवेति। तत्रषकारोच्चारणेऽपिषस्यनेत्वं फलाभावात्। सोढायन्तस्यक्लीवत्वात्। अविदूसादि
भ्यःआचारक्विबन्तेभ्यः कर्तरिक्विप्नास्त्येव भाष्येउदाहरणेषुइदस्यपाठात् नषइतिबोध्यम् ॥

...सूत्रे। इति। अयमर्थः। कवर्गात्पूर्वत्वात्। इदं फलितार्थकथनम्। पूर्वशब्दो भावप्रधानः। कोः पूर्वत्वमेषामिति बहुव्रीहिरतः सूत्रेन सर्वनामकार्यं सुडिति बोध्यम्। कवर्गो व
...पूर्वत्ववतामिति वाच्योऽर्थः। अनुदात्तादेरिति। गर्भिन्शब्दस्यान्तोदात्तत्वादिति भावः॥ प्रत्याख्यानादिति। उक्तरीत्यानुदात्तादित्वाभावादञो प्राप्तौ औत्सर्गिकाणा सिद्धिमाश्रित्येत्यर्थः

प्राणिनां कुपूर्वाणामिति फिट्सूत्रात्। प्राणिविशेषवाचिनां शब्दानां येऽऽदिभूताः कवर्गात्पूर्वे तेषामुदात्तः स्यादिति सूत्रार्थः। अथादिः प्राक्शकटेरिति ह्यधिकृतम्।
यत्तु वृत्तौ न्यासे च शौकमित्युदाहृतं तत्प्रामादिकं खण्डिकादिषु शुकशब्दस्य भाष्ये वृत्तौ च पठितत्वेनाञन्तत्वादित्यवधेयम्। भिक्षादिभ्योऽण्। भैक्षमिति। अचित्तत्वाट्ठ
क् प्राप्तः। गार्भिणमिति। अनुदात्तादेरञ् प्राप्तः। सति तस्मिन् आद्युदात्तत्वं णिलोपश्च स्यात्। युवतीनामिति। वृत्तिकारास्तु भिक्षादिगणे युवतिशब्दं पठित्वा तत्सामर्थ्या
त्पुंवदित्याहुः। न चानुदात्तादेरञं बाधितुं पाठः भस्याढे तद्धिते इति पुंवद्भावः सिद्धश्च प्रत्ययविधाविति प्रागेव प्रत्ययनिवृत्तौ सत्याङ् निस्तु वृषीतिकनिन्नन्ततया आ
द्युदात्तत्वात्तस्यां च स्त्रीसंघे यौवतमिति रूपं तन्मते स्थितम्। किन्तु नैतद्युक्तं भाष्यवार्त्तिकयोरिह युवतिशब्दपाठस्य प्रत्याख्यानात्। तथा चेह औत्सर्गिकोऽण् न तु भिक्षादि
त्वप्रयुक्त इत्यवधेयम्। शत्रन्तादिति। एवं च गार्भिणं यौवतं गणे इत्यमरोक्तिः। अदः समित्तं मुखवीरयौवतं तुदङ्गुजाकम्बुमृणालहारिणी इति श्रीहर्षोक्तिश्च भा
ष्यमतेऽपि नासङ्गतेति भावः। ब्राह्मणमाणव। ननु त्रयोऽप्यमी वृद्धास्तेभ्यः प्रकृतो यञेवास्तु। न हि वृद्धात् यञि यनि वा रूपे विशेषोऽस्ति। न चास्वरे उभयथाप्याद्यु
दात्तत्वात् अञ् तु नानुवर्त्तिष्यते स्वरितत्वात् सत्यम् ॥

त्तदाह। तथा चेहेति। अस्वरितत्वादिति। योगविभागसामर्थ्यादित्यपि बोध्यम्। वुञस्तु न संबन्धो व्याख्यानात्। समूहप्रत्ययान्तानां नपुंसकत्वाद्यञश्चेत्यत्रापत्यग्रहणाच्च न स्त्रियां वि
शेष इति बोध्यम् ॥

मत्वर्थलक्षणयेति। छान्दसस्येति शेषः। छान्दसस्तत्रमतोर्लुगित्यर्थः। फिट्सूत्रादिति। शकुनीनाञ्चलघुपूर्वमित्याद्युदात्तत्वन्तु नास्यात्पूर्वलघुत्वात्तमिति तदर्थादिति भावः। मधू

अन्यतो विधानार्थं यन्वचनं तत्सिद्धार्थकथनपरं वार्तिकमाह। छत्रादिति। छत्रशब्दः स्तोत्रविशेषस्य सञ्ज्ञा। छत्र्य इति। छत्राणां समूहः। कथन्तर्हि छत्र्यः षडहइति। मत्वर्थलक्षणयेत्यवेहि। ग्रामजनबन्धुभ्यः। इति कृतात्तु वार्तिकान्तर्गतः सहायशब्दोपि सूत्रे प्रक्षिप्तः। अनुदात्तादेरञ्। इह सूत्रे चित्तवन्त उदाहरणम्। अचित्तात्तु आपूपिकं शाष्कुलिकमित्यादौ परत्वाट्ठगेवेत्याशयेनाह। कापोतमिति। कापोतमयूरशब्दौ मध्योदात्तौ लघावन्ते इति फिट्सूत्रात्। खण्डिकादिभ्यश्च। आद्युदात्तार्थं वचनम्। अचित्ताट्ठकोबाधनार्थञ्च। चरणेभ्योधर्मवत्। यस्याः प्रकृतेर्यः प्रत्ययो धर्मे वक्ष्यते सततः समूहेपि स्यादित्यर्थः। वुञादयोहि चरणेभ्योवक्ष्यन्ते चरणाद्धर्माम्नाययोरिति तु तत्र वार्तिकन्तदप्यनेनातिदेशसूत्रेण ज्ञापितमिति बोद्ध्यम्। काठकमिति। गोत्रचरणाद्वुञ्। छान्दोग्यमिति। छन्दोगौक्थिकेतिञ्यः। विषयोदेशे। तस्येत्यनुवर्तत इत्याह। पक्षन्तादिति। भैरिकिविधमिति। क्षीवर्तलोक्रान्। सोस्यादिरिति। अस्मिन्यज्ञानिबन्धनं पङ्क्त्यादिच्छन्दः तद्वाचकात्प्रथमान्तात् अस्येत्यादिसतिप्रत्ययः स्यात्। यआदिमां नसप्रगाथश्चेत्। प्रग्रन्थ्यत इति प्रगाथः। अकर्तरिचकारक इति कर्मणिघञ्। पृषोदरादित्वाद्रेफनकारयोर्लोपः। रूढ्याप्रम्। चतुर्थषष्ठौ पादौ वार्हते प्रगाथे पुनरभ्यसिलो चरयोरवसेत् इत्येवमादि वचनाद्यत्र द्वयोर्ऋचोस्तिस्रः क्रियन्ते स प्रगाथः। त्रैष्टुभमिति। कुटीकुटीर इत्यादिवत् स्वार्थिके कृते लिङ्गान्यत्वम्। सङ्ग्रामे। प्रयोजनवाचिभ्यो योद्धृवाचिभ्यश्च प्रथमान्तेभ्यः स्येति षष्ठ्यन्तार्थे सङ्ग्रामेभिधेयेणः स्यात्। तदस्याम् प्रहरणकिम्। मालाभूषणमस्याम्। क्रीडायां ङ्मः। खड्गः प्रहरणमस्यां सेनायाम्। घञः सास्याम्। स्याः स्त्रीम्। श्येनपतनमस्यां वर्तते। क्रियाकिम्। प्राकारोऽस्यां वर्तते। तदस्यामिति प्रकृते पुनः सास्यामित्युक्तिः क्रीडायामित्यस्यानुवृत्तिर्माभूदिति। अतएवाह। दण्डपातोस्यान्तिथाविति॥ 

रोर्ह्यादीनां चेत्यनेनापि मध्योदात्तः। सनत इति। वरणवाचक्रादिति शेषः। सप्रगाथ इति। सूत्रे इति शब्दः प्रकारे तेनादिसदृशान्त परिग्रहस्तेन पङ्क्तितः पाङ्क्तः काकुभ इत्यादि प्रातिशाख्यंन्यायाख्यातमिति केचित्॥ 

प्रत्ययं लभन्त इति। अध्ययनवेदनयोः सहाधिकारादुत्तरप्रत्ययानां नियमेनानर्थकत्वमिति तदर्थसिद्धिरित्युच्यते तदासष्टार्थमेव। अत एव तदस्मिन्नस्तीति देशादिनि सूत्रे प्रमादकृत

तदधीते तद्वेद। द्वितीयान्ताद्ध्येतरि वेदितरि च प्रत्ययः स्यात्। द्विस्तद्ग्रहणमधीयाने विदुषि च पृथग्विधानार्थमन्यथा उत्तरत्र क्रतुवसन्तादीनाम शब्दात्मकतया अध्ययनासंभवेन वेदितर्येव प्रत्ययः स्यात्। सिद्धान्ते तु द्विस्तद्ग्रहणसामर्थ्यात् क्रतुवसन्तादयः शब्दोस्तत्प्रतिपादकग्रन्थे गौणा अपि प्रत्ययं लभन्ते। क्रतूक्थादि। क्रतुविशेषेति। क्रतुशब्दस्तु न गृह्यते तथा हि सति उक्थादिष्वेव पठ्येत। नापि क्रतुपर्यायाः। उक्थादिषु यज्ञशब्दस्यापाठादिति भावः। आग्निष्टोमिक इति। संस्थाविशेषवचनस्यापि अग्निष्टोमशब्दस्य तत्संस्थाके क्रतौ निरूढः प्रयोगः। वासवदत्तामिति। गद्यरूपो ग्रन्थविशेषः। आख्यायिकेति। अधिकृत्य कृते ग्रन्थ इति सूत्रे हरदत्तः। सर्वादेरिति। सादेरित्यत्र अर्थवतस्स शब्दस्य ग्रहणात्सर्वादेः पृथगुपादानम्। एतदपि अर्थवत्परिभाषायां ज्ञापकम्। सवार्त्तिक इति। वार्त्तिकान्तमधीत इत्यर्थः। अन्तवचने अव्ययीभावे अव्ययीभावे चाकाल इति सहस्य सः। ततो ठणो लुक्। इकन्निति। पदशब्द उत्तरपदं यस्य तस्मादिकन् स्यात्। शतशब्दात् षष्टिशब्दाच्च परो यः पथिन् शब्दः तदन्तात्मिकन् स्यात्। षोड्डीषर्थः। शतपथिक इति। अत्र वृत्तिकारो बहुलग्रहणं कृत्वा शातपथ इति अणमप्युदाजहार॥ इकन्बहुलं यथोत्तरपदादिस्तुक्थाद्यन्तर्गणसूत्रमिति न्यासकारः। वसन्तादिभ्यष्ठक्। उक्थादिषु वसन्तादयः पाठ्यास्ते वा वसन्तादिषु। तथा तु न कृतमित्येव। आथर्वणमिति। अथर्वणा प्रोक्तोऽथर्वा। उपचारात्। यद्वा। तेन प्रोक्तमिति प्रकृत्य ऋषिभ्यो लुग्वक्तव्यः। वसिष्ठः विश्वामित्रोऽनुवाकः इत्युदाहृत्य अथर्वणो वा। अथर्वा ॥

५७ माचार्यस्य तदधीत इति सूत्रे द्विस्तद्ग्रहणं शक्यमकर्तुमित्युक्तं भाष्ये। उक्थादिष्वेवेति। प्रथमोपस्थितत्वादिति भावः। अणो लुगिति। अस्याव्ययीभावत्वेप्यद्धोत्रणि उपसर्जनत्वान्नाव्ययत्वम् ॥

भाष्योक्तेरिति॥ रेवतिकादिभ्यश्छ इतीतिसूत्रे इति शेषः। अस्मादेव भाष्यप्रयोगात्तद्विषयतावैकल्पिकीत्याहुः। अत्र पक्षे प्रोक्ताल्लुकूतुन विधानसामर्थ्यादर्थप्रतीतेरणाद्युपपत्तेः आर्षे प्रत्ययान्तादिति। ऋषिपदघटितसूत्रविहितप्रत्ययान्तादित्यर्थः। एतच्च मूलानुसारेण। औत्सर्गिकस्यैवेति। यत्र ह्यौत्सर्गिकस्येञो बाधः प्राप्तस्तत्रैव तद्बाधापवादस्याण्यणः प्राप्तेरिति भावः।

अथर्वण इति शैषिकप्रकरणान्ते भाष्योक्तेः साधुः। ण्यक्षत्रियार्ष। ण्यप्रत्ययान्तात् क्षत्रियगोत्रप्रत्ययान्तादार्षप्रत्ययान्तात् ञितश्च परयोर्युवाभिधायिनोरणिञोर्लुक्स्यात्। कुर्वादिभ्यो ण्यः। कौरव्यः पिता। कौरव्यः पुत्रः। ऋष्यन्धकेत्यण्। श्वाफल्कः पिता। ततइञ्। लुक्। श्वाफल्कः पुत्रः। वसिष्ठादृष्यण्। वासिष्ठः पिता पुत्रश्च। तिकादिभ्यः फिञ्। तैकायनिः। ततोऽण्। लुक्। तैकायनिः पुत्रः। ऋष्यण एवेति। पाणिनशब्दे तु औत्सर्गिक एवाण् इति भावः। यद्वा। पाणिनशब्दो यौगिको न तु ऋष्यर्थे रूढः। लुग्विधौ तु रूढस्यैव ग्रहणम्। एतच्च शास्त्रान्ते भगवतः पाणिनेः सिद्धमिति वार्तिकनिर्देशाद्दाक्षीपुत्रस्य पाणिनेरिति भाष्याच्च निर्णीतमित्यवधेयम्। अष्टकमिति। संख्यायाः सञ्ज्ञासङ्घसूत्राध्ययनेषु इति संख्यायाः अतिशदन्तायाः कन्। छन्दोब्राह्मणानि। छन्दोग्रहणादेव सिद्धे ब्राह्मणग्रहणं तद्विशेषप्रतिपत्त्यर्थं तेन पुराणप्रोक्तानामेव तद्विषयता। नेह। याज्ञवल्क्येन प्रोक्तानि ब्राह्मणानि याज्ञवल्कानि। कण्वादिभ्यो गोत्र इत्यण्। आपत्यस्य चेति यलोपः। याज्ञवल्क्यादयो नूतना इति सूत्रकारस्य प्रतीतावृत्तिकृतां व्यवहारः। छन्दोब्राह्मणानीति किम्। पाणिनीयं व्याकरणम् ॥

यद्वेति। पणिनशब्द इति पाठः। एवं चार्षेस्यत्र प्रतिपदोक्तपरिभाषा प्रवृत्तावपि न क्षतिः। अत एव वान्यस्मिन्निति सूत्रे शिशब्दादित्यनिञ इति ढकि तत इञि ण्यक्षत्रियेति लुक्यप्राप्तेः संगच्छत इति भावः। मूलं तु प्राचामनुसारेणेति बोध्यम्। अत्र पक्षे आर्षे स्वार्थेऽण् ऋषिवाचिनो गोत्रप्रत्ययान्तादित्यर्थ इति बोध्यम्। इति कृतामिति। याज्ञवल्क्यादिभ्यः प्रतिषेधस्तुल्यकालत्वादिति वार्तिकविरोधोऽत्रारुचिः छन्दस्त्वं मन्त्रेष्वेवेति च ॥

मतुप इति। तदर्थस्येत्यर्थः। लोकनिरूढे इति। सकललोकप्रसिद्धे देशनाम्नीत्यर्थः। अन्तर्भावितेति। निर्वर्तितेत्यर्थः। लुक् स्यादिति। एतद्धरदत्तानुसारेण। अर्थविशेषासंप्रत्यये। नन्विमि
...दर्थ पञ्चकपाल्यां संस्कृत इत्यपि विगृह्य पञ्चकपाल इत्येव यथा स्यादिति भाष्यवार्त्तिकाभ्यामव्यविकन्यायेन पञ्चकपाल्यां संस्कृत इति वाक्यमेवेति वक्ष्यमाणत्वात् भाष्येण चवि
...रुमेतत्। चतुरश्च यवो यश्च चतुर्थः। तत्र भव इति तु न्याय्यम्। पुनर्द्वन्द्वेति। एतदपि हरदत्तानुसारेण। द्वन्द्वद्वयेनैव निर्वाहात्। नह्यत्रेति लुबन्तं चेद्देशनाम तदा लुबिति सूत्रार्थ इति भा

अथ चातुरर्थिकाः। तदस्मिन्। मतुपोऽयमपवादः। सकललोकनिरूढे यथा स्यात्। नत्वाधुनिकसङ्केतितेऽपीत्येतदर्थ इति शब्दः। देशे तन्नाम्नीति उत्तरसूत्रत्रयेऽप्यन्वे
ति। तेन निर्वृत्तम्। अन्तर्भावितण्यर्थाद्वृतेः कर्मणि क्तः। चातुरर्थिकत्वमिति। चतुर्णामर्थानां समाहारश्चतुरर्थी। तत्र भवाश्चातुरर्थिकाः। अध्यात्मादित्वाट्ठञ्। तद्धिता
र्थे द्विगौ तु ठञो लुक् स्यात्। वुञ्छण्। सूत्रे कुमुदशब्दस्य द्विः पाठेऽपि एकशेषो न भवति। प्रथमतः कुमुदान्तानां चतुर्णां द्वन्द्वं विधाय द्वितीयेन काशादिकुमुदान्तद्व
न्द्वेन सह पुनर्द्वन्द्वविधानात्। आदिशब्दः प्रत्येकमभिसंबध्यते। तदाह। अरीहणादिभ्य इति। जनपदे लुप्। तन्नाम्नीत्येव। नेह। उदुम्बराः सन्त्यस्मिन्नौदुम्बरो जनपदः।
नह्यत्र लुबन्तं नामधेयम्। वक्ष्यमाणेनेति। अवर्णोपधात्सरत्वादिति भावः। नच टिलोपस्य स्थानिवत्त्वम्। पूर्वत्रासिद्धे तन्निषेधात्। नन्वेकदेशविकृतन्यायेन पदत्वा
द्रुत्वं स्यादिति चेन्न। बहिरङ्गत्वेन टिलोपस्यासिद्धत्वात्। नच षाष्ठी बहिरङ्गपरिभाषा रुत्वं न पश्येदिति वाच्यम्। कार्यकालपक्षाश्रयणात्। नन्वेवमौत्तीत्यादौ रुत्वं घटीआ
मलकीत्यादौ जश्त्वं च स्यात्। यस्येति लोपे कृते वशिष्टस्य स्वादिष्विति पदत्वात्। नच भत्वं यस्येति लोपस्य स्थानिवद्भावात् ॥

वः। रुत्वं स्यादिति। वेतस्वानित्यत्रेति शेषः।
बहिरङ्गत्वेनेति। बहिर्भूतप्रत्ययनिमित्तत्वादिति भावः। जश्त्वं चेति। चेन वेतस्वानित्यत्र रुत्वम्। यस्येति लोप इति। वेतस्वानित्यत्र टिलोपेऽन्तरङ्गे सुप्तिङन्तमिति पदत्वे कृतेऽ
स्यापि प्राप्तिरित्यपि बोध्यम्। नहि स्वादिष्विति पदत्वं तेभ्योऽन्तरङ्गं येनोक्तन्यायेन समाधिः स्यादिति भावः। यस्येतीति। टिलोपस्याप्युपलक्षणम् ॥

कार्यकालतयेति। कार्यकालपक्षे एकवाक्यतयेत्यर्थः। निषेधादिति॥ साक्षात्परम्परया वा पूर्वत्रासिद्धीयप्रापकप्रतिबन्धकस्यानिवत्त्वस्य तेन निषेधादित्यर्थः। दिगिति। दिगर्थस्तु
ल्यन्यायेन भत्वेचपित न्निषेधः। एवं चोत्तीत्यादावपि न दोषः। एवं चैकदेशविकृतन्यायेन सुबन्तत्वनिमित्तकपदत्वमपि वेन स्थानित्वमत्र न परत्वेन तस्यापि भत्वेन बाधादित्ति। एतेन यथो
द्देशपक्षेऽपि साक्षात्परंपरयेत्याद्युक्तरीत्या पदत्वस्थानिवत्त्वनिषेधः स्यादेवेत्यपास्तम्। वस्तुतइदं सर्ववार्त्तिकानुरोधेन, कार्यकालपक्षेऽपि त्रिपाद्यां भाष्यमते बहिरङ्गपरिभाषाया
अप्रवृत्तेः। परपदस्याजादेशस्यैव स्थानिवत्त्वे निषेधाच्च। पूर्वत्रासिद्धीयेति निषेधोऽप्यत्र नेति नपदान्तसूत्रे उपपादितम्। मतुप एवेति। न च ह्रस्वनुड्भ्यां मतुबित्यत्रैतद्ग्रहणार्थक्य

न च पदत्वेऽप्येवं तस्य रुविधानासहकार्यकालतया पूर्वत्रासिद्धे चेतिनिषेधादिति चेन्न। पदसंज्ञायां यथोद्देशाश्रयणात्। अत एव राम औ इत्यवस्थायां पदत्वे वस्त्र
सादेरिव स्थानिवद्भावेन रामौ इत्यादेः पदत्वम्। अन्यथा उभयत आश्रयेऽन्तवद्भावप्रतिषेधात् पदत्वं दुर्लभं स्यादिति दिक्। महिषाच्चेति। एतच्च सूत्रेणैव सूचित
म्। तथाहि। प्रकृतस्य मतुप एव हि डित्वमतिदिश्यताम्। प्रक्रियालाघवाय ड्मतुबेव वा क्रियताम्। एवं च ड्मतुब्वचनम न्यतो विधानार्थम्। शिखायावलच्। दन्त
शिखात्संज्ञायामिति पञ्चमे वक्ष्यते। तदंदेशोऽपि शिखावल इति रूपस्य सिद्धये। इदं तु निर्देशार्थम्। देशे तन्नाम्न्यणोऽबाधनार्थं च। कुञ्चेत्यादि। नडाद्यन्तर्गणसूत्र
द्वयम्। सोऽन्त्र षष्ठ्यालुक्। एवं तक्षन्नित्यत्रापि। इति चातुरर्थिकाः॥ ञुबन्धकोच्चारणम्। परत्वाट्टिलोपे ह्रस्वात्परत्वाभावात्। नगोम्यन्निति निषेधेन फलाभावाच्च। सावर्णान्त
त्वात्। न च वेतस्वानित्यादावुदात्तनिवृत्तिस्वरस्य न गोम्यन्निति निषेधाभावापत्तत्। तत्र हि मनुब्ग्रहणमनुवर्त्तत इति चार्थेति सूत्रे भाष्ये स्पष्टमिति वाच्यम्॥ कुमारीत्यादावन्तोदात्तत्वाना
पत्तेः। वेतस्वानित्यत्रोदात्तनिवृत्तिस्वरस्य न निषेध इत्यर्थस्य तत्सूत्रभाष्ये एव स्पष्टत्वादिति भावः। ननु रकाजाड्डार इत्यस्य साधयितुमशक्यत्वेन तेनान्यतो विधानस्य ज्ञापयितुं शक्यत्वेऽपि प्रकृते तदशक्यम्।
महुपाषिमहेषानित्यस्य साधयितुं शक्यत्वादित्यरुचेराह। प्रक्रियेति। अन्यतइति। एवं रीत्या एतज्ज्ञापकसिद्ध्यर्थमेव प्रकृतस्य मतुपो डित्वं न कृतमिति तत्त्वम्॥ इति चातुरर्थिकाः॥

अत्र प्रवृत्तेरिति। तेषामपीदमर्थत्वात्प्राप्तिः। नेतः प्रागिति। नेतः प्रागर्थेष्वित्यर्थः। तेषामर्थानामिदंशब्देनाग्रहणं ज्ञाप्यत इति तत्त्वम्। नन्वायादिकादिभ्यश्चतुरर्थ्यामेवेति नियमार्थन्त

शेषे। लक्षणं चेति। स्यादेतत्। लक्षणन्तावद्व्यर्थम्। वा सुषादीनां तस्येदमिति सूत्रेण दार्षदादीनां तु संस्कृतं भक्षा इत्यनेन सिद्धत्वात्। तथा अधिकारोपि व्यर्थः। तं विनापि घादीनां बुद्ध्युलन्तानामपत्यादिचतुरर्थीपर्यन्तेष्वर्थेष्वप्रवृत्तेर्ज्ञापकबलेनैव सुसाधत्वात्। तथाहि। अदूरकाशालेत्यादयो वृद्धाः तेषां वृद्धाच्छ इत्येव सिद्धे उत्करादिषु पाठो ज्ञापयति नेतः प्राक् घादयः स्युरिति। गोत्रोक्षेति बुद्धिविधिरपीह लिङ्गम्॥ अन्यथा समूहस्यापीदमर्थान्तर्भूततया गोत्रे चरणाद्वुञित्येव सिद्धे किं तेन। किंच। अपत्यादार्थानामनुवृत्त्या तस्येदंविशेषत्वाभावाद्यदि तत्र घादय इष्येरन् तर्हि प्राग्दीव्यतोणित्यत्रैवण्यादिभिः सह पठ्येरन्। अथोच्येत नापत्यादिष्वावृत्तये शेषाधिकारः किंतु अर्थसाकल्यार्थः। अन्यथा सन्निहिते जातार्थ एव घादयः स्युः। भवादौ तु प्राग्दीव्यत इति विशिष्टावधिपरिच्छिन्नेष्वर्थेषु विधीयमाना अणादय एव स्युर्न तु घादयः। शेषशब्दात्तु सर्वेषु घादयः सिद्ध्यन्तीति। मैवम्। जाताधिकारानन्तरं प्रावृषष्ठबित्यादिभिः सह घादिषु वक्तव्येषु तेतः प्राक् पाठसामर्थ्यादेवार्थसाकल्यलाभात्तस्माद्व्यर्थमिदं सूत्रमिति चेत्। अत्रोच्यते। अधिकारस्तावदावश्यकः। शैषिकात्तरूपः शैषिको नेति वक्ष्यमाणस्यार्थस्य विवक्षालाभो यथा स्यात्। शैषिकत्वप्रयुक्तकार्यविशेषं ध्वनयितुं क्रियमाणः शेषाधिकारस्तु ज्ञापयति। शैषिकान्मतुबर्थीयादित्यादि। एष च श्लोकः सन्निधौ मतुब्विधौ च भाष्ये पठितः। इह तु सम्बन्धे उपन्यस्त इति तत्रैव व्याख्यास्यते। एवं स्थिते विधायकत्वमपि तस्यास्तु यथा मिति नातीव तत्र निर्भरः कार्यः। विगृहीतादपीत्यादि। वाचनिकमेवेदम्। सूत्रे संघात्तस्येव ग्रहणम्। अन्यथा वैषम्यात्संख्यातानुदेशो न स्यात्॥

७ घ्यादित्यत्र बेराह। गोत्रोक्षेतीति। लिङ्गं तु लोकादेव नपुंसकत्वं बोध्यम्। पठ्येरन्निति। संभावनायां लिङ्। तेनेदं सूचितं विकारे घादिनिवृत्त्यर्थं तथा पाठः। अन्यथाण्यादीनामपि निवृत्त्यापत्तिरिति। जाताधिकारानन्तरमिति। प्रावृषएण्यठपाविति सूत्रकरणलाघवानुरोधेनेत्यर्थः॥

सितमिति। अत्र च सर्थं तु न सकारो व्याख्यानात्। एभ्यो देशेति। सति संभवे इति शेषः तेनापठितेभ्योऽपि देशवाचिभ्यः सिध्यति गहादिराकृतिगणः। आपपितुमिति। तेनारातीयसि

तथा हि सति सितं ह्यर्थं स्यात्। काश्यादिभ्यष्ठञ्ञिठौ। इकार उच्चारणार्थ इति। अकार एवोभयत्राप्यनुबन्धः तस्य विपर्यासस्तु स्त्रीप्रत्ययविशेषार्थ इति भावः। आप दादीति। अन्तर्गणसूत्रमिदम्। धन्वयोपधाद्वुञ्। धन्वेति न स्वरूपग्रहणं वृद्धत्वासंभवात् इत्याशयेनाह। धन्वविशेषेति। ऐरावतं धन्वेति। यद्यपि समानौ मरु धन्वानावित्यमरेण पुंस्त्वमुक्तं तथापि नपुंसकोऽपि धन्वशब्दोऽस्ति आष्टकं नाम धन्वेति भाष्ये ह्रस्वपाठात्। गहादिभ्यश्च। एभ्यो देशवाचिभ्यश्छः स्यात्। पूर्वपक्षादि शब्देभ्यस्तु देशवाचित्वाभावेऽपि पाठसामर्थ्याच्छः। मुखपार्श्वेति। अलोऽन्त्यस्येति सकारस्य लोपः। यस्येति चेत्यकारस्य। अव्ययानां भमात्रे टिलोपस्यानित्यत्वाज्ज्ञाप पितुलोपवचनम्। मुखतीय इति। मुखतो जातादिः। आद्यादित्वात्तसिः ततश्छः। स्वकीयमिति। गहादेराकृतिगणत्वाच्छः। अदेशवाचित्वेऽपि पूर्वपक्षादिवत्। तथा वतु व्योमप्रख्यानादित्यत्र न हि स्वकीयस्यैव प्रत्याख्यानमिति न्यासः। केवलात् स्वशब्दात्तु अण्। सौवम्। एतच्च हारादीनां चेति सूत्रे आकारे उदाहृतम्। स्वीयमिति तु प्राक्क्रीताच्छः। चान्द्रास्तु स्वपरजनदेवराज्ञां कुक्केति सूत्रयन्ति। तत्र राज्ञो नलोपे यत्नः कर्तव्यः। पर्वताच्च। कथं तर्हि तत्र घोरं रणोऽजन्यं पार्वतीयैर्गणैरभूदि ति। उच्यते। पार्वतीयस्य राज्ञ इमे इत्यर्थे कान्तादण्। शैषिकाच्छैषिको नेति निषेधस्तु नास्ति॥ असरूपत्वात्। युष्मदस्मदोः। इह योगो विभज्यते। तेन यथासंख्यं न। तथाहि। युष्मदस्मदोरन्यतरस्याम्। आभ्यां छो वा स्यात् त्यदादीनि चेति वृद्धत्वान्नित्यं प्राप्ते विकल्पोऽयम्। ततः खञ्च। एवमुत्तरसूत्रेऽपि योगविभागो बोध्यः। तेना देशयोः खञणभ्यां यथासंख्यं न। तस्मिन् युष्माकास्माकौ। तस्मिन् खञीत्यर्थः। ततः अणि च। अतएव खञणोरिति नोक्तम् ॥

ञिः। इह योगो विभज्यत इति। स्पष्टं चेदमत्रैव भाष्ये ॥

म.श. यथासंख्येनेति। नचैकएवयत्नोनेनविधीयते येनतस्यससहायतापेक्ष्यते साचप्रकरणाच्छेनेतियथासंख्याप्राप्तिरेवेतिवाच्यम्। ससहायतायोतनेपितस्याः संबन्धान्तरसाकाङ्क्ष-
२०२ तया द्वयोरुपस्थित्यातत्प्राप्तेः द्वितीयोपस्थितिंविनाऽर्थापर्यवसानात्। नचप्रत्ययत्रयविधानान्नयथासंख्यं विकल्पार्थकानांपक्षेऽभावमात्रार्थत्वेपिअन्यभावार्थत्वाभावात्। प्रकृ-
तेचमहाविभाषयावाक्यस्यसिद्धत्वादन्यतरस्यांग्रहणबोधिततदभावेऽणेवेत्यस्यलक्ष्यसंस्कारवेलायांनिर्णयोपिविद्ध्यर्थप्रमितिकालेत्रयाणामनुपस्थित्यातदप्रवृत्तेः। यथा

तवकममकावेकवचने।अत्रापिखञिअणिचेतिवाक्यभेदेनसंबद्ध्यते अतोयथासंख्यंनेतिदिक्। असाम्प्रतिके। संप्रतीत्यव्ययंप्रज्ञादौपठ्यते।तच्चन्याय्येवर्त्त-
ते।तथाचप्रयुज्यते।अनाम्रश्चतूराज्ञोअतिरिक्तः षड्राज्ञः सवाएषसंप्रतियज्ञोपपन्नराज्ञइति।नन्यूनोनातिरिक्तः समइत्यर्थः। इदानीमित्यर्थेपि।एतर्हिसं-
प्रतीत्वनीमित्यमरात्। ततोण्। सांप्रतम्। ततोविनयादेराकृतिगणत्वात्स्वार्थेठगितिन्यासकारः। द्वीपादनुसमुद्रंयञ्। समुद्रंसमयानुसमुद्रम्। अनुर्यत्समयेत्य-
व्ययीभावः। सप्तम्यन्तंचेदम्। विद्यमानक्रियाद्वारकंद्वीपविशेषणमित्याह। समुद्रसमीपेयोद्वीपइति। कच्छाद्यणोमनुष्यवुञश्चापवादोयम्। अनुसमुद्रंकिम्।
द्वैपमन्यत्। द्वैपकोमनुष्यः। कच्छादिभ्यश्च। मनुष्यतत्स्थयोर्वुञ्इतिसूत्राभ्यांयथायथमणवुञ्चाकालाट्ठञ्॥ इहकालविशेषवाचिनामेवग्रहणंनतुस्वरूप-
स्यपर्यायाणांचेतिर्हृत्तिन्यासपदमञ्जर्यादिषुस्थितम्। तच्चातेकालिकीव्याप्तिः कालिकः संबन्धः इत्यादिप्रयोगाः विरुद्ध्यन्ति। किंचविशेषाएवगृह्यन्तइति
निर्मूलम्। श्रुतित्रयानुक्तत्वात्। यत्तुवदन्तिस्वरूपंपर्यायश्चनेहगृह्यते। ज्ञापकात्। तथाहि ॥

संख्यसत्त्वेचविद्ध्यर्थप्रमितिवेलायांनिर्दिश्यमानगतसंख्यासाम्यंगृह्यतइतिस्पष्टं अमङ्गनमित्यादौभाष्ये तएवसिन्धुपकराभ्यांकन्अञ्वेतिनासूत्रीतिभावः। समुद्रंसमये राम:
ति। अनोस्त्वर्दर्थकत्वदर्शनायसमयेत्युक्तम्। अनुनैवविग्रहः। सप्तम्यन्तमिति। समयेत्यस्याधिकरणशक्तिप्रधानत्वादितिभावः ॥ २०२

इतिभाष्यमिति। अत्रभाष्येसायंप्रातिक स्योदाहरणम्। कालसमुदायस्याकालत्वेपियथाकथंचित्कालवाचकत्वेनठञ्युट्युलौतुट्चेति प्रत्यस्य ग्रहणेनाव्ययत्व प्रयुक्तट्युट्युलोरनि
त्यत्वाट्ठ्ञ्प्रयोगादेववातद्प्रवृत्तिः। कुकविकृतिरिति। कुत्सितस्यकवेः कृतिरित्यर्थः। इहगौणेति। गौणशब्देनात्रलाक्षणिकमात्रमित्यभिमानः। वस्तुतस्तदप्राप्तिरेवेति तत्व

सन्धिवेलादिसूत्रेणसन्धिवेलात्रयोदशीप्रभृतिभ्यो ऽ वृद्धेभ्योप्य णविधीयते। तच्चठञोबाधनार्थंतदेवोक्तरार्थंज्ञापकमितितान्चिन्त्यम्। इदंहिविशेषग्रहणे
ज्ञापक नतुतन्मात्रग्रहणे। तथाचनस्तद्धितइतिसूत्रेसायंप्रातिकः पौनः पुनिकइतिभाष्यंव्याचक्षाणः कैयट आह। यथाकथंचित्कालशब्दाट्ठञिति। तथाच
नदीभिश्चेति सूत्रेनदीवाचकत्वांविशेषात्स्वरूपस्यापिग्रहणमुक्तम्। तथेहाप्युचितम्। तदेतदाह। कालत्वाविशेषादिति। एतेनाकालिके ऽ पीतिजैमिनिसूत्रे ऽ कालि
केनिहृत्स्वपाठपक्षेकालाट्ठञितिकालिकमितिभट्टवार्तिकमपिव्याख्यातम्। वृत्त्यादिमतेतुकालात्कालशब्दाट्ठञिति। कालायतुप्रकृष्टेठञितिपाञ्चमिकसू
त्रेणेत्येवंपरतयाकुकविकृतिरिवभट्टव्याख्येयंस्यात्। इहगौणमुख्यन्यायोनाश्रीयतेतेनकदम्बपुष्पस। हचर्यात्कदम्बपुष्पः कालः व्रीहिपलालसाहचर्याद्व्री
हिपलालः तत्रभवंकादम्बपुष्पिकंव्रैहिपलालिकमित्याकरः। अत्रप्रमाणंतुसन्धिवेलादिसूत्रेअनेनकालग्रहणेननक्षत्राणांविशेषणमित्याहुः। ननुपुष्यादि
शब्दानांकालोमुख्योर्थः। लुबविशेषइतिसूत्रादनादितिचेन्। मैवम्॥ पुष्यादिसमीपस्थेनचन्द्रमसायोगात्लक्षितलक्षणयाहिकालेवृत्तिः। सेवलुब्वृद्धाराभ
न्वाख्यायतेपौषादिनिवृत्त्यर्थंनत्वेतावताकालोमुख्योर्थः। अनन्यलभ्यस्यैवशब्दार्थत्वादितिदिक् ॥

लक्षितलक्षणयेति। पुष्यपदलक्षितचन्द्रमसाकालोलक्ष्यतइत्यर्थः। परम्परासंबन्धेनपुष्यपदस्यकालेलक्षणेत्यर्थोवा। मुख्योर्थइति। शक्योर्थः ॥

म॰ श॰ ठस्यादित्वाभावादिति। प्रत्ययसन्नियोगशिष्टतयाऽन्तरङ्गत्वात्तुडिअङ्गात्परस्येत्यर्थे तन्न ष्ठस्य परत्वाभावात् कर्मठ इत्यादौ अठच ष्ठस्यैवैकादेशो दुर्लभः। यदागमा इति न्यायेन विशिष्ट
२०३ स्यग्रहणेऽपि निर्दिश्यमानपरिभाषया समुदायस्य न स्यात्। निर्दिश्यमानस्तु अव्यवहित इति भावः। प्रत्ययाद्युदात्तत्वे कृते इति। सन्नियोगशिष्टतयेति भावः। अत्र ठच्श्चित्वेनेत्युपलक्षणं ठच्श्चित्त्वसामान्यापेक्षं ज्ञापकम्। प्रत्ययसंबन्ध्यादेशा अन्तरङ्गेभ्यो बलवन्त इतीति बोध्यम्। ठच्श्चित्वं तु न ज्ञापकं ठस्येक इत्यत्र सङ्घातग्रहणपक्षे ऽन्तोदात्तस्य ठस्यान्तरतम्याद्

एवं स्थिते कालत्वाविभ्य इति मूलस्य कालप्रतिपादकेभ्यः इत्यर्थो बोध्यः। आर्द्रे शरदः। आर्द्रमिति कर्मनामधेयम्। आर्द्रा वा न त्वरूपस्तु नेह गृह्यते। व्याख्यानात्। रूढिर्योगमपहरतीति न्यायाच्च। ष्ठसस्तुट्। ठज्वास्यादिति ऐषमोह्य इत्यादिना त्यबपि विकल्पितः पक्षे टुट्युलौ बोध्यौ। शौवस्तिकमिति। ननु इह इकादेशो दुर्लभः। तुटः प्रत्ययभक्ततया ठस्यादित्वाभावात् कर्मठ इत्यठचो यथा। न च परत्वादिकः आङ्गतया तस्य बहिरङ्गत्वात् त्यस्य सन्नियोगशिष्टतया तुटोऽन्तरङ्गत्वात् न च सूत्रभङ्गे नतु सुकरः। इसुसुक्तान्तात्क इति कादेशप्रसङ्गात्। मैवम्। वुञ्छण् इत्यादिसूत्रे बहूचो मनुष्यनाम्नष्ठज्वेति सूत्रे च ठच्श्चित्वेनेकादेशोऽन्तरङ्गेभ्यो बलवानिति ज्ञापितत्वात्। अन्यथा प्रत्ययाद्युदात्तत्वे कृते इकादेशः स्यादिति किं ठच श्चित्वेन। कृते त्विकादेशे प्रत्ययस्वरं बाधितुं चित्त्वं युज्यते। सन्धिवेला। तैषमिति। तिष्यात् भवादौ प्रत्ययः जातार्थे तु अविष्ठाफल्गुनीति लुक् स्यात्। सूर्यतिष्येत्यत्र तिष्यपुष्ययोर्नक्षत्राणीत्युक्ते यलोपः। प्रावृष एण्यः। ऋत्वणोऽपवादः ॥

न्तोदात्तादेशसंपादनेन चित्त्वसार्थक्यात् वर्णग्रहणपक्षे ठकारादिधकार उच्चारणार्थः नक्षत्र एव प्रत्ययादृत्यर्थस्याकरसंप्रतत्वेन प्रत्यये अर्थस्य चित्त्वादेशेऽन्तोदात्तसंपादनेन चित्त्वसार्थक्यात् ॥ —— भाष्ये तु ष्वसस्तुट् चेति चेनादेशसंनियोगः कर्तव्य इत्युक्तम्। यदि तु अङ्गत्वनिमित्तस्येति व्याख्यायते। यदागमा इति परिभाषया रा॰ म॰
विशिष्टस्यग्रहणेऽपि निर्दिश्यमानपरिभाषया ठस्यैवादेश इत्युच्यते तदास्त्विति दिक् ॥ २०३

अपकृष्यत इति। सर्वत्रग्रहणसामर्थ्यात्। अन्यथा छन्दसीत्यस्य निरस्यैव तत्फले सिद्धे तद्वैयर्थ्यं स्पष्टमेवेति भावः। तत्र हेमनो लोके वृत्तिविषय एवऋतुष्वाविलमिति हेमन्तशब्दे नैव विग्रह इति बोध्यम्। वैकल्पिकत्वादिति। एवं च रूपत्रयसिद्धा विदं न कार्यमिति भाष्य उक्तम्। तदुक्त्या हेमन्तशब्दे ऋत्वणो हेमन्ताच्चेति ठञा — बाधापत्तौ हैमन्तमित्यसिद्ध्या फलभेदे

प्रावृषेण्य इति। प्रावृषि भवः। जाते तु ठपं वक्ष्यति। एण्याभ्यामिति सिद्धे प्रक्रियालाघवार्थं णकारोच्चारणम्। किं च प्रावृषेण्यमाचक्षाणः प्रावृषेण। अत्र णकारश्रवणार्थमपि तत्। ण्यन्तात् क्विप्। णिलोपात् लोपयलोपाः। सर्वत्राण् च तलोपश्च। हैमनमिति। नस्तद्धित इति टिलोपस्तु न भवति। नलोपस्य समुदायलोपपक्षे अनिर्दिष्टप्रकृतिभावाद् अवयवलोपत्वपक्षे तु यस्येति लोपे तस्याभीयत्वेनासिद्धत्वात् स्थानिवद्भावाद्वा। हैमन्तमिति। ऋत्वणि तकारलोपो न। तस्य सर्वत्रेति प्रतिपदोक्तेनाणा सन्नियोगशिष्टत्वात्। इतिकारास्तु छन्दसि ठञ्। वसन्ताच्च। छन्दसीत्येव। ततः हेमन्ताच्च। इह सर्वत्रग्रहणमपकृष्यते तेन लोके वेदे च हैमन्तिकम्। ततः। अण् च तलोपश्च। एवञ्च भाषायामपि रूपत्रयमित्याहुः। एतच्च भाष्यविरुद्धम्। भाष्ये हीदं सूत्रं प्रत्याख्यातम्। तच्चेत्थम्। हेमन्तपर्यायो हेमन् शब्दोऽप्यस्ति। हेमन् हेमन्तागनी गन्तिकणौ तस्मादेतौ हेमन्त शुष्यतः इत्यत्र प्रयोगात्। तत्र भाषायां हेमन् हेमन्तशब्दाभ्यामृत्वणि हैमनं हैमन्तमिति रूपद्वयम्। छन्दसि तु ठञा तृतीयम्। नन्वत्र ठञा अणो बाधः छन्दसि सर्वविधीनां वैकल्पिकत्वादिति तस्माल्लोके रूपद्वयमेवेति तत्त्वम्। सायंचिरम् ॥

प्रत्याख्यानासंभव इति भावः। सर्वत्रग्रहणं तु सर्वत्र विभाषा गोरितिवदिति नार्थसाधकम्। न च हेमन्ताच्चेति चेन ऋत्वणोऽनुकर्षणात्तत्सिद्धिः। वसन्ताच्चेति चवदस्यापि छन्दसीत्यनुकर्षकताया एवौचित्यात् ॥

म.श.
२०४

अङ्ग-सञ्ज्ञानिमित्तइति त्यु शब्दस्य प्रत्ययतयातद्वयवोयोयुस्तस्यविधीयमानोऽङ्ग-रूपसंज्ञिनिमित्तकोऽनादेशोनस्यादित्यन्वयः।सञ्ज्ञायतेइतिसंज्ञा।कर्मण्यङ्।अङ्गरूपंसंज्ञि
त्यक्षरार्थः।अङ्गात्परस्ययोरित्यर्थेदोषः।यदागमाइतिन्यायेनागमविशिष्टस्ययोर्ग्रहणेपिनिर्दिश्यमानस्य—————अवहितत्वादिशिष्टस्यानिर्दिश्य

नन्वन्तरङ्गत्वात्प्रथमंतुटिमृत्युरित्यादाविवत्युशब्दस्यप्रत्ययतयाअङ्ग-संज्ञानिमित्तंयोयुस्तस्यविधीयमानोऽनादेशोनस्यात्।नचतुगेवकार्यः।तस्यपूर्वान्ततया प्रातस्तनमित्यत्रविसर्जनीयाभावप्रसङ्गात्।अतआह।तुटः प्रागिति।इत्यादीति।आदिशब्दार्थस्तुघकालतनेष्विति।सायंतनमिति।स्यतेर्घञिसायशब्दोदिव सावसानेरूढः।तस्यप्रत्ययसंनियोगेनमान्तत्वंनिपात्यतेअन्यत्रत्वकारान्तएव।सायाह्नः।आहच।संख्याविसायपूर्वस्येति।भारविश्च।सायमण्डनमभित्वरयन्त्य इति।एतच्चवार्त्तिकमतम्।आहहि।सायचिरयोर्मकारान्तत्वंप्रत्ययसन्नियुक्तमिति।भाष्येतुसायंशब्दस्यपाठइहसूत्रेप्रत्याख्यातः।स्वरादिषुपठितात्सायमि तिमान्तात्अव्ययत्वेनैवप्रत्ययेरूपसिद्धेः।नचैवंघञन्तात्कालाट्ठञिअनिष्टरूपापत्तिः।तस्यकालवाचित्वाभावादित्याहुः।यद्यपिकालबोधकत्वमात्रंला क्षणिकसाधारणंठञ्विधौगृहीतंतच्चउक्तभारविप्रयोगात्सायशब्देप्यस्तितथाप्यनभिधानाट्ठञ्नेतिबोध्यम्।ह्यस्तनमिति।प्राह्णः।सोढोस्यप्राह्णेतनइत्याद्यर्थम्।त त्रहिसप्तमीनास्ति।जातार्थेतुघकालतनेष्वित्यलुकासिद्धम्।चिरत्नमिति।चिरशब्दस्यसूत्रेउपादानाद्द्युद्युत्वावपिस्तः।अग्र्यादीनि।डिमचोडित्वंशक्यमकर्त्तु म्।तत्रजातः।ननुजानादिषणादयःसिद्धाएवचासुषंरूपमित्यादिसिद्धयेशेषइतिसूत्रस्यलक्षणत्वोक्तेः।अधिकारत्वाच्चघादयःतस्माज्जाताद्यर्थनिर्देशोव्यर्थः।नचजातादिष्वे वेतिनियमःसुवचः।चासुषमित्याद्यसिद्धेः।तत्रास्तेशेतेइत्यादौतुअनभिधानादेवनभविष्यति ॥

मानत्वाच्चाप्राप्तिरितिभावः। अङ्ग-सञ्ज्ञानिमित्तमि
तित्वपपाठः।नाहशेर्थेहिउक्तरीत्यादोषस्याभावात्।कालवाचित्वाभावादिति।अवसानवाचित्वादितिभावः।आहुरित्यत्रारुचिबीजंस्वयमेवाह।यद्यपीति।अनभिधानादिति।सायाह्नसायतनयोःसा

येइतिसप्तम्यन्तएवचतस्यप्रयोगोनान्यत्रेत्यर्थस्त्वभा
वेस्यष्टत्वादितिभावः।एवंचसायमण्डनेत्यादिचिन्त्यमेव॥

राम:
२०४

अण्वुञाविति। अचेत्यस्याप्युपलक्षणम्। ह्रस्वपाठोपि समर्थयितुमिति। नचटावन्तानुकरणेनाङ्गत्वाद्वृद्धेर्वृद्धिप्रकृतिभूतमनुकर्तुमशक्यमिति वाच्यम्। अमावस्यदिति सूत्रेपक्षे वृद्ध्यभाव

अङ्गत्वाख्यनतिप्रसमूलादागतः इत्यादौ यथा। समर्थविभक्तयस्तु आक्षेपादेव लप्स्यन्ते। चाक्षुषमित्यत्र तृतीयायथा। तस्मात्तत्र जात इत्यादि सूत्राणि व्यर्थानीति
चेत्। अत्राहुः। प्राग्दीव्यतीत्यादीनपवादांस्तत्र तत्र विशेषेवक्तुं जातादयोऽर्थास्तावदवश्यं वक्तव्याः। तेच योगविभागेन विभक्तिविशेषसमभिव्याहारेण चोक्ताः स्पष्टत्वा
र्थं यानि तु निरपवादान्यर्थादेशनानि कृतलब्धक्रीतकुशलादित्यादीनि तानि स्पष्टतार्थान्येवेति। पूर्वाह्णकइति। विभाषा पूर्वाह्णापराह्णाभ्यामित्यस्यापवादः। आर्द्रकः मूलक
इति। नक्षत्राणोपवादः। प्रदोषकइति। निशाप्रदोषाभ्यां चेत्यस्यापवादः। अवस्करइति। औत्सर्गिकस्याणः। केचित्तु कृत्तिकायां शरदीं वुञितिसूत्रस्थं संज्ञाग्रहणम् कृतल
ब्धेत्येतत्पर्यन्तमनुवर्तयन्तीतिः निकारः निषामतेसंज्ञायांयथायथ यणादयोघाद्यपवादाः। अमावास्याया वा। सन्धिवेलाद्यणोपवादः। अमावस्यदन्यतरस्या
मिति सूत्रेणामापूर्वाद्वसेर्ण्यति वृद्ध्यभावपक्षे ह्रस्वो निपात्यते। एकदेशविकृतस्यानन्यतया ह्रस्वपक्षेपि अण्वुञौ स्त एव। आमावस्यः। अमावस्यकः। केचित्तु सन्धिवे
लादिष्विह सूत्रेच ह्रस्वोपधमधीयन्ते। तेषां दीर्घपक्षे न स्यात् विकृतस्याप्रकृतेरग्रहणादिति न्यासकारहरदत्तादयः। वस्तुतस्तु अकृतवृद्धेर्वृद्धिप्रकृतिभूतस्ये
दंग्रहणमित्याश्रित्य ह्रस्वपाठोपि समर्थयितुं शक्यते। अच। अमावास्याशब्दादकारप्रत्ययः स्यात्। अयमपि प्राग्वदुभाभ्यां वाच्यः। तदिह अमावास्यायां जा
ते ह्रस्वदीर्घाभ्यां प्रत्ययत्रयेण षड्रूपाणि। श्रविष्ठाफल्गुनी। इह सूत्रे स्वातिशब्दो ह्रस्वान्त इति कैयटहरदत्तादयः। माधवस्तु स्वातीति ध्येति ङीषन्तं पठति। तथाहि।
अव्ययात्त्यविति सूत्रे शैषिकाणां विप्रतिषेधनिरूपणप्रस्तावे सौवातद्विति भाष्यमुपादाय कैयटेनोक्तम् ॥

ष्यनिपात्यत इत्याशयात्। सौवातद्वीति। स्वातेरुभयं प्राप्नोति सुपरत्वमहिदुक्तं भाष्ये। माधवस्त्विति। अत्राहुः विबीजं तु वृद्धिविरोधः ॥

हरदत्तइति। अत्राहुः पित्रीजत्तु नपुंसकह्रस्वविशिष्टस्यलिङ्गप्रत्ययविशिष्टस्यासंभवेन परिभाषाप्रवृत्तेर्दुरुपपादत्वम्। तस्मात्सूत्रे समाहारद्वन्द्वगर्भो द्वन्द्वः। तेन स्त्रीलिङ्गयोर्ग्रहणम्। नपुंसकह्रस्वत्वेप्येकदेशविकृतन्यायेन लुगिति तत्त्वम्। क्रीतत्वप्रकारकेति। शेषद्रूत्वनेनास्यापि सिद्धेः पूर्वस्य ष्टत्वार्थमित्युक्तं स्मर्तव्ये तदर्थलाभः र्थमिति तदर्थः। जातत्वमा

भवार्थेण्जातेतु भविष्ठेत्यादिनालुक् स्यादिति सन्धिवेलादिसूत्रे हरदत्तेनाप्येवमुक्तम्। नवकृदिकादिति ङीषन्तात्स्वातीशब्दाज्जातार्थे अणः श्रवणमस्त्विति वाच्यम्। लिङ्गविशिष्टपरिभाषया लुको दुर्वारत्वादिति भावः। माघवत्तु जातार्थेपि अङीषन्तस्य सौवातइतिरूपमाह। लिङ्गविशिष्टग्रहणे केवलस्याग्रहणात्। एतच्चातसातत्य गमनद्रत्यनधातुवृत्तौ स्पष्टम्। श्रविष्ठास्विति। श्रविष्ठा धनिष्ठा। इत्यादीति। आदिशब्दात् अनुराधः। स्वातिः। तिष्यः पुनर्वसुः हस्तः विशाखः अषाढः बहुलः कृत्तिकापर्याय स्य बहुलाशब्दस्य समाहारद्वन्द्वे नपुंसकह्रस्वत्वेन सूत्रे निर्देशः। उपसंख्यानमिति। प्रकरणाल्लुक इति बोध्यम्। स्थानान्तेति। गोशालशब्दस्य विभाषा सेनेति नपुंसकत्वे कृत्सूत्रे निर्देश इति स्पष्टम्। तत्राह च यत्तु वरणलेष्वेवमेव न चैवं स्त्रीत्वपक्षे लुङ्नेति तिभ्रमितव्यम्। लिङ्गविशिष्टपरिभाषया तत्रापि लुक्सिद्धेः। यद्यपि टावन्तयोः पाठे पिप्रस्तिः। एकदेशविकृतन्यायेन क्लीवेपि लुक्सिद्धेः तथापि लाघवार्थं ह्रस्वपाठ इति हरदत्तः। वत्सशालइति। वत्सशालायामित्यपि बोध्यम्। इत्यादीति। आदिशब्दात् अभिजित् आभिजितः। अश्वयुक्। आश्वयुजः। कृतल्लुक्। यद्यपि कृतक्रीतत्वे जातत्व भवयोर्व्याप्येतथापि पृथगुपादानं कृतक्रीतत्वप्रकारकेपि बोधे उद्दे श्यविशेषिकाः साधवइति बोधयितुम्। अतएवजातेलुग्भाजामपि कृते लुङ्नेति बोध्यम्। प्रायभवः। नचतत्रभवइत्यनेन गतार्थता। प्रायभवत्यभवस्यच विशिष्टाविशिष्टत्वाभ्यांभेदात्। उपजान्वादयः सामीप्येऽव्ययीभावाः तेषां समाहारद्वन्द्वे सौत्रं पुंस्त्वम् ॥

भ्यां मन्येथासिद्धिस्त्विहपरिहृतेति न विरोधः। तदेवाह। अतएवेति। विशिष्टेति। कादाचित्काभावप्रतियोगित्वविशिष्टं भवनं प्रायभवशब्दार्थः। शुद्धन्तु भवशब्दार्थइतिभावः ॥

ठञ इति। कालाट्ठञ् इत्यर्थः। समानार्थ इति। प्राधान्ये तु न विचारः। कर्तृत्वतयोरुभयत्रापि बोधादिति भावः। भिन्नार्था इति। धनवाचीत्यर्थः। आस्तेयमिति। विद्यमाने धने च भवमित्य

संभूते। इहतन्त्रावस्थादिनाः वक्तृशिरोधेयस्य धारापरिमाणानतिरेकश्चेत्यर्थद्वयमपि गृह्यते। स्रौघ्न इति। स्रुघ्ने संभाव्यते तत्परिमाणान्नातिरिच्यते वा यः सेनादिः एव मुच्यते। कोशाड्ढञ्। कौशेयमिति। रूढोयम्। कोशे संभवस्तु सत्कार्यवादाश्रयणात्। मतान्तरे तु विकारप्रकरणे एण्या ढञित्यस्यानन्तरं कोशाच्चेति पाठ्यम्। तथा च वार्त्तिकम्। विकारे कोशाड्ढञ् संभूते ह्यर्थानुपपत्तिरिति। उप्ते च। योगविभाग उत्तरार्थः। आश्वयुज्या वुञ्। उप्तेऽर्थे। ढञोपवादः। अकारः स्वरार्थः। वत्सरग्रहणार्थश्च। देयमृणे। ऋणे किम्। मासे देया भिक्षा। तत्र भवः। कालादिति निवृत्तम्। कालसंबद्धस्य तत्रेत्यस्य निवृत्तये पुनस्तत्रग्रहणात्। न च पूर्वसूत्रस्थस्य तदित्यस्य व्यावृत्तये तत्रग्रहणमिति वाच्यम्। तदस्येतिसूत्रस्थेन उत्तरत्रापि सुपठत्वात्। दिगादिभ्यो यत्। दिश्। वर्ग। पूग। पक्ष। धान्य। मित्र। मेधा। अन्तर। पथिन्। रहस्। अलीक। उखा। साक्षिन्। आदि। अन्त। मुख। जघन। मेघ। यूथ। उदकात् संज्ञायाम्। न्याय। वंश। अनुवंश। वेश। काल। आकाश। दिगादिः। मुखजघनशब्दयोरिह पाठः अशरीरावयवार्थः। सेनायां मुखे जघने च भवं मुख्यं जघन्यम्। दृतिकुक्षि। दृतिश्चर्मविकारः शरीरावयवविशेषश्च तत्र भवं दार्त्तेयम्। कुक्षिशब्दो धूमादिः ततो धूमादिभ्यश्चेति वुञि प्राप्तेऽनेन ढञ्। कलशिर्घट इति। तथा च दण्डाहतं कालशेयमरिष्टमपि गोरसे इत्यमरस्य व्याख्यायामन्यपात्रं कलशिरित्युक्तम्। कलशिमुदधिगुर्वीं पल्लवा लोडयन्ति इति माघः। वस्तिर्नाभेरधो द्वयोरित्यमरः तत्र भवं वास्तेयम्। अस्तीति तिङन्तप्रतिरूपको निपातः। स च तिङन्तेन समानार्थो भिन्नार्थश्च। आद्यो यथा। अस्तिक्षीरा गौः। द्वितीयो यथा। अस्तिमान्। धनवानित्यर्थः। तदिहाविशेषात् द्वयोरपि ग्रहणम्। आस्तेयमिति न्यासकारहरदत्तौ। त्रिषाहेयं विषास्यादीत्यमरः। ग्रीवाभ्योऽण्। ग्रीवाशब्दो धमनीसङ्घाते वर्तते ॥

र्थ इति तदाशयः ॥

उद्भूतावयवभेदत्वविवक्षायामत्रैव हुवचनम्। तिरोहितावयवभेदविवक्षायां त्वेकवचनान्ता इति अणठञोस्तु एव। गम्भीराञ्ज्यः। पञ्चजनादुपसंख्यानम्। पाञ्चजन्यः। प
रिमुखादिभ्यश्चेति। दिगादिगणानन्तरं परिमुखादिगणः पठ्यते तस्मात्सामर्थ्यादिह सूत्रेऽव्ययीभावपदं तन्मात्रपरमिति निर्णीयते। नहि परिमुखादीनां कार्यान्त
रं विहितमस्ति। येन गणपाठश्चरितार्थः स्यात्। परिमुखादिभ्य इत्येव तु न सूत्रितम्। बहुव्रीहितत्पुरुषयोरपि प्रसङ्गात्। अव्ययीभावग्रहणस्योत्तरत्रोपयोगाच्चेति भा
वः। परिमुखादिगणे प्रतिशाखशब्दोऽपि बोध्यः तथा च शाख व्याप्ताविति धातौ प्रतिशाखं भवं प्रातिशाख्यम्। अव्ययीभावाच्चेति भावार्थस्य इति माधवः। कर्णललाटात्। अलंका
रे किम्। कर्ण्यम्। ललाट्यम्। तस्य व्याख्यान इति शब्दो वाक्यार्थं परामृशति। तत्समीपे श्रूयमाणश्चकारस्तत्र भव इति वाक्यार्थमाक्षिपति। व्याख्यातव्यस्य ग्रन्थस्य नाम प्रतिपादकं न च श
क्त्या लक्षणया वेत्यत्र न्याग्रहः। तस्मात्सुप्यन्ताद्व्याख्यानकरणे सप्तम्यन्तात्तु भवार्थे प्रत्ययाः स्युः। यद्यपि तस्येदं तत्र भव इति सूत्राभ्यां गतार्थता। तथापि ठञादीनपवादान्वक्तुमिदा
वचौ निर्दिष्टश्चावेव। प्रसङ्गानुअणादिकं विधीयत इति ज्ञेयम्। व्याख्यातव्यनाम्नः किम्। पाटलिपुत्रस्य व्याख्यानी सुकोसला पाटलिपुत्रं हि तया व्याख्यायते। ईदृक्संनिवेशविशिष्ट
मिति न त्विदं व्याख्यातव्यस्य नाम ग्रन्थेष्वेव व्याख्येयत्वस्य सुप्रसिद्धत्वात्। नामग्रहणस्य च प्रसिद्ध्युपसंग्रहार्थत्वात्। बह्वचोऽन्तोदात्ताट्ठञ्। अणोऽपवादः। बह्वचः किम्। द्व्यचष्ठकं वक्ष्यति। ए
काच्प्रत्युदाहार्यः। सौपम्। तैङम्। अन्तोदात्तात्किम्। संहितायाः सांहितम्। गतिस्वरेणाद्युदात्तोऽयम्। पौरोडाश। पिष्टान्ङीप्। पौरोडाशिकी। पुरोडाशिकी। दाशृ दाने। कर्मणि घञ्। द
ह्वैव निपातनाद्दस्य डत्वम्। छन्दसो यदणौ। द्व्यच्लक्षणस्य ठकोऽपवादः। छन्दस्यः छान्दसः। इह भवार्थयोः प्रत्ययाभ्यां यथासंख्यं न। अस्वरितत्वात्। चातुर्होतक इति। चतुर्होतेतिसिष्टयिधौ
होतारोऽध्वर्युरित्यादिग्रन्थस्य नामधेयम्। आर्चिक इति। आदिशब्दात्प्राथमिकः आध्वरिकः पौरश्चरणिकः। नामाख्यातग्रहणं सङ्घातविगृहीतार्थमिति वार्त्तिकम्। तत्र विगृहीतग्र
हणमाख्यातार्थम्। नामशब्दात्तु द्व्यच्त्वादेव सिद्धम्। नामिकः। आख्यातिकः। नामाख्यातिकः। अण्ऋगयनादिभ्यः। ठञादेरिति आदिशब्दाट्ठक्ठञोः। आर्गयन इति। अयनशब्दो भाव
साधनः। तेन समासे अनो भावकर्मवचन इत्यन्तोदात्तः। अभेदोपचाराद्ग्रन्थे वृत्तिः ॥

ठञ्प्राप्त इति। बहुचोऽन्तोदात्तादित्यनेन। अतदनुबन्धकस्याग्रहणादिति। यद्यपि येनानुबन्धेन सानुबन्धकत्वं यदनुबन्धकत्वं वा तदनुच्चारणे एव तत्प्रवृत्तेरत्र न तत्प्रवृत्तिः। तदनुबन्धके तिशब्द मर्यादया तथैव लाभात्। स उच्चारित एवानुबन्धो यस्येति तदर्थात्। अत एव कञ्विधायके सूत्रे नित्त्वेन स्वरसिद्धौ ञित्त्वं टिड्ढेति सूत्रे विशेषणार्थमन्यथा यादिके त्वत्रापि प्रसज्येतेत्यपि गर्भं

इह ठञ्प्राप्तः। औपनिषद इत्यत्राप्येवम्। विद्यान्यायशिक्षाशब्देभ्यो बह्वच्त्वाट्ठक्प्राप्तः। व्याकरणशब्दात्तु वृद्धाच्छः। ठगाय। आयः स्वामिग्राह्यो भागः स यस्मिन्नुत्पद्यते तदाय स्थानम्। बहुवचननिर्देशः स्वरूपग्रहणनिरासार्थः। वृद्धाच्छं परत्वादयं बाधते। आपणिकः। आकरिकः। विद्यायोनितः संबन्धो येषां तेभ्यो वुञ् स्यात्। अणोऽपवादः। छं तु परत्वाद्बाधते। आचार्यकः। मातामहकः। मातुलकः। ऋतष्ठञ्। विद्यायोनिसंबन्धेभ्य इत्येव। तदाह। वुञोऽपवाद इति। उक्तञिति वक्तव्ये न पृथक्करणं ठञ्ग्रहणं वचिन्त्य प्रयोजनमिति प्राञ्चः। अत्रेयं चिन्ता। पैतृकी विद्येत्यत्र ङीबर्थं ठञ्। न च टिड्ढेति सूत्रे कञ्ग्रहणेन सिद्धमिति वाच्यम्। यादृशीत्यादावसिद्धेः तदनुबन्धकग्रहणेऽतद नुबन्धकस्याग्रहणात्। गोत्रादङ्कवत्। अपत्यप्रत्ययान्तादङ्कवत्प्रत्ययाः स्युः। अङ्के दृष्टस्य सर्वस्यायमतिदेशो न तु साक्षाद्विहितस्यैवेत्याग्रहः। तेन गोत्रचरणाद्वुञिति वुञपि लभ्यते। सहितस्येदमिति सामान्येन विधीयमानोऽप्यञ् ञिञन्तादन्यत्राङ्केऽपि दृष्टः। वैदमित्यादि। सङ्घाङ्केत्युक्तेरञ्यञिञन्तादिहाप्यण्। औपगवकमिति। गोत्रचरणादिति वुञ्। हेतुमनुष्येभ्यः। मनुष्यग्रहणमहेत्वर्थम्। समरूप्यमिति। विभाषा गुणेत्यत्र विभाषेति योगविभागादगुणवचनादपि पञ्चमी। मनुष्येभ्य इति बहुवचनं स्वरूप विधिनिरासार्थम्। मयट् च। योगविभागो यथासंख्यनिरासार्थः। टो ङीबर्थः। हैमवती गङ्गेति। हिमवतः प्रकाशते तत्र प्रथमं दृश्यत इति यावत्। विदूराञ्ञ्यः। अणोऽपवा दः। वैदूर्य इति। दन्त्यमद्ध्योऽयम्। शाद्वलवत्। न तु नड्वलवन्मूर्द्धन्यमद्ध्यः। नन्वर्थासंगतिः। वालवायाद्धि असौ प्रभवति विदूरे तु संस्क्रियते। सत्यम्। अत एव समाहि तं भाष्ये वालवायो विदूरं चेति। वालवायशब्दः प्रत्ययं लभते विदूरादेशं च। सूत्रे पठितेनादेशेनानुरूपः स्थानी आक्षिप्यते। पद्मन्नित्यादाविवेति भावः ॥

भाष्यं संगच्छते। सूत्रे च तन्त्रेण ककारमकारोभयानुबन्धोपलक्षितस्य च ग्रहणमिति तदाशयस्तथाप्येतत्क्लेशपरिहारार्थमेव ठञ्कृत इति चिन्ताबीजमित्याशयः ॥ ॥

पूर्ववत्करणस्येति। निष्क्रामत्युकणीयनिष्क्रमणकर्तृत्वारोपात्करणस्य द्वारस्य कर्तृत्वं बोध्यम्। तत्र भवइत्येवेति। स्थित्यर्थकभुवोपि तत्र ग्रहणादिति भावः। ब्रह्मविवर्तत्वादि

तद्गच्छति पथिदूतयोः। द्वितीयान्ताद्गन्तरि प्रत्ययः स्यात्स चेत्पन्था दूतो वेत्यर्थः। तत्र साध्यसिद्धिं न तिका निपचन्तीत्यादाविव करणस्य स्वातन्त्र्यविवक्षया पन्थाः कर्ता। सौघ्नकान्यकुब्जद्वारमिति। सौघ्नाभिमुखनिष्क्रमणे करणीभूतमिति फलितोर्थः। पूर्ववत्करणस्य कर्तृत्वे प्रत्ययः। तदस्येवेति। अधिकृत्येत्येतदपेक्षया द्वितीयेयम्। शारीरकीयइति। चतुर्लक्षणीसूत्रसंदर्भः। वृद्धाच्छः। शिशुक्रन्द। अत्र वार्तिकम्। द्वन्द्वे देवासुरादिभ्यः प्रतिषेधः। दैवासुरम्। राक्षोसुरम्। सोऽस्य निवासः। नन्वस्येति कृद्योगे कर्तरि षष्ठी। तथा च विशेषणविशेष्यभावस्त्वासात् एतत्कर्तृकवासाधिकरणं सुघ्न इति विग्रहार्थः। सुघ्नाधिकरणकवासकर्तेह त्वर्थः। तथा च तत्र भवइत्येव सिद्धम्। सत्यम्। वासस्य चेतनमात्रकर्तृकत्वेन प्रसिद्धत्वात् प्रकारकृतो भेदः। वसन्ति हि प्रेम्णि गुणा न वस्तुनीत्यादौ तूपचारो बोध्यः। अभिजनश्च। अभिजायते एभ्य इति व्युत्पत्त्या अभिजनाः पित्रादयः। पूर्वसूत्रादिह निवासइत्यनुवर्तनं तत्सामानाधिकरण्यादभिजनशब्दस्य तत्त्वं बन्धिनि लक्षणा। एवं स्थिते फलितमाह। यत्र पूर्वैरिति। वासुदेवार्जुनाभ्यां वुन्। छाणोरपवादः। अल्पाच्तरमजाद्यदन्तमिति सूत्राभ्यामर्जुनस्य पूर्वनिपाते प्राप्ते तमकुर्वन् ज्ञापयति सर्वतोभ्यर्हितं पूर्वमिति। स्यादेतत्। वसुदेवस्यापत्यं वासुदेवः। ऋष्यन्धकेत्यण्। तत्र गोत्रक्षत्रियाख्येभ्यो बहुलं वुञ्। इत्युत्तरसूत्रेण वुञेवास्तु किमनेन वुना। न ह्यत्र वृद्धौ विशेषः। प्रागेव वृद्धत्वात्। न च वृद्धिनिमित्तस्येति पुंवद्भावनिषेधो दोषः। वुन्यपि न कोपधायाइति निषेधस्येष्यमाणत्वात्। न चाभ्यर्हितं पूर्वमित्येतज्ज्ञापनमेव फलम्। तथा चेह पूर्वनिपातप्रकरण एवाभ्यर्हितग्रहणमात्रं लाघवात्कुर्यादिति। अत्र भाष्यं संज्ञैषा तत्र भवत इति। अयं भावः। सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः। ततोसौ वासुदेवेति विद्वद्भिः परिगीयत इति स्मृतेः। परमात्मेह वासुदेवः सर्वत्रासौ वसत्यन्तर्यामित्वात् सर्वमत्र वसति वा सर्वस्य ब्रह्मविवर्तत्वात् इति वासुः ॥ ति। ब्रह्मोपादानकारणत्वादित्यर्थः ॥

नराश्चणेति। नञ्। अयनं स्थानं यस्येत्यर्थः। अन्तर्यामितया तेषु स्वयं स्थितेः। अस्मादेव स्वार्थिके णिनारायणः। नरसमूहार्थक नारशब्देनायं साधुरित्यन्ये प्रकाशितमिति। प्रथमप्रकाशितमित्यर्थः। अयमेव च प्रकर्षः तत्त्वं कृतमन्यत्कृतं वा। अतस्तेन कृतमित्यनेन गतार्थता। पञ्चेति। जित् णित् कित् तित् निरनुबन्धकभेदेन पञ्चेत्यर्थः। यद्वाणण्याञ्ञनञ् स्नञस्सूत्रोक्ताः पञ्चमहोत्सर्गा

बाह्लकादुण्। कोकः पुराणपुरुषो नलिनेशयश्च वासुर्नरायणः पुनर्वसु विश्वरूपाः इति त्रिकाण्डशेषः। वासुश्चासौ देवश्चेति विग्रहः। तथा च नेयं गोत्राख्या। नापि स्त्रियाख्या अतो युक्त एव वुन् विधिः। तेन प्रोक्तम्। प्रकर्षेणोक्तं प्रोक्तम् अध्यापनेनार्थव्याख्यानेन वा प्रकाशितमित्यर्थः। प्रकर्षेणेति वचनान्नेह। देवदत्तेनाध्यापितम्। तित्तिरिवरतन्तु। अणोपवादः। कठचरकाल्लुक्। कठशब्दाद्वैशंपायनान्तेवासित्वाण्णिनिः चरकादण्तयोर्लुक्। कलापिनोऽण्। वैशंपायनान्तेवासित्वात्प्राप्तस्य णिनेरपवादः। इनण्यनपत्य इति प्रकृतिभावे प्राप्ते आह। नान्तस्येति। छगलिनो ढिनुक्। कलाप्यन्तेवासित्वात्प्राप्तस्य णिनेरपवादः। पाराशर्य। मण्डूकप्लुत्याणिनिरिह संबध्यते तद्विषयतेहेष्यते। तदर्थं शौनकादिभ्यश्छन्दसीति सूत्रात् छन्दोग्रहणमप्यनुवर्त्यं सूत्रयोश्छन्दस्त्वं तु गौण्या वृत्त्या बोध्यम्। भिक्षुसूत्रमिति। चतुर्लक्षणीरूपम्। भिक्षुनटसूत्रयोः किम्। पाराशरम्। शैलालम्। कर्मन्द कृशाश्वादिभ्यः इहापि छन्दोनुवृत्त्यादि प्राग्वत्। भिक्षुनटसूत्रयोः किम्। कार्मन्दम्। काशाश्वम्। तेनैकदिक्। छन्दसीति निवृत्तम्। पुनस्तेनेत्युक्तेः। नसिक्या। पूर्वं कैश्चिदप्ये। उपज्ञाते। उपदेशं विना ज्ञातमुपज्ञातम्। कृते ग्रन्थे। तेनेत्यनुवर्तते। तस्येदम्। अणादयः पञ्चमहोत्सर्गाः। घादयश्च षष्ठ्यन्तात् संबन्धिनि स्युः। अनन्तरादिष्वनभिधानान्नाहेरिति। तुरितित्तन्त्वी सामान्यग्रहणम्। ढत्वादीनामसिद्धत्वादलौकिके प्रक्रियावाक्ये पूर्वमिट्। ततो निमित्ताभावान्न ढत्वादि। इड एव मिदमुपसंख्यानम्। अणतुसि इत्यान्त्वाते। आग्नीध्र इति। णित्संबन्ध्यस्य: ।।

ॐ इत्यर्थः। अनन्तरादिष्विति। संबन्धिष्विति शेषः। णिदयमिति। ननु जित्। अन्यथेतः स्वार्थे ञिधानं व्यर्थं स्यादिति भावः। भाष्ये तु जित् पठ्यते स्त्रियाम्। ङीन्धर्थः स्वार्थिकाञ्ञ्चारितार्थ्यं दर्शकं शक्यमिति भावः ..

म॰ श॰ अग्निमिन्धे इति। इन्धयतीत्यर्थः। इति लुगिति। यथात्र लुक् तथा द्विगोरिति सूत्रे निरूपितम्। बीजान्तरमाह। अत एवेति। एतत्सामर्थ्यादेव हलादेरपि मतो लुग्भवतीति भावः। वोढर्यपीति। तस्य तस्य सा
२०८ मान्यविशेषसर्वप्रकृतिसङ्ग्राहकत्वादिदमित्यस्य सामान्यरूपेण विशेषरूपेण च रथं विशेषबोधकत्वम्। वहति वोढेति च समानार्थमिति भावः। स्पष्टं चेदं तस्यापत्यं तद्वहतीति सूत्रभाष्ययोः। स्त्रियामिति।
यत्तु पिवाग्नीध्रात्वे स्यादौ आद्युदात्तं प्रयुज्यते। तत्स्वार्थे अपक्षे बोध्यम्। तथा च वार्तिकम्। आग्नीध्रसाधारणादञ् इति। अग्निमिन्धे इति क्विप्। अग्नीत्। तत्र स्थित्विशेषः। तमग्निरतापन्तः इत्यत्र
तुक्रान्तसंहृस्वत्वं बोध्यम्। सामिधेनीति। मितात् ङीप्। हलस्तद्धितस्येति यलोपः। यया अग्निः समिध्यते सा समित्। संपदादित्वात्करणे क्विप्। ततः कर्मणि षष्ठ्यन्तात् धानकरणे तद्धितोपमम्। रथाद्यत्। अणो
पवादः। रथाद्रथाङ्गे इति वार्तिकमभिप्रेत्याह। रथ्यं चक्रमिति। अत्रेदमवधेयम्। द्वयो रथयोरङ्गमिति विग्रहे द्विरथम्। रथसीताहलेभ्यो यद्विधाविति तदन्तविधेरुपसंख्यानात् यत्। द्विगोर्लुगनपत्य इति लु
क्। यत्तु द्वौ रथौ वहतीति द्विरथ्यः न द्वहतीति यत्। तस्य प्राग्दीव्यतीयत्वाभावान्न लुक्। अत एव तद्वहतीति सूत्रे रथग्रहणं सार्थकम्। अन्यथा रथाद्यदित्येव रथाङ्गवद्वोढर्यपि यत्सिद्धेः। तेनेति। ननु द्विगोर्लुग
नपत्य इत्यत्राचीत्यस्यापकर्षपक्षे कथमत्र यतो लुगिति चेत् सत्यम्। तद्वहतीत्यत्र रथग्रहणमेव ज्ञापकमेतस्य यतो हलादेरपि लुग्भवतीति। अन्यथा तत्र रथग्रहणं व्यर्थमेव स्यात्। द्वन्द्वाद्वुन्। अणोऽपवादः। छस्तु
परत्वाद्बाधते। काकोलूकिकेति। काकोलूकस्य वैरमित्यर्थः। वुन्नन्तं स्त्रियाम्। वैरमैथुनिकादिवुन इति स्त्र्यधिकारे अमरः। कुत्सेत्यादि। कुत्सकुशिकयोर्मैथुनिका। विवाहरूपः सम्बन्ध इत्यर्थः। मिथुनं हि द
म्पती। तस्य कर्म क्रिया निष्पादनम्। मनोज्ञादित्वाद्वुञ्। तं द्वन्तं चेदं स्त्रियां स्वभावात्। सङ्घाङ्क। पूर्वस्य वुञोऽपवादः। घोषेति। अत एव पर्यायसंख्यमपि न वैषम्यात्। प्रकृतपत्तितस्वः प्रत्ययार्थविशेषणा
नि तु चत्वारि। परं परेति। यथा गवादिनिष्ठः स्वामिना गोष्ठ्यसंबन्धः। साक्षादिति। यथा विद्यानां विद्या। यद्यपि अङ्कलक्षणयोः पर्यायत्वं प्रसिद्धम्। कलङ्काङ्कौ लाञ्छनं च चिह्नं लक्ष्म च लक्षणमिति कोश
सिद्धं च तथापि पृथग्ग्रहणसामर्थ्यादिह विशेषपरतेति भावः। णित्वं ङीबर्थं पुंवद्भावनिषेधार्थं च। वैदीविद्या यस्य वैदीविद्यः। विदा नाम साधारणी या विद्या तद्दानित्यर्थः। छन्दोगौक्थिक। सङ्घादयो नि
वृत्ताः। एभ्योऽयः स्यात्। तस्येदमर्थे। चरणशब्देभ्यो वुञोऽपवादः न त्वणः औत्सर्गिकस्याणः। धर्माम्नाययोरित्युक्तेर्नेह। छान्दोगं कुलमित्यादि। समाप्ताः शैषिकाः ॥ ७५ स्वभावादिति भावः। क्रियेति। विवाहरूपेत्यर्थः। राम:
वुञ् इति। गोत्रग्रहणानुवृत्त्या गोत्रप्रत्ययानामौपगवादीनां ग्रहणमित्यर्थः। ङीबर्थमिति। गोत्रे लुगचीत्यलुकाद्धि सिद्धेरिति भावः। नटादिति। पाक्षिकाच्छस्येति बोध्यम्। नेहेति। नेदं वुञ्विधिमात्रविषयं सङ्घादेनामाभा २०८

तस्य ग्रहणस्य। तस्येदमित्यत्रस्य मयड्वैतयोर्नित्यमिति। मयड्वैतयोरित्यधिकारे नित्यं वृद्धेतीत्यर्थः। एतेन मयड्वैतयोरित्युपन्यासोऽसङ्गतः तस्य प्रासिकत्वेनाणोपीष्टत्वादित्यपास्तम्। अप्राणीति। अनुवर्णान्तमित्यपि बोध्यम्। आद्युदात्तमिति। अनुदात्तादिभिन्नमित्यर्थः। इदम्। प्राणीत्यादि। बहुश्रुतैः कार्य इति। ञितश्च तत्प्रत्ययादिति सूत्रभाष्यप्रामाण्यादिदं वेति लभ्यते। तत्र हि विकारविकारेपि

तस्य विकारः। प्रादिसंबन्धस्य तस्य ग्रहणस्य निवृत्तये तु नस्तस्येत्युनः म्। अणादयस्तु न निवर्तन्ते प्राग्दीव्यतः प्राग्भवनादिति विशिष्टावपि परिच्छेदेनाधिकृतत्वात्। षष्ठ्यन्ताद्विकारेऽणादयः स्युः तत्र प्राणिरजतादिभ्योऽञ्। ओरञ्। अनुदात्तादेश्च। मयड्वैतयोः। नित्यं वृद्धशरादिभ्यः। पिष्टाच्चेत्यादिभिरपवादा वक्ष्यन्ते। अतः अप्राणिआद्युदात्तमवृद्धं प्रतिपदमवक्ष्यमाणप्रत्ययं चेहोदाहरणमित्याशयेन तथैवोदाहरति। आश्मइत्यादि। अश्मन् भस्मन् शब्दौ मनिन्प्रत्ययान्तौ। मृदः स्तिकन्। त्वयोः पिनित्स्वरेणाद्युदात्ताः। प्राचीनस्य तस्येत्यस्य निवृत्तत्वात्तदधिकारोक्ताश्चगा द्योऽपि नेह। हालः सैरः। मायूर इति। प्राणिरजतादिभ्योऽञित्यञ्। अनुदात्तादेरञः सिद्धत्वादुदात्तार्थं वृद्धेषु मयडाधनार्थं चान्वयकमिदम् परत्वादनुदात्तादिष्वपि प्रवर्तते। मौर्वमिति। मूर्वाशब्दः तृणधान्यानां च द्व्यषामित्याद्युदात्तः। पिप्पलशब्दोप्येवम्। लघावन्ते द्वयोश्चेत्युक्तेः प्रयुज्यते च तथा। तयोरन्यः पिप्पलं स्वाद्विति मन्त्रः। त्रपुजतुनोः। अणस्यादिति। बिल्वादिभ्योऽणित्यतोऽनुवृत्तेः ओरञ् इत्यस्यापवादोऽयम्। षित्वान्ङीषिति। माधवस्तु टित्वान्ङीबित्याह। तस्मादिह शामीलीशब्दस्यादिरन्तो वाउदात्त इति क्वचिद्देले स्पष्टलञ्प्रत्ययस्य षित्वटित्वपाठयोः साध्वसाधुत्वविवेको बहुश्रुतैः कार्यः। आश्मनमिति। विनापि प्रत्ययं पूर्वोत्तरपदयोर्वा लोपो वाच्य इति वचनादश्मभेदशब्दे भेदशब्दस्य लोपेऽश्मन्निति नामावशिष्यते। तथा कल्माषाङ्घ्रिः राज्ञो भार्यायामदयन्त्यां वसिष्ठेनोत्पादितः क्षेत्रजः सुतोऽश्मको नाम तत्र संज्ञात्वद्योतकस्य कप्रत्ययस्याभावेऽश्मन्निति नाम भवति तस्यावयवे आश्मनम्। विकारेपि आश्मनमित्येव भवति। न वाश्मनो विकार इति टिलोपः स्यादिति वाच्यम्। प्रसिद्धतरत्वेन पाषाणवाचकस्यैव तत्र ग्रहीतुमुचितत्वात्। वस्तुतस्तु तस्येदमिति सामान्यविवक्षायां भविष्यति। पैष्टसुरेतिवत्॥

ॐ तद्विकारत्वमारोप्य नतत्र तास्यातम्। अन्यथा षित्वान्ङीषुत्तरत्र त्वास्याने। आरम्भे त्वजन्तत्वान्ङीबिति फलभेदे तदसङ्गतिः स्यादिति बोध्यम् ॥

म·रा· इदम्। भाषाग्रहणम्। द्व्यच एवेति। विकारावयवयोर्मयट् छन्दसि मयट् तर्हि द्व्यच एवेत्यर्थः। ततश्चान्यत्रार्थे एव छन्दसि बह्वचो मयडिति भावः। विपरीतेति। द्व्यच एवेति कारादेर्मयट् तर्हि छन्दस्येवेत्ये
२०९ वमित्यर्थः। तेन लोके घटमयमित्यादिव्यावृत्तिः स्यादिति भावः। समासनिर्देशादिति। अभक्ष्येत्यादौ समासनिर्देशात् एतयोरित्यत्र तदपवादेकशेषनिर्देशाद्वेत्यर्थः। एवं च तयोः पृथगुपस्थित्यवि

मौ द्रु इति। मुद्रुशब्दो घृतादित्वादन्तोदात्तः। कार्पासमिति। कृञः पास इति पासप्रत्यये सार्वधातुकार्धधातुकयोरिति गुणे रपरे कृते कार्पासी शब्दो जातिलक्षणङीषन्तः। ताभ्याम नुदात्तादेश्चेत्यञं बाधित्वा पित्वादिभ्योऽण्। भाषायां किम्। खादिरो यूप इति इति कारः। यद्यपि मयटोऽवैकल्पिकत्वात्तिद्धमिदं तथापि वेदे बह्वचः परस्य मयटोऽवान्तरत्वमेवेति तात्पर्यग्रहार्थमेवेदम्। ननु द्व्यचश्छन्दसीति सूत्रं द्व्यच एवेति नियमार्थं सत् उक्तार्थे तात्पर्यं ग्राहयिष्यतीति चेत् सत्यम्। विपरीतनियमशङ्कानिवृत्त्यर्थं भाषाग्रहणमिति तत्त्वम्। अधिकारादेव सिद्धे एतयोरिति वचनमित उत्तरेषां प्राणिरजतादिभ्योऽञित्येवमादीनामपि विषये पक्षे प्रवृत्त्यर्थम्। कपोतमयम्। लोहमयम्। इह विकारेणावयवेनैकैकेन सहाभक्ष्याच्छादनयोरिति संबध्यते। समासनिर्देशात्तौ यथासंख्यं न। स्यादेतत्। उत्तरमीमांसायामानन्दमयाधिकरणे भाष्यकारैरन्योऽन्तर आत्मा आनन्दमयः इति श्रुतौ आनन्दमय इति विकारे मयडित्युक्तम्। तत्कथं संगच्छताम्। भाषायामिति सूत्रयता पाणिनिना सह विरोधात्। किंच विकारशब्दान्नेति चेन्न प्राचुर्यादिति सूत्रयतो व्यासस्यापि आनन्दशब्दस्य बह्वृक्तया छन्दसि विकारे मयड् दुर्लभ इत्येवाशय उचितः। एवं स्थिते न मयडादिप्रायपाठोऽप्यकिंचित्करः उभयसंभवस्य तस्यानिर्णायकत्वात्। तथा च प्राचुर्ये मयटं वदतां प्राचां वृत्तिकृतामेव व्याख्यानं प्रबलं न तु भाष्यकारोक्तमिति चेत्। अत्रोच्यते। श्रीग्रामण्योश्छन्दसीति सूत्रे श्रियश्छन्दसीत्यंशस्तावत् भगवता भाष्यकारेण प्रत्याख्यातः ॥

यथत्वान्न यथासंख्यमिति भावः। एतयोरित्यनेन विकारावयवयोः क्रमेणोपस्थितिरित्यर्थे मानाभावाच्च। एतेनाद्यन्तावित्यादिवत् पृथगनुपस्थितावपि तत्स्यादित्यपास्तम्। भाषायामि राम:
तीति। भाषायां मयड् द्व्यचश्छन्दसीति सूत्रपर्यन्तमित्यर्थः। तस्य निर्णायकत्वादिति। विज्ञानमयान्नरसमयाभ्यां प्रायपाठाद्वेत्यपि बोध्यम् ॥ २०९

व्यवस्थितत्वादिति। एवञ्च वामीत्यनेनवैकल्पिकनदीत्वात्सम्प्राप्तस्यनित्यार्थत्वमितिनवाच्यमितिभावः। यद्यपिस्तुतग्रामणीनामितिप्रयोगेसमाहारद्वन्द्वपूर्वकैवशेषे गासिद्धिमाश्रि
त्यग्रामणीत्वं शोषिभाष्ये प्रत्याख्यातस्तथापिव्यवस्थितविभाषाश्रयणेनश्रीत्यंशस्यैवप्रत्याख्यानमित्याशयः। त्याज्येति। व्यवस्थितविभाषयैवसिद्धेः। इत्यादीति। अन्नमयेत्यादिशब्दार्थः

छन्दसिसकलविकल्पानांव्यवस्थितत्वात्। अतएवउर्क्तन्तिसंछन्दसिब्रह्मादिभ्यश्च। नित्यंछन्दसिइत्यादयोपिवैयाकरणैरित्यमेवप्रत्याख्याताः न्यायसाम्यात्। एवंस्थिते तात्पर्यग्रहस्यन्यायानुसन्धानेनैवसिद्धेस्तदर्थंपाणिनिसूत्रारम्भदर्शनाच्चेहभाषायामितित्याज्यंतथाद्व्यचश्छन्दसिनोत्वद्दर्ध्रविल्वादिरितिद्विसूत्र्यपित्याज्या। सतिहिभाषाग्रहणे शरमयंबर्हिरित्यादिसिद्ध्यर्थंद्व्यचइत्यारब्धम्मौञ्जशिक्यम्। वाध्रचर्मवैल्वोयूपः इत्यादौद्व्यचइतिप्राप्तंप्रतिषेद्धुंनोत्वदितिसूत्रमारब्धम्। उक्तरीत्यातुसर्वमिदंनिष्फलंभाष्य कारैरेवप्रत्याख्यातप्रायंचाएवैवंचवेदान्तसूत्रवृत्तिकृतांमपिगतिः तैरपिचानन्दमयादितरेषुविकारेमयटः स्वीकारात्। अन्नमयप्राणमयमनोमयेषुद्व्यच्त्वान्मयट्संभवेपि विज्ञानमयशब्देविकारेमयडर्थमुक्तप्रकारस्यैवानुसर्तव्यत्वात्। तथाचानन्दमयेपिविकारार्थत्वेवाचिताऐकरूप्यात्। यद्वाप्राचुर्येमयड्पिप्रकृत्यर्थविरोधिनोलेशतोनुवृत्तिला भात्प्रकृतेविकारार्थःपर्यवस्यतीत्याशयः। अथवानित्यंवृद्धेत्यत्रभाषाग्रहणंनानुवर्त्तते। अनुवृत्तावपिवाभाषायांनित्यंअन्यत्रतुक्वाचित्कइत्याश्रित्यमयट्सुसाधः। अतएवशरादि षुमृच्छब्दपाठोप्यर्थवान्। मोषुवरुणमृन्मयंगृहंराजन्नहंगममितिमन्त्रेदर्शनात्। नचभाषार्थएवमृच्छब्दपाठइतिवाच्यम्। आरम्भसामर्थ्यादेवसिद्धेनित्यग्रहणेयोगविभागेनान्य त्रापिक्वचिविकल्पार्थंन्तेनैकाचोनित्यमित्युक्तावाङ्मयंत्वङ्मयमित्यादेराकरेउदाहृतत्वात्। एवंवदतांमृच्छब्दपाठवैयर्थ्यस्यस्पष्टत्वात्। यद्वाहेतुमनुष्येभ्यइत्यनुवर्त्तमानेमयड्वेतिसू त्रेणआगतार्थेमयड्विकारइतित्वार्थिकार्थकथनमेवसर्वथापिशंकरभगवत्पादोक्तिरनवद्यैवेतिदिक्। गोश्चपुरीषे। पुरीषंनविकारोनाप्यवयवः॥

ॐ विज्ञानमयेस्त्वत्रसमयस्याप्युपलक्षणम्।

प्रकृत्यर्थविरोधिनइति। ब्राह्मणाअत्रप्रचुराइत्युक्तेनियमेनान्येषामल्पत्वप्रतीतेरितिभावः। पर्यवस्यतीति। तत्पर्यवसानंकथमितिचिन्त्यम्। स्पष्टत्वादिति। एकाचोनित्यमित्यनेनैवसिद्धेरितिभावः। आर्थिकार्थ

इदमर्थ इति। अयमाशयः। अर्थश्चेदमर्थस्तत्र पुरीषरूप इत्यर्थः। तस्य पुरीषमित्यर्थे प्रत्यय इति यावत्। लिङ्गम्। विकारावयवत्वाभावरूपम्। एतच्च कैयटहरदत्तादिग्रन्थेनोक्तम्। जितश्चेति सूत्रस्य भाष्ये तु गोभुक्ताहारविकारे गोविकारत्वमारोप्य प्रकरणाबाध एवोक्त इति दिक्। मयट्वाधितुमिति। योगविभागसिद्धत्वेन क्वाचित्कत्वादेकाचो नित्यमिति मयड् दुःशक्यवारण इत्यभिमानः। मयट् चेति। उभा तस्मात्तस्येदमर्थीयं प्रत्ययः प्रकरणाल्लिङ्गस्य बलीयस्त्वात्। गोश्च पुरीषे। यद्यपि सर्वत्र गोरजादिप्रसङ्गे यत् उक्तस्तथापि मयड्वैतयोरिति पक्षे प्राप्तं मयट्बाधितुं पुनरयं मयड्विधिः। द्वेष्म्ना ओरञः एकाचो नित्यमिति मयट स्यापवादोयम्। द्रुवयमिति। द्रोर्विकारभूतं प्रस्थादिपरिमाणमित्यर्थः। आमलकमिति। फलितस्य वृक्षस्य फलमवयवो विकारश्च। तेनान्यतरस्मिन्प्रत्ययः। कंसीयपरशव्ययोः। परशव्यस्यानुदात्तादित्वादञि सिद्धे लुगर्थं वचनम्। न च यस्येति लोपे कृते हलस्तद्धितस्येति यलोपेन सिद्धमिति वाच्यम्। ईतीत्यनुवृत्तेः॥ प्राग्दीव्यतीयाः समाप्ताः॥ आहौ प्रभूतादिभ्य इति। उपसंख्यानमित्यनुषज्यते। आहेति पदे एकदेशस्य प्रकृतिभागस्य उच्चारणार्थेन इकारेण आहौ विति निर्देशः। प्रभूतमाहेति। क्रियाविशेषणादृकारि प्रत्ययः। अभ्रेति। अभ्रिः स्त्रीकाष्ठकुद्दालः इत्यमरः। दीव्यतीत्यादौ कालपुरुषसंख्या अविवक्षिता। अदेवीत्। देविष्यति वा आक्षिकः। एवं देविष्यसि देविष्यामि वा। दीव्यन्ति दीव्यथ दीव्यामो वा आक्षिकाः। कारकं तु विवक्षितमेव। अत एव जयति जितमिति कर्तृकर्मणोः पृथगुपादानम्। संस्कृतम्। योगविभाग उत्तरार्थः। कुलत्थकोपधादण्। कुलत्थैः संस्कृतं कौलत्थम्। वाकुलकेति। सूत्रे चकारः संहिति कोनत्वनुबन्ध इति न ठञो वा तथा च आकर्षात्पर्पादेरित्यादि श्लोकवार्तिकप्रकरणान्ने वक्ष्यते। निकषोपल इति। सुवर्णपरीक्षार्थः। पाठान्तरमिति। एतच्च भाष्ये दीकष्वत्र वेत्यादि दण्डके माधवेनोपन्यस्तम्। किं तु आकर्षात्पर्पादेरिति वार्तिकस्याननुगुणं तत्र हि नीरेफ पाठे कथं सङ्गतिः स्यात्। येन पीठेनेति। पयग नौ हलश्चेति करणे घञा सपर्येति। एतच्च माधवीयोक्तमुज्ज्वलदत्तस्तु खप्यतिकाश्च्यवाप्यरूढतपेतत्वा इति सूत्रेन पर्शब्दस्थाने पर्पशब्दं पठित्वापि पर्पैः पः पर्पगृहं वा लतृणम्। तेन चरणपर्पिक इत्युदाजहार। इहान्तर्गण सूत्रं पादः पच्चेति। पादाभ्यां चरतीति पदिकः ॥ ७५ श्यामपि येन नाप्राप्तिसत्वादितिभावः। परशब्दस्येति। यदन्तत्वेन स्वरितान्तत्वादिति भावः। यत्तु पाक्षिकमपड्भावार्थमिति तन्न आन्यथैवोपपत्तौ शास्त्राबाधे मानाभावात्॥ इति प्राग्दीव्यतीयाः॥ प्रकृतिभागस्येति। तस्यन तदर्थेलक्षणेति भावः। स्थानिवत्त्वेन धातुत्वादिक्रानिर्देश इत्यन्ये ॥

सोऽस्यैव प्रपञ्च इति। केचित्तु स्तनतूलादूर्ण सूत्रमनार्षमित्याहुः। पक्षे शीर्षभाव इति। सोऽपि गणे पठ्यते। एकदेशविकृतन्यायेन तु न सिद्धिः। शीर्षभारस्य विकाराभावात्। न्यायसिद्धेति। छिन्नपुच्छ
श्वदन्तमूलकैकदेशविकृतन्यायेनेत्यर्थः। यद्वा सर्वे सर्वपदादेशा इति न्यायेन विशिष्टस्यादेश इति। स्थानिवद्भावन्यायसिद्धेत्यर्थः। स्वातन्त्र्येणेति निवृत्तेऽर्थे त्रिप्रत्ययान्तान्न पुनर्नित्यं भवत्येवेत्यर्थः। तदवि
वक्षायामिति। निर्वृत्तेऽर्थे त्रिप्रत्ययान्तान्मब् भवत्येवेत्यर्थः। प्रकरणादिति भावः। योगं विभज्येति। त्रेर्मप्। त्रिप्रत्ययान्तप्रकृतिकात्तृतीयान्तान्निर्वृत्तेऽर्थे मबित्यर्थः। ततो नित्यम्। नेदं मप्विधायकम्। नित्यविक

ल्पं तु वार्त्तिकं पद्भाव इके चरतावुपसंख्यानमिति सोऽस्यैव प्रपञ्चः। पर्यश्व अश्वत्थ जालन्याय म्याल पादः पत्। श्वागणिक इति। श्वादेरिञीदित्यत्र इकारादिग्रहणं कर्त्तव्यमिति व
चनात् इञ्चिह्नादिकार्येन। धानुष्क इति। वेतनादिगणे धनुर्दण्डेति पठ्यते तत्र सङ्घातविगृहीतार्थमिति सिद्धान्तः। आयुधाच्छ च। आयुधान्न नेत्यायुधम्। घञर्थे कविधानमिति कः। उ
त्सङ्गे न हरतीति। उपादत्ते नयति वेत्यर्थः। भस्त्रयेति। भस्त्रा चर्मविकारः येन लोहादि ध्मायते जलादिकं च नीयते। शीर्षभारशब्दोऽत्र पठ्यते। निपातनाच्छीर्षभावः सप्तमीसमासश्च तत्पु
रुषे कृति निबाऽलुक् पक्षे शीर्षभारः। एकदेशविकृतस्येति। वीवधाच्चेति वक्तव्यमिति वार्त्तिकं तु न्यायसिद्धार्थकथनपरमिति भावः। वृत्तिकृन्मुवीविधशब्दं सूत्रे प्रचिक्षेप॥ त्रेर्मश्च नित्यम्।
नित्यग्रहणं स्वातन्त्र्येण प्रयोगं वारयितुम्। अत एव लौकिके विग्रहवाक्ये क्तिनादीनां प्रयोगो न तु त्रेः। तदाह। कृत्या निर्वृत्तमिति। संख्यावाची त्रिशब्दस्तु नेह गृह्यते व्याख्यानात्। प्र
त्ययाप्रत्यययोः प्रत्ययस्य ग्रहणात्। निजान्त्रयाणामित्यादिलिङ्गाच्च। ननु नित्यग्रहणेन निर्वृत्तार्थविवक्षायां वाक्यस्य वारणेऽपि तदविवक्षायां स्वातन्त्र्यस्य दुर्वारत्वान्नेदं लिङ्गमिति चे
न्न। नित्यमिति योगं विभज्य तत्सामर्थ्यादर्थविशेषानादरेणैव स्वातन्त्र्यवारणात् ॥ ७७ त्रयोर्मवस्थानापतेः। नापि निर्वृत्ते मपो नित्यत्वबोधकम्। एकयोगेन सिद्धेः। किंतु निर्वृत्तार्थमनुवादेन
नित्यत्वविधायकम्। नित्यत्वं चायोगव्यवच्छेदः। शङ्खो नित्यं पाण्डुर इतिवत्। तत्र हि न कदाप्यपाण्डुर इति प्रतीयते। एवं च निर्वृत्ते योयं मप् स त्वन्नाद्भवत्येव न कदापि न भवतीत्यर्थः। तेन निर्वृत्तेऽपि वाक्यं
न। अन्यत्रापि त्रन्तस्य प्रयोगेन। तदाह। अर्थविशेषानादरेणैवेति। अत एव त्रन्तं मपो विषयमेव यथा स्यात् केवलस्य प्रयोगो माभूदिति भाष्यं सङ्गच्छते। तेन पक्तिः क्रियते कृत्रिमम हत्तुन्दरमिति च
न। एवं चायं सूत्रेऽपि वेत्यस्यासंबन्धः फलाभावादिति बोध्यम्। तृतीयान्तत्वान्नादिति वृत्तिस्तु अलौकिकविग्रहाभिप्रायेण ॥

भावप्रत्ययान्तादिति। निर्दिश्यत इति शेषः। भावप्रत्ययान्तादिति। तेनैवाधिकारेणेति भावः। वचनादिति। अपमित्यशब्दात्प्रत्ययो भवतीति वचनसामर्थ्यादित्यर्थः। ऊत्वेनेति। अन्वायिके त्वर्थः। अत

भावप्रत्ययान्तादिति। एवं च मपूनकर्त्तव्यः। तथाहि। भावप्रत्ययान्तादिमप्। ततः श्वेः। भावे त्यावदनुवर्त्तते। नियमार्थं चेदं तेन निर्दिश्यते तावत् वाक्यं निवर्त्तते। ततः नित्यं अनेनान्यत्रापि स्या तन्क्वंस्वपते। त्वचन्तमिति। उदीचांमाङ इति क्त्वाप्रत्यये अपेत्यनेन सह गतिसमासात् मयतेरिदन्यतरस्यामिति त्वम्। तथा च नाप्यात्त्वी यान्तात्प्रत्ययः किंतु च नात्प्रथमान्तादेवेति भावः। प्रतीपं वर्त्तत इति। प्रतिगता आपो यस्मिन्निति बहुव्रीहिः। ऋक्पूरित्यकारः समासान्तः। द्व्यन्तरुपसर्गेभ्योऽप ईदिति ईत्वम्। व्युत्पत्तिमात्रं चेदम्। प्रतिकूलानुकूलपर्य्याया हीमे। ए वमपलोमकूलशब्दा अविग्रसितार्थाः। ऊरुनोर्द्दिशेहत्सूत्रंतुमअदेशालात्। परिमुखमिति। अपपरीवर्जन इति परेः कर्मप्रवचनीयता पञ्चम्यपाङ् परिभिरिति पञ्चमी। अ पपरिबहिरञ्चवः पञ्चम्येत्यव्ययीभावः ततष्ठक्। स्वामिनो मुखं वर्जयित्वा यः सेवको वर्त्तते स पारिमुखिकः। यदा तु सर्वतोभावे परिशब्दः प्रादिसमासश्च। तदा यतो यतः स्वा मिमुखं ततो यो वर्त्तते सोऽर्थः। एवं पारिपार्श्विकोऽपि। द्विगुणार्थमिति। वृद्ध्युद्देश्यकदानकर्मतया तस्य गर्हितत्वम्। वार्द्धुषिक इति। वृद्ध्यर्थं वृद्धिः तां प्रयच्छतीति विग्रहः अथ कथं वृद्ध्याजीवश्च वार्द्धुषिरित्यमरः। नस्तेनः स्यान्न वार्द्धुषी। वार्द्धुष्यं लवणक्रियावार्धुषिः सम्पृक्तं पनेत्यादि वा स्वच्छन्दवाचः कवय इति हरदत्तः। मद्दूकिम्। द्विगुणं वृद्धिं च प्रयच्छत्यधर्मेण। कुसीददशैकादशात्ष्ठन्ष्ठचौ। निपात्यत इति। अत एव वाक्यमप्यकारान्तेन भवतीति भावः। तदेवदर्शयति। दशैकादशानिति। संख्याया अल्पीयस्या इति पूर्वनिपातः। उञ्छति। भूमौ पतितस्य एकैकस्योपादानमुञ्छः। शब्दं करोतीति। प्रत्ययादिविभागेन व्युत्पादयतीत्यर्थः। अनेनार्थेऽयं प्रत्ययः अभिधानस्वाभाव्यात्। तेनेह न। शब्दं करोति निर्व्वरः।

एवेति। प्रत्यये टिलोपेनैव सिद्धे र्निपातनं वैयर्थ्यापत्त्या न प्रत्ययसन्नियोगेनैव निपातनमिति भावः। विशेषणत्वादेकादेशस्य पूर्वनिपातापत्तेराह। संख्याया इति। इदं च द्वन्द्वाद्द्वन्द्वसाधारण मिति मदस्मिन्नधिकमिति सूत्रे केपटे स्पष्टम्। एतेन द्वन्द्वबहुव्रीहिमात्रविषयं तत् इत्यपास्तम् ॥

आरण्यकेति। आरण्याण्ण इति णान्तात् स्वार्थे कः। वुञ् तु न। पथ्यध्यायादिष्वेव तद्विधानात्। विशेष्येति। एकदेशीभवनेऽत्यर्थः। संश्लेषार्थत्वे सप्तमीत्यन्ये। सास्यास्तीति। लिङ्गविशिष्टपरिभाषयाऽपि
दार्दुरिक इति। कुलालः। दर्दुरो मत्स्यजातिविशेषः। दर्दुरस्तोयदे भेके वाद्यभाण्डाद्रिभेदयोः। दर्दुरा चण्डिकायां च ग्रामजाले तु दर्दुरमिति विश्वः। मात्स्यिक इति। मत्स्यसङ्घमिति परिगणना
त्स्यस्येति यलोपेन। मार्गिक इति। आरण्यकपशुष्वान्तहरिणेषु च वर्तते ह्ययं मृगशब्दः। तत्राद्यस्य विशेषो द्वितीयस्य तु पर्यायो हरिणशब्दः। पदोत्तरपदं गृह्णाति। पदान्तमिति तु
नोक्तम्। बहुच्पूर्वान्माभूत्। धर्मं चरति। चरतिरिहासेवायाम् न त्वनुष्ठानमात्रे। तेन दैववशाद्धर्मे प्रवृत्तोऽपि दुर्वृत्तो धार्मिक इति नोच्यते। आसेवा हि स्वारसिकी प्रवृत्तिः। एवमग्रेऽपि। सम
वायान्समवैति। समूहवाचिभ्यो द्वितीयान्तेभ्यष्ठक् स्यात्। समवैतीत्यर्थे। इह समवपूर्वस्य इणोऽर्थः प्रविश्यैकदेशीभवनम्। तत्र गुणभूतं प्रवेशं प्रति प्रकृत्यर्थस्य कर्मता बोध्या। विशे
ष्यानुरोधेन तु लोके सप्तमी प्रायेण प्रयुज्यते। कुले सेनेत्र समवेता इति यथा। सैन्याः सैनिका इति। द्वितीयान्तात् ण्यठकौ। यत्तु सेनायां समवेता ये सैन्यास्ते सैनिकाश्चेति तत्फलितार्थ
कथनपरम्। सञ्ज्ञायामिति। ललाटकुक्कुटीशब्दाभ्यां द्वितीयान्ताभ्यां पश्यतीत्यर्थे ठक् स्यात्। सम्यग्ज्ञानं संज्ञा तस्याः प्रसिद्धिविषयीभूतेऽर्थविशेष इति यावत्। लालाटिक इति। दू
रे स्थित्वा प्रभोर्ललाटं पश्यति न तु कार्येषूपतिष्ठत इत्यर्थः। लालाटिकः प्रभोर्भालदर्शी कार्याक्षमश्च यः इत्यमरः। कौक्कुटीको भिक्षुरिति। सन्न्यासी हि पादविक्षेपपर्याप्तदेशपर्यन्तमे
व चक्षुः संयम्य गच्छतीति भावः। मार्दङ्गिक इति। मृदङ्गवादने प्रकृतेर्लक्षणा। मुख्यार्थप्रवृत्तेस्त्वनभिधानान्न। धानुष्क इति। इणः ष इति षः। परश्वधाट्ठञ्चाट्ठक्। द्वयोः कुठारः स्वधितिः पर
शुश्च परश्वधः। आस्तिक इति। अस्तिनास्तिशब्दौ निपातौ। यद्वा वचनमामर्षादस्तीत्याख्यातात् नास्तीति निपातात् समुदायाच्च प्रत्ययः। दिष्टमित्यादि। दैवं दिष्टं भागधेयमित्यमरः। नालं
वते दैष्टिकतां न निषीदति पौरुषे इति माघः। यत्तु प्रावोक्तम्। प्रमाणानुगामतिर्दिष्टा सास्यास्तीति दैष्टिक इति। तन्न। आकरविरोधात्। दिष्टशब्दस्य मतौ वृत्तेस्तत्र सितार्थपरत्वे च मानाभावात्। किं च। तेऽस्या
स्तीति विग्रहोऽप्ययुक्तः। न ह्यस्त्यर्थेऽयं प्रत्ययः स्मर्यते। न वा आस्तिक इत्यत्रेवास्त्यर्थस्य प्रकृत्यर्थतयापीह प्रवेश इत्यास्तां तावत्॥ ७ [illegible] इति भावः। मानाभावादिति। पूर्वोक्तकोशविरोधात्कोशा
नुपलम्भाच्चेति भावः। दिष्टमिति। असमतिर्दैष्टिक इति भाष्यविरोधाच्च। एतेनार्थापि विसिद्ध दिष्टशब्देन सूत्रे समाहारद्वन्द्व इत्यपास्तम्। तावतापि प्रमाणानुगतेत्यर्थालाभाच्च ॥ इति ठकोऽवधिः ॥

म

युगंरध्याङ्ग-मितिाि रथसाहचर्यात्तदङ्ग-स्यैवयुगस्यग्रहणमितिभावः।शब्दस्वरूपापेक्षयेति।सौत्रंह्रस्वत्वमित्यपरे ।प्राघुङ्क्ते।ति।तेनसूत्रेजन्याः इतिसविसर्गपाठइतिसूचयति।भाष्येपिजनीशब्दा
देषापञ्चमीत्युक्तौ।एतेननिर्विसर्गपाठंपठित्वास्त्रियामेवास्यसाधुत्वंवदन्तः परास्ताः।सापेक्षत्वादिवेति।नन्मूलकासामर्थ्यादित्यर्थः।इदंप्राचामनुरोधेन।प्रधानस्यसापेक्षत्वात्क्रियायाः
हितंभक्ष्याः।अस्मेतिप्रकृतमपिचतुर्थ्याविपरीणम्यतेहितयोगात्।यद्वा।तद्स्मादितीह अपकृष्टव्यम्।प्रकृतिश्चनदीयभक्ष्यणेलाक्षणिकीत्याशयेनाह।अपूपभक्ष्यंहितमस्मैइति।
आण्व।इकारउच्चारणार्थः।येषागूढलिकाश्राणाविलेपीतरलाचसेत्यमरः।आवसथात्ष्ठल्।वसतीत्यर्थे।आवसन्त्यस्मिन्नितिआवसथः।उपसर्गेवसेरित्यथप्रत्ययः।कुसीदसू
त्रादिति।कुसीदसूत्रोपात्ताभ्यांप्रकृतिभ्यामित्यर्थः।इहयेषांषकारः सांहितिकइतिसंभाव्यतेतेषामेवगणनेष्ठनादेः षित्वमनार्षमितिभ्रमः स्यात्।अतोवार्त्तिककारः सर्वानेव
पर्यजीगणत्।इनिठकौ वधिःसमाप्तः।युग्यइति।युगंरथाङ्ग-म्।तद्वहतीत्यर्थः।प्रासङ्ग-इति।प्रासज्यतेसांवितिकर्मणिघञ्।धुरोयड्ढकौ।इहधुरोढक्केत्येवोचितम्।खः सर्वधुरात्।
शब्दस्वरूपापेक्षयानपुंसकनिर्देशः।बन्धुनिबहुव्रीहाविविव्वत्।सर्वधुरामिति।सर्वाधूः सर्वधुरा।पूर्वकालैकेतिसमासः।ऋक्पूरितिसमासान्तः। परवल्लिङ्ग-मितिस्त्रीत्वम्।
टाप्।एकधुरीणइति।चकारेणखस्यानुकर्षणसामर्थ्यात्पक्षेश्रवणम्।अन्यथाहिचकारंविनैवचप्राकरणिकस्ययतोलुग्विधीयेत।जनीवधूरिति।जायतेअस्याङ्गभेइति।जनि
घसिभ्यामिण्।जनिवध्योश्चेतिनवृद्धिः।कृदिकारादितिङीष्।जन्येति।जामातुर्वयस्येत्याहुः।साहिवधूंजामातुः समीपंप्रापयति।कालिदासस्तुवध्वापानवाहेप्यपिप्रायुङ्क्त।यातेति
जन्यानवद्कुमारीति।पथ्याइति।पथ्यस्मतदर्थेइतिपद्भावः।अधनुषाकिम्।चोरंविध्यति।संभाव्यतेहिचोरव्यधनेधनुषः करणता।यदातुधनुषेतिप्रयुज्यतेतदासापेक्षत्वादेवनभव
ति।वशङ्ग-तः।वशनंवशः।इच्छा।वशिरण्योरुपसंख्यानमित्यप्।मूलमस्याबर्हि।प्रथमान्तादाबर्हित्युपाधिकान्मूलशब्दाद्यत्स्यात्।मूल्यामुद्गाः इति।मूलोत्पाटनंविनासुग्रहीतुमश
क्याः।मद्यतोलवनेक्किपमः।णेकोशस्याअपियस्यामवस्थायांपतेयुस्तामवस्थांप्राप्ताः सुष्ठुशुष्काइतियावत्।यप्रत्ययइति।तेनधेनुष्याशब्दोन्तोदात्तः।पतितुतित्स्वरस्स्यात्इतिभावः ॥
कारकांशेनित्यसापेक्षत्वाच नाश्रोत्येवात्रप्रत्ययः।सर्वंचेदंकैयटे ।तस्मात्करणप्रयोगेमाभूदित्यर्थमधनुषेति।अन्यथापथ्याः शर्कराइत्यत्रापिनस्यात्।संभाव्यतेहितत्रापितेष्यस्यकारणता।चोरंविध्यतीत्यादौ

ऋणप्रत्यर्पणादेरिति। ऋणप्रत्यर्पणपर्यन्तमित्यर्थः। कर्त्तरीति। मूलेनानाम्यमित्यत्र कर्त्तरि तृतीया बोध्या। कृयोगादिति। प्रीणातीति प्रिय इति व्युत्पत्तेः सूत्रे इति भावः। अलौकिके त्विति। तत्र कृयो
गाभावान्न षष्ठीप्राप्तिः। अन्यत्रापीति। जनस्य जल्प इत्यादौ। तदन्तविधिरिति। ...लं.शे इति बोध्यम्। जनो जन इति विग्रहे प्रतिशब्दप्रयोगे णकर्मप्रवचनीययुक्तत्वाभावान्न द्वितीया। न चास्वपदवि
संज्ञायामिति। ऋणप्रत्यर्पणाय या धेनुर्दोहनार्थमुत्तमर्णाय दीयते तस्याः संज्ञेयम्। नौवयोधर्म। अष्टभ्यो यथासंख्यमष्टस्वर्थेषु यत्स्यात्। इह नार्यादियोगे यथासंभवं करणे कर्त्तरि
हेतौ तुल्यार्थयोगे च तृतीया भवतीति सैवेह समर्थविभक्तिर्याल्लभ्यते। मूलेनानाम्यमिति। मूलं नाम पराशीनामुत्पत्त्यर्थं वणिग्भिर्नियुक्तं द्रव्यं तेन स्वस्मादतिरिक्तं लाभाख्यं द्रव्यमा
त्मानं प्रति शेषीक्रियते। आङ्पूर्वस्य तु नमतेरभिभवोऽर्थः। तस्मात् पोरदुपधादिति यति प्राप्ते तत एव निपातनाण्ण्यत्। आनाम्यम्। अभिभवनीयम्। आत्मानं प्रति शेषीकर्त्तव्यम्।
स च लाभाख्यो भाग एव। लोके तु यावता द्रव्येण पाठादिकं विक्रीयते तत्र समुदाये मूल्यशब्दः प्रसिद्धः। एवं च लाभमात्रे व्युत्पादितस्य मूल्यशब्दस्य तद्वृत्तिते सङ्क्रान्ते निरूढलक्षणा
बोध्या। सीतयेति। सीता हलाग्रं तेन समितं सङ्गतं निम्नोन्नतादिरहितं कृतं समीकृतमिति यावत्। तुलया संमितमिति। संमितं परिच्छिन्नम्। रूढिश्चेयं संज्ञायामित्यधिकारात्। अतए
व सदृशमात्रे प्रयुज्यते न तुलायामाग्रहः। अतएव च वयसा तुल्यः शत्रुरित्यत्र न। स्निग्धो वयस्यः सवया इत्यमरः। पथ्यमिति। शास्त्रीयात्पथोऽनपेतमित्यर्थः। संज्ञाधिकारान्नेह। पथोऽनपे
तश्चोरः। मार्गादनपेत इत्यर्थः। इच्छयाकृतमिति। छदि संवरण इति चुरादिः। इच्छायामपि वर्त्तते। ततो घञि इच्छापर्यायश्छन्दशब्दः। स्वच्छन्दोच्छलदच्छकच्छ इत्यादौ। असुनि तु सा
न्तः। सोऽत्र प्रकृतिः। यद्यपि वेदे त्रिष्टुबादिषु चायमस्ति तथापीह न गृह्यते संज्ञाधिकारात्। तत्र निर्माणे इच्छायाः करणत्वात्सामर्थ्यात्तृतीयान्तादिति लभ्यत इति भावः। हृदयस्य।
कृयोगात्कर्मणि षष्ठी। अलौकिके तद्धितप्रकृतिभागे तु वचनसामर्थ्यादेव। एवमन्यत्रापि बोध्यम्। जनस्य जल्प इति। जल्पशब्दो भावसाधनः। कर्त्तरि षष्ठी। हलस्य कर्ष इति। कर्ष
णं कर्षः। कर्मणि षष्ठी। करणस्य कर्तृत्वविवक्षायां कर्त्तरि वा। रथसीताहलेभ्य इति तदन्तविधिः। द्विहल्यः। त्रिहल्यः ॥ ७ ग्रहत्वे नित्यसमासत्वापत्तिः। अस्वपदविग्रहत्वस्य नित्यत्वे प्र
योजकत्वाभावात् नित्यसमासत्वं परमस्वपदविग्रहत्वे क्वचित् प्रयोजकमित्यन्यत्। स्पष्टं चेदमषडक्षाशितमिति सूत्रे भाष्यपदमञ्जर्योः ॥

वेदभाष्ये इति। अत्रारुचिबीजं तु तृतीयेऽह्नो यदुपस्तव्यं तत्समानमिति तेन वेति भाष्यविरोधः। तत्र हि वधपाद्दादावपि यद्बाहुल्यम् साधितः। नहि समदुत्त्यनिवेतायां ह्यकः; उक्थ्यस्तु छान्दसत्वेनसाद्ध इति दि
क्। आद्युदात्तः स्यादिति। उक्थ्यदृत्सर्पः। तीर्थे येइति। यादौ प्रत्यये विवक्षिते तीर्थे उत्तरपदे समानस्य स इति नदर्थः। समानमिति। समानोदर इत्यत्र इति शेषः। नानुवर्त्तत इति। अत एवेदं सार्थकम्। अ
तत्र साधुः। साधुरिह प्रवीणो योग्यो वा नोपकर्त्ता तत्र हित इत्यस्मिन्नेन भाव्यम्। अग्र्य इति। यत्तु प्राचा अग्रे भवः अग्र्यः। अग्रियः अग्रीयः। इति रूपत्रयमिहोक्तं तन्न। अग्राद्यत्पश्चौ
चेति सूत्रद्वयस्य च्छन्दोविषयत्वात् तद्धि भवेच्छन्दसीत्यधिकारे पठ्यते। छन्दोधिकारश्च आपादसमाप्तेरिति सिद्धान्तः। लोके तु भवार्थे अग्रिमइत्येव भवति। प्रतिजनमिति। जने
जनः इति प्रतिजनम्। यथार्थे यदव्ययमिति विग्रहे अव्ययीभावः। प्रतिजन। इदंयुग। संयुग। पापकुल। परस्यकुल। अमुष्यकुलम्। सर्वजन। विश्वजन। पञ्चजन। परस्यामुष्ये
ति षष्ठ्या निपातनादलुक्। गुडादिभ्यष्ठञ्। गुडक। सक्तु। अपूप। मांस। ओदन। इक्षु। वेणु। सङ्ग्राम। प्रवास। निवास। इत्। वसनं वसतिरिति। वसेरयति प्रत्ययः। स्वस्य पतिः स्व
पतिः। ष्यः तस्मिन्साधुः स्वापतेयम्। भाष्या यतितु नित्त्वरः स्यात्। क्रतुर्भवत्युक्थ्य इति वत्। यतो नाव इति तु नयदुत्पन्निबेलायां ह्यकस्य धर्यतस्य आदिरुदात्तः स्यात् इति व्याख्यानात्।
एतच्च वेदभाष्ये स्पष्टम्। यथा श्रुतन्यायस्माने तु आद्युदात्तः स्यात्। नमः शष्प्याय च फेन्याय चेत्यादिवत्। इह पक्षद्वये उक्थ्यफेन्यादीनां परस्परसंवादे विकल्पान्दसत्वेन निर्वाहो बोध्यः। समा
नतीर्थे वासी। निपातनाणिनिः ग्रहादेराकृतिगणत्वात्। सतीर्थ्य इति। तीर्थे य इति। समानस्य सभावः। तरन्त्यनेनेति तीर्थम्। तरतेस्थक्। तीर्थशब्दश्च अध्वरसेत्रे पाने पात्रे यन्निचितु। ये
नौजलावतारे चेति विश्वः। इह तद्व्यापकवाचिन एव ग्रहणम्। शयितः स्थित इति। शीधातुर्हि स्थितौ दृष्टः जलाशयः कुशेशयमिति। यथा समानमुदरमिति पूर्वापरेत्यादिना तत्पुरुषः
ततो यत्। तित्स्वरापवादः ओकारस्योदात्तः। सोदर्यः। ओयोदात्त इति नानुवर्तते। विभाषोदरे इति सभासः। तत्र तीर्थे ये इत्यतो यद्यनुवर्तते सा च विषयसप्तमी। तेन सोदर इत्यस्मात् यः प्र
त्ययः स्वरः। कथं तर्हि अपन्यानन्तु गच्छ तं सोदरोऽपि विमुञ्चतीति मुरारिः। उच्यते सह समानमुदरं यस्येति। वोपसर्जनस्येति सभावः। अत एव यत्र भात सहोदर इत्यपि सिद्धमादृतिश्चापितीयाः। समासावन्था
तुर्थिकाः॥ ७ न्यथायतिपवारूपेस्वरे वविशेषाभावेन पूर्वसूत्रेणैवैकदेशविकृतन्यायेन सिद्धावस्यैव यत्स्पष्टमेव। सह समानमिति। सत्रेत्तूत्तरपदार्थप्राधान्यस्यैव ग्रहः शयित इत्यत्र पायेतिभावः॥ इ

ननु प्रत्यय इत्यादि। तथा सति प्राक् ठञः प्राग्निकादिति वा वदेदिति भावः। तेषु। तद्बोधकशास्त्रेषु। प्राक् ठञ इत्येवमकरणे फलमाह। एवं चेति। अन्यथा। प्रकृतिप्रत्यययोरवधित्वे। सन्निधानाविशेषादिति। प्रति
सूत्रमस्योपस्थितेरित्यर्थः। पर्यायः स्यादिति। शरीरावयवात्। उगवादिभ्यश्चेत्यर्थः। मास्त्विति। प्राग्वतेष्ठञित्यधिकारान्तरावष्टब्धत्वानन्तदुत्तरमस्योपास्थितिरिति भावः। तदनुगुणत्वादिति। चलनरूपतत्क्रियानुगुण
त्वादित्यर्थः। परेण। आदेशसंन्निधुक्तेन शरीरावयववाचादित्यनेन। संप्रसारणादाविति। आदिना पूर्वरूपम्। न च संप्रसारणे सु अनितिस्थिते पूर्वरूपं बाधित्वा वार्णादाङ्गमिति न्यायेन प्राप्तटिलोपस्य येचेत्यनेन नि
वृत्तौ पूर्वरूपेपि न पुनष्टिलोपोऽभ्रष्टावसरत्वादिति वाच्यम्। तस्य न्यायस्यात्र शास्त्रेऽनाश्रयणात्। निह्नुवितेवैतद्व्यक्तेति दिक्। सुवचमिति। ऊधन्यशब्दादाचारक्विबन्तादात्मनेपदार्थं ङित्वं नु न। तत्त आचारक्विपोऽभावात्। ऊ
अधपः क्षमिकाः। प्राक्क्रीताच्छः। इयतः प्रागिति अर्थोऽत्रावधित्वेन गृह्यते न तु प्रत्ययः प्रकृतिर्वा। तेन प्राक्क्रीतादेकोऽर्थः तेषस्योपस्थानम्। अवधिस्तु जातीयोऽयं वधिमान्भवति यथा मासात्पर इति कालः
प्रतीयते। ग्रामात्पूर्व इति देशः। एवं च समाने अर्थे प्रकृतिविशेषाद्धितेति पदादिः क्रमाधनौ। अन्यथा यच्छयोः सन्निधानाविशेषानन्यतत्वानीयरामिव पर्यायः स्यात्। ननु पदादिविषये च्छो न भविष्य
ति। विभाषा हविरपूपादिभ्य इति विभाषाग्रहणाल्लिङ्गादिति चेत्। सत्यम्। एवं सति अवधिग्रहणं मास्तु। क्व इत्येवास्तु। स्पष्टप्रतिपत्त्यर्थमन्तदिति चेत्तर्हि अर्थ एवावधित्वेन निर्दिष्टमुचितः। अन्यथा भक्ष्ति
ते पिलशुनेन शान्तोव्याधिरिति नाप्यापद्येतेति दिक्। गवादयन्तर्गणसूत्रं ण्याह। नाभि नभं चेति। नाभिशब्दोपत्यप्रत्ययं लभते। नभादेशं चेत्यर्थः। नभ्योक्ष इति। रथाङ्गसच्छिद्रं नाभिः। तदनुप्रविष्टः काष्ठ
विशेषोक्षः स च तदनुगुणत्वात्स्नेहितः। अञ्जनं तैलाभ्यङ्गः तदपि स्नेहनत्वान्नाभये हितम्। ये चेति। शरीरावयवे तु परेण बाधा नेति भावः। शुन्यमिति। चकारस्यानुक्तसमुच्चयार्थत्वान्नस्तद्धित इति टिलो
पो न। ये चाभावकर्मणोरिति प्रकृतिभावस्तु दुर्लभः। संप्रसारणादौ कृते अनूरूपाभावात्। दीर्घनस्तेतद्विधानसामर्थ्यादृलोपो माभूत्। पक्षान्तरे तूक्तैव गतिः। नङ् चेति। नश्चेति सुवचम् ॥
धन्यशब्दात्त्वात्मनेपदार्थं ङित्वमिति त्वसङ्गतम्। यं समुदायं योऽवयवो न व्यभिचरति तत्समुदायोपकारकत्वं तदवयवधर्मो नान्यस्येति गुप्तिजादिसूत्रे भाष्ये स्पष्टमुक्तत्वात्। ङित्वसामर्थ्यात्त्वाय बाध
कल्पनापेक्षयान्यत्र क्लृप्तानङ एवात्रोच्चारणमित्यस्यैव युक्तत्वात्। न चास्यानोत्वात्क्षणिकत्वेन ये चेति प्रकृतिभावानापत्तेः टिलोपानापत्तिः। अणग्रहणेन तद्ग्राहेः। ध्वनितं चेदमूधसोनङ्कारोलिङ्गाधिकारे
वक्तव्यः। इहमाभूत्महोधाः पर्जन्य इति बहुव्रीहेरितिस्त्रस्य भाष्येण। ऊधसोनङिति समासान्तप्रकरणे सत्रं तत्र स्त्र्यधिकारे कर्तव्यमिति तात्पर्यम्। तत्र नकार इति वदता सूत्रे ऊधस् शब्दविषये कारङ्कारौ व्यर्थाविति
निरूपितम्। तत्रोक्तकल्पनायामेव सङ्गच्छत इति दिक् ॥

तस्य।हविः शब्दस्य।प्रपञ्चार्थ इति।यदासाहश्येनाःपूपाद्योन्यत्रवर्तन्तेतदागौणमुख्यन्यायेनप्राप्तिरेवास्यन।अन्यत्रतथादृष्टत्वेनप्रपञ्चार्थत्वमेवोचितमितिभावः।कैयटेति।उगवादिभ्यइति
सूत्रे।लक्षणोचितेति।अदितिमोदनेनेतिवाक्यशेषस्यलक्षणातात्पर्यग्राहकत्वात्।प्रसिद्धार्थसमन्वयेन।तत्सम्बन्धरूपेणवृत्त्यन्तरेणेत्यर्थः।आत्मन्विश्वेति।यद्यपितत्रनकारेणास

ऊधन्यइवि।येचेतिप्रकृतिभावः।विभाषाहविरपूपादिभ्यः।हविर्विशेषाणामिहग्रहणम्।नतुस्वरूपस्य।तस्यगवादिषुपाठात्।ननुविपरीतमेवकिंनस्यात्।गवादिषुविशे
षाणांग्रहणम्।इहतुस्वरूपस्येतिचेन्मैवम्।असंजातविरोधित्वेनतत्रैवस्वरूपग्रहणस्यन्याय्यत्वात्।अपूप।तण्डुल।पृथुक।मुसल।सुवर्ण।कटक।कर्णवेष्टक।इत्यादीनप्र
क्रम्यपठ्यते।अन्नविकारेभ्यश्चेति।अस्यार्थः।अन्नविकाराः।अन्नप्रकाराः।अद्नीयविशेषाः।तेभ्योयद्वास्यात्।ओदन्याः।ओदनीयाः।एवंचअपूपादीनांकेषांचित्पाठःप्रपञ्चा
र्थः।हविरपूपादिभ्योविभाषायाउगवादिभ्योयत्पूर्वविप्रतिषेधेन।चरव्यास्तण्डुलाः।सक्तव्याधानाः।चरुर्नामहविरितिकाशिका।स्थालीवचनस्यचरुशब्दस्यतत्रत्येहवि
षिउपचाराद्वृत्तिरितिकैयटहरदत्तादयः।यद्यपीदंत्रिरच्चर्वधिकरणविरुद्धम्।तस्मादित्यश्चरुरित्युपक्रम्यअदितिमोदनेनेतिवाक्यशेषश्रवणात्।चरुशब्दओदनेशक्तः।
लोकेस्थाल्यामौपचारिकइतिसिद्धान्तितत्वात्।तथापिकैयटादीनामयमाशयः।लोकेस्थाल्यांप्रयोगस्तावत्सर्वसंमतः।तथाचस्थाल्यामेवशक्तिरस्तु।तदनुरोधेनवेदेला
क्षणिकतोचिता।लोकेगृहीतशक्तिकःशब्दोवेदेपिबोधकइतिस्वीकारात्।उक्तंच।लोकप्रसिद्धार्थसमन्वयेनवृत्त्यन्तरेणप्रतिपादितेसतिशक्त्यन्तरंतत्रनकल्पनीय
म्।तथासतीहकनुलक्षणाभवेदिति।नभ्यमिति।नाभिनभंचेतिनभादेशस्तुनभवति।तस्यगवादियतासंनियोगशिष्टत्वेनरथनाभावेवप्रवृत्तेः।खलयवा।अत्रव
षशब्दोऽकारान्तोगृह्यतेनतुनकारान्तः।अन्यथाह्यसंदेहार्थंनलोपमकृत्वैवनिर्दिशेत्।आत्मन्विश्वजनेतिवत्।वृषायहितंवृष्यम् ॥

न्देहाय्याकारान्तात्मशब्दाभावात्।किंतुप्रकृतिपरिमाणार्थम्।तेनासमासग्रहणज्ञापितनदन्तविधिरत्रनेतिवृत्तौस्पष्टम्।किंचप्रकृतेनकारानुच्चारणेनोभयोर्ग्रहणंप्राप्नोतितदु
च्चारणेईमात्रागौरवंच।तथापिव्याख्यानादेवाकारान्तमात्रग्रहणमितितत्त्वम् ॥

म॰ भ॰ २१५ आहचेति। इदंचोगवादिभ्य इति सूत्रे भाष्ये स्पष्टम्। द्वीपीत्याद्याविति। इत्यादावेवस्यात्तत्र नेष्टमिति भावः। संभावनेति। संभावनेलमित्यत्र योगविभागात् उपसंख्यानाद्वा शङ्कायोरित्यत्र

आह च। यञ्ञावञः पूर्वविप्रतिषिद्धं ढञ् चेति। एवं च निरवकाशत्वे सत्येव प्रतिपद्विधित्वं बलीयस्त्वे प्रयोजकम्। न तु सावकाशत्वे इति मुनिमतं लभ्यते। तेन स्वंपितडाकानीत्येव युक्तम्। परत्वात् नुम्प्रवृत्तेः प्रतिपदोक्तत्वाद्दीर्घमाश्रित्य स्वंपितडाकानीति मतं तु दुर्बलमिति दिक्। चर्मणोऽञ्। चर्मण इति षष्ठी न तु पञ्चमी। तथा हि सति चर्मशब्दाच्चर्मार्थायाम् प्रकृतौ प्रत्ययः स्यात्। चर्मणे द्वीपी इत्यादौ। न दाह। चर्मणो या विकृतिरिति। वार्ध्रेइति। वृधिवधिभ्यां रन् इति रप्रत्यये वर्ध्रशब्द आद्युदात्तः चर्मवाची तस्य विकार इत्यण्। टिड्ढेति ङीप्। वार्ध्री रज्जुः वध्री ति तु वधे रौणादिके ष्ट्रनि। नध्री वध्री वरत्रा स्यादित्यमरः। वञ्चाः पश्यवध्रिकाः पश्येति भाष्यम्। प्रतु वोचं वाध्र्यश्वस्य नामेति वेदे प्रयोगः। तत्र अवग्रहकाले ह्रस्वस्तु ड्याप्योरिति ह्रस्वः। तदस्य। स्यादिति संभावने लिङ्। इष्टकानां बहुत्वेन संभाव्यते स्म तत् प्राकार आसां स्यादिति। देशस्य च गुणेन संभाव्यते। प्राकारोऽस्मिन् स्यादिति। इह प्रकृतिविकारभावस्तादर्थ्यं च न विवक्षितम्। किं तु योग्यतामात्रं तेन पूर्वस्याप्ययमविषयः। मतुब्विधाविव सकृत्तद्ग्रहणेन सिद्धे हि स्तद्व्योपादानं स्पष्टार्थम्। छ यतोः पूर्णो विधिः। प्राग्वतेष्ठञ्। ठञ् इत्येव वक्तव्ये प्राग्वतेरिति वचनं मध्ये योऽधिकारवान् अपवादः सर्वभूमिपृथिवीभ्यामणञौ शीर्षच्छेदाद्यच्चेत्येवमादिः तेन विच्छेदेऽपि ठञेव यथा स्यादित्येवमर्थम्। तेन पारायणतुरायणेत्यादौ ठञ् लभ्यते। नन्वेवं पारायणादिसूत्र एव ठञ् निर्दिश्यतामिति चेत् न। उत्तरसूत्रे येषां पर्युदासः तेभ्यः क्रीताद्यर्थे ठञ इष्टत्वात् तस्य च प्रकृतसूत्रं विना अलाभात्। तेन गोपुच्छिकः। साप्ततिकः इत्यादौ अयमिदं सूत्रमिति स्थितम्। यत्तु प्राचा तेन क्रीतं तती यान्ता क्रीतार्थे ठक् स्यात्। साप्तत्या क्रीतः साप्ततिकः इत्युक्तं तन्न। अगोपुच्छेत्यादिपर्युदासेन ठकोऽसङ्गतत्वात् ॥ ७ भाष्योक्तवचनादेति भावः॥

॥ छ यतोः पूर्णो विधिः। अपवाद इति। यद्यपि ठञपवादः ठकोऽपवादस्तथापि अपवादापवादस्य तु नत्वन्तदपवादत्वमिति भावः। पर्युदास इति। गोपुच्छादीनामित्यर्थः ॥ राम॰ २१५

त्रयोदशेति। ठक्ठञौ२। ठन्यतौ। कन्वुन् ठिठन्। ७ अञ् ८ शतमानाद्यण् ९ ख १० ईकन् ११। यण्णादियत् १२। द्वित्रीतिवार्त्तिकोक्ताण् १३। चेत्येवं त्रयोदशेत्यर्थः। अनन्यार्थस्य। क्रीतापूर्वा
निरिक्तार्थरहितस्य। अर्थ एवेति। वतिशब्देन तदर्थो लक्ष्यत इति भावः। व्याख्यानमेवेति। प्रथमोपस्थितत्यागे मानाभावादिति भावः। अन्येतु आर्हादित्यनेन यत्स्वर्थग्रहणे विशेषविहित

तेन क्रीतमिति सूत्रस्य त्रयोदशप्रत्ययानधिकृत्य कृतस्य ठञ्मात्रपरत्वेन व्याख्याया असंगतत्वाच्च। यदपि व्याचख्यते। अतः परमार्हादगोपुच्छसंख्यापरिमाणाट्ठगि त्यधिकृत्यार्हीयान्दर्शयति। तेन क्रीतम्। सन्तत्वान्नायं कनादेर्विषय इत्युदाहरति। सप्तत्येत्यादीति। अत्रेदं वक्तव्यम्। तेन क्रीतमित्यस्य ठञादित्रयोदशसाधारणतया आर्हीयान् दर्शयतीत्यवतारिका तावदसङ्गता। अनन्यार्थस्य प्रथमोपस्थितस्य च प्राग्वतेष्ठञित्येतस्योपेक्षानर्हतया प्राग्वतीयानित्यस्य वक्तुमुचितत्वात्। किं च। कनादेरित्यादिशब्दोऽनुचितः। सन्तत्वस्य कन्विधावेव पर्युदासप्रयोजकत्वात् आदिशब्दग्राह्यस्य दुर्वचत्वात् इति दिक्। यद्यप्यत्र प्रत्ययोऽवधित्वेन गृहीतः तथापि अर्थ एवोपतिष्ठते। न प्रतिप्रकृति। तेनापवादविषये न भवति। अत्र च ज्ञापकं शूर्पादञन्यतरस्यामिति सूत्रेऽन्यतरस्यां ग्रहणम्। आर्हात्। तदर्हतीति। अर्हतीति तिङन्तस्य एकदेशः शब्दोऽत्रानुक्रियते न तु तदर्हमिति सूत्रान्तर्गतमजन्तमिति भावः। अत्र च व्याख्यानमेव शरणमिति हरदत्तः। अत्र श्लोकवार्त्तिकम्। ऊर्ध्वमानं किलोन्मानं परिमाणं तु सर्वतः। आयामस्तु प्रमाणं स्यात्संख्या बाह्या तु सर्वतः। अस्यार्थः। द्रव्यान्तरपरिच्छिन्नगुरुत्वेन पलादिशब्दवाच्येन पाषाणादिना तुलादावारोपितेन येन सुवर्णादेर्गुरुत्वम् उन्मीयते तदूर्ध्वारोपणादूर्ध्वमानमिति शब्देन विवक्षितं तदुन्मानम्। आरोहपरिणाहाभ्यां स्वगताभ्यां येन काष्ठादिनिर्मितेन व्रीह्यादि परिमीयते तत्परिमाणं प्रस्थादि। परिः सर्वतोभावे। आयामो दैर्घ्यम्। स येन मीयते तत्प्रमाणम्। तच्च क्वचित्तिर्यगवस्थितस्य वस्तुनः यथा वस्त्रादेर्हस्तादि ॥

कनावतेर्बाधे एकवचास्येति प्रयोगासङ्गतिः। तद्ग्रहणे प्राग्वतेरित्यनुवृत्त्यैव सिद्धे आर्हादित्यस्य वैयर्थ्यमित्यर्हादित्यधिकार्थे प्रमाणमित्याहुः ॥

क्वचिदूर्ध्वाधरेति। तादृशस्योर्ध्वमानत्वादुन्मानत्वमपि। नत्वन्यत्राह। ऊरुद्वयसमिति। यदि तु तस्य प्रमाणत्वमेव स्यात्तदा ऊरुमात्रमिति यथोर्ध्वमाने मतौ मत्रेस्तुकोर त्रद्वयसच् दुर्लभः स्यात्। नचात्र प्रमाणत्वस्यापि सत्त्वात् प्रमाणेलइ निर्दुगापत्तिरिति वाच्यम्। आयामविवक्षायां प्रमाणमित्येतद्भवतीति अत्र भाष्योक्तेर्विद्यमानस्याप्यूर्ध्वाधरभावकृतायामस्याविवक्षयातदप्रसङ्गात्। विवक्षा च प्रयोगानुसारिणीत्यदोषः। संभवमात्रेण तु प्रमाणत्वं तस्योक्तम्। तिर्यगवस्थितवस्तुपरिच्छेदके तु प्रमाणत्वं

क्वचिदूर्ध्वाधरदिगवस्थितस्य। यथाहास्तिनमुदकम्। ऊरुद्वयसमुदकमिति। संख्या तु उन्मानपरिमाणप्रमाणेभ्यः पलादिभ्यः प्रस्थादिहस्तादिभ्यस्त्रिभ्यो बहिर्भूता एकत्वद्वित्वादिर्बोद्ध्येति। इह संख्यापरिमाणयोरेव प्रकृतत्वेपि उन्मानप्रमाणयोर्विवेचनं प्रसङ्गानुकृतमिति तत्त्वोद्धम्। असमासे निष्कादिभ्यः। निष्कपणपादमाषवाहद्रोणषष्टिरिति सप्त निष्कादयः। तत्र द्रोणशब्दः परिमाणवाची। षष्टिशब्दः संख्यावाची। ताभ्यां ठञ्प्राप्ते वचनम्। इतरेषां तूपञ्चानामुन्मानवचनतया पूर्वसूत्रेण सिद्धे ठकि समासप्रतिषेधार्थं वचनम्। अन्ये त्वाहुः। पूर्वसूत्रे परिच्छेदकमात्रं संख्याभिन्नं परिमाणशब्देन गृह्यते। तेन सर्वेभ्य एव अपवादः। परिमाणं तु सर्वतः इति भेदेन कुत्वादनं तु प्रमाणपरिमाणाभ्यां संख्यायाश्चापि संशये इत्यादावुपयोक्ष्यते इति। एतच्च पदमञ्जर्यामस्पष्टम्। सुगम्यमिति। उगवादिभ्यो यत्। यवापूप्यमिति। विभाषा हविरपूपादिभ्य इति यत्। न्यासकारस्त्वाह ॥

निर्विवादमेव। त्रिभ्योपि बहिर्भूतेति। अनेन संख्यायाः सर्वथा बाह्यत्वं वदतेतरेषां परस्परग्रहणं सूचितम्। तेनोन्मानस्य परिमाणग्रहणे न ग्रहणम्। अत एवापरिमाणबिस्तेति सूत्रे विस्ताचितग्रहणं परिमाणान्तस्येत्यत्र शाणपर्युदासश्चरितार्थ इत्यलम्। एतच्च पदमञ्जर्यामिति। अत्रारुचिबीजं तु भाष्यविरोधः ॥

दृत्तिविरोधादिति। अपूपादिग्रहणं प्रपञ्चार्थमितिहरदत्तः। गणसूत्रेपितदन्तविधिरस्त्वेवेतिबोध्यम्। उत्तरपदलोपीति। साहित्यं चैकविप्रतिषेधाच्चयितेन। सूत्रेतुद्वन्द्वगर्भबहुव्रीहि
अन्नविकारत्वादेवसिद्धेअपूपादीनां प्रतिपदपाठसामर्थ्यात्तदन्तविधिर्नेति तद्वृत्तिविरोधादुपेक्ष्यमितिभावः। इतऊर्ध्वमिति। संख्यापूर्वपदानामितिकिम्। इहमाभूत्। परमपारायणं
वर्त्तपति। द्विशूर्पमिति। द्वाभ्यां शूर्पाभ्यां क्रीतमितितद्धितार्थेद्विगुः। नतावदेषालुगन्ताप्रकृतिरितिसंख्यापूर्वपदादपिशूर्पादञन्यतरस्यामितिअञ्ठञौवाध्यर्द्धपूर्वेतिलुक्। द्विशौर्पिकमि
ति। ठञोद्विगुंप्रतिनिमित्तत्वाभावाल्लुगभावः। परिमाणान्तस्येत्युत्तरपदवृद्धिः। शताच्च। उत्तरसूत्रेणप्राप्तस्यकनोपवादः। सन्तयदन्ताया इति। त्यन्तसहिताशदन्तेति उत्तरपदलोपीसमासः। पञ्चक
इतिलौकिक्याः संख्यायाउदाहरणम्। बहुक इति। पारिभाषिक्याः। चात्वारिंशत्क इति। इसुसुक्तान्तात्कः अर्थवतस्तिशब्दस्यग्रहणात्कुत्सवयवस्यतिशब्दस्यपर्युदासोन। कतिकः। वतोरिडाव
तोरितिपञ्चमी। साचकन्नितिप्रथमायाः षष्ठीकल्पयतीत्याह। वत्वन्तात्कनइति। अर्द्धिकइति। अर्द्धशब्दः कार्षापणस्यार्द्धेरूढइतिभागवदपेक्षयाऽसामर्थ्यनशङ्क्यम्। प्रकरणादिवशेन
भागिविशेषेविज्ञातेसतिनास्त्यसामर्थ्यम्। शूर्पात्। ठञोपवादः। सूर्पशब्दस्यपरिमाणवाचित्वात्। शतमानम्। ठञ्ञुक्तमिति। शतमानंपरिमाणमात्तत्ठञ्प्राप्तः। विंशत्याक्रीतंविंशतिकम्। सं
ताशब्दोयम्। असञ्ज्ञायांहिविंशतित्रिंशद्भ्यामिति ड्वुन्स्यात्। सञ्ज्ञाचयदिपरिमाणस्यतदाठञ्प्राप्तः। अर्थान्तरस्यतर्हिठक्प्राप्तः। वसनशब्दात्तुठगेव। सहस्रसंख्यातत्तेः संख्याया अतिशदन्तायाद्
तिकन्प्राप्त इतिविवेकः। अध्यर्द्धपूर्व। अध्यारूढमर्द्धंयस्मिन्तत् अध्यर्द्धम्। प्रादिभ्योधातुजस्येतिसाधुः। अध्यर्द्धपूर्वंचद्विगुश्चेतिसमाहारद्वन्द्वः। सौत्रंपुंस्त्वम्। अध्यर्द्धपूर्वाद्द्विगोश्चपरस्येति। अने
नसूत्रेद्विगोरितिपञ्चमीसुकंभवति। एतच्चवृत्तिकाररीत्याव्याख्यातम्। तत्रवार्त्तिकम्। द्विगोर्लुकितन्निमित्तग्रहणम्। द्विगोर्निमित्तंयस्तद्धितः तस्यलुगितिवक्तव्यम्। द्वाभ्यांशूर्पाभ्यांक्रीतंद्विशू
र्पम्। द्विशूर्पेणक्रीतंद्विशौर्पिकमित्यत्रपूर्वोदाहृतेद्वितीयस्मामाभूत्। तथा। अर्थविशेषासंप्रत्ययेअतन्निमित्तादपि। यत्रतद्धितार्थद्विगुनासहअर्थोनभिद्यतेतत्रसन्तद्धितोयस्यनिमित्तंनभ
वतितस्मादपिद्विगोः परस्यलुगितिवक्तव्यम्। द्वयोःशूर्पयोसमाहारोद्विशूर्पी। तयाक्रीतमितिविग्रहेपिद्विशूर्पमित्येवयथास्यात्। वस्तुतस्तुसूत्रेद्विगोरितिषष्ठीमाश्रित्यद्विगोर्निमित्तंयस्तद्धि
तइतिव्याख्येयम्। द्विशूर्पंक्रीतमित्यत्रतुअनभिधानात्प्रत्ययोनेतिभाष्यारूढःपन्थाः ॥२७ रेवतिबोध्यम्। लौकिक्याइति। संख्याग्रहणेकृत्रिमाकृत्रिमन्यायाप्रवृत्तेरितिभावः। प्रथमायाः ष

म.श. सम्भूयत एवेति। द्विगुनिमित्तत्वाभावादिति भावः। संख्यावाचीति। एवं च तत्पूर्वसमासस्य द्विगुत्वात्तेनैव सिद्धम्। सूत्रे च द्विगुसाहचर्यादध्यर्द्धपूर्वोऽपि समानाधिकरणसमास एव गृ
२०१ ह्यते। तत्रास्य संख्यात्वेन दिक्संख्ये इति नियमादन्यस्याप्राप्तौ तद्धितार्थे स्यादित्यद्विगुरेवेति भावः। उत्तरपदवृद्धिरिति। अध्यर्धसाहस्रमित्यत्र तेनैव तन्निमित्तप्रत्ययोऽपि संगृहीतः। अध्यर्द्ध
ग्रहणं च समासकन्विध्य — र्थमिति वार्तिके समासविधिग्रहणेन समासरूपो विधिर्यन्निमित्तको विधिश्च गृह्यते। अन्त्यः समस्यापूर्वपदस्य तदन्तविधिनिमित्तकः प्रत्यय उत्तरपदवृद्धिश्चेति भावः।
पाञ्चकलापिकमिति। एवं पाञ्चलोहितिकमिति बोध्यम्। पञ्च कलापाः परिमाणमस्य पञ्च लोहिन्यो गुञ्जाः परिमाणमस्येति विगृह्य तद्धितार्थेति समासः। तदस्य परिमाणमिति
ठञ्। भस्याढे तद्धित इति पुंवद्भावाल्लोहिनीशब्दस्येकारनकारयोर्निवृत्तिः। परिमाणविशेषस्य नामधेये एते। असंज्ञाग्रहणं प्रत्ययान्तस्य विशेषणं न तु द्विगोः। एतच्च वृत्तिकृता
वर्णितं। सूत्राशयमनुरुद्ध्योदाहृतम्। भाष्यवार्तिकयोस्तु असंज्ञाग्रहणं प्रत्याख्यातम्। तथाहि। द्विगुविशेषणमसंज्ञाग्रहणं पञ्चकलापपञ्चलोहितशब्दौ च द्विगू कृतं तद्धि
तलुकावेतस ते। यस्तु नाभ्यासुत्पद्यते ठक् सम्भूयत एवेति स्यादेतत्। अध्यर्द्धशब्दः संख्यावाची तथा च लोके गण्यते एकोऽध्यर्द्धौ द्वाविति। अत एवाध्यर्द्धकमिति कन्। अध्यर्द्धकंसमिति। न
द्धितार्थे द्विगुश्च भवति। तत्किमध्यर्द्धपूर्वग्रहणेनेति चेत्सत्यम्। ज्ञापनार्थमिदम्। संख्याकार्यं किंचिदस्य नेति। तेन कन्समासोत्तरपदवृद्धिभ्योऽन्यन्न भवति। तद्यथा। अध्यर्द्धकरोति।
नेह। कृत्वसुच्प्रत्ययः सकृत्फलान्तां क्रियामभिनिर्वर्त्य पुनस्तामेव कुर्वन्नभ्येति निवर्तते स एवमुच्यते। विभाषा। अध्यर्द्धसहस्रमिति। यत्समानर्थिकादिकेति विहितस्याणो लुक्। तदभा
वे तु संख्यायाः संवत्सरसंख्यस्येत्युत्तरपदवृद्धिः इदानीमेवेत्युक्तं अध्यर्द्धशब्दः संख्यावाचीति। द्वित्रिपूर्वान्निष्कात्। अध्यर्द्ध पूर्वग्रहणमुत्तरार्थमनुवृत्तमपि नेह संबध्यते। द्वि
गोरिति तु संबध्यत एव षष्ठीसमासं व्यावर्तयितुम्। अत्र च व्याख्यानमेव शरणम्। अन्यथाऽध्यर्द्धपूर्वान्न द्वित्रिपूर्वाच्च निष्कादिति समुच्चयः स्यात्। द्वैनैष्किकमिति। प्राग्वतेष्ठञाम रा.मः
नान्तरे तु ठक् परिमाणान्तस्येत्युत्तरपदवृद्धिः ॥ ७ लुकि चाग्रहणमित्यस्य भाष्यस्य प्रत्ययलुगर्थं न कार्यं ज्ञापनार्थं तु स्त्रियत्र्यर्थ इति न तद्विरोधः। प्राग्वतेष्ठञिति। समासेऽसमासे निष्कादिभ्य २५७
इति ठकः प्राप्तेरिति भावः। मन्नान्तरे त्विति। असमासे इति सूत्रे परिमाणविशेषवाचिनिष्कादीनामेव ग्रहणं तत्र तु मानोन्मानादिवाचिन एव ग्रहणं प्रतिरुह्याद्विमते इत्यर्थः ॥

तस्यैवानुवृत्तिरिति। अर्थाधिकारस्यैवेत्यादिति भावः। परिच्छेदकमात्रमिति। उन्मानमपीत्यर्थः। नत्र तद्ग्रहणस्यैव भाष्यसंमतत्वात्। मुख्यमते त्विति। दर्पणकारादिभिर्मुख्य
मतत्वेन व्यवहृते त्वित्यर्थः। तुनारूविबोधिना। —— तद्वीजं तु तस्य भाष्यासंमतत्वम्। पूर्वेणेति। पणपादेत्यनेन। अत्र च भाष्यं प्रमाणमिति। शाणशब्दस्यै
वतत्रोदाहरणादिति भावः। अन्यत्रेति। मूल्यद्रव्यभिन्ने करणे कर्तरि चेत्यर्थः। हरदत्त इति। अन्तारुचिस्तु भावसाधनग्रहणेन मानं नापि फलमिति भाष्यस्य संयोगो नाम इदं कृत्वेदमवाप्यत इति प्रतीके करण
विंशतिकात्खः। शतमानविंशतिकेत्यणि प्राप्ते तस्य च लुकि प्राप्ते खो विधीयते। स्वार्थाः। तदस्य परिमाणमिति ठञि प्राप्ते तस्य लुकि ईकन् विधीयते। प्राण्यङ्गेति पादस्य पद्। आज्यातिगो
पहतेष्वित्यत्र तावत्प्राण्यङ्गस्यैव पादस्य ग्रहणं तस्यैवाज्यादिभिर्गतिवचनैः संबन्धसंभवात्। पद्यतीत्यादावपि तस्यैवानुवृत्तिरिति भावः। इह तु पणमाषाभ्यां साहचर्यात्परिमाणवाचि·
नो ग्रहणम्। शाणाद्वा। पक्षे ठञिति। यद्यपि शाण उन्मानं तथाप्याहार्दित्यत्र परिमाणग्रहणेन योगरूढ्या परिच्छेदकमात्रं गृह्यत इति वादिनां मते अस्यापि पर्युदासादिति भावः। मुख्यमते
तु ठगेव बोध्यः। शाणाद्वेति सूत्रे शताच्चेति वक्तव्यम्। नित्ये प्राप्ते विकल्पार्थम्। अध्यर्धशत्यम्। अध्यर्धशतम्। पञ्चशतम्। पञ्चशत्यम्। यदाभावे संख्यालक्षणस्य कनो लुक्। शताच्च ठन्यता
विति तु न भवति। तत्रासमासग्रहणस्यानुवर्तितत्वात्। द्वित्रिपूर्वादण्च। वार्त्तिकमिदम्। वृत्तिकृता सूत्रेषु प्रक्षिप्तम्। शाणादित्येवेति। शतग्रहणं तु नेह संबध्यते। व्याख्यानात्। अत्र च भाष्यं प्र
माणमिति भावः। यत्तु न्यासकृतोक्तम्। शतशाणाभ्यां वेति सूत्रयितव्ये पणपादेति पूर्वसूत्रे शतग्रहणं क्रियते तस्येदं फलम्। शतशब्दः स्वरितत्वेनानुवर्त्तमानो पि शाणाद्वेत्यत्रैव संब
ध्यते तदुत्तरसूत्रे तु न संबध्यते। तेनाण् नेति। तदेतत्सामर्थ्यावर्णनं मण्विधायके वार्त्तिके सूत्रत्वभ्रमप्रयुक्तमित्यास्तान्तावत्। त्रैरूप्यमिति। अणि एकम्। यति द्वितीयम्। ठञो लुकि तृ
तीयम्। तेन क्रीतम्। तृतीयान्तात् क्रयणकर्मणि वाच्ये ठञादयस्त्रयोदश प्रत्ययाः यथायथं स्युः। ननु देवदत्तेन क्रीतं पाणिना क्रीतं सन्तोषेण क्रीतमित्यादावतिप्रसङ्ग इति चेत्। सत्यम्।
करणे तृतीयैवेह समर्थविभक्तिः सापि मूल्यद्रव्यसमर्पकाच्छब्दादुत्पन्ना न त्वन्यापि। अन्यत्र हि अनभिधानान्न प्रत्ययः एतच्च तद्धितादिनिर्ह्रासव्याकरणाल्लभ्यते। तेभ्यः प्रयोगेभ्यो हिता
इति व्याख्यानात्। पुत्राच्छ च। कथं पुत्रीयः क्रतुरिति। न हि क्रतुः संयोगेनाप्युत्पात इति चेन्मैवम्। संपुज्यतेऽनेनेति व्युत्पत्त्या हि येन यागादिकरणेन पुरुषाः फलेन संयुज्यन्ते स यागादिरपि संयोगः।
न केवलं संबन्ध एवेत्याग्रह इति हरदत्तः॥ ॐ युत्पत्त्या यागादेरेव संयोगत्वं कैयटेनोक्तम्। धनपतिसंयोगो पीदृश एव। तेनापि पुरुषाः फलेन अन्नवासआदिरूपेण संयुज्यन्त एवेति। यथासंख्यनिरासार्थ इति। अ

तदेतेन सर्वमुपसृष्टविशेषणमित्यादिभावः ॥

म.श. नकर्त्तरीति।व्याख्यानादितिभावः।नोद्भावनीयमिति।येत्वेनंनित्यसापेक्षंब्रुवते तेषामविरुद्धत्वात्स्यैवग्रहणंन्याय्यमितितात्पर्यम्।प्रत्येकमिति।यद्यपितथाविवक्षानसूत्रेतिसिद्धातथापिसौत्र
२१८ त्वादेवतथाविवक्षाकृत्वाएकवचनंप्रयुक्तमितिभावः।सूत्रेतृतीयोपसर्गभ्रमंव्यावर्त्तयति।षष्ठइति।संव्यवहरतियोगेउपसंभ्यांसमानार्थ इतिभावः।च्छेद इति।अत्रमानमुत्तरसूत्रे द्र्याढकीति
तस्येश्वरः।तत्रविदितइतिच।योगविभागोयथासंख्यनिरासार्थः उत्तरार्थश्च।तस्यवापः।तस्येतिवापापेक्षयाकर्मणि षष्ठीनकर्त्तरि।तेनदेवदत्तस्यवापः क्षेत्रमित्यादौन।त
द्स्मिन।शुल्कग्रहणंप्रपञ्चार्थम्।तस्याप्याद्यविशेषत्वात्।तथाचशौल्कशालिकइत्यत्रठगायस्थानेभ्यइतिठग्भवति।अर्द्धिकइति।अर्द्धाच्चेतिवक्तव्यमितिटिठन्प्राप्तः स
तिचतस्मिन्ङीप्स्यात्।इष्यतेतुटाप्।रूपककस्येति।रूपकंकार्षापणम्।रूढइति।तथाचभाष्यावदपेक्षत्वेनासामर्थ्यंनोद्भावनीयमितिभावः।व्याख्यान्तरमिति।अत्रपक्षे
भारभूतार्थाभिधायित्वाद्वंशादयोभारशब्देनोच्यन्ते।प्रत्येकसंबन्धविवक्षयासूत्रेएकवचनम्।वस्नद्रव्याभ्याम्।वस्नोमूल्यम्।संभवत्यवहरतिपचति।आधारत्वंप्रमाणाधेयप्रमाण
स्यपत्स्याधिक्यंतदुपसर्जनंधारणंसंभवतेरर्थः।अतःसकर्मकत्वात्तद्दित्यनुपपत्त्यालभ्यमानाद्वितीयासमर्थविभक्तिर्नविरुध्यते।तदाह।प्रस्थिकमित्यादि।सूत्रेअवहर
तीत्यत्रषष्ठउपसर्गस्तद्व्याचष्टे।उपसंहरतीति।तत्पचतीति।पचतिग्रहणंसंभवत्यवहरतिनिवृत्त्यर्थम्।द्रोणप्रमितेत्रीह्यादौद्रोणशब्दः।आढकाचिन।पक्षेठ
ञिति। नतुठक्।आढकादीनांपरिमाणत्वात्।द्विगोः ष्ठंश्च।ष्ठन्निति च्छेदः।तदाह।षित्वादिति।अपरिमाणेति।तस्मिन्सूत्रेआचितशब्दस्यसाक्षादुपादानादिति
भावः।तदस्यपरि।इहपरिमाणशब्देनपरिच्छेदकमात्रंगृह्यते नतुसर्वतोमानमेवंमुत्तरसूत्रेसंख्यायाः परिमाणेनविशेषणात्।षष्टीर्जीवितपरिमाणमस्य
षाष्टिकः।पञ्चदशमन्त्वाइति।साम्नास्तुवीतएकंसामत्र्यृचेक्रियतेइतिहिश्रुतिः।तत्त्र्यृचस्यपञ्चकृत्वआवृत्त्यापञ्चदशमन्त्राः सप्तदशेस्तोमेअन्त्यायाः
सप्तकृत्वआवृत्तिः।एकविंशेत्र्यृचस्य ॥
भाष्यप्रयोगः।उत्तरसूत्रेइति।अर्थाधिकारानुरोधेनोत्तरसूत्रनिर्णीतार्थग्रहणस्यैवौचित्यमितिभावः।तत्त्र्यृचस्येति।एकविंशेत्र्यृचस्येतिचपाठः ॥ राम: २१८

प्रत्याख्यानमिति। विग्रहदर्शनान्नित्यग्रहणानर्थक्यमिति तत्रोक्तं। मूले नित्यं गच्छतीति विग्रहप्रदर्शनं तु वस्त्वनुरोधेनेति भावः। स्वरूपग्रहणमिहेति। तन्मात्रग्रहणमित्यर्थः। व्याख्या-
नमिति। वृत्तिकारादीनामिति शेषः। अथ यसीति सूत्रभाष्यात्तु अत्राप्यनुवृत्तिरेव लभ्यते। परत्वादिति। उत्कृष्टत्वादन्तरङ्गत्वादित्यर्थः। इत्येतमविग्रहवाक्ये एव समासान्तप्रवृत्तेः पर-
त्वमयुक्तमित्यपास्तम्। समासान्ते कृते हन् शब्दान्तद्विगोरभावात् प्रकृतसूत्रस्यैवाप्राप्तिरिति भावः। तत्र शङ्कते। न चेति। समासान्त इति। तदप्रवृत्तौ हि अह्नलोपो न स्यात् द्वैयह्निक
पन्थो ण नित्यम्। अत्र नित्यग्रहणं भाष्ये प्रत्याख्यातम्। उत्तरपथेन। चकाराद्गच्छतीति प्रत्ययार्थ आकृष्यते तदाह। उत्तरपथेन गच्छतीति। कालात्। स्वरूपग्रहणमि-
ह न भवति। तमधीष्टो भृतो भूतो भावी इत्यत्र संयोगे द्वितीयानिर्देशान्मासाद्यसीत्यादौ मासादीनां कालेन विशेषणाच्च। तेन निर्वृत्तम्। तेनेति करणे तृतीया। चतुर्थ्य-
न्तर्गते तेन निर्वृत्त इत्यत्र तु कर्त्तरि तृतीयेति विशेषः। उभयत्राप्यन्तर्भावितण्यर्थाद्वृत्तेः कर्मणि क्तः। मासाद्यसि। खञोऽसिद्धकरणं स्वरार्थं पुंवद्भावप्रतिषेधार्थं च। मासीनाभा-
र्यः। द्विगोर्यप्। मित्वादनुदात्तः। तेन कालान्ते द्विगाविति पूर्वपदप्रकृतिस्वरोऽवतिष्ठते। यवपीति। अत्र च व्याख्यानं शरणम्। द्वैयह्निक इति। नन्वत्र राजाहःसखिभ्य इति परत्वाट्-
टचा भाव्यम्। न च महाविभाषया टचो विकल्पः। इहतीजात्यन्ताः समासान्ताश्चेति नित्येषु परिगणनात्। तत आह। समासान्तविधेरिति। द्विवर्षीणो व्याधिरिति। आधिशब्देन प्रत्यया-
र्थस्याचेतनतोक्ता। चित्तवतीति हि नित्यं लुग्वक्ष्यते। परिजय्य इत्यस्य विवरणं जेतुं शक्य इति। महानाम्न्यो नामेति। तथा चाभाषितपुंस्कत्वात्पुंवद्भावो नेति भावः। हरदत्तस्त्वि-
ति। यौगिकोऽयं न तु रूढ इति मन्यते। अव्ययसङ्ख्यातादिति। वचनसामर्थ्याद्वाक्यादपि प्रत्यय इति भावः। कालाद्यत्। काल्यं शीतमिति। प्रातःकाले काल्यशब्दस्य व्युत्पत्त्य-
न्तरं मृग्यम्। प्रकृष्टे ठञ्। प्रकृष्यते यमिति प्रकृष्टः। कर्मणि क्तः। ठञ्ग्रहणं विस्पष्टार्थम्। अन्यथा नन्तरस्य यतोऽनुवृत्तिराशङ्क्येत। ठञः पूर्णो ऽवधिः ॥
इत्यस्य सिद्धिरिति भावः। मन्यत इति। अत्रारुचिस्तु भाष्यकृतो महानाम्निकमित्यकृतपुंवद्भावोदाहरणविरोधः। वाक्यादपीति। अपिना अखण्डाव्ययादिसपि सूचितम्। काल्यशब्दस्येति पाठेन
शैवेत्यर्थः। कल्यशब्दोऽहर्मुखवाचीति संख्यायाविधार्थ इति सूत्रे भाष्यकैयटयोः। मृग्यमिति। तदलाभान स्याद्व्युत्पन्नत्वमेवेति तात्पर्यम् ॥ ठञोऽवधिः समाप्तः ॥

म॰शा॰ नपुंसकमिति। सूत्रे उदाहरणे चेति शेषः। तत्रापि समापार¯ विशेषणत्वात्। लक्षणयेति। एतेन जातिविशिष्टं द्रव्यं ब्राह्मणशब्दार्थो न च तेन क्रियायास्तुल्यत्वमसत्यन्तभेदादिति परास्तम्। सोऽपि
२२० वादिष्वसाधारणो धर्मः। इत्यर्थ इति। गुणपदमक्रियोपलक्षणमित्यर्थः। उपेक्ष्य इति। पर्वते षष्ठीसप्तम्योरदर्शनात्तत्र नसेवेसनेनापि न वतिः। भेदेति। भेदविशिष्टं भेदकं विशेषणं संबन्ध
तेन तुल्यं क्रिया चेदिति। तुल्यमिति सामान्येन पुंसकम्। ब्राह्मणेनेति। ब्राह्मणशब्दस्तत्कर्तृकेऽध्ययने लक्षणया वर्तते ब्राह्मणकर्तृकाध्ययनतुल्यमध्ययनं वाक्यार्थः।
ति गुणतुल्य इति। अक्रियया तुल्य इत्यर्थः। अत एव महानसवद्देवैः साधुत्वरक्षणार्थं प्रतिज्ञावाक्ये वह्निमान् भवितुमर्हतीत्यादिक्रियापदं प्रयुञ्जते वृद्धाः। अर्वाचीनास्तु
महानससदृशः पर्वत इति भाषमाणाः सूत्रविरोधादुपेक्ष्याः। ननु तद्रीत्याव्युत्पन्नस्य तादृशबोधोऽप्यनुभवसिद्ध इति चेत्सत्यम्। तादृशेऽर्थे साधुत्वमात्रं निराक्रियते न तु बो
धमपि। तथाहि। भेद्यभेदकसंबन्धोपाधिभेदनियन्त्रितं साधुत्वं तदभावेऽपि बोधो नेह निवार्यते। अव्युत्पन्नस्यासाधुभ्योऽपि बोधात्। तत्रैव व्युत्पन्नस्यासाधुभ्योऽपि बोधाच्च।
कस्मात्किं बुध्यत इति न नियन्तुं शक्यम्। किंतु किंविशेष्यके किंप्रकारके किंसंसर्गके बोधे उद्देश्ये किं साधु किं नेत्येव शास्त्रीयविचारविषयः। उक्तं हि भगवता स
सामर्थ्यावगतौ शब्दे ह्यपशब्दे च भक्ष्याभक्ष्यादिवन्नियमः क्रियत इति। तत्र तस्येव। द्रव्यगुणादितुल्यार्थ आरम्भः। क्रिया चेदिति नानुवर्तते। तदर्हम्। अर्ह
शब्दः पचाद्यजन्तः तद्योगे कर्मणि षष्ठी प्राप्ता सौत्रो विभक्तिव्यत्यय इत्येके। अन्ये तु कर्तृकर्मणोरिति षष्ठ्या अनित्यत्वे लिङ्गमिदम्। तेनाध्यापेरामोदमुत्तममिति
भट्टिप्रयोगः समाहित इत्याहुः। विधिमर्हतीति। द्वितीयान्तादेव प्रत्यय इति स्फुटीकर्तुं तिङन्तेन विग्रहः। कथं तर्हि गतो यथावद्विहिताध्वरायेति। उच्यते। यथाश
न्दो वृत्तिविषये सत्त्वार्थकः। तथात्वं यथात्वमित्यादिप्रयुक्तत्वादिदर्शनात्तथा च द्वितीयान्ताद्धार्थे वतिः। योग्यतामर्हति विधानमाख्यानं वेत्यर्थात्क्रियायोगेऽपि सुलभः ॥
स्तयोः संसर्गः उपाधिः पष्ठ्यादिः। ननु मथुरायामिव पाटलिपुत्रे प्रीतेस्तस्य मथुरयातुल्यमप्रीतद्रव्यत्वं च तुल्यत्वात्पूर्वसूत्रेणैव सिद्धमत आह। द्रव्यगुणादीति इत्याहुरिति। अत्र रुचि शा॰म॰
बीजं तु भाष्याद्यनुक्तत्वम्। आख्यानं वेति। यथावत्ख्यातरत्नायेत्यतदभिप्रायकमिदम्। योग्यं यद्विधानमाख्यानं वा तत्कर्माध्वरादि संबन्धिनेत्यर्थः ॥ २२०

द्रव्यत्वादेरिति। पृथिवीत्वमादि ग्राह्यम्। प्रयोगोपाधिरिति। वस्तुगत्या प्रकृतिजन्यबोधे प्रकारो यस्तस्य धर्मत्वेनाभानमित्यर्थः। एतावतैव प्रयोगोपाधिरिति व्यवहारः। द्वितीये त्विति। तुना
रुचि सूचिता। तद्बीजं तु सर्वत्र प्रकृतेर्लक्षणायामानमानम्। किं चातस्येत्यस्मान्न शब्दपरत्वे गुणवचनेति सूत्रे कर्मणीत्यनेनान्वयः। भाष्ये तु संज्ञाशब्दे द्रव्यमात्रबोधकत्वमिति मते प्रकृति
तत्स्वभावस्त्वतलौ। प्रकृती इति। ननु यः कश्चित् धर्मः। घटत्वमित्यत्र कुम्भत्वादेरभानात्। गोर्भाव इति। इह गोशब्दोऽर्थपरः स्वरूपपरो वेति पक्षद्वयम्। आद्ये धर्मविशेषः प्र
त्ययार्थः। स च धर्मत्वेनैव भासते। प्रकृतिजन्येत्यादिस्तु प्रयोगोपाधिः। द्वितीये। जन्यबोधप्रकारः प्रत्ययार्थः। बोधप्रकारमात्रं वा। जन्यत्वं तु संसर्गः। सर्वं चेदं सूक्ष्मदृशांभा
यकैपदारूढमेव। एवं स्थिते कृत्तद्धितसमासेषु एकार्थीभावाभ्युपगमात् तदुत्तरत्वतलादिभिरपि कृत्येवार्थबोधनिर्वाहे तत्र नापूर्वशक्त्यन्तरकल्पनं किंतु तत्र प्र
कृतिप्रत्यययोः पूर्वोत्तरपदार्थयोश्च संसर्गोऽपि प्रायेण प्रकारतया प्रविशति। औपगवो राजपुरुष इत्यादौ तु प्रत्ययार्थस्य वृत्तौ प्रवेशासंभवात् पाचक इत्यादावपि का
रकाणां प्राधान्यात्। कर्तृत्वादेश्च संबन्धविशेषात्मकत्वात्। तदेतदभिप्रेत्य हरिकारिकायामुक्तम्। कृत्तद्धितसमासेभ्यः संबन्धाभिधानं भाव प्रत्ययेनेति। विस्तरः
शब्दकौस्तुभे बोध्यः। पृथ्वादिभ्य इमनिज्वा। अणादीति। येऽगन्ता लघुपूर्वाः मृदुप्रभृतयस्तेषामणः समावेशः। चण्डखण्डादिषु गुणवचनेन ष्यञः। बालवत्सा
दिषु वयोवचनस्याञ् इति बोध्यम्। त्वतलौ तु पूर्वसूत्रेणैव लब्धौ। वर्णदृढादिभ्यः। गुणवचनत्वादेव सिद्धे इमनिजर्थं वचनम्। औचितीति। ब्राह्मणादेराकृतिग
णत्वात्ष्यञ्। हलस्तद्धितस्येति यलोपः। एवं याथाकामी। अत्र गणसूत्रं वेर्यातलाभमतिमनः शारदानाम्। विशब्दादुत्तरे ये यातादयः पंच तदन्तानां समासानाम
न्तरः ष्यञ् भवतीत्यर्थः। वियातत्वम्। वियातता। वियातिमा। वैयात्यम्। विलाभत्वम्। विलाभता। विलाभिमा। वैलाभ्यम्। विमतित्वम्। विमतिता। विमतिमा। वैमत्यम् ॥
प्रत्ययार्थयोर्भेदानुपपत्तिमाशङ्क्याह यं प्रत्येकदेशिनोक्त इति बोध्यम्। प्रकारतयेति। प्रवृत्तिनिमित्ततयेत्यर्थः। एतन्मूलिकैव संबन्धाभिधानमित्युक्तिरित्यन्यत्र विस्तरः। शब्दकौस्तुभे इदिते
सूत्रस्थे वयोवचनस्याञ् इति। अत्र ग्रहणं तदपवादपुरोहितादियकोऽप्युपलक्षणम्। एतेन बालस्य पुरोहितादिषु पाठेन बालादञ् इत्ययुक्तमित्यपास्तम्। सिद्धे इति। ष्यञोऽर्थः ॥

इगन्तत्वादणपीति। इदं चात्र बेत्यनुवर्त्तयतां मते बोध्यम्। एवं सामतमिसपितदनुवृत्तौ तुष्यञाबाधादण्विन्स्यः। इत्यादापीति। आदिनाप्राग्दीव्यत इति। अपिः सौलभ्ये। अस्तु वेस्यने
इगन्तत्वादणपि। वैमतम्। वैमनस्त्वम्। विमनस्ता। विमनिमा। वैमनस्यम्। विशारदत्वम्। विशारदता। वैशारद्यम्। विशारदिमा। संमोमतिमनसोः। संमतित्वं संमतिता। संमतिमा। सांमत्यम्। पूर्ववदण्। सां
मनमित्यादि। गुणवचनब्राह्मणादिभ्यः। कर्मेह कि याकार्य्यच। ब्राह्मणादिराकृतिगण इति। केषांचित्पाठस्तु कार्यान्तराय। तथाहि। अर्हतो नुम्चेति नुमर्थः पाठः। एकभावत्रिभाव
अन्यभावइति। एषां पाठः स्वार्थे विधानार्थः। तथा च वार्त्तिकप्रयोगः। अन्यभाव्यं तु कालशब्दव्यवायादिति। यत्तु माकरणाधिकरणेऽपप्रयोगामितिभट्टैरुपन्यस्तं। नत्पूर्वपक्षि
णः ग्रौढिवादमात्रम्। प्रायेण तस्मिन्नघट्टके तादृशानामेवोपन्यासात्। तद्यथा। अविरविकन्यायेनेत्युदाहृतं। न दृपि हि वस्तुतो निर्दोषमेव। अविः अविकः अनयोर्मध्येविकाद्दि
प्रत्ययः कप्रत्ययान्तादेव न तु के प्रलात्। तेन आविकं मांसमिति भवति न तु आवमिति मुत्यादितं। तत्र अविरविकमिति सुवंतद्वयसमुदायेचरमं सुपं विहाय प्राग्भाग मनुकृत्य
अविरविकन्यायेनेति भगवता व्यवहृतं तत्र को नाम दोषः। नहि विभक्तिविशिष्टमेवानुकर्त्तव्यमिति नियमे बीजमस्ति। अस्यवामीयमित्यादि निरूढव्यवहाराच्च। एतेन नासदासीयं
ब्रह्मसूक्तमिति शाङ्करभाष्यप्रयोगोपिव्याख्यातः। आसीदितत्र नकारं विहाय प्राग्भागस्यैवानुकरणात्। प्राग्रीश्वरादित्यादावप्यनर्थकस्यैकदेशस्यानुकरणं प्रसिद्धमेव। अस्तु वा आसी
दितितां नस्यानुकरणं ततः अनुकरणं चानितिपरमिति नि पातत्वादव्ययत्वे अव्ययानां भमात्र इति टिलोपः। प्रकृतमनुसरामः। सर्ववेद इति। पूर्वकालैकेति समासः। चतुर्वेद इति।
तद्धितार्थेति द्विगुः। अणो लुक्। चतुर्विद्य इति। विद्यालक्षणसूत्रान्तादिति ठक्। तस्य लुक्। सङ्घातग्रहणमिति। वर्णग्रहणे तु अकारस्य यस्येति लोपे नस्य पूर्वविधौ स्थानिवद्भावाद्यादेशः
स्यादिति भावः। ननु सङ्घातग्रहणेऽपि अल्लोन्त्यस्येति कृते नेति चेत्। आरम्भसामर्थ्यात्। नानर्थके लोन्त्यविधिरिति निषेधाद्वा। कपिज्ञात्योः। इह कपिज्ञातीशब्दौ ढो। अर्थात् पितृ। तयोर्य
यासंख्यं नेष्यते। एवं पत्यन्तपुरोहितादिभ्यः। हायनान्तयुवादिभ्यः। द्वन्द्वमनोज्ञादिभ्य इत्यत्रापि बोध्यम्। ब्राह्मणादित्वादिति। यद्यपि ब्राह्मणादिषु राजन्शब्दः केवलः पठ्यते तथाप्ययमेवासेद्
तिप्रतिषेधो ज्ञापयति अस्त्यत्र राजशब्देन तदन्तविधिरिति। एवं च ब्राह्मणादिपाठस्य समासे चरितार्थत्वात् समासे विशेषविहितोऽयमेव भवति॥ अत्र समाधानेन नास्यासङ्गिता। तहि जत्तु अनुकरणं

श्कीयमतत्वेनेति। अत्रारुचिस्तु बहूनां पाठस्यैवं वैयर्थ्यमापततीति। सुवचमिति। प्राणसंबन्धार्थकस्य प्राण —— कर्तृत्वार्थकस्य च न पर्यायत्वं फले तु न विशेष इत्यन्यदिति भावः। दे
वदत्तत्वमिति। पारिभाषिकजातित्वस्य तत्राभावादिति भावः। सङ्घातग्रहणमिति। अन्यथा यस्य सकारलोपस्यासिद्धत्वात्स्थानिवत्वाच्चेकारान्तस्य भत्वाभावेन यस्येति लोपाप्राप्ताविकारस्य य
अत एव अवेश्यधिकरणे रात्तः कर्म राज्यं ब्राह्मणादित्वात् ष्यञिति शात्ररभाष्यं भट्टपादैर्दूषितम्। केचित्तु भाष्यं समर्थयमाना इत्थमाहुः। ब्राह्मणादेराकृतिगणत्वादेवतद
न्वात् ष्यञि सिद्धे राजन्शब्दस्य तत्र पाठो यकारसहसमावेशार्थ इति। एतन्मूहरदत्तमाधवाभ्यामेकीयमतत्वेनोपनिबद्धम्। प्राणभृज्जाति। प्राणिजातीत्येव सुवचम्। प्राणभृ
दितिकिम्। तृणत्वम्। जातीतिकिम्। देवदत्तत्वम्। औद्गात्रमिति उद्गात्रादिषु येऽन्त्यास्विम्वचनास्तेभ्यो होत्राभ्यश्छ इति च्छे प्राप्तेऽञ् विधीयते। सुष्ठुदुष्ठुशब्दाभ्यां गुणवचने [illegible] पृशब्दादिग
न्तलक्षणे णिः। शेषेभ्यस्त्वतलोः प्राप्तयोः। श्रोत्रियस्येति। श्रोत्रियंश्छन्दोऽधीते इति छन्दसः श्रोत्रभावः घन्प्रत्यय इति यदा आरभ्यमाणन्ते इह लोप इति यथाश्रुतम्। यदा तु वाक्यार्थे पदवचनमि
तिपक्षः। तदा घशब्देनेय इति रूपं लभ्यते। क्वचित्तु यलोपश्चेति पाठः। तत्र पदेति सङ्घातग्रहणं द्रष्टव्यम्। इगन्ताच्च। लघुः पूर्वो यस्मादिको यस्येति प्रातिपदिकविशेषणम्। पूर्वत्वं च संनि
धानाद्विगवधिकमेव। इगन्तात्किम्। पटत्वम्। लघुपूर्वात्किम्। पाण्डुत्वम्। कथं काव्यमिति। यद्यपि कुधातोरोरावश्यके इति ण्यति काव्यमिति सुसाधम्। तथापि कवेः कर्मेत्यर्थे का
वमिति स्यादिति प्रश्नः। आभिधानीयकमिति। अभिधेयस्य भावः कर्म वेत्यर्थः। सहायाद्वेति। सूत्रेणं नित्ये प्राप्ते विकल्पार्थं वचनम्। गोत्रचरणात्। आपत्याधिक। इदन्यत्र लौकि
कं गोत्रम्। तेनापत्यप्रत्ययान्तेभ्य इत्यर्थः। प्रवराध्याये पठितेभ्य इत्यपरे। गोत्रचरणैः सहेति जातित्वात्प्राणभृज्जातीत्यञि प्राप्ते वचनम्। श्लाघेत्यादि। श्लाघादिषु विषयभूतेष्वित्यर्थः।
प्राप्त इति। इणः प्राप्त्यर्थत्वात्। अवगतवानेवेति। अवपूर्वस्येणो ज्ञाने प्रसिद्धत्वात्। गार्गिकयेति। आपत्यस्येति यलोपः। होत्राभ्यश्छः। होत्राशब्द इति। जुहोतेस्त्रन्। ब्रह्मणस्त्वः। नेति वाच्य
इति। क्त्वप्रत्यये प्रतिषिद्धे तस्य भावः त्वतलावित्येव त्वः सिद्धः। विभक्तेरनुच्चारणात् लाघवं चेति भावः। ब्राह्मणेति। अनेन होत्राभ्य इत्यनुवृत्तेः फलं दर्शितम्। नञ्स्नञोऽधिकारः समाप्तः ॥
णेव स्यादिति भावः। इगवधिकमेवेति। तेन कृशानुत्वमित्यत्र न। इत्यपरे इति। इदमेव युक्तम्। विषयभूतेष्विति। श्लाघनइत्यादि पदान्तरोपादानेन तद्विषयत्वेवेति भावः। विभक्तेरिति। त्वशब्दोत्तरयाद

धान्यानामप्रद्‌यम्। धान्यानामित्येषा। निर्द्देशादेवेति। व्रीहिशाल्योरिति धान्यानामिति च षष्ठीनिर्द्देशादेवेत्य र्थः। नन्वलौकिके भवनशब्दयोगाभावेन कृद्योगलक्षणषष्ठ्या दुर्लभत्वेन क
र्थं स्यात्समर्थविभक्तिरत आह। अलौकिके इति। न चालौकिके तृतीयेति युक्तम्। प्रत्ययवाच्यभवनस्याक्रियात्वेन तस्या अप्यप्रवृत्तेः। कर्त्तुरेव शेषत्वविवक्षया षष्ठ्यां न काऽपि शङ्का। ननु यव
धान्यानां भवने। भवनापेक्षयाकर्त्तरि षष्ठी यम्। भवतिरिहोत्पत्तिवचनः। व्रीहिशाल्योः। निर्द्देशादेव षष्ठी समर्थविभक्तिः। सा च भवनापेक्षया कर्त्तरीत्युक्तमेव॥ अ
लौकिके प्रक्रियावाक्ये तु तद्धितविधावनुवादसामर्थ्यादेवेति बोध्यम्। यवयवकं। अत्र प्रत्ययार्थसामर्थ्याल्लभ्या षष्ठी समर्थविभक्तिः। विभाषा। खञिप्राप्ते वचनम्। न
चोमाभङ्ग्योर्धान्यत्वे विप्रतिपन्नव्यम्। श णसप्तदशानि धान्यानीति स्मरणात्। तत्र चोमाभङ्ग्योरपि पाठादिति भाष्ये स्थितम्। सर्वचर्मणः। अत्र तृतीयाऽसमर्थविभक्तिः
सामर्थ्यात्। कृत इति हि प्रत्ययार्थः। तत्र चर्मणः करणत्वमेवोचितम्। यथामुखं। दृश्यते ऽस्मिन्निति दर्शन आदर्शादिः अधिकरणे ल्युट्। नन्वसादृश्य इति प्रतिषेधा
त्कथं समासस्तत्राह। निपातनादिति। एतच्च वृत्तिग्रन्थमनुसृत्योक्तम्। भट्टिकाव्ये तु पदार्थानतिवृत्तौ यथाशब्द आश्रितः। तथा च मायामृगं प्रक्रम्योक्तम्। यथामु
खीनः सीतायाः पुप्लुवे बहु लोभयन्निति। यथामुखं दर्शन इति। अव्ययीभावस्यापि यथामुखशब्दस्योन्मत्तगङ्गादिवत्सत्ववचनत्वात्। कर्मशक्तियोगे सति कृ
द्योगलक्षणा षष्ठी नाव्ययीभावादित्ययम्। सर्वस्येति। संमुखस्येति तु नोक्तम्। प्रत्ययसंनियोगेनान्त्यलोपनिपातनात्। संशब्दस्तु समशब्दस्यार्थे प्रायेण न दृ
श्यते। संमुखो भवेत्यत्राभिमुखो भवेत्यर्थप्रतीतेः। तत्र च खप्रत्ययस्यानिष्टत्वात्कथं तर्हि संयुगे संमुखीनं तमुद्यन्तं प्रसेहे तकः इति भट्टिः ॥

यवकेत्यादौ भिन्नविभक्तित्वाद्धान्यानामित्यस्यासंबन्धेन कथं समर्थविभक्तिरत आह। अत्रेति। अलौकिके तु प्राग्वदेव तत्त्ववेद्यः। न चेति। एवं च खञिप्राप्ते इत्यसङ्गतमिति भावः।
पाठादिति। शणपाठे न तयोरपि शणत्वेन तत्र पाठादित्यर्थः। भट्टिकाव्ये त्विति। एवं चोभयप्रामाण्यादुभयोरप्यत्र ग्रहणम्। दर्शनशब्दः कर्मव्युत्पन्नोऽपीति भावः। कर्मशक्तियो
गे सतीति। इदं त्वभिमतार्थके। प्रत्ययसंनियोगे नेति। अत एव भाष्ये समसुखस्य दर्शन इति विग्रहो दर्शितः ॥

साधर्म्यादिति। संमुखीनादर्शादिनेति शेषः। हरदत्त इति। कैयटोऽप्येवम्। ग्रहणेन ग्रहणादिति। समासान्तानां समासावयवत्वादिति भावः। यस्येति। पादसंधिर्दैर्घ्यसदृशादेर्घ्य
वतीत्यर्थः। यथार्थ इति। पदेन सदृशीस्यर्थोऽत्र। स्थलविशेष इति। अयानयपदस्य गतिविशेषे रूढस्य स्थलविशेषे लक्षणेति एतद्भावः। युक्तं चैतदेव। अयः प्रदक्षिणग
मनमनयः प्रसव्यम्। प्रदक्षिणंप्रसव्यगामिनां शाराणां यस्मिन् परैः पदानामसमावेशः सोऽयानय इति भाष्यात्। एकद्यूतकारापेक्षया शारस्य प्रदक्षिणं गमनमयः। द्वितीया

अभिमुखावस्थानात् साधर्म्यादिति हरदत्तः। सर्वपथीन इति। पूर्वकाले केति समासः। ऋक्पूरिति समासान्तः। तस्य षष्ठ्यन्तं ग्रहणेन ग्रहणात् खः। अनुपदस्
वी। बद्धाभक्षयतिनेयेष्विति निपातनात् तिङन्तस्य द्वन्द्वः। अनुगायाम इति। यस्य चायाम इति यथार्थे यदव्ययमिति वाव्ययीभाव इत्यर्थः। स्थलविशेष इति। गतिविशेष
इति आख्यान्तरम्। नयतेः प्रधाने कर्मणि यत्। अप्रधाने द्वितीया। अत्रेयं द्यूतशास्त्रमर्यादा। चतस्रो वीथयः। प्रत्येकं द्वादशकोष्ठोपेताः। शारास्तु त्रिंशत् ते च एकैकेन
कितवेन पञ्चदश स्ववामपार्श्वस्थप्रथमकोष्ठपर्यन्तं प्रदक्षिणप्रसव्यगतिभ्यां नेयाः। सर्वेऽप्ययानयीनाः। ससहायस्य शारस्य परैर्नाक्रम्यते पदम्। असहायस्तु शारेण परकीयेण बा
ध्यते। एष बहुसंमतोऽर्थः। यत्तु कैयटेन द्वयोः पर्युदासेन त्रयोदशानामेवायानयीनतेत्याशयेन मतान्तरं केचित्त्वित्यादिनोक्तम्॥

पेक्षया प्रसव्यं वामापरपर्यायं गमनमनयो रूढ्योच्यत इत्यर्थकेन प्रसव्यमित्यन्तेन शक्यार्थ उक्तः। ततस्तादृशगतिशालिनां शाराणां यस्मिन् पदे युष्मादिपदे स्थितानां परैः परकीयैः शा
रैस्तद्व्यानभूतानां पदानामसमावेशोऽसंबन्धः तद्बाधाभावरूपस्तत्पदमयानय इति लक्ष्यार्थो दर्शितः। स इति पुंस्त्वं त्वयानयस्य पुंस्त्वात्। गतिभ्यां नेया इति। सर्वत्र ससहायपदे स्थाप
नापूर्वकमिति शेषः। ते हि ससहायपदरूपमयानयं स्थानविशेषं प्राप्यैव फलकशिरः प्राप्यन्त इत्ययानयीनाद्दूरव्यन्त इत्यर्थः तदाह। ससहायस्येति। शेषं द्वादशकोष्ठोपेतत्वम्॥

केचिन्मतेद्वयोः पर्युदासेबीजमाह। प्रदक्षिणप्रसव्यतेचेत्यादि। तेच। एकैकंकितवंप्रति दक्षिणप्रसव्यतेच। अत्र मतेगतिविशेषएवायानयः। तदुक्तंगतिविशेषइतिमतान्तरे
म्। तथाचकैयटः तत्रकेचित्फलकशिरस्यस्यैवस्वशारवर्गमानेयस्यायानयीनमित्यभिधानमिच्छन्ति। यस्तुशारएकपार्श्वेएवसंचरतितत्रनभवतिप्रत्ययः। योहिशारः पार्श्वात
तन्मतेद्वेएववीथीशेषंप्राग्वत्। प्रदक्षिणप्रसव्यतेचएकैकंकितवंप्रतिविवक्षितेनतुकंचित्प्रतिकिंचित्। तेचपङ्क्तिचरमकोष्ठस्थाभ्यांद्वाभ्यामितरेषामेवेति
बोध्यम्। शारइति। शृणातेरनेनद्यूतकाराः परस्परमितिशारः। द्यूतसाधनविशेषः। बाहुलकाद्धञ्। परोवरः। अवरस्येति। आदेरितिशेषः। उत्वेकृतेआद्गुणः। अवार
पारङ्गामीति। गमेरिनिः। आङिणिच्चेतिबहुलवचनात्केवलादपिणिनिः। भविष्यतिगम्यादयइतिभविष्यत्कालता। न्यासकारस्तुआवश्यकेणिनिः। सोपिभविष्यत्त्वे
वेत्याह। अद्यश्वीन। अविभक्तिकोनिर्देशोनतुस्त्रीलिङ्गनिर्देशोयम्। अद्यश्विनोगोसमूहः अद्यश्वीनगोमण्डलमित्यादावपीष्टत्वात्। आसन्नमित्यर्थइति। अवा
च्यालंबनेतिसूत्रेणआविदूर्येसंभेः षत्वविधानाद्वष्टब्धशब्दः आसन्नपरइत्यर्थः। अद्यवाश्वोवेतिवार्थेसमासोःपिनिपातनादेव। आगोशब्दोगोः प्रतिदानेलक्ष
णापावर्ततेइतिदर्शयति। प्रत्यर्पणपर्यन्तमिति। आगवीनइति। आङ्मर्यादाभिविध्योरित्यव्ययीभावेउपसर्जनह्रस्वत्वेचकृतेखप्रत्ययः। ओर्गुणः। गोः पश्चादि
ति। पश्चादर्थेव्ययीभावः। पर्याप्तमितिक्रियाविशेषणम्। अत्रहरदत्तः। द्वितीयान्तादिहप्रत्ययः। अनुग्विलस्यक्रियाविशेषणत्वात्। नचालङ्गामीत्यस्यसुप्यजा
ताविति णिनिप्रत्ययान्ततया कृद्योगलक्षणाषष्ठीस्यादितिवाच्यम्। क्रियाविशेषणात्तदप्रवृत्तेः। शोभनंपाचकइत्यादौतथादर्शनादित्याह। तत्रकृत्यर्थंप्रतिहिक
र्मत्वम्। तच्चनभावनामात्रंप्रति। तत्कर्मणोविक्लित्यादेःप्रातिपदिकार्थत्वाभावात्। सङ्कोचेमानाभावाच्च॥ ७ पार्श्वान्तरंनीयतेसएवायानयंनीयते अन्यस्त्वयमेवनीयतेऽन
यमेवेति। एतद्रूपेणहेएववीथ्यौसादिलाभः कथमितियूतशास्त्रज्ञैर्बहुश्रुतेर्निर्णेयम्। सोपिभविष्यत्त्वेवेति। भूतवर्तमानयोरापश्यकत्वबोधनस्यव्यर्थत्वात्। एवंवाकेनोरितिषष्ठीनि
षेधाद्द्वितीया। तत्रभविष्यदधिकारविहितणिनेर्ग्रहणेतुनमानम्। अतएवांशंहारीतिनिर्देशः संगच्छतइतिनद्रावः। तत्कर्मणइति। भावनामात्रकर्मणइत्यर्थः। संकोचोप्रकृत्यर्थैकदेशकर्मणोग्रहणे।

तस्याशय इति। यदि तु एवं द्वितीयापि न स्यात्तद्विधावपि संपूर्णप्रकृत्यर्थकर्मणो ग्रहणापत्तेरित्युच्यते तदा षष्ठीविधौ कर्तृसाहचर्येण धात्वर्थप्रतिभेदेनान्वयि यत्कर्म तद् गृह्यते क्रिया
विशेषणस्तोकादीनां तु नैवंविधत्वमिति न तत्र षष्ठी। द्वितीया तु भवत्येव। न चैवं तद्विधायके साहचर्याभावात् इति तदाशयो बोध्यः। विभक्तित्रयेति। सप्तमी पञ्चमी प्रथमेत्यर्थः। अन
एव। कर्मत्वायोगादेव। अस्वपदविग्रहत्वात्। गच्छतीत्यनेनैव विग्रह इति षष्ठ्यादिशङ्कैवासंगतेति केचित्। तन्न। सूत्रे षष्ठीशङ्काराख्यात्। अनुगु अलङ्गामीत्यर्थे प्रथमोच्चारिता। नुगु
किंतु विक्लित्यनुकूलव्यापाररूपं पूर्णप्रकृत्यर्थप्रति कर्मणस्तण्डुलादेरेव षष्ठीति तस्याशयः। अत्रेदं वक्तव्यम्। पश्चादर्थे व्ययीभावोयमिति निर्विवादम्। पश्चादि
ति चास्तात्यर्थे निपातितम्। तत्र यद्यपि विभक्तित्रयसाधारणं तथापीह योग्यत्वबलात्सप्तम्यर्थ इति अतस्तस्य कर्मत्वायोगात् प्रथमान्तादेवेह प्रत्यय उचितः। कृ
योगलक्षणषष्ठीशङ्काप्यत एव नेति। अभ्यमित्रम्। लक्षणेनाभिप्रती इति समासः। क्रियाविशेषणत्वात् द्वितीयासमर्थविभक्तिः। गोष्ठात्खञ्। गावस्तिष्ठन्त्यस्मिन्निति
गोष्ठः। घञर्थे कविधानमित्यधिकरणे कः। अम्बाम्बगोभूमीति षत्वम्। एकाहेनेति। नन्विह ग्रहवृदृनिश्चिगमश्चेत्यपं बाधित्वा परिमाणाख्यायां सर्वेभ्य इति — प्राप्नो
ति। अस्ति चात्र परिमाणाख्या। एकाहेनेति परिच्छेदावगमात्। सत्यम्। अस्मादेव निपातनादप्। अध्वस्येति कर्तरि षष्ठी। शालीनकौपीने। रूढिशब्दावेतौ। अवय
वार्थे त्वनातीवाभिनिवेष्टव्यम्। शालाप्रवेशमिति। अप्रागल्भ्यादन्यत्र गन्तुमशक्तः। शालामेव प्रवेष्टुमर्हतीत्यर्थः। कूपपतनमिति। यदकार्यं तत्प्रच्छादनीयत्वात्कूपावतरणम
र्हतीत्यर्थः। तदाच्छादनमिति। वासःखण्ड इत्यर्थः। अपर आह। अकार्यशब्दे करोतिः क्रियासामान्यवचनस्तेन लज्जाहेतुत्वेनाद्रष्टव्यत्वात् पुरुषलिंगं कौपीनम्। अस्त
श्यत्वात्तदाच्छादनमिति। व्रातेन जीवति ॥७ शब्दात्प्रत्यय इत्यर्थात्। यदि त्वनुगु इति सूत्रे तु प्रपञ्चम्यन्तं अस्मात्प्रत्यय इत्यर्थस्तदा तत्रापि न शङ्क्येत्यन्ये। अन्यपदेन विभक्तिलु
कः सत्वेन न कोप्यत्र विचार इत्यन्ये। क्रियाविशेषणत्वादिति। फलद्वारा क्रियान्वयित्वादिति भावः। गामीत्यनेन गच्छतीत्यर्थे केन विग्रहे तु षष्ठ्येव समर्थविभक्तिरुचितेति केचित्। अलंगा
मिपदेनैषां वाक्यं नेष्यत इति मतेन एषु गच्छतीत्यस्य पदविग्रह एवेत्याशयेन मूले सर्वत्र गच्छतीत्युक्तिः। क्रियाविशेषणत्वाद्द्वितीयेत्युक्तिश्चेति बोध्यम् ॥

सङ्घातवाचीति। नानाजातीयानामनियतवृत्तीनां शरीरायासजीविनां सङ्घात इत्यर्थः। भारेति। व्रातपदं तत्कर्मणि लाक्षणिकमित्यर्थः। वृत्ताविति। भाष्येऽप्येवमेव प्रतीयत इति। प्रसिद्ध इत्यर्थः। क्रिया
व्रातशब्दो यद्यपि सङ्घातवाची तथापि अत्र त्वभाष्यादिपर्यालोचनया विवक्षितमर्थमाह। शरीरायासेनेति। भारवहनादिनेत्यर्थः। सप्तभिः पदैरिति। तद्धितार्थे द्विगुः। अयाप्यत
इत्यर्थे खञ्। ह्यो गोदोहस्य विकारः इयङ्गवीनम्। दोहः क्षीरमिति। गोदोह इति षष्ठीसमासः। ह्यस्शब्दस्य तेन सह सुप्सुपेति समासः। ततो विकारेऽनुदात्तलक्षणस्याञोऽपवादः खञ्। अत्र ह्यस्श
ब्देन कालप्रत्यासत्तिर्विवक्षिता। नवनीतमिति। यद्यपि वृत्तौ भाष्यादौ च घृतमित्युक्तं। अमरेणापि। तत्तु हैयङ्गवीनं यत् ह्योगोदोहोद्भवं घृतमित्युक्तं। न चापि नवनीतमेव न त्र
विवक्षितमिति हरदत्तादयः। तस्य पाकः। पाकः परिणामः मूलमुपक्रमः। जाह चोऽजकारस्यानेकत्वप्रयोजनाभावात्। पक्षतिरिति। प्रतिपत्। पक्षिणो पक्षमूलं चातेन विवृतः। वि
त्तः प्रतीतः। वित्तो भोगप्रत्यययोरिति निपातनात् साधुत्वम्। विद्याचुञ्चुरिति। उकारद्वयगर्भोऽयं प्रत्ययः। विनञ्भ्याम्। नाञोऽजकारोच्चारणार्थः। स्वार्थे च। संप्रोदश्च। चाद् इत्यः। क्रि
याविशिष्टसाधनवाचकात् स्वार्थे प्रत्ययः। रूढिशब्दा एते। अलाबू तिलेत्यादि। भङ्गाभ्य इति पाठः। भङ्गाशब्द शणवस्तः। विकारप्रत्ययापवादोऽयम्। रजसो विकारत्वात्। अला
बूकटमिति। ओरञ्। मयड्वैतयोरिति मयड्प्राप्तः। तिलोमाशब्दाभ्यां घृतादित्वादन्तोदात्ताभ्यामनुदात्तादेश्चेत्यञ्मयट् च प्राप्तः। उमोर्णयोर्वेति वुञ्च। असंज्ञायां तिलयवा
भ्याम्। तिमयट् चेति हरदत्तः। तत्र तिलशब्दस्य घृतादिलक्षणेनान्तोदात्तत्वं चिन्त्यम्। तृणधान्यानां च द्व्यषामिति फिट्सूत्रेणाद्युदात्तस्यैव न्याय्यत्वात्। तथैव तद्वृत्तावुदाहृतत्वात्।
तिलाश्च इमे इत्यत्र तथैव वेदपाठोऽपीति दिक्। भङ्गा यास्तृणधान्यानां च द्व्यषामित्याद्युदात्तत्वादण्मयट् प्राप्तः। गवां स्थानमिति। तस्येदमित्यर्थे सर्वत्र गोरजादिप्रसङ्गे इति यत् प्राप्तः। सं
घात इति। अत्र प्रस्तावयवः समूहः संघातः प्रस्तावयवस्तु विस्तारः। कटच्यटचौ द्वावपि सामूहिकानामपवादौ। द्विलेदिति। प्रकृत्यर्थस्य द्वित्वे द्योत्ये इत्यर्थः। उष्ट्रगोयुगमिति। द्व्यवयव
संघातप्राधान्यादेकवचनं। द्वयं युगमितिवत्। एवमग्रेऽपि। अवटीटमिति। नासिकायाः साधनेन नमनेऽवर्तमाना त्स्वार्थे प्रत्ययः। क्लिनस्य। अप्यवदन्ति। अस्येति नवक्तव्यं क्लिन्ने च क्षुधी वि
त्येपित्येपुरुषेतु मत्वर्थे च् ॥ ॐ विशिष्टेतिं न साधनक्रियावाचकादिति भाष्ये साहित्यमात्रं विवक्षितमिति भावः। लोके विपरीतार्थप्रतीतेः। वर्तमानादिति। अवशब्दादिति शेषः ॥

मं·श· नहेति। समर्थानामित्यादेरनन्वयेनतत्त्वंबहुमाहाविभाषायाअप्यसंबन्ध इतिभावः।तद्याचाधिकेति।एतत्सामर्थ्यादेवप्रमाणान्तद्विगोः संशयेमात्रचन्तुपरिमाणाद्यन्तात्।अप्राप्तेः।ते
२२५ नपञ्चकुडवः स्युर्नवेतिसंशयेवाक्यमेवेतिदिक्।प्रमाणत्वेनाप्रसिद्धत्वादिति।कदाप्यायामापरिच्छेदकत्वादित्यर्थः।पुरुषात्प्रमाण इतिसूत्रेप्रमाणशब्दस्तुपरिच्छेदकमात्रपर इ
तिभावः।अनुमापयतीति।द्विहस्तीतितुचिन्त्यमेवेतिभावः।नचद्विपुरुषीप्रमाणमस्यास्त्यर्थेनदघ्नपरिमाणमितिठक्षओवाद्यर्धपूर्वेतिलुकिशास्त्रस्यचारितार्थ्येनकथंतत्सामर्थ्याल्लु

ननुनेहविकल्पः प्रकृतःतत्किंनित्यग्रहणेनात्राह।अनुपदंवक्ष्यमाणः संशयेमात्रच्।शममात्रमित्यादौयथालुप्यतेप्रमाणेलइत्यस्यपूर्वविधिविषयत्वात्।एवंद्विगोर
पिनलुप्येतादृष्टत्वेनलुक्।द्वौशमौस्यातांनवाद्विशमइति।तथाचाधिकसंग्रहार्थंनित्यग्रहणमिति।पुरुषहस्तिभ्यामण्चाइनन्यणपत्यइतिप्रकृतिभावः।हास्तिनम्।
अत्रकाशिका।द्विगोर्नित्यंलुक्।द्विपुरुषमुदकमित्यादि।यद्यपिप्रमाणेलोद्विगोर्नित्यमित्यस्यनायमनुवादः पुरुषहस्तिनोःशमादिवत्प्रमाणशब्दत्वेनाप्रसिद्धत्वात्।अ
तएवहिपुरुषद्वयसमित्यादौप्रमाणेलइतिलुङ्‌भवतितथाप्यपूर्वोत्रलुग्विधीयतइतिहरदत्तः।एतच्चासंगतंमणीवादीनांप्रतिषेधइत्यस्यमुनित्रयानुक्तत्वात्प्रामा
ण्यमुक्तवद्भिःन्यायसाम्यादिह्यपितथैवचकुमुचितत्वात् । विधीयतइत्यस्यानुमीयतइत्यर्थः।अयंभावः।द्विगोस्तद्धितलुकोऽनुवर्तमानेपुरुषात्प्रमाणेऽन्यतर
स्यामितिङीब्विकल्प्यते।तदेवलुकमनुमापयतीति अनुमीयमानश्चलुक्द्वयसजादीनां नत्वणः।ग्रहणवतप्रातिपदिकेनतदन्तविधिप्रतिषेधात् द्विगोरणःप्राप्त्यभा-
वात्।यत्तदेतेभ्यः।यावानिति।आसर्वे आम्रः इत्यादौ।ननुप्रमाणइत्येवानुवर्त्यतां किंपरिमाणग्रहणेनेतिचेन् ॥ ऊकृतस्यमंतत्रहिपरिमाणशब्देनपरिच्छेदकमात्रमिति
सिद्धान्तइतिवाच्यम्।अतद्धितलुकीत्यत्रतद्धितस्यप्रमाणपदमुच्चार्यविहितस्यैवग्रहणंप्रत्यासत्तेरितिवृत्त्यनुसारेणानुमानमित्याशयादितिदिक्।ननुप्रमाणइत्येवेति।पूर्वसूत्रेप्र
माणग्रहणंपरिच्छेदकमात्रपरंप्रस्थमात्रमित्यादिसिद्ध्यर्थम्।इदमपियावान्धायावतीस्त्रजर्यावजुलमधिकरणैतावत्त्वेचेतिप्रयोगात् परिच्छेदकमात्रइष्यतइतिभावः।भाष्येपिकिमर्थं राम:
परिमाणइत्युच्यतेनप्रमाणमित्येवसिद्धमित्युक्तम्।प्रमाणपरिमाणयोरेकार्थत्वमत्वाप्रश्नइतिकैयटः ॥ २५५

प्रागेवोक्तत्वादिति। एवं चेह परिमाणग्रहणं सर्वतोमानमात्रार्थकमिति भावः। स्यादेतदिति। अन्यत् प्रमाणमन्यत् परिमाणमित्यत्रत्यभाष्यात् पूर्वसूत्रे प्रमाणशब्देनायामपरिच्छेदकमेव। प्रस्थमात्रमित्याद्यप्रयोगास्त्वसाधव एवान प्रमाणत्वेनैव सिद्धमिति भाष्यस्यायमर्थः। तदनुवर्त्य यावानध्वेत्यादिकमेव मुख्यमस्तु परिमाणप्रयोगाः एवोपमानाद्भवन्त्विती ति भावः। विशेषविहितइति। पदादिपुरस्कारेण विहितत्वादिति भावः। भिन्नोपाधिकत्वादिति। परिमाणग्रहणस्य सर्वतोमानपरत्वादिति भावः। नन्वत्रपक्षे मात्रादीति आदिग्र

अत्र वार्त्तिकम्। डावतावर्थवैशेष्यान्निर्देशः पृथगुच्यते। मात्राद्यप्रतिघाताय भावः सिद्धश्च डावतोरिति। अस्यार्थः। इह शास्त्रे वतुपं विधाय तस्मिन्परे आत्वं विहितम्। पूर्वाचार्यास्तु डावतुं विदधिरे तद्वा स्यान्निर्देशोऽयम्। डावताविति। विशिष्यते इति विशेषस्तस्य भावो वैशेष्यं तस्मादर्थभेदादित्यर्थः। प्रमाणपरिमाण-योर्भेदस्य प्रागेवोक्तत्वादिति भावः। स्यादेतत्। एवं सति यावानध्वा यावती रज्जुरित्यादि न स्यात्। आयामस्तु प्रमाणं स्यादित्युक्तेः। उपमानाद्भविष्यतीति चेत्। तर्हि प्रमाणग्रहणमेवानुवर्त्यताम्। उक्तप्रयोगाश्च मुख्याः सन्तु ये तु परिमाणे प्रयोगाः यावान् धान्यराशिरित्यादयः ते एवोपमानाद्भवन्तु तत्राह। मात्रादीति। विशेषविहितो हि वतुप् मात्रजादीन् बाधेत तेन तन्मात्रमित्यादि न स्यात्। परिमाणग्रहणे सति तु भिन्नोपाधिकत्वाद्बाध्यबाधकभावो नेति भावः। नन्वेवमपि बाधः स्यादेव पूर्वसूत्रे प्रस्थमात्रमित्यादिसिद्धये प्रमाणग्रहणस्य परिच्छेदकमात्रपरतया व्याख्याततत्वेन वतुपो विशेषविहितत्वानपायात् ॥

हणं व्यर्थम्। पूर्वसूत्रे प्रमाणग्रहणेनायामग्रहणे त्वयमश्वेत्यादिना द्वयसज्दघ्नौ प्रमाणात् पक्ष्योर्ध्वमाने विधीयेते। एवं चायामार्थकप्रमाणग्रहणानुवृत्तावप्युपाधिभेदान्तद्बाधाप्रसक्तेः। न च प्रमाणशब्देनोन्मानस्यापि ग्रहणम्। रूढित्यागे सर्वग्रहणापत्तेः। तदङ्गीकारे उन्मानस्य कथं ग्रहणमतो वार्त्तिकस्याद्यामवतारणिकां सोपस्कारामाह। नन्वेवमपीति ॥

मनुपदेति। येनमात्रायनुकर्षः। प्रथमश्लोकस्याद्व्यवस्थापकस्यात्रापि प्रवृत्त्यानाः व्यवस्थेतिभावः। यावती वृद्धिरिति पाठः। इदंचोन्मानम्। वृद्धेरूर्ध्वदेशायाअपि सत्वेनोन्मानत्वात्। त्रिविधेति। प्रमाणपरिमाणोन्मानेस्वर्थः। भावः सिद्धेति। येनार्थवैशेष्यमात्रायप्रतिघातयोः संग्रहः। नचवेतनमात्राद्यप्रतिघातः सिद्ध इति वाच्यम्। सर्वतोमानोपाधावनिष्टस्य मात्रचआपस्यातपान्यासस्यकर्तुमशक्यत्वादितिभावः। तदपीति। तावच्छब्दप्रकृतिभूततच्छब्दार्थरूपमपीत्यर्थः। अन्यथा। एकविषयत्वेपिप्रत्ययपरंपराणाम् परिमाणग्रहणे

तस्माद्वतुपेत्येषसृज्यताम्। मास्तुपरिमाणग्रहः। अस्तुचप्रमाणेद्वयसज्याधिकारः। एवंचयावतीरज्जुः यावान्धान्यराशिः यावतीबुद्धिरित्यादि त्रिविधप्रयोगाअपि उपचारंविनैवनिर्वहन्तीत्यपरमनुकूलमतआह। भावः सिद्धेति। डावतोरिति। पञ्चम्यन्तंअर्थभेदेसतिवत्वन्ता मात्रजादीनामुत्पत्तिः सिद्ध्यतितस्परिमाणमस्यतावद्धान्यंयशीरुतं। तावत्प्रमाणमस्यकुड्यादेः तावन्मात्रम्। यावद्राशीकृतस्यधान्यादेर्दैर्घ्यंन्ताद्रकुड्यादेरपीत्यर्थः। एकविषयत्वेतुवतुपैवविशिष्टस्यप्रमेयस्योक्तत्वात्तन्मात्रजादयोनस्युः। यस्यहिनावत्प्रमाणंतस्यतदपि। एवंचतावच्छब्दएवप्रयुज्येत। अन्यथामात्रजादिप्रत्ययमालाप्रसङ्गात्। किमिदंभ्याम्। कियानि ति। इदंकिमोरीश्की। यस्मिंस्तिलोपः। इयानिति। प्रत्ययमात्रमिहावशिष्यते। पठन्तिच। उदिच। उदितवतिपरस्मिन्प्रत्ययेशास्त्रयोनैगमवतिविलयंचप्राकृतेपिप्रपञ्चे यपदिपदमुदीतकेवलः प्रत्ययोयत्तदियदिविमिमीतेकोहदापण्डितोपि। वैयाकरणानामौपनिषदानांचप्रक्रियामाश्रित्यप्रवृत्तोद्ययोयंश्लोकः। किमः संख्या ॥

तत्स्यवर्ततेमानपरत्वात्प्रमाणप्रत्ययस्यानवद्यसिद्धिः। विषयभेदात्। तन्मात्रमित्यादौमात्राद्युत्पत्तिरपिसिद्धा। अर्थभेदेनडावत्वन्तान्मात्राद्युत्पत्तिरपिसिद्धा। यावद्विषयभेदं चप्रत्ययोत्पत्तिः विषयैक्येतुन। लघुनाम्निद्रोनकर्मधारयान्मत्वर्थीयइत्येतन्मूलभूतगौरवेणानुत्पत्तेरित्यलम्। परस्मिन्प्रत्यये। प्रत्ययसंज्ञके। परस्मिन्ब्रह्मणितद्विषयेज्ञानेच। प्रकृतिः प्रत्ययस्यप्रकृतिर्मायाचातत्त्वांबभ्रिनिराकृते यत्केवलंपदम्। ब्रह्मरूपम्। पदसंज्ञंवाइयत्। परिच्छेद्यमाद्यपदित्येतत्। मिमीते। जानाति। औपनिषदाः वेदान्तिनः ॥

संख्यायाः परिमाणमिति। करणस्य कर्तृत्वविवक्षायां षष्ठी। परिच्छेद इति। भावसाधनः परिमाणशब्द इति भावः। तस्मिन्कर्त्तव्ये यः प्रश्न इति। तद्विषयः प्रश्न इति यावत्। परिच्छेदक
संख्याप्रश्नेऽपि परिच्छेदस्य विषयत्वात्संख्यापरिच्छेदविषये प्रश्ने कियतो वर्तमानत्वं बोध्यम्। करणतृतीयान्तेन साधनं कृतेति समास इत्यपि वक्तुं शक्यम्। के यमेषामिति। नात्र परिच्छेद
कत्वेन संख्या विवक्षिता। एतेन संख्यायाः परिच्छेदकत्वाव्यभिचारात् परिमाणग्रहणं व्यर्थमित्यपास्तम्। कुत्वामात्रं किमर्थस्तदाह। अव्रतानामिति। बाध्यत्वादिति। सति शिष्टत्वेन आद्युदा
संख्यायाः परिमाणं परिच्छेदस्तस्मिन्कर्त्तव्ये यः प्रश्नस्तत्र वर्त्तमानात्किमः अस्येति षष्ठ्यर्थे डतिः स्यात्। संख्यापरिमाणे किम्। सूत्रे पेमा भूत्। के यमेषां दशानां संख्या। अत्र
तानाममन्त्राणां जातिमात्रोऽपजीवितान् सहस्रशः समेतानां परिच्छेदनं विद्यत इत्येवं संक्षेपद्वारेणेह संख्यायाः कुत्वा बोध्या। संख्याया अवयवे। यं प्रत्यवयवत्वं सोऽवयवी प्रत्य
यार्थः अस्येत्यधिकारात्। प्रत्याहृपसजोदिषु प्रमाणे प्रकृत्यर्थे प्रमेयत्वं प्रत्ययार्थस्तद्वत्। उभादुदात्तो नित्यम्। इहान्तोदात्तत्वं चित्स्वरेणैव सिद्धं सर्वोदात्तत्वं तु बाधितं। अनुदा
त्तं पदमेकवर्जमिति वचनात्। न चेह उभयेद्युरित्यत्राग्नित्रिताद्युदात्तत्वं बाधितुं वचनम्। पुरस्तादपवादन्यायेन चित्स्वरेणैव बाध्यत्वात्तस्मादुदात्तवचनसामर्थ्यादादेरेवायम्। त
थाच प्रयुज्यते। उभयं शृणुवन्वन इति। तदेतदाह। सचेति। शदन्तविंशतेश्च। प्रत्ययग्रहणपरिभाषया तदन्तविधौ सति तदादिनियमः स्यात्। तं वारयितुमन्तग्रहणम्। तेन एक
त्रिंशं शतं एकचत्वारिंशमित्यादि। नचैवं गोत्रिंशदधिका अस्मिन् गोशत इत्यादावतिव्याप्तिः। संख्याया अवयवे तयप इत्यत्र संख्याग्रहणानुवृत्तेः। अन्तग्रहणं च विंशतिशब्दानंतरं
बोध्यम्। शद्विंशत्यन्तस्येति। एतेन एकविंशं शतमिति सिद्ध्यति। अन्यथा ग्रहणवता तदन्तविधिप्रतिषेधादिह न स्यात्। तस्य पूरणे डट्। तस्येत्येकत्वमविवक्षितं पूर्यतेऽनेनेति पूरणः। ल्य
न्तात्करणे ल्युट्। एकादशानामिति। उद्भूतावयवभेदः समुदायः प्रकृत्यर्थः। अवयवः प्रत्ययार्थः। इह यस्मात्संख्यावाचिनः प्रत्ययस्तदीयप्रवृत्तिनिमित्तस्य एकादशत्वादेः पूरणे प्रत्ययः॥
तस्य बाधकत्वाच्चेत्यपि बोध्यम्। एकत्रिंशमिति। एकत्रिंशदादयः संख्याविशेषा एव न संख्यासमुदायरूपा इति भावः। अत एव नान्तादिति सूत्रे संख्यादेरिति चरितार्थम्। इह न स्यादिति। विंशत्यं शे
व्यपदेशिवद्भावदृष्यते अचः परस्मिन्निति सूत्रे विंशं शतमिति भाष्योदाहरणात्। अवयवः प्रत्ययार्थ इति। वृक्षे शाखेतिवदिति भावः ॥

प्रवृत्तिनिमित्तस्यैवेति। तत्त्वं हचरितधर्मस्याप्युपलक्षणम्। तथेहापीति। तेनैकादशानां घटानां पूरणं जलमित्यत्र न। यदा च यत्त्तसंख्यापूरकत्वेन विवक्षितस्तदासंप्रत्यया ई तदाहा। एवं
वेति। वरमेगण्यते इति। अनेन तस्य तत्त्वेन विवक्षा दर्शिता। सप्तम्येति। पुकसूत्रे भाष्ये तु सह विधानमुक्तम्। षट्त्विति। षट्चतुर्भ्यश्चेत्यतो ऽनुवृत्त्येति भावः। पूर्वसूत्रे नान्तादिति सङ्ख्या
यथाः तिशायनेकुत्सिते इत्यादिषु प्रवृत्तिनिमित्तस्यैवातिशयादिकं गृह्यते। नरङ्गस्यात्। तथेहापि। यथा च तत्र याम्यो वैयाकरण इति विग्रहः। ननु याप्यं वैयाकरणत्वमिति
तथेहापीति भावः। एवं च व्युत्क्रमेणाध्याप्येषु गण्यमानेषु समर्थः षट्विधिरित्यध्यायोयदा चरमङ्गण्यते तदासौ षष्ठो भनस्येवानान्तादसंख्यादेर्मट्। डट इति। डडिति
प्रथमान्तस्यानुवृत्तस्य नान्तादिति पञ्चम्या षष्ठी कल्प्यत इति भावः। यद्यपीह मटा प्रत्ययत्वेपि न क्षतिः। तथाप्युत्तरत्र मट आगमत्वमेव दृष्टम्। अनुदात्तता यथा स्या
त्। प्रत्ययत्वे हि आद्युदात्तः स्यात्। तथा चैकरूप्येणैव संदर्भव्याख्यानमुचितम्। षट्इति। इह षष्ठीनिर्देशबलात् षडादीनामागमित्वं। एवं चानुवृत्तो डट् अर्थात्तप्तम्या
विपरिणम्यते। तदाह। डटीति। डट एव तु इतुनक्रतः। षष्ठे जस्त्वापत्तेः। चतुर्थेरेफस्य विसर्गापत्तेश्च। न चैवं पूर्वपूर्वसूत्रेपि मुगेवास्त्विति वाच्यम्। पञ्चमः सप्तम इत्या
दौ नलोपाभावापत्तेः। आद्यक्षरेति। अन्तर्हितं व्यंजनमक्षरं आदेर्व्यंजनस्येत्यर्थः। आदेश्च इतिव्याख्यानेनतु द्विर्वचनन्यायेन तकारस्यापि लोपः स्यादिति हरदत्तः। विशेषण
विशेष्यभावव्यत्यासेन व्याख्याने प्रमाणं तु द्वितीयतृतीयचतुर्थेति सूत्रे तुर्यगीपीति निर्देशो बोध्यः। द्वेस्तीयः। डटोपवाद इति। डटो हि शब्दस्यवादेः यत्तु न भवति द्वितीयेति
निर्देशात् तृतीय इति। रेफस्य ऋकारः संप्रसारणम्। हलइति दीर्घस्तु न। अण इत्यनुवृत्तेः। त्रेस्तृ चेति नोक्तम्। प्रत्ययो माविज्ञायीति। विंशत्यादिभ्यः। इह प्रत्यासत्त्या प
ङ्क्त्यादिसूत्रे निपातिता विंशत्यादयो गृह्यन्ते न लोकप्रसिद्धाः विप्रकृष्टत्वात् ॥ ७ मुगेवास्त्विति पाठः। व्यञ्जनस्येति। उत्तराच्सहितस्येति शेषः। आदेश्च इति। व्यञ्जनसहि
तस्येति शेषः। नन्वत्रव्यञ्जनसहिताजएवासरत्वव्यवहारेणेह न्यासः कृतः। तत्राह। विशेषणे स्यादिति। द्वितीयेनेति। विभाषा द्वितीयातृतीयेति निर्देशादित्यर्थः। इडादेशत्वे तत्र ङीप् प्रसं
गः द्विशब्दादेशत्वे तु तदश्रवणप्रसङ्ग इति भावः। निपातिता इति। निपातनार्थं पठिताद् इत्यर्थः। एवं लोकप्रसिद्धादन्यस्याप्रसिद्धत्वाल्लोकेऽव्यवह्रियमाणा इत्यर्थः ॥

भाष्यमतमिति। भाष्ये षष्ठ्यादेश्चेति सूत्रस्यासंख्यादेरित्यस्यैकं षष्ठप्रयोजनमुक्त्वा नदन्तविद्ध्यभावाद्व्याप्तिर्नेत्युक्त्वा इदमेव ज्ञापकमेतत्प्रकरणे तदन्तविधेस्तेनैकविंशतितम इति सिद्धमित्यु
क्तम्। लौकिकग्रहणे तु न दसंगतिः स्पष्टैव। अयमेव निषेधो ग्रहणवतेत्यस्य प्रत्ययविधिविषयत्वे मानमिति तदाशयः। नैतत्सिद्ध्येदिति। सहस्रादिष्वव्याप्तेरित्यपि बोध्यम्। किं शतादिष्व
इति भाष्यमतम्। लौकिकानां ग्रहणं तु इति मतम्। एकविंशतितम इति। यद्यपि भाष्यमते ग्रहणवता प्रातिपदिकेन तदन्तविधिर्दुर्लभस्तथापि षष्ठ्यादेश्चासंख्यादेरिति सूत्रे सं
ख्यादिपर्युदासो ज्ञापयति। इह प्रकरणे तदन्तानामपि ग्रहणमिति। एवं स्थिते एकान्नविंशतेः पूरणः एकान्नविंशतितम इत्यपि सिद्ध्यति। लौकिकानां ग्रहणमिति वृत्तिमते तु नैतत्सिद्ध्ये
त्। विंशतेः प्रागभावित्वादस्याः संख्यायाः। स्पष्टं चेदं कैयटहरदत्तग्रन्थयोः। यत्तु प्राचीनप्रक्रियाव्याख्याने रुक्तं विंशत्यादयोऽत्र लौकिका गृह्यन्ते न पङ्क्त्यादिसूत्रनिर्दिष्टाः तथा
सत्येकविंशत्यादेर्न स्यात् ग्रहणवतेति तदन्तविधिनिषेधात्। एकोनविंशत्यादेरतिप्रसङ्गश्चेति। अत्रेदं वक्तव्यम्। मूलग्रन्थो भाष्यमतसाधारणः तस्य बलाद्वृत्तिमतपरतया न
पनं तावदयुक्तमनुचितं च। किं च तदन्तविधिप्रतिषेधादतिप्रसङ्गश्चेति स्वोक्तिः परस्परविरुद्धा। यदि हि तदन्तविधिर्न कुत्रत्यस्तर्ह्यतिप्रसङ्गः। अथ ज्ञापनात्तदन्तविधौ लिङ्गसिद्ध्या
हः स्यकथंचित्स्वोक्तिरपि व्याख्येयेत्यभिमतम्। तदपि न। एकोनविंशतितम इत्यस्येष्टतया तत्राव्याप्तेर्दुर्वारत्वात्। प्रत्युत स्वपक्षे तत्राव्याप्तिरेव दोष इत्यास्तां तावत्। इदं त्ववधेयम्। अनारंभो
वा प्रातिपदिकविज्ञानाद्यथा सहस्रादिष्विति वदता कात्यायनेन यद्यपि पङ्क्त्यादिसूत्रं प्रत्याख्यातं तथापि इहार्थमावश्यकं तत्। अत एव तत्र भाष्यकृतोक्तम्। नासूत्र्यं कर्तव्यमत्रानुगमः क्रियत
इति। नित्यं शतादि। ननु षष्ठ्यादेश्चेत्युत्तरसूत्रेण सिद्धे किं शतादिग्रहणेनेति चेन्न। मैवम्। असंख्यादेरिति वक्ष्यति। एवं तु संख्याद्यर्थम्। तदेतद्ध्वनयन्नुदाहरति। एकशततम इति। मासादेरिति।
संख्यावाचित्वाभावेपीति भावः। संख्यादेस्त्विति। एतच्च प्राक् शताद्बोध्यम्। नित्यं शतादीत्युक्तत्वात्। मतौ छः। मत्वर्थ इति। मतो विषय इत्यर्थः। तेन समर्थविभक्तिः प्रकृतिविशेषणं प्रत्ययार्थश्चेति
सर्वं संगृह्यते। तत्र कुशलः। गोषदादिभ्यो वुन् इत्यतो वुन्ननुवर्तते। आकर्षादिभ्यः कन्। वुना सिद्धे कन्ग्रहणमिदुदन्तार्थम्। अशनिकः। शाकुनिकः। त्सरुकः। मुख्य इति। हरदत्तस्वरसादिति भावः॥
हणेनेति। न च सहस्रादिसंग्रहार्थम् उत्तरसूत्रेऽपि पङ्क्त्यादिसूत्रस्य षष्ठ्यादीनामेव ग्रहादिति वाच्यम्। एवमपि शतग्रहणस्यैव पर्याप्ततेत्यभिमानात्। संख्याद्यर्थमिति। सहस्रादिसंग्रहार्थं तदावश्यकमित्यपि
बोध्यम्। आवश्यकार्थस्यापि भविष्यदर्थकत्वात्। भूतवर्तमानयोरावश्यकत्वपोतनस्यैव फलत्वादिति भावः। आवश्यंकारी कटस्येति वृत्तिप्रयोगस्तु चिन्त्य एवेति तात्पर्यम् ॥

निवेधादिति। एतदुपपादितम्। क्रियाविशेषणाभ्यामिति। लौकिकविग्रहवाक्याभिप्रायेणबोध्यम्। द्वितीयायांप्राप्तायामिति। इदमर्वाचामनुरोधेन। यदितुकर्तृकर्मणोः कृतिअनभिहितइतिसूत्रस्थभा
ष्यप्रामाण्यादधिकशब्दार्थस्यप्रवृद्धनामार्थत्वेनाक्रियात्वंतदाषष्ठ्यांप्राप्तायामितिबोध्यम्। तत्राधिकपदार्थतयोर्भेदान्वयस्यैवानुभवात्। षष्ठ्यपवादभूतेएवेमे नत्वनन्तरप्रथमापवादभूतइतिबो

उरएकृगाद्यूने। अविजिगीषाविति। दिवोविजिगीषायामितितत्रैवनिष्ठानत्वविधानात्। सस्नेन। कर्त्तरितृतीयेयम्। परिसोजातः परिजातः परिगतइत्यर्थः। अतएवेति। अकेनोरितिनि
षेधादितिभावः। तंत्राद् वंत्रदन्तुवायशलाका। तन्त्ववेतन्त्रवोऽस्मिन्नितिव्युत्पत्तेः। अचिरः कालोऽपहृतस्येति। कालाः परिमाणिनेतिसमासः। ब्राह्मणकोऽसिकेसंज्ञायाम्। ब्राह्मण
शब्दादायुधजीवित्वोपाधिकात्प्रथमान्तात्तदस्यर्थेकन्प्रत्ययः। अन्नशब्दात्तु अल्पत्वोपाधिकात्तदाह। आयुधेत्यादि। शीतोष्णाभ्याम्। शीतमिवशीतंमंदमित्यर्थः। शीतंहिमन्दता
युक्तम्। सतिशीतेकार्यकारणेऽपाटवाभावात्। उष्णमिवोष्णंशीघ्रमित्यर्थः। क्रियाविशेषणाभ्यांद्वितीयांताभ्यांप्रत्ययः। कृद्योगलक्षणषष्ठीतुक्रियाविशेषणान्नेत्युक्तम्। अधिकम्।
अध्यारूढशब्दादिति। सत्वर्थाकर्मकेन्द्वादिनारुहेः कर्त्तरिकर्मणिचक्तोविहितः। आद्येकर्मणोनभिहितत्वादध्यारूढशब्दयोगेद्वितीया। अध्यारूढोद्रोणःखारीमिति ग्रामंगत
इतिवत्। तयाधिकशब्देनापियोगेद्वितीयायांप्राप्तायांयस्मादधिकंतदस्मिन्नधिकमितिचनिर्देशद्वयात्सप्तमीसप्तम्योभवतः। द्वितीयेतुकर्मणोभिहितत्वात्प्रथमा। अधिका
खारीद्रोणेन। अनुक्ता। सूत्रेसमाहारद्वन्द्वेलिङ्गव्यत्ययः। अन्वभिभ्यामिति। ससाधनक्रियावाचिभ्यामित्याकरः। क्रियाविशिष्टसाधनवाचिभ्यामितितस्यार्थः। कन्निति। खारी।
अनृजुरिति। तिर्यगवस्थानात्पृष्ठेऽनृजुतत्ताधर्म्यादुपायोऽपि। एवमग्रेपि। अपटुः लदण्डाजिनशब्दोगौणौ ॥

ध्यम्। सप्तम्याविति। तदस्मिन्नित्यत्रोपश्लिष्टपदाध्याहारात्सप्तमीतिभाष्यारूढोमार्गः। अभिहितत्वादिति। इदमध्यारूढाखारीद्रोणेनेत्यभिप्रायकम्। अधिकाखारीत्यत्रतुसामानाधिकरण्यात्प्र
थमा। द्रोणेनेतिहेतौतृतीयेतिभाष्यानुसारेणयुक्तम्। तस्यार्थइति। साधनस्यैवप्राधान्यानुभवात्आकरेसह शब्दः साहित्यमात्रवाचीतिभावः। गौणौ। तौएतौपायदभ्ययोः ॥

नेष्यत इति। अनभिधानादिति भावः। वृत्तिकृता चेति। तावतिथेनेति वार्त्तिके षष्ठेन रूपेण गृह्णाति षट्क इत्युदाहरणभाष्यतोऽप्येवमेव लभ्यते। तत्रोदाहरणे पूरणप्रत्ययस्यैव लुको दर्शनात्। किंच कनो
लुग्वक्तुमशक्यः। सहविधानेन वाक्यभेदेनानभावेन चोद्देश्यत्वानुपपत्तेः। तन्मत इति। अनेन भाष्यविरोधाद्वार्त्तिकमतमनादेयमिति सूचितम्। अप्रयुक्त इति। अयं श्राद्धभोजने कृत इत्यर्थः।
इह शीतोऽलपार्श्वीयः शूलदण्डाजिनशब्देभ्यो मुख्यार्थेभ्यः प्रत्ययो नेष्यते। तावतिथं ग्रहणमिति लुग्वा। यथा तस्यापत्यमित्यत्र तस्येति षष्ठ्यन्तानां सामान्यनिर्देशस्तथात्र तावतिथ
मिति पूरणप्रत्ययान्तानां सामान्यनिर्देशः। कन्स्यादिति। अनन्तरावपि ठक्ठञौ नानुवर्त्तेते अस्वरितत्वादिति भावः। पूरणप्रत्ययस्येति। न तु कनः। लुग्वाग्रहणानर्थक्यप्रसङ्गात्। प
ञ्चमं पञ्चमकं इति रूपद्वयं हितेन साध्यं तच्च महाविभाषाधिकाराद्द्विकस्येन कन उत्पत्त्या सिद्धमेव। तस्मात् लुग्वाग्रहणं कुर्वतः सूत्रकारस्य पूरणप्रत्ययलुगेवाभिमतः। वृ
त्तिकृता च तथैव व्याख्यातमिति तदनुरोधेनेहापि व्याख्यातमुदाहृतं च। वार्त्तिककारस्तु कनस्त्वलुगिति व्याख्यानमभिप्रेत्याह। तावतिथं ग्रहणमिति लुग्वावचनानर्थक्यं विभाषाग्रह
णादिति। तन्मते द्वितीयकम् द्वितीयमित्येव। [illegible] श्रोत्रियंश्छन्दोऽधीते। छन्दः शब्दस्य श्रोत्रभावः घन्प्रत्ययश्च छन्दोऽध्यायिनि निपात्यते। श्राद्धमनेनाश्राद्धशब्दः कर्मनामधेयम्
तत्साधने द्रव्ये लक्षणया वर्तते। श्राद्धी श्राद्धिक इति। अद्यतन एवेष्यते। अद्य भुक्ते श्वः श्राद्धिक इति माभूत्। पूर्वादिनिः। पूर्वमिति। क्रियाविशेषणाद्द्वितीयान्तात्प्रत्ययः। छन्दसि। पर्यव
स्थातृशब्दाच्छत्रुपर्यायात्स्वार्थे इनिप्रत्ययः। अवस्थातृशब्दस्य च परपन्थ इत्येतावादेशौ निपात्येते। अप त्यं परिपन्थिनम्। मा त्वा परिपरी विदन्। उभयत्रापि परिशब्देऽवग्रहः। लोके
त्विति। अनुपस्थितपरिपन्थिभिः पार्थिवैरित्यादौ। अनुपदमिति। पदस्य पश्चात्। पश्चादर्थेऽव्ययीभावः। अनुपदी गवामिति। पदापेक्षया षष्ठी। गोपदात्पश्चादन्वेषणं च गवामेव तेन हिरण्या
द्यन्वेष्टा न भवतीति हरदत्तः। साक्षाद्द्रष्टरि। साक्षाच्छब्दोऽव्ययम्। प्रकृतिवदनुकरणमिति सूत्रे पञ्चम्या लुक्। साक्षीति। अव्ययानां भमात्रे इति टिलोपः। क्षेत्रियच्। परक्षेत्रशब्दात्तत्र चिकि
त्स्ये घच् परशब्दस्य लोपश्च निपात्यते। क्षेत्रियो व्याधिरिति। किंच क्षेत्रियं विषं परस्य शरीरे संक्रमय्य चिकित्स्यते ॥ ७ गोः पदादिति। प्राणिनामुपलक्षणम्। गवामित्यस्य पदविशेषणत्वेऽपि नित्य
सापेक्षत्वान्न दोषः। तेन हिरण्यादाविति। एतेनान्वेष्टृ शब्दात्प्रत्ययस्तत्र शब्दस्य पदादेशो विद्यमानप्रकृतिप्रत्ययमेव वान्वेष्टरि निपातनमित्यपास्तम्। हिरण्याद्यन्वेष्टर्यपि तदापत्तेः ॥

सस्यार्थेक्षेत्र इत्यत्र सस्यानि गोमान्यत्क्षेत्रे इत्यर्थः। अविवक्षित इति। तयोः प्रथमातिक्रमे कारणाभावेन प्रवृत्तानिर्देशेन शास्त्रसंकोचे मानाभावादिति भावः। अत एवाह मत्वर्थस्यैवेत्यर्थे महानिति सिद्ध
ति। विवक्षित एवेति। अत एव गवामतीं तत्त्वेनागतत्वेन वा मतुपो न साधुत्वमिति भावः। स्पष्टं चेदं सर्वं भाष्ये। स्वशब्देनापीति। बह्वादिशब्देनापीत्यर्थः। सहस्रगोरपीति। बहुव्रीहिसमासः। राज्ञो वि
अपि च क्षेत्रियाणि तृणानि यानि सस्यार्थे क्षेत्रे जातानि चिकित्स्यानि विनाशयितव्यानि किं च क्षेत्रियः पारदारिकः। परदाराः परक्षेत्रं तत्र चिकित्स्यो निग्रहीतव्यः सर्वं चैतदाकरे स्थितम्। इ
न्द्रियमिन्द्रात् इन्द्रशब्दाद् घच्। इन्द्रेण दृष्टं ज्ञातं मम चक्षुर्मम श्रोत्रमित्यादिक्रमेण सृष्टम् दृष्टद्वारा। जुष्टं प्रीणितं सेवितं वा दत्तं यथायथं विषयेभ्यः। तदस्यास्त्यस्मिन्निति मतुप्। अस्तीति पु
रुषवचने अविवक्षिते कालस्तु विवक्षित एवेति शब्दो विषयविशेषलाभार्थः। तथा हि। भूमनिन्दाप्रशंसासु नित्ययोगेतिशायने। संसर्गेस्ति विवक्षायां भवन्ति मतुबादयः॥ अस्ति विव
क्षायां ये मतुबादयो विधीयन्ते ते भूमादिषु विषयेषु भवन्तीति वार्तिकार्थः। भूमा बहुत्वं तच्च आपेक्षिकम्। यस्य हि यावद्धुवितं तावद् स्वस्वशब्देनापि प्रतीयते। यथा पञ्चभिर्गो
भिर्द्विवत्सस्य बह्वो गाव इति व्यवहारः। राज्ञस्तु सहस्रगोरपि गावोऽल्पा इति। गोमान्। यवमान्। इह यवव्रीहिभिरद्भिः पूर्णे प्रोक्षतीत्यादौ जातिमात्रसंबन्धस्य विवक्षितत्वात्। भूमा
भावे मतुप्। भूमादिग्रहणं हि प्रायेण भूमादयोपि प्रतीयन्त इत्येवं परम्। निन्दायाम्। ककुदावर्तिनी कन्या। प्रशंसायाम्। रूपवान्। नित्ययोगे। क्षीरिणो वृक्षाः। अतिशायने। उदरिणी कन्या। सं
सर्गे दण्डी। संसर्गः संयोगः। तेन संयुक्ते दण्ड एवोच्यते न तु गृहावस्थिते दण्डेपि। गुणवचनेभ्य इति। गुणेन तदिति च प्रसिद्धाः शुक्लादयस्त्वेह गृह्यन्ते न तु रूपादयोपि। मादुपधायाम्। मश्च अश्च म
मः समाहारे द्वन्द्वः। तेन मतुबादिप्रत्ययप्रातिपदिकं विशेष्यते न दाहमवर्णावर्णान्तादिति। उपधायामिति वाक्यान्तरम्। तथाभूतान्मात् परस्य मतोरित्यर्थः। येन नाव्यवधानन्यायेनास्य व्यवहितेपि भव
ति। एवमस्यार्थस्य स्थिते फलितमाह मवर्णावर्णोपधादिति। यवः। इदमपि आक्षिप्तस्य प्रातिपदिकस्य विशेषणम्। न दाहम्। यवान्तादिति। यत्तु केचित्। बह्वीमहानित्यादि प्रयुञ्जते तत्प्रामादिकमेव।
मर्तनान्मतुपो निषेधात्। अपदान्तत्वे जश्त्वाभावः। प्राणिस्थात्। शिखावान् दीप इति प्रत्युदाहरणदिगियं दर्शिता। शिखाशब्दस्य व्रीह्यादिषु पाठेन लचोः प्रसङ्गात्। चूडावान् इत्यस्य इति तु प्रत्युदा
हार्यम्। प्राण्यङ्गादेवेति। एतच्चेति करणानुवृत्तेर्लभ्यते॥ ॐ शेषणम्। सहस्रगोभिरित्यपपाठः। संज्ञाभावेन समासदोर्लभ्यात् टजापत्तेश्च। उच्यत इति। दण्डीति पदेनेत्यर्थः। नविनि। अत एवाप्यति

तत्रहीति। अतएवभाष्येऽत्रैवसूत्रेतद्वार्त्तिकोक्तिः। स्थितमाकरे इति। नचद्युद्रुभ्यांमइत्यस्यनित्यत्वार्थंनत्विकल्पात् प्राक् पठितस्यहिनित्यत्वोन्यायसिद्धत्वम्। तेषांरूढिशब्दत्वेनतद
र्थस्यमतुपाभिधातुमशक्यत्वेनतस्यनित्यत्वसिद्धेः। द्युद्रुभ्यांमोनित्यमित्येवसिद्धेश्च। ङित्वादादेश इति। अन्यथाप्रत्ययत्वभ्रमः स्यादितिभावः। अन्तोदात्तमिति। प्रत्ययोलजितिभावः। तद्धनयत्वा
सिध्मादिभ्यश्च। अत्रवार्त्तिकम्। लजन्यतरस्यामितिसमुच्चयइति। अस्यार्थः। प्राणिस्थादितिसूत्रेणलचिविकल्पितेपक्षेमतुबितिचूडालः चूडावानितिरूपद्वयंयद्यपिसिद्ध्यतितत
थापिसिध्मादिषुदोषः। तत्रहिसिध्मनिष्पावर्मासेत्यादयोयेइन्नास्तेभ्यइनिठनौस्याताम्। तस्मादन्यतरस्यांग्रहणंसमुच्चयार्थंनिपातानामनेकार्थत्वात्। तेनमतुप्समुच्चीयतेतस्यै
वप्रकृतत्वात्। अस्तिचेहलिङ्गं केशाद्वोऽन्यतरस्यामितिसूत्रेऽन्यतरस्यांग्रहणम्। तद्धिइनिठनोः प्राप्त्यर्थंक्रियते। प्रकृतस्यान्यतरस्यांग्रहणस्यविकल्पार्थत्वेतुएतस्यैवसिद्धेः। किंतेन। क्रियमाणंतु
पूर्वस्यान्यतरस्यांग्रहणस्यसमुच्चयार्थतांज्ञापयतीतिस्थितमाकरे। लच्चेति। वाशब्दःसमुच्चये। वात्साहिकल्योपमयोरेवार्थेऽपिसमुच्चयइतिकोशस्तत्। वातेत्यादि। [illegible] गणसू
त्रम्। ऊङ्इति। ङित्वादन्तादेशः। वातूलइति। अन्तोदात्तम्। यत्तुप्राचाबलादूलःवाताच्चइत्युक्तंतदुपेक्ष्यम्। प्रत्ययस्वरेणमध्योदात्तप्रसङ्गात्। गणसूत्रबलेनान्तोदात्तस्येष्टत्वात्। पार्ष्णि
धमन्योर्दीर्घश्च। पार्ष्णीलः। धमनीलः। क्षुद्रजन्तूपतापाच्च। यूकालः। मक्षिकालः। उपतापोरोगः। विपादिकालः इत्यादि। वत्सांसाभ्याम्। कामवतीति। [illegible] मत्वर्थे। यथासंख्यया
न्तौ इतिभावः। वत्सलइति। स्नेहवानित्यर्थः। वृत्तिविषयेवत्सांसशब्दौस्नेहबलयोर्वर्त्तेते। यद्यपीहप्रकरणेसर्वत्रमतुप्समुच्चीयतेतथापीहनेष्यते। मतुबन्तेनअर्थान्तरमेवप्रतीयते
वत्सवतीगौः। अंसवान्दुर्बलः। लोमादि। इहलोमपामपिच्छादिभ्यइतिसुवचम्। नन्दिग्रहिपचादिभ्यइतिवत्। अङ्गकल्याणइतिगणसूत्रमर्थतःपठति। अङ्गादिति। शाकीपलाली
दद्रुह्रस्वत्वंच। महत्शाकंशाकी। तद्वत्शाकिनम्। महत्पलालंपलाली। तद्वत्पलालिनम्। दरिद्रातेर्यलोपश्च। चाद्रूः। दद्रूः त्वग्रोगविशेषः तद्वान्दद्रुणः ॥
ह। पक्षेति। विपादिकालइति। यद्यपिज्योत्स्नादिभ्योणउपसंख्यानमितिवार्त्तिकभाष्येवैपादिकइत्युदाहृतम्। तथापिकौण्डलसाहचर्यात्अहीयकमेवेतिहरदत्ताद्याशयइतिभावः। यद्यपीत्यादिना
तोऽस्पष्टम्। महत्पलालमिति। इदमाकरानुरोधेन। भिन्नानिशालिकोद्रवपलालानिपलालीतिकैयटः पलालस्तोद इत्यन्ये ॥

नानागतानीति। नानाप्रकाराणीत्यर्थः। इतिवदिति। इदं कैयटानुरोधेन। यदिकृतपूर्वीत्यादौ कृदन्तमात्रशक्त्यानोपस्थितिरिह तस्येवेसु यतेत तापक्येवेति — वोद्यम्। कर्तृमुलनप्रज्ञशब्दा
त्प्रज्ञायणिसिद्धे किमत्रप्रज्ञाग्रहणेनेत्यत आह। प्रज्ञादिभ्यश्चेति। विच्छिन्नस्येति। यस्य द्रव्यलाभादेर्विच्छिन्नस्यापि प्रतिविधानं पुनः संधानं भवति सावृत्तिरित्यर्थ इति संप्रदायः। असत्त्वादिति।
विषुण इति। विषुनाना अहानीति विषक्किनान्यस्य सन्तीति विषुणः विषुवदाख्यः कालः। तस्य हि नानागतानि दिनानि सन्ति दिनान्तराणां न्यूनाधिकभावस्य तन्मूलकत्वात्। तथाम्
लुः वायुः अनवस्थितचित्तश्च विषुणशब्दार्थः। इह यदि कृते यणादेशे उत्तरपदलोपः स्यात् तर्हि वलिलोपे विस्स इति स्यात्। अत उक्तमकृत संधेरिति। समर्थानामित्यस्यापवादोय
म्। प्रज्ञा श्रद्धा। प्राज्ञो व्याकरणमिति। गुणभूतया क्रियया कर्मत्वेन संबन्धः कृद्ग्रहणात्तद्धितप्रयोगेषष्ठीन कृतपूर्वी कटमितिवत्। प्राज्ञेति। प्रज्ञादिभ्यश्चेत्यणि ङीन भवतिदह्रनुटाप्।
इदमेवेह प्रज्ञाग्रहणस्य फलमिति भावः। वृत्तेश्चेति वार्तिकम्। काशिकाकृतानुवृत्तिशब्दः सूत्रे प्रक्षिप्तः विच्छिन्नस्य प्रतिविधानं वृत्तिः। तपस्वीति। असन्त्वान्सिद्धे अणा बाधा
माभूदिति वचनम्। सहस्रीति। अत्र इनिनाठनपि बाध्यते। ज्यौत्स्न इति। शुक्लपक्षः। तामिस्रः कृष्णपक्षः। नरकविशेषश्च। तमः समूहस्तमिस्रम्। मत्वर्थीयोरः। तत्र ह्यपक्षभूतानित
मांसिविद्यन्ते। तदस्मिन्वस्तीति। यान्तादेण। स्त्रियां तु तामिस्री। यत्त्वमरेणोक्तम् तमिस्रा तामसी रात्रिर्ज्योत्स्नी चन्द्रिकया न्वितेति। तत्र यन्नान्तत्वणन्तमिति न विरोधः। सिकताशब्दाविशे
षस्यवक्ष्यमाणत्वादाह। घट इति। अत्र सूत्रद्वयस्योदाहरणममरः संजग्राह। स्त्री शर्करा शर्करिलः शार्करः शर्करावति। देश एवादिमावेवमुन्नेयाः सिकतावति इति। दन्त उन्नतः क
रदंत्रणु दन्तुरान्तरे इत्यादयस्तु प्रयोगा लाक्षणिकाः। ऊषसुषि। समाहारद्वन्द्वे सौत्रं पुंस्त्वम्। ऊषा इरिणपांसवः। सुषिश्छिद्रम्। खर इति। मलकण्ठविवरं खम्। तद्वान्। निस्यर्पः। गर्द
भेरूढोयम्। नगरमिति। नगावृक्षाः पर्वताश्च। जातिशब्दोयम्। तथा च नगरी स्तत्र जातिलक्षणो ङीष् भवति। पाण्डुर इति। पाण्डुः शुक्लो वर्णः तद्वान्। अम्युत्पन्नश्चेति। गुणमात्रे गुणि
नि च वर्तते। हरिणः पाण्डरः पाण्डुः इत्यमरः। गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वतीति च। कच्छ्वाः। कच्छूस्त्वग्रोगविशेषः ॥ ७ ॥ अदन्तत्वादित्यस्याप्युपलक्षणमेतत्। तत्रा
तमः समूहे। तत्रान्तमिति। तमो स्यस्यामित्यर्थः। लाक्षणिका इति। निम्नोन्नतरूपेर्थे लाक्षणिका इत्यर्थः। ईरिणः पांसवः सारमत्कुणाद्इत्यर्थः ॥

आद्युदात्तः स्यादिति। पर्वतशब्दे तु न विशेषः। पर्वशब्दस्य वनिबन्तत्वेन नन्विषयस्येति फिट्सूत्रेणाद्युदात्ततया तपितनिबाद्युदात्तत्वात्। पर्व धातोरतचि अन्तोदात्तोपि पर्वत इत्यन्यत्। अपसिद्धा
न्तादिति। इदातिवृत्तं वा पुनरेतद् विध्यति मरुद्भिर्दत्तो मरुत्त इति। एतत्सर्वं व्याख्यानं परभाष्यविरोधादित्यर्थः। मरुच्छब्दस्योपसर्गत्वविधानसामर्थ्याद् जन्तत्वाभावेप्यच उपसर्गादिति तत्त्वम्। मरु
तः मरुच्छब्दस्यान्तोदात्तत्वेन तु तृतीयाकर्मणीति पूर्वपदप्रकृतिस्वरे गमरुतो मध्योदात्त इति फलाभेदायात्रापि पित् पाठ एव। उपसर्गाश्चाभिवर्जमिति मरुत्त आद्युदात्तत्वं तु न। तत्त्वे एवोपसर्गत्व
तनितु निस्वरेणाद्युदात्तः स्यात्। न चेष्टापत्तिः। अपसिद्धान्तात्। स्यादेतत्। मरुतः परिवेष्टारो मरुतस्यावमन् गृहे इत्यैतरेयब्राह्मणप्रयोगस्तावत्स्वरे उदासीनः। एकश्रुत्यापा
ठात्। तत्कथमभिमतस्वरावधारणमिति चेत्। प्रथमाध्यायस्याकरग्रन्थेभ्य एवेत्यवेहि। उपसर्गसंज्ञायां हि मरुच्छब्दस्योपसंख्यानं पठ्यते। तत्र पर्युदासाधिकरणबलान्निपातत्वं
ताप्राप्ता तथापि सत्ताने पते। सत्तांत संनिपाता आद्युदात्ता इति फिट्स्वरः स्यात्। स च मरुत्तशब्देऽपि स्यूयेत। तृतीयाकर्मणीति पूर्वपदप्रकृतिस्वरात्। किं च [illegible] तस्य प
त्वं स्यात्। ननूपसर्गत्वेप्यड् किं विधीकृतो नेति चेत्। अनभिधानाद्बहुलकाद्वेत्युत्तरम्। संज्ञाप्रयोजनं तु न तत्सामर्थ्याद् जन्तत्वाभावेऽपि अच उपसर्गादिति तत्त्वप्रवृत्तिः। नन्वेवं
मरुत्वयतौ त्वन्तकारव्यवायेपि णत्वं स्यादिति चेत्सत्यम्। तत्त्वविधावेवोपसर्गसंज्ञेति वक्तव्यम्। एवं चाड् किं विधीयतामित्यपरमनुकूलम्। एतच्च सर्वं कैयटहरदत्ताभ्यां स्प
ष्टमुक्तम्। तदनन्तरं तपरत्वसामर्थ्यात् मरुत्तशब्दस्य व्युत्पादनं करिष्यत इति वदन् कैयटः स्पष्टमेवापित्त्वमाह। यत्तु मत्वर्थीयप्रकरणे हरदत्त आह। मरुत एनं देयासुर्म
रुत्त इति व्युत्पत्त्या [illegible] तृतीयाकर्मणीति पूर्वपदप्रकृतिस्वरो भवन्नाद्युदात्त एव भवति। उपसर्गाश्चाभिवर्जमिति फिट्सूत्रादिति। तदतिरभसात्। यतः प्रथमशे
षे स्वयमेवाह ॥ ७ [illegible] इति भावः। तदेतत्स्वयन् पन्नाह। स्यादेतदित्यादिना। अव्यपत्वं स्यादिति। तथा च मरुद्भिर्दत्त इति भाष्यप्रयोगे विभक्तिश्रवणानापत्तिरिति भा
वः। उत्तरमिति। अत एव तत्त्ववचनानि भाष्ये नोदाहृतानि। तत्त्वविधाविति। अत एवोपसर्गाश्चाभिवर्जमिति फिट्स्वरोपि न मरुच्छब्दस्य। स्पष्टमेवापित्त्वमाहेति। तत्पक्षे मध्योदात्तत्वेन
निष्ठेत्र फलभेदापत्तेरिति भावः ॥

उक्तरीत्या। प्रथमश्चोपस्पृहरदत्तरीत्या। मास्त्विति। निपातत्वप्रयुक्ताद्युदात्तत्वस्यैवैवादिपाठेन बाधात्। परे नुनत्वविधावेव मरुत्तउपसंख्यानेन सिद्धे प्रथमे संज्ञाप्रकरणे पाठो नेकृस्त्रालाभाय एवं च निपातत्वमूलकमाद्युदात्तत्वं दुर्वारम्। तच्चोपसर्गत्वादि अभिधानस्वाभाव्यात्तत्वविषय एवेति महद्भिर्दत्तइत्युपपद्यते। तस्मान्नित्याठ एवोचित इत्याहुः। इति

सूपसर्गसंज्ञायामपि उपसर्गाश्चाभिवर्जमित्याद्युदात्तत्वं स्यादेव। नानेनापूर्वमाद्युदात्तत्वं विधीयते किं तर्हि निपाता इत्येव सिद्धेः भेः प्रतिषेधार्थमेतदिति। तस्मात्तु नो नित्यस्वीकृत्य प्रवृत्तः प्रथमिको हरदत्तग्रन्थः प्राचीनग्रन्थविरोद्धोः पसिद्धान्तग्रस्तश्चेति स्थितम्। एतेन नतनो नकार आद्युदात्तार्थ इति प्राचो ग्रन्थव्याख्या प्रामुक्ति रपि प्रत्युक्ता इदं तु बोध्यम्। उक्तरीत्या उपसर्गाश्चाभिवर्जमिति फिट्सूत्रं सुत्यजम्। नाभिरित्येव सुवचम्। अतिनि कर्षे तु नाभिरित्यपिमास्तु। एवादिष्वभेः सुपठत्वात्। एवादीनामन्त इति हि फिट्सूत्रम्। एवमादीनामिति पाठान्तरं तदेतत्सर्वं माधवेन कण्ठ्याध्यनितम्। तथाहि। आत्वेतानि षीदतेति मन्त्रे उपसर्गाश्चाभिवर्जमिति व चनात्प्रातिपदिकान्तोदात्तत्वमित्युक्त्वा मानो मर्ताअभिद्रुहन्निति मन्त्रे एवमादीनामन्त इत्युपन्यास्यत्। अलं प्रसक्तानुप्रसक्तेन। प्रकृतमनुसरामः। स्वामिन्नैश्व र्ये। ऐश्वर्यवाचकादिति। स्वशब्दस्य ऐश्वर्यवाचित्वं एतद्वृत्तिविषयमेव बोध्यम्। कंशंभ्याम्। अत्र प्रथमप्रत्यये हन्तो कम आदिः नतु पवर्गीयः तदाह। अनुनासिकौव यावितिं। तुण्डिवलिवटेर्भः। मूर्धन्योपध इति। तथा च तुडि तोडने इति धातौ माधवेनोक्तम्। तुडिः इन्। वृद्धानाभिः सास्तीति तुंडिलः। तुंदादिभ्य इलच्चेत्यप्रत्याङ्गादि व द्धावितिगणसूत्रेण इलच्। तुन्दिल एव तुण्डिभः। तुण्डिवलिवटेर्भ इति मत्वर्थीयो भ इति। वटिभ इति। वटवेष्टने इदन् ॥ इति मत्वर्थीयाः ॥

शब्दे इत्यर्थः। एतद्वृत्तिविषयकमिति। तेन नातिप्रसङ्गः। इलजिति। न च विशेषविहितभप्रत्ययेन बाधः। वलादिभ्य इति सूत्रादर्थाधिकारात्मयणेन विकल्पार्थकान्यतरस्यांग्रहणानुवृत्तेः। तुन्दादिसूत्रे चैनेनिठनोः समुच्चयार्थान्यतरस्यांग्रहणानुवृत्तेस्तेषां विधानात्तेऽप्यत्र बोध्याः ॥ इति मत्वर्थीयाः ॥ ‍ॐ मन्त्र इति। एतन्मन्त्रघटकामि

सार्वविभक्तिकः। आद्यादित्वात्। तसेश्चेति। तस्येति। आद्यादिभ्यः किम्। सर्वनामबहुभ्यः परस्य तसस्त्रासिलादेश इति तदर्थः। इत्यादिकमिति। नेर्षुतत्रेत्यत्रैत्वमादिशब्दार्थः। नेदेति। अतस्त्वकारे इत्यर्थः। उकारेणेति। सहितदर्थं चरितार्थत्वेनेत्यत्र त्यानिवर्तते। गौ गमिमिस्त्यादौ त्विकानिर्देशः। गमेरिडिनिवत्। धातुस्वरूपभङ्गभियात् पालोपोनो। उच्चारणार्थानामपीत्संज्ञा यास्तस्य लोप इति सूत्रे। एतदोन्। भाष्यारूढोऽयं पाठः। वृत्तिकारस्तु एतदोऽश् इति पठित्वा शकारः सर्वादेशार्थ इत्याह। द्वाभ्यामिति। सर्वनामत्वात्प्राप्तोऽपि तसिल् अह्यादिभ्य इति पर्युदासान्न। एतेन नूनं मत्तपरं वंश्याद्यत्रतसिलं न भ्रमेण पुष्पदस्मदोरनादेश इत्यात्मा शङ्कासार्वविभक्तिकस्तसिरिति परिहृत्य नमोऽश्चेति न स्यतसिलादेशं पुनः शेषे लोपमाशङ्क्य सुब्विभक्तावेवस इष्यत इति स्वोत्प्रेक्षयेव समाधानं कुर्वन् कश्चित् दुर्घटवृत्तिकारः परास्तः। पर्युदासविषयतया इह तसिल् प्रत्ययस्य नासिलादेशस्य चोक्तिसंभवाभावात्। सप्तम्यास्त्रल्। इह त्रल् तसिलौ स्वतन्त्रौ प्रत्ययौ न तु सप्तमीपञ्चम्योरादेशौ। तेन कुत्र बहुत्र कुतः बहुतः। इत्यादौ अव्ययत्वे ङिङसी तौ। त्यादिकं नेति दिक्। अन्तुतसिलोऽवकाशः कुतो यही यतेकुतोवरोहति। तसेस्तु ग्रामत आगच्छतीत्यादिरवकाशः। कुत आगच्छतीत्यादावुभयप्रसङ्गे परत्वात्तसिः तस्य विभक्तित्वाभावात् विभक्तिकार्याणि न स्युरिति चेन्न। मैवम्। तसेश्चेति सूत्रेण अह्यादिभ्यः किमादिभ्यः परस्य तु सेस्तसिलादेशविधानात्। तस्य च विभक्तित्वात्। किमोत्। न विभक्तौ तु स्यादिति नेह प्रवर्तते। यमो रुकारेण मकारपरित्राणार्थेन अनित्यताज्ञापनात् वा ग्रहणमिति। किमोद्वेति सूत्रं पठितव्यं ततः ह च च्छन्दसीति। यद्यपि भागवृत्तिकारो भाषायां त्रलं नेच्छति वामनस्याप्ययमेव स्वरसः तथापि वामनेनोक्तमेकदेशिमतमेवेह पुरस्कृतम्। बहुप्रयोगदर्शनात्। तथा चामरः। साह्वयाँ वा कुत्रचित्। श्रीहर्षोऽपि। नान्यत्र कुत्रापि च साभिलाषमिति। वाह च छन्दसीति। पूर्वोक्तस्य वा ग्रहणापकर्षस्य स्फुटीकरणार्थमिदमुपन्यस्तम्। अधुना प्रत्यय इति। निपातनान्मलोपोऽयम्। भाष्यस्तैवेदम्। वृत्तिकारस्त्वाह। इदमो शभावः धुनाच प्रत्यय इति। सद्यः परुत्। अहनीति। सप्तम्यन्तस्याहनशब्दस्यार्थो इत्यर्थः। तद्दर्शयति। समाने ह्नि सद्य इति। प्रकारवचने थाल्। सामान्यस्य भेदको विशेषः प्रकारः। यद्यपि प्रकारे गुणवचनस्येत्यत्र मादृश्यं प्रकारः ॥

भाष्ये स्पष्टमुक्तत्वादिति दिक्। इदमिति। छान्दसमपीदमित्यर्थः। वृत्तिकारस्त्वाहेति। भाष्योक्तयोर्ह्यपोः पक्षयोर्मध्ये यमेवादरेण हेत्यर्थः ॥

अनभिधानादिति। अन्यथा सर्वथेत्यादौ तत्प्रतीतेः। यथाहरिरित्यादौ यत्सदृशो हरिस्तत्प्रकारवान् हर इति बोधापत्तेः। हरिसदृशो हर इति बोधानापत्तेश्च। सिद्धान्ते तु यत्प्रकारवान् हरिस्तत्प्र-
कारवान् हर इति शब्दबोधेऽपेक्षिते सम्बोधः फलतीति बोध्यम्। तथा जातीय इति। यद्यपि थालपि प्रकारवति स्यात्तज्जातीयोपादानं व्यर्थं स्यादिति भावः॥ ॥प्राग्दिशो यानां पूर्णो वधिः॥ ॥विधाशब्दस्येति।
तथापि नेह सादृश्यं गृह्यते। नभिधानात्। तेन प्रकारेण तथेति प्रथमान्तात्तु न भवति स प्रकारस्तथेति। अनभिधानादिति भावः। किं सर्वनाम बहुभ्यो विशेषविहिते नार्थिथाल।
जातीयर् न बाध्यते ऽर्थभेदात्। प्रकारे हि थाल्। जातीयर् तु तद्वति स्वभावात्। अत एव भाष्ये प्रयुक्तम्। तथा जातीयोऽन्यथा जातीय इति। इदमस्थमुः। अनेन एतेन वेति। द्वितीयान्ताद्
पि थमुर्भवत्येव। इमं तं वा प्रकारमापन्न इत्थंभूतः। तथा च सौत्रो व्यवहारः। लक्षणेत्थंभूताख्यानेत्यादि। एतेन कथंभूतो व्याख्यातः॥ प्राग्दिशो यानां पूर्णोऽवधिः। पुरः पुरस्तादिति।
अथ कथं पश्यामि तावदितः पुरतश्च पश्चादिति भवभूतिः। नीरसतरुरिह विलसति पुरतः इति कश्चित्। स्यात्पुरः पुरतोऽग्रत इत्यमरः। पुरतः प्रथमे चाग्रे इति विश्वश्च। चिन्त्यमेतदिति
भाष्यवृत्तिः। कश्चित्तु विभाषा परावराभ्यामिति विभाषाग्रहणं योगाद्विभज्यते। तेन पूर्वशब्दादतसुच्। अस्तातिचेति सूत्रे चकारस्यानुक्तसमुच्चयार्थत्वात्पुरादेशः। इत्युक्तोक्तिरिति वा।
न्। तन्निर्मूलम्। पुर इति तु समानकालीनं पूर्वकालीनमित्यादिवदप्रामाणिकमेवेति प्रामाणिकाः। संख्याया विधार्थे धा। विधाशब्दस्यार्थो विधार्थः। यद्यप्योक्तोऽपि विधाशब्दे
नोच्यते तथापीह न गृह्यते। तेनैकाग्नौ विधेत्यादौ न भवति इहहि विधायामिति वक्तव्येऽर्थग्रहणस्येदं प्रयोजनम्। विधाशब्दोऽयत्रार्थे प्रसिद्धतेरः तत्रैव यथा स्यात्।
नाह शब्दार्थः प्रकार एव। स च क्रियाविशेषक एव गृह्यते। अभिधानस्वभावात्। तदाह। क्रियाप्रकारे वर्त्तमानादिति। कथं तर्हि नवधा द्रव्यं त्रेधा गुण इत्यादि। अत्रापि उ
पदिश्यन्त इति वा भवतीति वा क्रियाऽध्याहर्तव्येत्याहुः। याप्ये पाशप्। कुत्सित इत्यस्मिन्नेवार्थे विहितः। तिङन्तादपि प्रसङ्गात्। पूरणाद्भागे। पूरणार्थत्वातीयप्रत्ययः पूरणशब्देनोक्तः।
पूरणग्रहणं चोत्तरार्थम्। सुखतीयः पार्श्वतीय इत्यत्र तु अनर्थकत्वादेव न भविष्यति ॥७॥ इदं तु स्याघनुरोधेनेति बोध्यम्। विधयुक्तगतान्यप्रकारे भवतीति तु भाष्यं विधायां विध इति ध
र्थपुलिङ्ग इति कैयटश्च। विधशब्दस्यार्थ इति समासः। एवं चैकाग्नौ विधेत्यत्र प्रसक्तिरेव न। प्रकार इति। सामान्यस्य भेदको विशेष इत्यर्थः ॥

ह्रस्वोपिसाधुरिति।परेतुर

अनिसतितिति।अत्रप्रागेकादशभ्यइत्यनप्राप्तिः।अतएवविभाषाद्वितीयेतिसूत्रप्रत्याख्यानंभाष्यकृतोक्तंसंगच्छते।इत्यत्रैवेति।ततःप्रागित्यर्थः।इतिभावइति।एतद्भाष्येणदृष्टम्।प्राधा
न्यादिति।तद्विशेषणमितिशेषः।एवंचस्वार्थिकप्रकरणविरोधोभवतीतिषष्ठ्याएव:विशेषणंन्याय्यम्।भूतपूर्वसंबन्धेयाषष्ठीतदन्तादित्यर्थउचितइत्यन्ये।शेतेर्लुङिति।सचकर्त्तरिबाहुल
कान्इतिभाष्यस्वरसादभावेइत्यन्ये।अबाधकान्यपीति।इदंवृत्त्यनुरोधेन।बाधकान्येवेतिसर्वादिसूत्रेभाष्यात्।एवंचह्रस्वोःसाधुरेव।अभिभवइति।स्वापेक्षयेतरस्यन्यूनीकरणमित्यर्थः।सकर्म
भागइतिपुंस्त्वंविवक्षितम्।तेनसमानेप्यर्थेभक्तौविवक्षितायांचतुर्थीपञ्चमीत्येवभवति।अनिसतितुटापिचतुर्थीपंचमेतिप्रसज्येत।भूतपूर्वेचरट्।गोष्ठात्खञित्यत्रैवनो
कम्।विशेषविहितेनखञाचरटोबाधामाभूत्तन्निधौहिसामान्यविशेषभावःस्फुटीभवति।यद्यपिदूरस्थस्यापिबाधोन्याय्यएवतथापीहगौरवंस्वीकृत्यदूरेपाठसामर्थ्याद्वा
धोनेतिभावः।षष्ठ्यारूप्यच।भूतपूर्वइत्यनुवर्त्ततेतत्त्वयद्यपिपूर्वसूत्रङ्याप्प्रातिपदिकस्यविशेषणंतथापीहनतथा।षष्ठ्यन्तार्थस्यविशेषणत्वात्तदाक्षिप्तस्यसंबन्धिनःप्रा
धान्यात्प्रधानेतरसन्निधौचप्रधानेकार्यसंप्रत्ययस्यन्याय्यत्वात्तदेतदाह।भूतपूर्वेर्थेरूप्यःस्यादिति।अतिशायनेतमबिष्ठनौ।अतिपूर्वाच्छेतेर्ल्युट्।अतिशायनमेवातिशाय
नम्।अस्मादेवनिर्देशाद्दीर्घःनतुसौत्रः।तेनलोकेपिदीर्घःसाधुः।अबाधकान्यपिनिपातनानि।तेनह्रस्वोपिसाधुः।यद्यपिकेवलःशेतिःस्वङ्वर्त्ततेतथाप्यतिपूर्वःप्रकर्षो
पकर्षश्चात्रनाधिक्यम्।किंत्वभिभवःसकर्मकोह्ययम्।पूर्वान्महाभागनयातिशेषइतिदर्शनात्।अतिशयश्चनप्रत्ययार्थः।तथाहिसतिलघोरतिशायनंलघुतममितिस्या
त्।प्रत्ययार्थस्यप्राधान्यात्।नापिप्रकृत्यर्थः।तथासतिहिप्रकर्षातिशयादिभ्यएवस्यात्।नतुपट्वादेः।किंतुप्रकृत्यर्थविशेषणम्।प्रत्ययस्तुद्योतकः।तदेतदाह।अतिशय
विशिष्टेत्यादि ॥ ७७ कइति।अतएवभाष्येकर्त्तृल्युटिअतिशायनस्यप्रत्ययार्थत्वपक्षेकालीमतिशेतेकालःकालितरइतिप्राप्नोति कालतरइतिचेष्यतेइतिद्विता
यान्तात्प्रत्ययापादनंकृतम्।तथाहिसतीति।भावल्युडन्तत्वेएषदोषः।किंत्विति।अनेनकर्त्तृल्युडन्ततावनिता।अतिशयकर्त्तरिवर्त्तमानात्प्रातिपदिकात्स्वार्थेप्रत्ययइतिद्वि
तार्थः। अतिशयविशिष्टार्थ वृत्तेरित्यस्यतत्कर्त्तृकरूपार्थवृत्तेरित्यर्थः ॥

ऽइतराभिभवकर्तृत्वंविवक्ष्यतइत्यर्थः।ततःप्रवर्त्ततइति।
म·श· अतिशयोविवक्ष्यतइति। अन्तरङ्गत्वेनपूर्णं पदंपदान्तरेणान्वेतीतिव्युत्पत्त्याचस्वार्थद्रव्यलिङ्गसंख्याकारकप्रयुक्तकार्यलाभोत्तरमित्यर्थस्तदाह।विभक्त्यन्तइति। इत्याहुरिति।
२३४ अतएवत्वमारभतइतिभाष्यप्रयोगः संगच्छते। तद्द्विवचनमिति। ननुरूढोद्विवचनशब्दइतिभावः।तेनास्माकंचदेवदत्तस्यचदेवदत्तोऽभिरूपतरइतिसिद्धम्।अस्मदोद्वयोश्चेत्यने
द्वयवयवेसमुदायेऽस्मदएकस्यातिशयोविवक्ष्यते।तदातरबीयसुनावयवादौवक्ष्येते।परिशेषाद्द्वनामद्वयेयदैकदेशस्यनिर्द्धारणंसोऽस्यविषयःतत्राह: अय
मेषामिति।आढ्यतमइति।सुबन्तात्तमप्।सुपोधात्वितिलुक्।यद्यपिप्रातिपदिकात्तद्धितइतिद्दहवृत्तिकारस्यस्वरसः प्रतीयतेतथापितदीयेग्रन्थःसु
बन्तपरतयाभङ्क्तानीतः।अन्यथाहिपूर्वाह्णेतरां तमामित्यादौघकालतनेषुकालनाम्नइतिसप्तम्या अलुग्विधानंबाध्येत।उक्तंचभाष्ये।प्रियकुत्सनादिषुततःप्रवर्त्तते
सौविभक्त्यन्तइति।तिङश्चातमप्स्यादिति।इष्टन्तुनोक्तः अजादीगुणवचनादेवेतिनियमात्।तरप्तमपौघः।आतिशायनिकप्रकरणएवतादृ
घइतिवावाच्येप्रकरणान्तरेगुरुसूत्रकरणंअस्यंतस्वार्थिकस्यापितरपोज्ञापकम्।तेनाल्पांचतरां।लोपश्चबलवत्तरः इत्यादिसिद्धम्।केचित्तुयोगापेसंज्ञापकमि
त्याश्रित्यइयसुन्नत्ययस्यापिक्वचित्स्वार्थिकत्वमित्याहुः।किमेत्।आमोरुकारोयदित्यज्यतेनतर्हि पचतितरामित्यादौह्रस्वनद्यापइतिनुट्स्यात्।यस्येतिलोपस्य
परेणनुटाबाधात्।सिद्धान्तेत्वनुबन्धपरिभाषयानुड्विधौनास्यग्रहणम्।द्विवचनविभज्योपपदे।द्वयोरर्थयोर्वचनंद्विवचनंकरणेल्युट्कर्मणिषष्ठ्याःसमासः।येनपदेन
द्वावर्थावुच्येतेतत्द्विवचनंविभक्तव्यंविभज्यम्।ऋहलोर्ण्यदितिण्यन्निपातेनदपत्यादौयन्निपात्यतेतनविभाग्यमितिनभवति।विभाज्यशब्दस्यतुस्मृतिप्रयुक्तस्यसाधु
त्वंचिन्त्यमितिहरदत्तः।अन्येयंनिन्ना।यद्यपिण्यत्कुत्वेभः निपातनेनबाधात्।नचनिपातनान्यबाधकानीतिपक्षमाश्रित्यनिर्वाहःशङ्क्यः।।७ नैकस्मिन्नर्थेबहुत्वव्द्वाववधानात्स
चस्वनिमित्तकशास्त्रीयकार्यप्रवर्त्तकोनत्वेकत्वनिमित्तकनिवर्त्तकः।नचदन्तोष्ठस्यदन्ताः स्निग्धतराइतिनसिद्ध्येत्समाहारस्यैकत्वात्वर्त्तिपदार्थानांबहुत्वादितिवाच्यम्।तत्रोविशेषणे
षुसंख्यानुपादानाद्दन्तोष्ठलक्षणवर्त्तिपदार्थरूपार्थद्वयप्रतिपादकत्वेनास्तेः।यन्निपात्यतइति।अपादानेइतिशेषः ॥ राम:
२३४

दुर्वारत्वादिति। नत्वस्याभावाच्चेत्यपि बोध्यम्। सूत्रेऽव्युत्पादनादिति। हर्यादिभिरिति शेषः। विभजनीये। विभागावधौ। तच्च। उपपदं चानावश्यकमिति। प्रकरणादिना निर्णयादिति भावः। इष्टा इ
ति। अत्राप्यतिशायन इत्यनुवृत्तेर्नियमत्वसंभवस्तेन विना पीति भावः। नत्वपूर्व इति। गौरवादिति भावः। अस्यार्थस्य स्फुटं प्रतिपत्तये छान्दसमप्यत्र व्याख्यातम्। निवृत्तेति। अनुत्पन्न एवेत्यर्थः। घ
एमति सति कुत्वस्य दुर्वारत्वात्तथापि ण्यन्तादचो मनि विभज्यत इति सिद्धम्। न चार्थभेदः। निरन्तप्रेषणात्माकृतेर्यो णिजिति णोरणाविति सूत्रेऽव्युत्पादनादिति दिक्। द्विवचनं च वि
भज्यं चेति द्वन्द्वः। तस्योपपदेन कर्मधारयः। तेन द्व्यर्थवाचके विभजनीये चोपपदे सतीत्यस्यार्थः॥ अन्वर्थं चोपपदम्। उपोच्चारितं पदमिति। न तु कृत्रिमं तद्धितविधौ तस्यासंभवात्। त
च्च विग्रहवाक्य एव प्रयुज्यतेऽत्रानुगतार्थत्वान्नावश्यकम्। एवं स्थिते उपपदग्रहणं स्पष्टार्थम्। इह द्वे उपपदे द्वे च प्रकृती सुप्तिङन्ते। प्रत्ययौ च द्वौ तथापि यथासंख्यं नेष्यते। द्विवचनोप
पदमुदाहरति। अनयोरिति। विभज्योपपदमुदाहरति। प्राच्येभ्य इति। पञ्चमी विभक्त इति पञ्चमी। कथं तर्हि परुद्भवान् पटुरासीत्। एषमस्तु पटुतर इति। अत्राहुः। एकस्यापि धर्मिणो
गुणभेदेन भेदाध्या— पात्प्रतियोग्यपेक्षः प्रकर्षः तदाश्रयश्च प्रत्यय इति। व्यपदिशन्ति च। अन्य एवासि संवृत्तः। कश्चित् स एवासि धनंजयस्त्वमिति। अजादी गुणवचनादेवेत्यतो
ऽवधारणार्थ एवकारः। तुश्छन्दसि। पूर्वेण नियमेन व्यावर्तितयोः प्रतिप्रसवोऽयम्। न तु पूर्वो विधिः। तेनोपधिसंकरो न। दोहीयसीति। इयमनयोरतिशयेन दोग्ध्री। भस्याढे तद्धिते पुंवद्भावः। सिद्धश्च प्र
स्य यविधाविति वचनाङ्गोऽपि निवृत्ते दोग्ध्रृशब्दात्प्रत्ययः। ततस्तु विनिवृत्ते घत्वजस्त्वयोरपि निवृत्तिः। अलौकिके वाक्ये प्रागेवनयोः प्रवृत्तिरिति तु तत्त्वम्। गुणस्तु प्रवर्तते लुप्तेऽपि तद्वि
प्रत्ययलक्षणध्रौव्यात्। छान्दसमपि तुरिति सूत्रेणा विष्ठवदित्यतिदेशेन लोकेऽप्युपयोक्ष्यमाणत्वादिहोपन्यस्तम्। प्रशस्यस्य श्रः। अजादी इत्यनुवृत्तस्य प्रथम्या विपरिणम्यत इत्याह।
अजाद्योरिति। ज्यादादीयसः। ज्यादुत्तरस्येयसुन आकारादेशः स्यात्। वृद्धस्य च। स्वरूपग्रहणं न तु वृद्धिर्यस्याचामादिरिति परिभाषितस्य। व्याख्यानात्॥ घत्वजस्त्वयोरपि निवृत्तिरि
ति। सपादसप्ताध्यायीस्थकार्यप्रवृत्तियोग्यनयोः प्रवृत्तिः। तदेवाह। प्रागेवतयोः प्रवृत्तिरिति। ध्रौव्यादिनाऽस्य परत्वात् सपादसप्ताध्यायीस्थत्वाच्चेत्यपि बोध्यम्। तुरिति सूत्रमिति। तुरिष्ठेमेय
स्स्विति सूत्रमित्यर्थः। तस्य छान्दसत्वं तु निमित्तभूतेष्ठनीयसुनोश्छान्दसत्वादिति बोध्यम्। तुश्छन्दसीत्यस्येष्ठनि परतः पूर्वकार्यत्वाभावेन णावतिदेशाभावात्॥

हिर्ईडेश्येति। नचतद्ग्रहणसामर्थ्यात् एष्वादे। कृतिमणत्वेनेमानविवर्षिमेतीतिवाच्यम्। वर्षादेशस्य चारितार्थ्येन ष्ठानिज्यादेशनबाधापत्तौ वर्षिष्ठ इत्याद्यनापत्तेः। स्पष्टार्थमिति। हूस्थिरे इर्कौ स
अस्मप्रियस्थिरेतिवर्षादेशोऽपि पक्षे भवति। नचतस्येमनिचित्यावकाशता। रदृशब्दादिमनि चोभावात्। एवंचद्देव वृन्दस्य वर्षिष्ठोऽतिस त्रापितुमुचितम्। एवहि हिर्ईड ग्रहणं न कर्तव्य
मिति लाघवम्। स्थूलदूर। परग्रहणं यविष्टो ह्रसिष्ठ इत्यत्र पूर्वयणादेर्लोपो माभूदिति। पूर्वग्रहणंतु स्पष्टार्थम्। परस्मिन्नु न्नसामर्थ्यात् पूर्वस्यैव गुणलाभात्। स्थविष्ठ इति। मन्व त्र ओ गुण।
इत्येव सिद्धं तत्किं गुणवचनेनेति चेत् नैवम्। परयणादिलोपस्याभीयत्वेनासिद्धत्वात्। क्षिप्रे ओरभावात्। क्षुद्रे अनन्त्यत्वाच्च। इष्ठस्य यिट् च। पूर्वसूत्रं सपूर्णमनुवर्तते। तदाह। वहो
रित्यादि। भूरादेश श्चेत्यपि द्रष्टव्यम्। अत्र आदिलोपे कृतेपि शब्द आगमः। यद्वा लोपापवादो यकार आगमः। इकारस्तूच्चारणार्थः। पक्षद्वयमपीदं भाष्ये स्थितम्। युवाल्पयोः। युवेतिस्वरू
पग्रहणं नतु युवसन्नस्य। विन्मतोर्लुक्। स्रजिष्ठ इति। विनो लुकि कृते भत्वात् टकार्याभावः। अस्मादेकत्वापकादि मतोरजादौ। प्रशंसायां रूपप्। प्रकृत्यर्थस्य परिपूर्णतेह प्रशंसानतुस्तु
ति। तेनेहापि भवति। चोररूपोऽयं यद् दृशोरप्यञ्जनं हरति। गुप्तवस्त्वपहरणेन चौर्यं परिपूर्यते। पचतिरूपमिति। क्रियाप्रधानमाख्यातम्। क्रियायाश्चासत्त्वरूपत्वेपि एकवचनं भवति।
औत्सर्गिकत्वात्। तेन पचतो रूपं पचंतिरूपमित्यादि। इहप्रथमैवविभक्त्यंतराणामप्राप्तेरित्याहुः। पश्येत्यादियोगे कर्मणि द्वितीयाप्यस्तीति तत्त्वम्। क्लीवत्वं लोकात्। एवं पचतिकल्पमि
त्यादावपि बोध्यम्। विभाषासुपः। सत्रे सुप इति पञ्चम्यंतं षष्ठ्यन्तसमर्थप्रत्ययेनेत्युक्तेः। सुबन्तादिति। प्रागित्यपकृष्यते। तच्च यद्यपि सौत्रस्य पुरस्ताच्छब्दस्य विवरणं नत्समानार्थं तथा
पि तद्योगे षष्ठी न प्रवर्तते अन्याराद् इति सूत्रे अञ्चूत्तरपदस्य दिक्शब्दत्वेपि षष्ठ्यन्तसर्थप्रत्ययेनेत्येतद्बाधनार्थं पृथग्ग्रहणमिति सिद्धान्तयित्वा प्राक् प्रत्यग्वा ग्रामादि
त्युदाहृतत्वात्। काशिकायांतु रत्नावपि पुरस्ताच्छब्दः प्रयुक्तः। अतएवसुबन्तादिति तदुक्तिर्हरदत्तेन भङ्क्त्वा व्याख्याता ॥
भवादिवत्सेपिष्ठादौ प्रत्ययसंकरश्च मवधानाद्यप्राप्तिशङ्कावारणार्थं पूर्वमात्रस्येत्यर्थकं तदिति भावः। अनन्त्यत्वाच्चेति। इक्परिभाषोपस्थित्या पकारदकारयोर्न गुण इति भावः। औ
त्सर्गिकत्वादिति। संख्यायास्तिङोक्तत्वेपि एकवचनमिति योगविभागादिति भावः ॥

भङ्गमेवाह। ल्यब्लोप इति। वैषम्यस्येति। तन्मूलकता प्राक्शब्दस्यैव प्रयोगादिति भावः। प्राक्त्वम्। प्रत्ययस्य पूर्वदेशत्वम्। पुरस्तादेवेति। पुरस्ताच्छब्दावृत्त्यैतदर्थलाभः। अभिधेयवदेवेति। ननु प्र
ल्यब्लोपे एषा पञ्चमी। एवंभूतं सुबन्तं प्रकृतित्वेनाश्रित्येत्यर्थ इति। यत्तु प्राचो ग्रन्थ्याच स्थाणेरुक्तं सुबन्तादिति ल्यब्लोपे पञ्चमीति। नद्भ्रमसात्। नहि हरदत्तेन काशि[illegible]नीते
त्येव सर्वं तथा नेयम्। वैषम्यस्फुरत्वात्। प्रागेवेति। मौत्रस्तु शब्दो अवधारणे वर्तत इति भावः। तेन बहुजेव विकल्पते न तु पूर्वत्वमन्यथा प्राक्त्वं विकल्पेत। तथा च पक्षे बहु
चरः स्यात्। भाष्यकारस्त्वाह। तुशब्दस्य नेदं फलम्। तथाहि। उदश्वितोन्यतरस्यामित्यादौ प्रत्ययएव विकल्पते। प्रधानत्वात्। नतु परत्वं गुणत्वात्। गुणानां च परार्थत्वादिति न्या
यात्। तद्वदिहापि विभाषाग्रहणेन बहुजेव सम्भत्स्यते। न पुरस्तादित्येतत्। किंतु अवधारणार्थस्य तु शब्दस्येहान्यदेव प्रयोजनम्। पुरस्तादेव सर्वं यथा स्यात्। तेन लिङ्गसंख्ये
अपि प्राक्प्रत्ययोत्पत्तेः प्रकृत्यवस्थायामपि दृष्टे इष्टे वस्तः प्रयोगश्च प्राक्प्रकृतेरिति। तेन बहुगुणो द्राक्षा लघुर्बहुतर्णं नरः इत्यादौ न विशेष्यनिघ्नता। ननु स्वार्थिकाः प्रकृति
तो लिङ्गवचनानि लभन्त इत्येव सिद्धमिति चेत् सत्यम्। एतदेव ज्ञापयति। ईषदसमाप्तौ ये स्वार्थिकाः तेषु अभिधेयवदेव लिङ्गवचने स्त इति। तेन गुडकल्पा द्राक्षा शर्करा
कल्पो गुड इत्यादि सिद्धम्। यत्तु काशिकायां बहुगुडेति स्त्रीलिङ्गं पठ्यते तत्स्वामादिकं भाष्यविरोधादिति हरदत्तः। प्रागिवात्कः। सुप इत्यनुवर्तते तेन तिङन्तात्कोन। अ
व्ययसर्वनाम्नाम्। तिङश्चेति। मण्डूकप्लुत्येति भावः। ङ्याप्प्रातिपदिकात् सुप इति चानुवर्तत एव। कस्य चदः। कान्ताव्ययस्येति। सर्वनामग्रहणं तिङ्ग्रहणं च नेह सं
बध्यते। तयोः कान्तत्वासंभवात्। अधोकृ अधेगित्यादौ हि असिद्धकत्वम्। यद्यपि शक्नोतेर्यङ्लुकि लङि तिपि अशाशगिति संभवति तथापि यङ्लुकोऽसार्वत्रिक
त्वात् नेदृशं लक्ष्यमस्तीति भावः। ओकारसकारेति। अकच्चिधौ सुपोप्यनुवृत्त्या सर्वनाम्ना सुपा च टेर्विशेषणे कामना राद्धवस्थाप्रसङ्गे भाष्यकारवचनाद्दावस्य।
श्रीयते। ओकारसकारेत्यादि सङ्कोचश्च युष्मदस्मन्मात्रविषयः। तथैव भाष्ये उदाहृतत्वात् ॥ ७
कृतिवदित्यर्थः। तेन प्रकृतिलिङ्गाद्यतिक्रमो नापद्यत इति तात्पर्यम्। सुप इति चेति। क्वचित्प्रातिपदिकस्य टेर्ग्रहणं क्वचित्सुबन्तस्य टेरित्यर्थलाभार्थं[illegible]नुवृत्तिरिति बोध्यम ॥





अविशेषेणेति। विशेषान्यभावेनेत्यर्थः। ननु सुबन्तस्येति। अतएव नकादेशः सान्त न कार्यः कः कौकद् स्येषमर्थ इति भाष्यं संगच्छते। हरदत्त इति। अत्राहुचित्स्वभाषितपुंस्का इतिविक
ल्पात्पक्षे इत्त्वाभावस्तु सुलभ इति। कस्येति। नकस्यापीत्यर्थः। हरदत्त इति। अत्राहुर्वस्तु योगविभागसामर्थ्यात् बहुव इत्यस्यात्रासंबन्धस्तेनाबहुचोपेतौ ततः कठचसिद्धार्थ च कार
इति सूत्रार्थ इति। यस्मिन् विधिरिति। प्रत्यासत्त्योपस्थितप्रकृतप्रत्ययस्य विशेष्यस्य सत्त्वादिति भावः। औपदेशिकप्रतिपत्त्यर्थं तु नादि ग्रहणम्। ठग्रहणं वै यर्थ्याशङ्कापरभाष्यासंगतेः
अन्येषां त्वविशेषेण प्रातिपदिकस्यैव टेः प्रागकच् न तु सुबंतस्य। तेन सर्वकेण इमकेन भवकन्तमित्यादि सिद्ध्यति। शीलेक इति। शीलं स्वभावो नियमश्च। तूष्णीक इति। केण
इति ह्रस्वस्तु नाभाष्यकृता दीर्घस्योदाहृतत्वात्। संज्ञापूर्वकस्यानित्यत्वाद्वा। दुर्घटवृत्तिकारस्तु नकपीत्यत्र नेति योगविभागादित्याह। नीलोपवद्युकात्। हन्तेर्धानका इ
ति। धानाशब्दः स्त्रीलिङ्गः। नकः कः केण इति ह्रस्वः कप्रत्ययान्तात्टाप्। अन्नप्रत्ययस्यादितीत्वेन भवितव्यम्। प्रायेण तु धानका इति पठ्यते। तत्र लिङ्गमतिवृत्तिर्द्रष्टव्येति हरदत्तः।
पचस्त्रियामजिति सूत्रे स्त्रीग्रहणेन ज्ञापितं स्वार्थिकाः प्रकृतिलिङ्गं क्वचिदतिवर्तन्ते पीनितेनेह पुंस्त्वमिति भावः। घनिलचौच। वक्तव्यमप्राप्तमिति काशिका। इह पूर्वसू
त्रेणैव ठञ्विहितः। वावचनात्कोऽपि। चकारेण तुकस्याप्यनुज्ञातेति चिन्त्यम्। योगविभागे फलमपि चिन्त्यमिति हरदत्तः। ठाजादौ। समानाधिकरणे सैव पुंस्त्वम्। आदिग्रहणं चिन्त्य
प्रयोजनं यस्मिन्विधिस्तदादाविति एव सिद्धम्। अस्मिन् प्रकरण इति। प्रत्यासत्त्यात्तयोरेवार्थयोर्बुद्धौ संनिधानादिति भावः। सर्वं तु प्यत इति। एतच्चोर्ध्वं ग्रहणसामर्थ्याल्लभ्यते। अ
न्यथा आदेः परस्येति द्वितीयादचोयः परस्तस्यादेरेव लोपः स्यात्। ननु ठग्रहणं मर्थ इकादेशे कृते जादावित्येव सिद्धत्वादिति चेन्न। उकोऽद्वितीयत्वे ततः परस्य ठावस्थायामेव लोपे ठ
स्य कादेशार्थं ग्रहणात् इदं धनमनुदाहरति। वायुक इति। किंच यदा विश्वगुप्रभृतिभ्यष्ठच् तदा प्रथममिकादेशस्यासंभवेनाजादिलक्षणो लोपो न स्यादिति तदर्थमपि ठग्रहण
बोध्यम्। प्राचामुपादेः ड उपेन्द्रदत्त इति॥ ठावस्थायामिति। नित्यत्वादिति भावः। कादेशार्थमिति। न च रीत्या लिकसिद्धये ठ च इत्येव न सामान्यापेक्षज्ञापकेन सर्वतः पूर्वमिकादेशापत्तिरिति वा
च्यम्। सामान्यत्याज्ञापकसिद्धस्य सार्वत्रिकत्वेन तस्यैतद्विषये प्रवृत्तेः। एवं रीत्या फलान्तरमपि संभवतीत्याह। किंचेति। असंभवेनेति। कादेशेन बाधादिति भावः। तदर्थमपीति। तत्रापि कादेशात् पू

दोषश्चेति। एकारस्यावर्णापत्तेरिति भावः। अकृतव्यूहपरिभाषयेति। यदि गुणो न स्यात् तर्हि कारादेर्लोपः स्यादिति गुणनिमित्तविनाशसंभावनासत्त्वादिति भावः। ज्ञापकस्य। अकृतसन्धे
रितस्य। विशेषपरत्वादिति। अस्वार्थिकप्रत्ययविषयत्वादित्यर्थः। द्विगर्थ स्तुनेन्द्रसपरस्येति ज्ञापकेन पूर्वोत्तरपदनिमित्तकार्यापेक्षयान्तरङ्गस्याप्येकादेशस्य पूर्वमप्रवृत्तेर्न दोष इति।
इहोदाहरणमिति। अत एव नामपदं चरितार्थम्। अकृतव्यूहपरिभाषयेति। अस्य पदापीत्यादिः। इदमुपलक्षणम्। एकादेशपर्यन्तं तत्तत्पादस्याप्यापीस्यकार्यप्रवृत्तियोग्यताया अकृताया अप्र

स्यादेतत्। कृतसंधेरुपेन्द्रशब्दादेकादेशस्य पूर्वान्तवद्ग्रहणात् उपादेरिति विधीयमानो प्रत्ययो स्तां नामालोपस्तु नकारादेरेव स्यात्। ततश्च उपड उपक इति रूपे
न स्याताम्। एवं च निलय्ठथ्यपि दोष एव तत्स्यादिति वहितोऽपंसम्प्रसारं चेदिति वार्तिकं वक्तुमुचितमिति चेत्सत्यम्। प्रकारान्तरेणैव निर्वाहसंभवान्नोक्तम्। तथा
हि। अकृतव्यूहपरिभाषया आद्गुणात्पूर्वमेव प्रत्ययः। न च परिनिष्ठितत्वपक्षे समर्थग्रहणेन सोऽस्त्विति वैम्प माणिरित्यत्रैव परिभाषाबाधः शङ्क्यः। प्राग्दिश इति सूत्रे
समर्थग्रहणनिवृत्तिमित्युक्तत्वात्। गुरुज्ञापकबलेन समर्थग्रहणप्रत्यासत्त्या न पक्षेऽपि ज्ञापकस्य विशेषपरत्वादिति दिक्। उपेन्द्रः। उपगुरूपकमित्यादिषु उपडादीनां प
श्वानां रूपाणां साम्येऽपि प्रकरणादिना विशेषोऽवसेयः॥ जातिनाम्नः। ये शब्दा नामत्वेन प्रसिद्धा मनुष्येषु नामत्वेन विनियुक्ताः तद्दोदाहरणम्। द्वितीयमिति।
एवः तथ्यसरमिति प्राचां संज्ञा। वाग्माशीरिति। वा विभाशीर्यस्येति विग्रहः। वाशिक इति। यद्यत्र द्वितीयादच ऊर्ध्वस्य लोपः स्यात्। तदाकृतव्यूहपरिभाषया वा
च्। आदृक इति स्थिते यस्येति लोपे तस्य स्थानिवत्त्वादाकारान्तस्य भस्यान्तर्वर्तिनीं विभक्तिमाश्रित्य वकारान्तस्य पदत्वेन कुत्वजश्त्वयोः कृतयोः वागिक इति स्यात्। उ
त्तरपदलोपे तु अजस्थानादेशत्वेन स्थानिवत्त्वाभावात् तुल्यावधिकया भसंज्ञया पदसंज्ञा बाध्यते॥ इति रित्यपि बोध्यम्। यस्येति लोपे इति। अस्य सिद्धान्ततयापि
ति शेषः। इकं निमित्तीकृत्य चान्ते भस्य तास्त्वात् कृत्वा प्रवृत्त्यात त्ति द्वि इति भावः। स्थानिवत्त्वादिति। न चास्यापि स्थानिवद्भावस्य परम्परया पदान्तविधि ज्ञापकतया भत्वेऽपि न पदः
न्तेति स्थानिवत्त्वनिषेध इति वाच्यम्। पदिकेऽपि दोषापत्तेः। यदि तु द्वितीयादच ऊर्ध्वस्य मापस्य लोपविधायकवचनप्रामाण्याद्‌ दृते स्थानिवत्त्वं तर्हि प्रकृतेऽपि तुल्यम्॥

द्रष्यत इति। एतच्च स्यादिति सूत्रे भाष्ये स्पष्टम्। एवं चैकाच्च रपूर्वपदानामिति वार्त्तिकं षट् शब्दातिरिक्त विषयकमिति भावः। धर्मान्तराणाम्। चापलादीनाम्। अश्वेनाश्वाय
मुत्पन्नत्वादीनां वा कयोरन्यतर इत्यादि। इत्यर्थे कतरो नयोरित्यादि प्रयोगः स्यादिति भावः। एकस्येति किमिति। द्वयोर्मध्ये एकस्यैव निर्द्धारणादिति प्रश्नः। कर्मणीति। द्विकर्मके

तत्रापि तद्धिताश्रयायापवादत्वादेव बाधः। विभक्त्याश्रयानुएकसंज्ञाधिकारात्स्वरत्वाद्ध्यत इति विवेकः। कथमिति। अत्रापुत्तरपदलोपे जश्त्वं न स्यादिति प्रश्नः। ष
षड् इति। अत्र सोत्र एव लोप इष्यते। नत्वोपसंख्यानिक इत्यर्थः। वत्सो साम्य। तनुत्वं न्यूनतास्याच प्रवृत्तिनिमित्तस्य प्रत्यासत्तेः। कचित्तु तत्सहचरितधर्मान्तराणाम्। तत्रवत्सः
प्रथमवयाः। वयसश्च प्रथमस्य न्यूनत्वं नाम वयोत्तर प्राप्तिः। तदाह। द्वितीयमिति। तरुणउक्षा तारुण्यस्य च तनुत्वं तृतीयवयः प्राप्तिः। अश्वेनाश्वायामुत्पन्नोश्वः। अश्व
त्वं च जातिः। तत्सहचरितस्योक्तधर्मस्य न्यूनत्वम्। अन्यपितृकत्वात्। तथा च गर्दभेनाश्वायामुत्पादितोऽश्वतरः। ऋषभो भारस्य वोढा। मन्दशक्तिस्तु ऋषभतरः। किंयत्त
दः। निर्द्धार्यमाणवाचिभ्यः प्रत्ययो यम्। अभिधानस्वभावात्। नेह। कयोरन्यतरो देवदत्तः ययोस्तयोरिति। एकस्येति किम्। द्वयोरिति कर्मणि षष्ठी मा भूत्। तथा हि सति
अस्मिन् ग्रामे कौ देवदत्तयज्ञदत्तावित्यत्रापि स्यात्। वा बहूनाम्। जातिश्च परिप्रश्नश्चेति समाहारद्वन्द्वः। तत्र जाताविति सर्वेषां विशेषणं परिप्रश्नग्रहणं तु योग्यतावि
त्वात् किमेव विशेषणं तद्वक्षेप निवृत्त्यर्थम्। तत्र जातिग्रहणं ॥ ॥ प्रायोभिप्रायम्। बहूनां
निर्द्धारणेपि डतरचः इष्टत्वात्। तथा च वार्त्तिकम्। किमादीनां द्विबह्वर्थे प्रत्ययविधानादुपाद्यानर्थक्यमिति ॥ निर्द्धारण इत्यर्थः स्यात्तदेति भावः। इत्यत्रापीति। अपिरेवार्थे। अत्रै
वस्यादिति नत्वेकनिर्द्धारण इति भावः। डतमच इष्टत्वादिति। अत एव कतरकतमाविति सूत्रे जातिपरिप्रश्नग्रहणं सार्थकम्। न च कतरशब्दार्थम्। कतमसाहचर्येणोपपत्तेः। अत एव कतम
कतमे षामाढ्य इति द्वित्वप्रकरणे इष्टमेभाष्य प्रयोगः संगच्छते। इष्टत्वादिति। बहुष्वासीनेषु कश्चित् कंचित् पृच्छति कतरो देवदत्त इति प्रत्यय इति सूत्रे भाष्य प्रयोगादिति भावः ॥ श. म. २३७

इति वचनकर्तव्यमिति। जातिग्रहणाकर्तव्यत्वे तात्पर्यम्। परिप्रश्नग्रहणं तु स्वेपार्थनिवृत्तये आवश्यकमिति बोध्यम्। आकरइतीति। पूर्वसूत्रस्य द्वयोरित्यस्य प्रत्याख्यानभाष्यव्या
ख्यावसरे कैयटे इत्यर्थः। अनुवृत्तेरुक्तत्वादिति। अत एवापक्षेपणइति सूत्रे कएतयोरर्थयोर्विशेष इति भाष्यप्रयोगः संगच्छते। तमादयः प्रागवक्षेपणे कनो नित्यादिति प्रापि
अत्र कैयटः। द्वयोरिति जातिपरिप्रश्न इति च न कर्तव्यमिति भाव इति। तदेतदाह। प्रत्याख्यानमाकर इति। तथा च कतमो भवतामध्यापकः। यज्ञदेवदत्तो वेति सिद्ध
म्। महाविभाषयेति। समर्थप्रथमग्रहणयोः प्राग्दिश इति सूत्रे निवृत्तत्वेपि वाग्रहणानुवृत्तेरुक्तत्वादिति भावः। एतेन वाग्रहणस्यापि निवृत्तिरिति प्राचोग्रन्थं व्याचक्षाणाना
मुपेक्षणीयतां ध्वनयति। किमोस्मिन्निति। द्वयोरित्यस्य प्रत्याख्यातत्वादिति भावः। प्रागिवीयानां पूर्णोवधिः। अश्वकइति। नायं स्वार्थिकः अश्वशब्दो ह्यश्व एव वर्तते। कन्प्रत्य
यस्तु प्रतिकृतिरूपेस दृश इत्येके। अन्ये तु गौर्वाहीक इतिवत् अश्वशब्दः सादृश्यतिबन्धनाद् भेदोपचारात्प्रतिकृतौ वर्तते। कन्प्रत्ययस्तु औपचारिकत्वद्योतक इत्याहुः।
प्रतिकृतौ किम्। गौरिव गवयः। तृणचर्मकाष्ठादिनिर्मितं प्रतिमापरपर्यायं वस्तु प्रतिकृतिः। गवयस्तु नैवम्। अश्विसदृशस्येति प्रकृतिप्रत्ययसमुदायसंज्ञेति बोध्यम्। वासुदे
व इत्यादि। याः प्रतिमाः प्रतिगृह्य गृहाद्गृहं भिक्षमाणा अटन्ति ता एवमुच्यन्ते। देवलकानामित्यनेन न तु एवं भिक्षवो भिप्रेताः। यास्त्वायतनेषु प्रतिष्ठाप्यन्ते पूज्यन्ते च। तासु
तु सूत्रान्तरेण लुक्। तदुक्तम्। अर्चासु पूजनार्थासु चित्रकर्मध्वजेषु च। इवे प्रतिकृतौ लोपः कनो देवपथादिविति। अर्चासु शिवः। विष्णुः। चित्रकेर्मणि। अर्जुनः। दु
र्योधनः। ध्वजेषु। कपिः। गरुडः। सिंहः। हस्तिकानिति। ईदृशमेव विषयमभिप्रेत्य पठन्ति। रामं सीतां लक्ष्मणजीविकार्थे विक्रीणीते यो नरस्तं च धिक् धिक्। अ
स्मिन्पद्ये योपशब्दान्त्वेति व्यर्थप्रज्ञंपण्डितं तं च धिक् धिगिति। द्रव्यं च भव्ये। द्रुशब्दादिवार्थे यत्। सम्यां च तद्विषयात्। द्रुः स्यादिति। इवार्थे इति बोध्यम्। इग्ना
श्च इत्यतः प्राक् इवे इत्यधिकारात् ॥ कमिति भावः॥ प्राग्दिवीयानां पूर्णोवधिः॥ द्योतक इत्याहुरिति। सूत्रान्तरैः शब्दमर्यादयैव तदर्थलाभो न्यायसिद्धिः। पूर्व
व्याख्याने त्वार्थिकप्रकरणविरोध इति बोध्यम् ॥
सा

म·भा
२३८

तद्विषयादित्यस्य तद्विषयस्त्वीव घटकादित्यर्थः स्तथैव भाष्ये उदाहरणात् तत्फलमाह। शास्त्रीयस्यामिति। एकस्य चेति। पूर्वपदभूतस्य शब्दस्यार्थविषयो नोत्तरपदभूतस्तद्विषय इत्यर्थः। एकस्य
वेवार्थ इत्यस्य समासस्य पुनर्नैवार्थवनिरितिकश्चिद्गुस्पेष्टतः स्वो किं व्याचष्टे। एवं नेति। स एवेत्यर्थः। समासोत्तरमिवार्थयोगसंभवेपि समासे द्वाविवार्थौ नान्तर्भूतावित्यर्थः। स्वातन्त्र्यं काकतालः
उपाध्यन्तरयोगः। काकतालीयमहान् विग्रहः। काकतालमिवेति। आकर इति। विग्रहस्य भाष्ये दर्शनमत्रारुचिः। समुदाय इति। कनन्त इत्यर्थः। कनन्तात्त्वोनेति भावः। समुदायस्योद्भूतावयवभेदत्वा
एन्नीयस्यामेत्यत्रैवैकस्य इत्यर्थः सच समासेन्तर्भूत इति ज्ञानं भवति। काकतालीय इति। प्रकृतसूत्रादेव ज्ञापकादिवार्थे समासः। सुप्सुपेति वा। उभयथापि विशेषणं ... विनिर्मुक्तः। स
वर्ण्यप्रत्ययविधायस्य वत्तेन त्वात् तस्योपाध्यन्तरयोगो विग्रहश्च नेत्याकरः। पूगाञ्ज्यः। अग्रामणीपूर्वादिति किम्। देवदत्तो ग्रामणीर्येषां ते देवदत्तकाः। एषां ग्रामणीरिति कन्। अत्र स
मुदायः पूगवचनः। व्रातच्फञोः। उत्सेधजीवित्वं व्रातस्य पूगाद्विशेषः। पार्श्व इति। पर्शुरिति जनपदशब्दः। ततोपत्ये द्व्यञ्मगधेत्यण् बहुत्वे तद्राजस्यालुक्। पुनः संघवि
वक्षायामनेनाण्। यौधेय इति। युध्यते सौ युधा। युधेरिगुपधलक्षणः कः। युधाया अपत्यं द्व्यच इति ढक्। तदन्तात्सङ्घरूपविवक्षायामनेनाञ्। आद्युदात्तत्वम्। किं च।
यौधेयस्याङ्कलक्षणं वा यौधेयः। संघाङ्कलक्षणेत्यण्। एवं यौधेयादिषु पठ्यन्ते नेतुस —— जनद्वयमूह्यम्। यौधेया इति। अञो लुक्। अन्तोदात्तत्वम्। पादपातस्या तद्धि
तार्थ इति। समास इति। यद्यपि प्रकृत्सुपाधिर्दीप्यातत्वापि तु नेत्यादेवेतिततद्धितार्थो भवत्येवेति भावः। द्वौ द्वौ पाशौ ददातीति। समर्पणमात्रमिह ददातेरर्थः। न तु परस्वत्वा
पादनपर्यन्तं तथात्वे हि उत्तरसूत्रविषयत्वं स्यात् ॥ ५ ॥ द्वन्द्वचनम्। उत्सेधजीवित्वमिति। शरीरायासेन जीवित्वमित्यर्थः। संघविवक्षायामिति। सङ्घत्वस्य कल्पेद इत्यर्थः। आयुध
जीविसंघादित्व उच्यते रिति भावः। किं च यौधेयस्याङ्क इत्यादिग्रन्थोऽसदनानुरोधेन। स्त्रीपुंसाभ्यामिति सूत्रे भाष्ये संघाङ्केति सूत्रे ऽपत्यरूपगोत्रस्यैव ग्रहणमित्युक्तेरिदं चिन्त्यम्। प्र
कृत्सुपाधिरिति। प्रकृत्यर्थोपाधिरित्यर्थः। समर्पणमात्रमिति। रजकाय वस्त्रं ददातीतिवत्। उत्तरसूत्रेति। तत्र च व्यवसर्गपदेन मुख्यदानस्यैव ग्रहात्। केचित्तु दानार्थकददातियोगेपि
वीप्साविवक्षायामन्तरङ्गत्वाद्यमेव तु न तस्य पदान्तरप्रतिपाद्यद्व्यवसर्गयोगनिमित्तकत्वेन बहिरङ्गत्वाद्धि। पात्वन्त्वोसैवेतस्यान्तरङ्गत्वमिति आहुः ॥

ए म:
२३८

निष्कर्षविरोधादिति। तत्र त्रस्य तदीयनिष्कर्षविरोधादित्यर्थः। द्विवस्तदर्थस्येत्यादौ प्रेष्यब्रुवोरित्यत्र च शेषद्वयस्य — निवृत्त्याकृत्स्नेऽर्थेति सूत्रेऽपि तस्यासंबन्ध इति हरदत्ताशयोऽत्रेत्यन्ये। प्रथ
मान्तादिति प्रचुरार्थबोधकात्तु इत्यर्थः। तदाह। प्रकृते द्योत्य इति। तद्ग्रहणमर्थमिति। प्रकृतवचनं वर्तमानस्य प्रथमान्तत्वमेव संभवतीति भावः। उच्यमानतेति। न च वचनशब्दीयप्रकृतिप्रत्य
यार्थयोः प्रकृत्यर्थस्य मयट् प्रकृत्यर्थविशेषणताल्ल्युडर्थस्य विधेयप्रत्ययविशेषणतेत्यस्यान्याय्यत्वमिति वाच्यम्। प्रकृतेति लुप्तसप्तम्यन्तं भिन्नं पदं वचने इति च प्रत्ययार्थः। कृत्स्नवचनाधिक
एतच्च ग्रामादिकं शेषाधिकारबलेनाप्त सूत्र्याः समासनिवृत्तिफलकतया तिङन्तेनोदाहरणमिति प्रागुक्तनिष्कर्षविरोधात्। तत्प्रकृतवचने मयट्। प्राचुर्येणे
ति। यद्यपि प्रकृतशब्दः प्रस्तुतमात्रे रूढः तथापीह वचनग्रहणाद्यं विशेषो लभ्यते। तद्धि यादृशस्य प्रकृतस्य लोके मयटा वचनं प्रत्यायनं तत्र यथा स्यादित्येवमर्थ
म्। भावे र्ति। प्रथमान्तात्प्रकृते द्योत्ये प्रत्ययः स्वार्थिकत्वात्प्रकृतितो लिङ्गम्। अस्मिन्पक्षे तद्ग्रहणमर्थम्। दिति इति। अस्मिन्पक्षे उच्यमानता प्रकृतता च प्रकृत्य
र्थे विशेषणं ल्युडोक्तमधिकरणत्वं तु मयडर्थः। अतएव विशेष्यनिघ्नता। तदाह। अन्नमयो यज्ञ इति। अन्नं प्रकृतमुच्यते यस्मिन्नित्यर्थः। यत्तु प्राचां क्तं तद् द्विविधमपि समासम
र्थात्प्राचुर्येण प्रस्तुतमन्नेत्यर्थे मयट् स्यादिति। यच्च माचरत्सुः प्राचुर्येणेत्यादि प्रत्ययार्थविशेषणमिति। तन्नेदं वक्तव्यम्। वच्यर्थत्यागानौचित्यात्। अधिकरणसक्ति
यासाकाङ्क्षत्वेन सद्व्याहारे गौरवं चेति मूले दोषः। टीकायां तु प्रकृत्यर्थेति वक्तव्ये प्रत्ययार्थेत्युक्तिः रभसकृता आकरविरुद्धा चेत्यास्तां तावत्। निपातसमुदाय
इति। उपदेशपारम्पर्ये वर्तते ॥ ७७ रण इत्याकाङ्क्षायां प्रकृत्यर्थस्येवलाभानस्येवोच्यमानतेत्याशयेनैवमुक्तेः। ल्युडोक्तमिति। ल्युड न्तेनोक्तं नाधिकरण
त्वमित्यर्थः। मयडर्थ इति। नैवं स्वार्थिकप्रकरणविरोधः। आद्ये तत्प्रकरणपाठस्य चारितार्थ्यात्। वस्तुत उच्यमानता प्रकृत्यर्थस्य प्रायिकी। अतएव निजामयोद्धाम मपि पा
वनीमयं भवन्मयो ह्यापतिनावनीपतिरिति सिद्धम्। भवती प्रचुर इति हि तत्रार्थः। भवत्याः पूर्णहृदय इति यावत्। अतएवानन्दमयाधिकरणे विकारशब्दान्नेति चेन्न प्राचुर्या
दिति सूत्रं तन्मयट्परतया वृत्तिकृद्भिर्व्याख्यातम्। न हि तत्रोच्यमानता स्वारसिकी भवतीति दिक् ॥

म.श. वचनाच्चेति। सुप्सुपेति समासस्तेन प्रातिपदिकत्वमित्यन्यो कण्ड्वादियगन्तादिति। नैतेभ्यः कर्तरि क्विप्। दृश्यत इति कण्ड्वादिसूत्रस्य भाष्यं तु अजन्तकण्ड्वादिपरम्। नन्वेवं [illegible] प्रभृत्या
२४० वितत्वात्। कण्डूरित्यादौ कर्त्रर्थानवगमाच्च तेभ्यः क्विबिति तदाशयं केपट आह। नन्वप्रकृतेतदस्ति। भिषगित्युक्ते कर्त्रर्थावगमादित्याशयः। पितर एव देवतेति। [illegible] इत्याद्युक्त्य
र्थः। अत एव सूत्रे देवताशब्दस्य परनिपातः। फलान्तरमाहेति। एवं चन त्राजिति पाठे पिनदोष इति भावः। स्वसमानाधिकरणेति। अत्र सामानाधिकरण्यं देशिकं [illegible] तस्मात् सर्वत्र [illegible] वदाश्रयम
वचनाद्वा प्रातिपदिकादपि प्रत्ययः। भेषजमिति। भिषज्यतेः कण्ड्वादियगन्तात् क्विप्। भिषक्। भिषजामिदं भेषजम्। अस्मादेव निपातनादेकारः। पितृदेवत्यमिति। पितर ए
व देवतेति कर्मधारयः ततो यत्। अर्घ्यमिति। मूल्ये पूजाविधावर्घ इत्यमरः। आग्नीध्रमिति। अग्नीधः शरणे रण् भं चेति अन्तोदात्तं शैषिके [illegible] ततस्स्वार्थे अञ्। आग्नी
दात्तत्वं फलम्। फलान्तरमाह। स्त्रियामिति। समानं धारणमस्याः साधारणी। अनेकं प्रत्यविशिष्टसंबन्धात्। एषोदरादित्वात् समानस्य सभावः। ततो अञ्। ङीप्। अन्यथा
चेटाप्। वर्णे चानित्ये। अनित्यत्वमिह स्वसमानाधिकरणध्वंसप्रतियोगित्वम्। अत एव रक्ते इत्युत्तरसूत्रं सार्थकम्। लाक्षादिना रक्ते लौहित्यस्य यावद्द्रव्यभाव
स्थानेन नित्यतया पूर्वेणासिद्धेः। लिङ्गबाधनं वेति। प्रातिपदिकान्तद्धिताद् इति पक्षं प्रतिपदविधिसामर्थ्येनापवादत्वमिति पक्षं चाश्रित्येदं वार्तिकम्। [illegible] च वर्त्य
वविधेयं शिष्टानुवादः प्रतिपदविहितेन कना लिङ्गनिमित्तस्य प्रत्ययस्य नित्यं बाधः प्राप्तः स वा वक्तव्य इत्यर्थः। नच ड्याप्प्रहणसामर्थ्यादिष्टसिद्धिः। एतच्चैत
च्छब्दाभ्यामत्यन्तस्वार्थिके कनि प्राप्ते तद्बाधेन चरितार्थत्वात्। वस्तुतस्तु सुबन्तात्तद्धिताः निरवकाशत्वेनैवापवादत्वं तथा चेदं वार्त्तिकं न कर्त्तव्यम् ॥
न वस्थितमित्यर्थः। यावद्द्रव्यभावस्थानेनेति। द्रव्यान्तरेण वर्णान्तरानुत्पादने इति शेषः। यद्वा पूर्वरूपाणामभिभव एव अत्र न तु नाश इति भावः। प्रातिपदिकान्तद्धितादिति।
अत्यन्तस्वार्थिका इति शेषः। इति पक्षे चेति। अन्तरङ्गत्वाद्बाधकत्वमित्यपि बोध्यम्। स्त्रीत्वनिरपेक्षत्वेनास्यान्तरङ्गत्वम्। प्रतिपदेति। अन्तरङ्गेणेत्यपि बोध्यम्। इत एव ज्ञापकाद
त्यन्तस्वार्थिकानां रभ्य ड्याबिति निवृत्तमिति भाष्यानुसारी मार्गः। नचेत्यादिरवोचामेत्यन्तं तु रक्षितायनुरोधेनेति दिक् ॥ रामः
२४०

ह्रस्वत्वं चेति। दीर्घस्येति शेषः। लुक्यपि स्थवर्णार्थमिति। इदमित्थं प्रकरणस्थके पदानुरोधेन। वक्तुमुचितमिति। मात्रालाघवपर्यालोचने इति शेषः। तिङ्श्चेत्यस्य मण्डूकानुवृत्तिक
ल्पनेतमात्यपि प्राक्‌ नोनित्यादिति मन्दबुद्धसाधुत्वावेषामग्रहणायन्यास्यनाश्रयणे च गौरवं पर्यालोच्यते तदा नवक्तुमुचितम्। एतेन गोष्ठात्खञिति सूत्रोक्तरीत्या रूपयोनेनाबाधा
र्थमेवैवं पाठः स्यादिति रूपयोः पवादित्युक्तमित्यपास्तम्। प्रायिकं चेति। व्यवस्थितविभाषामूलकत्वादिति भावः। व्याचख्युरिति। यदि तु समासपदं संज्ञापरं तदा निर्देशादेव शसित्यन्ये।
अत एव ङ्याप्ग्रहणं व्यर्थमिति। सन्धीति रूपं प्रबलमिति अवोचाम। उपायेति। उपायशब्दः ष्ठकं लभते ह्रस्वत्वं चेत्यर्थः। अकस्मादिति इह पठ्यते तद्वान्त्वं न तु नान्तत्वेन कादेशेन।
अव्ययत्वात् टिलोपः आकस्मिकम्। वार्षिकमिति। अतिवर्तन्ते अपि स्वार्थिकाः क्वचिल्लिङ्गमिति नपुंसकत्वम्। मृदस्तिकन्। प्रत्ययस्यादित्येव सिद्धे इकारोच्चारणं प्रक्रियाला
घवार्थम्। टापो लुक्यपि स्थवर्णार्थम्। पञ्चभिर्मृत्तिकाभिः क्रीतः पञ्चमृत्तिको घटः। सस्नौ। इह प्रशंसायां [illegible]पद इत्यस्यानन्तरं रकजे ष्ठाभ्यां तिल् [illegible]तिलोचनकम्[illegible]मृदः सस्नौ
तिकं श्वेति वक्तुमुचितम्। तथा तु न कृतमित्येव। बहुल्यार्थात्। कारकात् किम्। बहूनां स्वामी। अर्थग्रहणात् स[illegible]येभ्यो विशेषेभ्यः [illegible]भूरिशो ददातीति त्रिशः। मङ्गले[illegible]
अन्यत्रापि दृश्यते। अपेतापोढमुक्तपतितापत्रस्तैरल्पश इति कारकत्वं तु समसनक्रियां प्रति [illegible]म्याः कर्मत्वात्। तदभिधायित्वाच्चाल्पशब्दस्य। तया च [illegible]वर्तते। अल्पा
पञ्चमी समस्यत इति। परिमाणशब्द इति। तथा च एकवचनग्रहणेन वृत्तावेकार्थतानियताः परिमाणशब्दा एव गृह्यन्ते इति भावः। अत एव प्रत्[illegible]इति। घटं घटं [illegible]। घटा
दयो हि जातिशब्दा नैकार्था भवन्ति। जातियोगस्यैकानेकसाधारणत्वात्। किं त्वभेदैकत्वसंख्यामुपाददते। एतच्च सर्वं जयादित्यमतेनोक्तम्॥ [illegible]इति। [illegible]एकत्वसं
ख्याविशिष्टस्यैवार्थस्य बोधका इत्यर्थः। नैकार्था इति। एकत्वविशिष्टस्यैवार्थस्य बोधका नेत्यर्थः। किं त्वभेदैकत्वसंख्यामिति। भेदशब्देन तत्सहचरितं द्वित्वादि[illegible]दत इत्यर्थः। ए
तथा न्यग्रप्रपञ्चितम्। एवं च वृत्तिजन्यबोधे सर्वथा संख्याया अभानेऽपि पदान्तरसाप्रक्ष्यादेकत्वविशिष्टस्यैव भानं शब्दशक्तिस्वभावादिति तत्रैव [illegible] निजामयोः [illegible] घटशब्दानुप
टं पटमितिवत्। घटौ घटौ ददातीत्यपि बोधो दुर्वार इति तात्पर्यम्। जयादित्येति। प्रथमद्वितीयपञ्चमषष्ठा जयादित्यकृतास्तदन्ये इतरे वामनकृता इत्यस्मिन् पुरे[illegible]

समयोनियमइति। निर्णयस्तस्यापनायामित्यर्थः। कर्त्तव्यस्यावसरप्राप्तिः समयः। स एव नियम इत्यन्ये। कर्मव्यापारेत्यादि। निर्वर्त्तनप्रेषणादित्यर्थः। हेतुमण्णिचि। पुनस्तत्रैव व्यापार इत्यर्थः॥ इति तद्धितप्र
क्रिया॥ इत्येवमादीनामिति। साकाङ्क्षत्वादित्यनेनान्वयः। स्वरूपेति। टेइतीत्यादिः। नन्वाक्यधात्वोर्द्वित्ववारणायावश्यकेन पदस्येत्यपकर्षणेनैव सिद्धे सर्वस्येति व्यर्थमत आह। सर्वशब्दस्येति। ननु क
समयोनियमः॥ अद्यकर्तव्यत्वेन निर्णीतमर्थं विघटयितुमद्य मे पारवश्यं पश्चादस्य समयः इत्येवं यो बहुषु दिवसेष्वाह स एवमुच्यते इति। सपत्रनिष्पत्रात्। पतन्त्यनेनेति पत्त्रम्। शराणां पुंख
गतौ बर्हः। सपत्रं निष्पत्रं वा करोति भूतलमिति। पत्त्राण्यपि पर्णानि। शूलात्पाके। पाके किम्। शूलं करोति कदन्नम्। शूलमुदररोगः। सत्यादशपथे। भाण्डं रत्नादिद्रव्यजातम्। ज्ञेनव्यमि
ति। मय्येतद्ग्राह्यमिति वृद्ध्यापरीक्षादिना सत्कारद्रव्यप्रदानेन च दृढं करोतीत्यर्थः। तथैव तथ्यम्। पादार्घाभ्यां चेति चकारस्यानुक्तसमुच्चयार्थत्वात् स्वार्थे यत्। परिक्षापणमिति।
कर्मव्यापारमात्रवाचिनो वपेर्हेतुमण्णिचि ल्युट्। मङ्गल्यमुण्डनेनेति। चौलदीक्षादौ। भद्राच्चेति। भद्रादित्य[illegible]ग्रहणमिति तु नोक्तम्। मङ्गलादिभ्योऽपि प्रसङ्गात्। इति द्वित्वप्रक्रि
या॥ सर्वस्य द्वे। नित्यवीप्सयोरित्येवमादीनां विधेयकार्यिणोरनिर्देशेन साकाङ्क्षत्वात्स्वरितत्वाच्चाधिकारोऽयम्। न त्वाह इत्यधिकृत्येति। एतदर्थं स्वरूपपदाधिकृत्येयम्। स्वरूपग्रह
णं तु न भवति। नाम्रेडितस्यान्त्यस्य तु वेति लिङ्गात्। सर्वशब्दोऽवयवकार्त्स्न्ये सर्वावयवोपेतस्य द्वित्वं न तु कश्चिदप्यवयवो वर्ज्य इत्यर्थः। इह टेइत्यसंख्यापेक्षायां शब्दरूपे
गृह्येते। शब्दानुशासन प्रस्तावात्सर्वस्येति स्थानषष्ठी। सोऽयं स्थाने द्विर्वचनपक्षः। यदि तु उच्चारणमेव संख्येयं तदास्या आदेशभावो नास्ति। निर्दिष्टो हि स्थानी। सकृन्निर
तं किमुच्चार्यते अतः सर्वस्येति अध्याहृतोच्चारणशब्दापेक्षया कर्तृकर्मणोः कृतीति कर्मणि षष्ठी। सर्वं द्विरुच्चार्य इति फलितोऽर्थः। सोऽयं द्विः प्रयोगो द्विर्वचनत्वेन स्सः। नन्वाद्येप
क्षे स्थानिवद्भावेन समुदायस्यैव पदत्वं स्यात् नावयवयोः तत्तत्पदकार्याणि न स्युः ॥ ७७ श्चिदिति। यद्यपि विनिगमनाविरहेणैकाज्द्विर्वचने निजामयोऽ यवद्वित्वं सिद्धं
तथाप्यस्य द्वित्वस्य स्थाने द्विर्वचनत्वलाभार्थं पुनस्तदुच्चारणम्। अन्यथा पाष्ठद्वित्ववद्द्विः प्रयोग एव स्यात् इति बोध्यम्। तदाह। सर्वस्येति। स्थानषष्ठीति। ते च शब्दस्थानेऽन्तर
तमपरिभाषया यस्थानि समानाकारपदरूप एवेति बोध्यम्। कर्मणि षष्ठीति। एवं च स्थानषष्ठीत्वाभावेन तस्य स्थानिताप्रसक्तिरेवेति बोध्यम्। पूर्वरूपत्वमित्यादौ निपा।

नित्यतायामिति। पौनःपुन्य इत्यर्थः। बाध्येतेति। भृशार्थ इति वक्तव्ये क्रियासमभिहारग्रहणं तु यत्तटपकर्ष एव ज्ञापकमिति भावः। परिगृहीतसाधनेति। तिङन्तवाच्येत्यर्थः। तिङन्तस्यै
वलोकेऽर्थबोधकत्वेन प्रतीतस्यैव चार्थस्य बहिर्भूताभीक्ष्ण्याद्याकाङ्क्षासंभवादिति भावः। नानाकारकेति। आभीक्ष्ण्याद्यपेक्षया तदाकाङ्क्षाया अन्तरङ्गत्वेनेति भावः। उक्तमेव विवृणोति। किं चे
सर्वस्येति किम्। स्वादिष्विति पदसंज्ञामाद्यरस्याभ्यामित्यादौ प्रकृतिभागमात्रस्य माभूत्। नित्यवीप्सयोः। द्योत्ये इति। नपुंसकमनपुंसकेनेत्येकशेषः। एकवद्भावश्च बोध्यः। पदस्येति।
वक्ष्यमाणमिहापकृष्टव्यमिति भावः। तेन नित्यतायां विधीयमानं द्विर्वचनं धातुमात्रस्य न भवति। किं च पदस्योच्यमानं द्विर्वचनं बहिरङ्गम् अन्तरङ्गत्वात् तो यङ् न बाधते। अन्यथा हि भृ
शार्थस्यावकाशोऽयं पौनःपुन्ये परेण द्विर्वचनेन बाध्येत। यत्तु वदन्ति परिगृहीतसाधना क्रियाभ्यवहारोपयोगिनी तदनभिधानाद्धातुमात्रस्य द्वित्वं नेति तच्चिन्त्यम्। उक्तरीत्या नानाकार
कविशिष्टक्रियासमर्पकस्य वाक्यस्यैव द्वित्वापत्तेः। किं च भावार्थकलकारान्तानाम् अव्ययकृतां च तत्तुकृतीत्यादित्वेऽप्याप्तेः। ननु अत्र नित्यतावगत्यनन्तरं पदान्तरैः साधनान्तरपरिपू
र्यत इति चेत् तर्हि तत्रैव धातुमात्रस्य द्वित्वं केन वार्यताम्। किं च तदेवकर्तृकर्मलकारस्थलेऽपि धातुमात्रद्वित्वं दुर्वारमित्यास्तां तावत्। न चैवं पदाधिकारस्यापकर्षे समन्तिकस्य द्विवे
चनं न स्यादिति चेत्। वार्त्तिककारवचनादेव तत्सिद्धेः। तथापि द्वेषैव गतिः। यत्तु वदन्ति प्रपचति प्रपचतीत्यादौ धातूपसर्गसमुदायः क्रियाविशेषवाची आदिव्यवस्थार्थपरं धातूप
सर्गयोः पृथक्त्वेन तन्न क्रियाधर्मो नित्यता समुदायस्येति तस्यैव द्विर्वचनमित्यादि। अन्ये त्वेवं वक्तव्यम्। कल्पितेनेवष्टय ... येन यथाडागमः प्राक् द्वित्वं तु ... एवमाष्टमिक
द्वित्वस्यापि प्रवृत्तिं को वारयेत्। क्रियाधर्मो नित्यत्वमित्यपि व्यर्थं उपन्यासभूतलकारार्थयोः कर्तृकर्मणोरपि क्रियानिरूप्यतया विशिष्टद्वित्वलकारापत्तेः। तस्य ... इति चेत्।
तर्हि त्र्यसुरेवत्यादयः। तद्विधीनां निरूपकवर्गे चरितार्थत्वात्। इदं त्वधेयम्। सगतिकस्य द्वित्वे एकपदत्वं नास्त्येव। स्थानिनः पदत्वाभावेन आदेशेऽपि तस्य दोर्लभ्ये निजामयो द्वे
स्यादिना। नित्यतावगत्यनन्तरमिति। यङन्ते साधनसंबन्धात् प्रागपि धातोर्नित्यतासंबन्धदर्शनादिति भावः। अबाधादिविषये वाक्यद्वित्ववारणार्थमपकर्ष आवश्यक इत्याशयेनोक्तं ... केति।
सगतिकस्येति वक्तव्यमिति हितद्वचनम्। विशिष्टद्वेवा उपसर्गविशिष्टद्वेवा। आभीक्ष्ण्यस्य क्रियाविशेषधर्मत्वकर्तृयोरपि क्रियाविशेषनिरूप्यत्वादिति भावः ॥

म॰ शा॰ २४२

समुदायस्य पदत्वमिति। पचति प्रपचतीत्यस्योक्तरीत्या तिङन्तत्वादित्यर्थः। नस्यतिरिति। न च मन्दप्रतिरेकस्यैव घटस्याद्यः प्रयोगे घटो यं घट इत्यादौ अर्थभेदाभावे पदत्वापत्तौ असमर्थघटोय घट अग्निरित्यत्रैकान्तरतास्यादिति वाच्यम्। अनभिधानात्। ध्वनितं चेदं भाष्ये। ननु तावत स्तिङन्तत्वेपि तदनन्तरं सति शिष्टत्वान्नत्वस्यापत्तिः। न चेष्टापत्तिः। स्थाने द्विर्वचनपक्षे दुर्लभ त्वादिति चेन्न। तस्य स्वेप्युद्भूतावयवभेदसमुदायस्यैवादेशत्वेन समुदाये तिङन्तत्वस्य सुलभत्वेन शापतेरित एव वारुन्वेराह। वस्तुतस्त्विति। पौनःपुन्यमित्यादिना तत्र हि पुनःपुनर्भावितरि वर्तमानात्पुनःपुनःशब्दाद्भावे चप्रत्ययः। अन्तरङ्गत्वादिति। लुक्त्वाच्चेत्य पि बोध्यम्। एवं च यत्र संघाते पूर्वो भागः पदमिति नियमार्थेन समास ग्रहणेन प्रातिपदिकत्वात्तस्य पानु

द्विःप्रयोगपक्षे तु प्रथमगतिं विहाय विशिष्टस्य समुदायस्य पदत्वं प्राप्तं न स्विन्सत्यपि न सक्तिः। वस्तुतस्त्विह द्विःप्रयोगपक्षो दुर्बलः पौनःपुन्यं पौनःपुनिकइ ति समुदायात्ष्यञो रनुत्पत्तिप्रसङ्गात्। तत्र हि अन्तरङ्गत्वादसमास्तु पोलुकि द्वित्वं प्रवर्त्तेत। किं च तत्रैकपद्याभावे पुनःपुनर्जायमाना पुराणाद्या दावग्रहः पि न सिद्ध्येदित्यत्र विस्तरः। आभीक्ष्ण्यमिति। तद्धि क्रियाविशेषणं तेन तद्द्योतनार्थं द्वित्वं क्रियाद्योतकानामेव न्याय्यं क्रियाप्राधान्यं चाख्याते स्तिङन्ते हि एवं वा अन्यप्रकृतेर्भावे इति वक्ष्यमाणत्वादितिभावः ॥

स्य

सत्वापत्तिः। तत्र पदशब्दस्यार्थवत्परत्वमिति भाष्यसंमतपक्षेपि दोष एव। आद्यस्याप्यर्थवत्वात्। बोधादित्तिसुद्वि त्यादिवन्न, स्थाने द्विर्वचने तु स्थानिवद्भावात् प्रातिपदिकत्वं, नङिसंबुद्ध्योरिति ज्ञापकेन प्रत्ययलक्षणेनाप्रत्यय इति निषेधाप्रवृत्तिज्ञापनात्स्थानिनः प्रातिपदिकत्वे आदेशेऽतिदेशेन त त्त्वौलभ्यात्। कालबोधकप्रातिपदिकप्रकृतिकसुबन्तत्वमप्युद्भूतावयवभेदसमुदायस्यादेशत्वादुक्तरीत्या सुलभम्। अत एव कस्कादिषु कौतस्कुतपाठश्चरितार्थः। ऐकपद्याभावे इ ति। तदभाववादिनां मते इत्यर्थः। वस्तुतस्तन्मतमसंमतमिति प्रागुक्तमित्याद्यावेत्र दोषो बोध्यः। अन्यत्र विस्तर इति। अयं भावः। यद्यपि कौतस्कुतपाठे न कृताशमिकद्वित्वात्प्रातिपदि कत्वेपि तद्धितोत्पत्तिरित्यपि वक्तुं शक्यम्। तथापि स्थाने द्विर्वचनतायामेव ज्ञापकत्वमुचितमिति ॥ एम॰ २४२

इति यावदिति। तस्यायोगरूढोयमितिभावः। प्रयोक्तृधर्म इति। अभिधेयधर्मत्वे हि पीडितवीप्सादिशब्दानामेवस्यान्नगतवृक्षादीनां ततश्च शास्त्रस्याल्पविषयत्वं स्यादिति भावः। व्याप्तिरेवेति। न तदिच्छापीति भावः। आधिकारिकमिति। बुद्धिस्थपृथक्संख्यायुक्तनानावस्तुविषयमित्यर्थः। पृथक्संख्यायुक्तेत्युक्तेर्जात्यभिप्रायेण प्रयोगे न द्वित्वम्। एकशेषविषये च न। तच्च तेषां क्रियागुणद्रव्याभावैर्युगपदन्वये प्रतीयते। तत्र बुद्धिस्थेत्यस्य फलमाह। सर्वेत्यादिना। एवं च सर्ववृक्षसेचनाभावेऽपि न क्षतिः। पृथक्संख्यायुक्तेत्यस्य फलं दर्शयितुमाह। एकशेषे त्विति। अवीप्सायामिति। व्याप्तुमिच्छा वीप्सा। व्याप्तिप्रतिपिपादयिषेति यावत्। सा च प्रयोक्तृधर्मः आबाधवत्। गतगत इत्युक्तेऽपि प्रयस्य विरगमनादिना पीडितो वाक्यं प्रयुङ्क्ते इति यथा प्रतीयते तथात्र स्वरसे सिञ्चतीत्यादावपि व्याप्तिं बुबोधयिषोरिदं वाक्यमित्यवगमात्। शाब्दबोधविषयस्तु व्याप्तिरेव सा च कार्त्स्न्यम्। तच्च आधिकारिकं सर्वे ब्राह्मणाः आमन्त्रिता इत्यादौ यथा। न हि साक्षात्सर्वादिप्रयोगेऽपि असंकुचं दूरनितान्निष्पन्तु शक्या। उपपदादिमहिम्ना संकोचस्यावश्यकत्वात्। अन्यत्र तु संकोचकं नास्ति तत्रासंकोच इत्येव। जातो जातो निधनमुपैतीतिवत्। न चैवं वृक्षं वृक्षमित्यादौ बहुवचनप्रसङ्गः। बहूनां भानेऽपि बहुत्वसंख्यायास्तत्राभानात्। प्रत्येकनिष्ठमेकत्वमेव हि तत्र भासते। अतएव प्रत्येकं विधेयसंबन्धो लभ्यते। तथाहि। ब्राह्मणाय ब्राह्मणाय शतं देयमित्युक्ते प्रत्येकं शतं दीयते। एकशेषे तु नैवम्। ब्राह्मणेभ्यः शतं देयमित्युक्ते नियमेन प्रत्येकं शतं देयमित्यर्थस्यालाभात्। अतएवैकशेषे एकवचनं न। यदा तु परिगृहीतद्वित्वानां वीप्सा तदा ब्राह्मणाभ्यां ब्राह्मणाभ्यां शतं देयमिति भवत्येव। एवं त्रिभ्यस्त्रिभ्य इत्याद्यप्यूह्यम्। तदयं निर्गलितोऽर्थः। द्विर्वचनैकशेषयोरनेकप्रतीतिर्नियता। किंतु आद्ये एकत्वं द्वित्वं बहुत्वं वा व्यवस्थितमेव प्रतीयते पदार्थकार्त्स्न्यं च। द्वितीये तु द्वित्वबहुत्वे एव प्रतीयेते। कार्त्स्न्यं तु नेति। स्यादेतत्। परिगृहीतैकत्वानामपि बहुत्वमभिधातुं द्विर्वचनादुत्तरकालं बहुवचनोत्पत्तिरस्तु। तथाहि। एकशेषे यथान्येषामर्थः शिष्टेन गम्यते तद्वदत्र द्विःशेषेऽपि शिष्टाभ्यामितरार्थधीः ॥

त एव बुद्धिविषयाणां बहूनां मध्ये कतिपयानामेव वृक्षाणां शोभनत्वे प्रतिपाद्ये न द्वित्वं यथास्मिन्वने पञ्चमाषाः शोभना इति। एवं कस्मैचिदेकः कस्मैचिद्द्वौ कस्मैचित्त्रय इत्यर्थप्रतिपादनेच्छायां माषा दत्ता इत्येव प्रयोगो न द्वित्वम्। यदा त्वेको दत्त इति विवक्षा तदा द्वित्वम्। तत्र द्व्योदाहरणं राज्ञो राज्ञः पुरुष इति। इतरार्थधीरिति। एवं च तयोर्विशेषाभाव इति शेषः ॥

सुरित्सरिदिति। अत्रस्थानिवद्भावेन प्रातिपदिकत्वम्। प्रत्ययलक्षणेनाप्रत्यय इति निषेधाप्रवृत्तेः। योषायोषे आदौ एकादेशस्य पूर्वान्ततया स्थानिनस्तत्त्वेन कृतद्धितत्वेन तत्सुलभमिति। एके
कमित्यादौ समासत्वातिदेशेन प्रातिपदिकत्वस्य सत्वाच्चेत्यपि बोध्यम्। इतिदिगिति। एकशेषे तु न परिगृहीतेकत्वादीनां भानम्। प्रातिपदिकानामेव तत्प्रवृत्तेः। तत्रव्यक्तिपक्षे व्याप्तिप्रतिपि
यत्तु वदन्ति। अप्रातिपदिकत्वान्न भविष्यतीति तद्व्यापकम्। सरित्सरि योषायोषेत्यादौ उक्तदोषानिस्तारादिति चेत्। अत्रोच्यते। अन्तरङ्गैकसंख्यावरुद्धो हि रुक्तार्थः सं
स्थानान्तरे निराकाङ्क्ष एव। नहि वस्तुगत्या बहुत्वमस्तीत्येतावतैव तस्य शाब्दबोधआपादयितुं शक्यते। असत्वार्थकेष्वपि तदापत्तेः। अयोग्यं तदिति चेत्सममप्रकृतेपि। अत्रचलि
ङ्गमेकैकस्य प्राचामिति निर्देश इति दिक्। परेर्वर्जने। अत्र वार्त्तिकम्। परेरसमासे नेह। परित्रिगर्त्तं वृष्टो देवः। वेति चवक्तव्यम्। तथाचकारके पूदाहृतम्। अपहरे परिहरे संसार इति
। उपर्यध्यधसः। कथं तर्हि उपरि शिरसो घटं धारयतीति। अत्राहुः। औत्तराधर्यमात्रमिह विवक्षितम्। नतु सामीप्यम्। अतो वस्तुतस्तत्सत्वेपि न द्वित्वम्। विवक्षा हि शब्दप्रधानं कारणम्।
अत्र च उपर्युपरि पक्वं मन्तदाद्याश्चिक्यासाप्यामिति सन्नन्त प्रयोगो ज्ञापक इति। वाक्यादेः। सुन्दर सुन्दरेत्यादि। स्वरि घ्नमाम्रे डितेस्त्याम्नमति को पकुत्तनेषु। आम्रेडितं भर्त्सने इति सूत्रा
भ्यां यथायथं प्राप्तः प्लुतः वैकल्पिकत्वान्नेह कृतः। उक्तं हि प्राक् सर्वः प्लुतो वैकल्पिक इति॥ एकं बहुव्रीहिवदित्यनुवर्त्तते। तच्चानुवादसमर्पकं तदाह। द्विरुक्त इति। तेनेति। यद्य
प्येतौ बहुव्रीहौ विशिष्य न विहितौ तथापि तत्रदृष्टावित्येतावतैवातिदिश्येते इति भावः। समुदायात्त्विति। तच्चैकवचनमेव। यथा चैतत्तथा प्रागेवोक्तम्। पूर्वभागे इति। न तूत्तरभा
गेपि। तथाहि। द्वेधात्र पुंवद्भावः सर्वनाम्नो वृत्तिमात्रे इति वा स्त्रियाः पुंवदिति वा। तत्राद्यः पूर्वभागस्यैव भस्त्रैषेति ज्ञापकादित्युक्तम्। द्वितीयस्तु समानाधिकरणपरत्वे विधीयते। न
चोत्तरभागस्य तदस्तीति भावः। एतेनेह सूत्रे द्वे इत्यस्यानुवृत्तेरेकैकेत्यत्र पुंवद्भावापादनं हरदत्तादिभिः कृतं प्रत्युक्तम्। एकैकयेत्यत्र पूर्वभागे टापो निवृत्तिरिति स्वग्रन्थविरोधाच्च॥
यादृविषायामनेकं नावत्प्रयोगे प्राप्ते येन नाप्राप्तिन्यायेनेदं शास्त्रं द्व्यात्मकादेशबोधनद्वारानेक प्रयोगस्याभेदबोधकम्। न द्वुक्तं भाष्ये निवर्त्तकत्वाद्वेति। अनुवादसमर्पकमिति। इदं सूत्रं वीप्साया
मेव प्रवर्त्तते। वीप्साग्रहणमनुवर्त्य वीप्सायां द्वित्वं बहुव्रीहिवद्भावश्चेति भाष्योक्तेः। एवं च तेनैव द्वित्वस्य सिद्धत्वात्पुनरनेन विधानमफलं गुरु चेति भावः। हरदत्तादीत्यादिना कैयटः॥

स्पष्टार्थेति। स्पष्टप्रयोजनेत्यर्थः। अत एव तन्मया नोक्तमिति भावः। तत्रैकदेत्यादौ बहुव्रीहिवद्भावेन सुब्लुगभावः। अन्यथा सस्यादेव। दधिदृत्यादेरिव विभक्तिरहितस्यैव साधुत्वं स्यात्। न
च पुनः सुप्त्वस्येत्यलक्षणस्येति न्यायात्। अनेन च प्रातिपदिकत्वातिदेशे तेनैव सुब्लोपतदुत्पत्ती सिद्धे इति अनेन सुपः पृथगनतिदेशात् कार्यातिदेशे लक्षणभेदात् पुनः सुबिति
न वाच्यम्। न च प्रत्ययान्तत्वात् कथं प्रातिपदिकत्वम्। द्वित्वे कृतेपि समत्वात्। स्थानिवद्भावेन तस्यापि प्रत्ययान्तत्वात्। लुक्यप्येकदेशविकृतन्यायेन तत्त्वात्। यदि तु बहुव्रीहिवद्भावा
त्प्रत्ययान्तत्वेपि तत्र दृष्टत्वमात्रेण सूत्रभाष्यप्रामाण्यात् प्रातिपदिकत्वं तर्हि प्रकृतेपि तुल्यं, स्पष्टं चेदं भाष्ये । सुब्लोपपुंवद्भावावित्यत्र तन्निमित्तं प्रातिपादिकत्वं लक्ष्यते। अन्यथा सु

द्वे इत्यनुवृत्तिस्तु स्पष्टार्था। उत्तरार्था चेत्यन्ये। तत्। आबाधे च। इत्येति। बहुव्रीहिवद्भावादित्यनुषज्यते। तथा च स्त्रियाः पुंवदिति प्रवर्त्तते। न चेदमुत्तरपदं नेति वाच्यम्। अतिदे
शबलेनैव उत्तरपदत्वस्यापि लाभात्। ननेत्यत्र नलोपो नञ इत्यपि तर्हि स्यादिति चेत्। मैवम्। अत्र हि उत्तरपदाधिकाराविशेषेपि नञः साक्षाच्छिष्टेन कार्यित्वेन निमित्तभावो
बाध्यते। न थाचमद्रुद्रूदेः इत्यत्र अचो रहाभ्यामिति रेफस्य द्वित्वप्रसङ्गे आकरे उक्तम्। नेमौ रहौ कार्यिणौ किं तु निमित्तमेतौ द्विर्वचनस्येति। नन्वेवमपि धूर्धूः। पन्थाः पन्था
इत्यादौ समासान्तः स्यादिति चेत्। न। समासान्त तद्धितयादित्यतः समासादित्यनुवर्त्तमाने। समासान्ता इति पुनः समासग्रहणं हि समासाधिकारविहितो यः समासः तस्य
रिग्रहार्थम् ॥
७ बुत्पतिरपि वक्तव्या स्यात्। यत्तु एक इत्यत्रान्तोदात्तत्वं तत्फलम्। सह्याघुदात्तः पूर्वपदोत्तरपदयोरभावात् प्रकृतिस्वराप्राप्तेरिति। तन्न। अपदेशिवद्भावेन पू
र्वपदत्वसत्वात् इति तात्पर्यम्। बाध्यत इति। इदं च प्राचामनुरोधेन। यदि तु तत्र कौण्डिन्यन्यायो येन नाप्राप्तिविषय एव। स्पष्टं चेदं तद्धितेषचामिति सूत्रे भाष्ये अचो रहाभ्यामित्यत्र चः पर
रेफस्थानवित्येत्यनेनावश्यं कार्यप्राप्तं निमित्तत्वं चाज्ञातमेव तत्राप्यनइमिविधेयमेवेति तत्रास्ति न्यायविषयः प्रकृते तु निमित्तत्वं तस्य नावश्यं प्राप्तमिति नायं तस्य विषय इत्युच्यते तदा
रात्रेः कृतीत्यतोत्र विभाषापदमनुवर्त्य व्यवस्थितविभाषाश्रयणेन नान्तरीयकादाविव नलोपो वारणीयः। नभ्राण्नपादिति तु प्रपञ्चार्थमेवेति दिक्। धूर्धूः पथिपथ्या इति पाठः ॥

म॰ श॰ २४५ दिमित्यादि। न यस्तु न नेत्यादिना न स्तुभ्याममिति स्वरोऽपि। नात्र वनं समासे इत्यतः समासग्रहणापकर्षणेन मुख्यसमास एव तत्प्रवृत्तेः। तत्र समासग्रहणापकर्षसामर्थ्याद् वसमासान्तोदात्तत्वम
पि न। बहुव्रीहौ प्रकृत्येत्यादेरपि समासस्यैव मुख्यसमास एव प्रवृत्तेः। आम्रेडितस्वरनत्वयोर्विशेषाभावेन न दतिदेशाभावाच्च। अत्र कार्यातिदेशोऽपि अतिदिश्यमानकार्या
णामुत्पत्तिदेश एव देशा इति सिद्धान्ता दाम्रेडितानुदात्तत्वं सर्वस्वरबाधकं न स्तुभ्यामिमिति तु इतरस्वरस्येवास्याप्यपवादः स्यादिति बोध्यम्। अतएव भाष्ये सुब्लोपपुंवद्भावा एव प्रयोजनत्वेनो
क्ता तिदेशिके समासान्तानामप्रवृत्तेरिति दिक्॥ प्रकारे गुणवचनस्य। यद्यपि भेदोऽपि प्रकार इत्युच्यते बहुभिः प्रकारैर्भुङ्क्ते बहुभिर्विशेषैरित्यवगमात्। तथापि इह
विवक्षितमर्थमाह। सादृश्ये इति। अत्र च व्याख्यानं शरणम्। अस्ति च सादृश्ये प्रकारशब्दः ब्राह्मणप्रकारोऽयं माणवकः ब्राह्मणसदृश इत्यवगमात्। पुंवद्भाव इति। पुं
वत्कर्मधारयेत्यादिसूत्रात्तत्र कोपधादिषपि प्रपन्नेनैतेन बहुव्रीहिवद्भावे प्रकृते कर्मधारयवद्भावोक्तिर्नव्यर्थेति बोध्यम्। पटुपटुरिति। इह द्वित्वेन जातीयरो बा
धो नेष्यते इति वामनः। अन्यथा ब्राह्मणजातीय इत्यादावगुणवचनेऽपि भेदरूपेऽर्थे सावकाशो जातीयर् गुणवचने तु सादृश्ये परेण द्वित्वेन बाध्येतेति भावः। जया
दित्यस्तु जातीयर्विधौ विशेषस्य प्रकारशब्दार्थत्वमाह। गुणवचनस्येति किम्। सिंहो माणवकः। अग्निर्माणवकः। यद्यपीह अग्निसिंहशब्दाभ्यां जघन्यवृत्त्या गुणो
गम्यते तथापि गुणवचनग्रहणसामर्थ्यात् मुख्यवृत्त्या गुणपराणामेव द्वित्वं न त्वन्येषामित्याकरः। नवंनवं प्रीतिरहो करोतीत्यत्र वीप्सायां द्वित्वम्। अनेन तु द्वित्वे सु
ब्लुक् स्यात्। यथा नवनवाकनवा युभिराददे इति पुंवद्भावः। कथं भीतभीत इव शीतमयूख इति भारविः ॥ ७ क्ताविति। कोपधादिषपीति। निषेधविषयेऽप्यर्थः।
ते न प्रियासदृशी इत्यर्थे प्रियेत्यादिसिद्धिः। भेदरूपेऽर्थे इति। भेदसादृश्ययोरुभयोरपि जातीयरो विधानादिति भावः। परेणेति। जातीयरः स्वार्थिकत्वेन गुणवचनजातीयान्ते सावका
शत्वं द्वित्वस्येति भावः। न च जातीयरा सादृश्यस्योक्तत्वेन तदन्ते द्वित्वस्याप्रवृत्तेः कथमस्य सावकाशता भेदेऽपि तस्य विधानेन लोके वा सदा मेन सादृश्यस्य वक्तुमशक्यत्वात्। भेदार्थजा राम॰
तीयान्तेन तु सादृश्यविवक्षायां चारितार्थ्याच्चेति तात्पर्यम्। अन्यथा नवकाशत्वेनेति बोध्यम्। आकर इति। भाष्यमित्यर्थः। पुंवद्भाव इति। यथात्र पुंवत्त्वं भवति तथा सुब्लुक् स्यादिति भावः ॥ २४५

द्वित्वायोगादिति। गुणवचनत्वाभावाच्चेत्यपि बोध्यम्। एवं च पूर्वखण्डे विभक्तिश्रवणं स्यादिति भावः। अनिरभ्रेति। तादृशवचनानुपलम्भादिति भावः। अवस्थासु। तद्विशेषेषु। लुक्प्राप्तेरिति।
स्वादृश्येऽत्र द्वित्वमिति भावः। कथं तर्हि व्याख्येयमिति। एकं मन्दपदमतिशयलक्षकम्। कमलानि कमलानीतिवदिति परे। वीप्साभावादिति। एकस्यैकमेव मूलम्। इतरेषां तु परिसन्निवेशापे
क्षवशब्देन सादृश्यस्योक्ततयेह प्रकारे द्वित्वायोगात्सम्भ्रमेभीतेभ्यो भीत इति कथंचिद्व्याख्येयम्। तेनातिभीत इति फलितम्। यत्तु आधिक्ये द्वे इति वार्त्तिकेन भीतभीतादौ द्वित्वमि
ति दुर्घटवृत्तिकारादिभिरुक्तं तदतिरभसोक्तिमात्रम्। अथ कथं खिन्नः खिन्नः शिखरिषु पदं न्यस्य गन्तासि यत्र क्षीणः क्षीणः परिलघुपयः स्रोतसां चोपभुज्येति मेघदूतः। एकस्यापि
खेदावस्थासु तस्यावस्थासु च भेदं परिकल्प्य वीप्सा बोध्या। अथ कथं मन्दं मन्दं नुदति पवनश्चानुकूलो यथा त्वामिति मेघः। मन्दमन्दमुदितः प्रययौ खमिति च। लुक्प्राप्तेः वीप्सार्थस्यासं
भवादिति चेत्सत्यम्। स्वतो मन्दगामिनं तं पवनो मन्दं नुदतीति कथंचिद्व्याख्येयम्। सिद्धस्य गतेश्चिन्तनीयत्वात्। आनुपूर्व्ये तु वीप्साभावादारम्भान्यायप्रसिद्ध इति। यावद्भिः
शब्दैः सेनो बोध्योऽर्थमवगच्छति तावतां प्रयोक्तव्यत्वादिति भावः। कर्मव्यतिहार इति। क्रियाविनिमय इत्यर्थः। द्वे इति। नित्यमेवेदं द्वित्वम्। बाहुलकं तु समासवद्भावस्यैव। सु
पः सुर्वक्तव्य इति। अत्र केचित्। द्वितीयादीनामेवेदं स्वादेशविधानम्। अतएवोत्तरदलेऽपि द्वितीयादय एव न तु प्रथमान्तान्यप्येकवचनमेव न तु वचनान्तरम्। एतच्च दुर्गप
रिशिष्टकण्ठाभरणादिष्वर्वाचीनग्रन्थेषु स्पष्टम्। तदेतदुक्तं प्राचा द्वितीयैकवचनान्तत्वं परपदस्येति। एतच्च सर्वमपाणिनीयं भाष्यादावनुक्तत्वात्। तदेतत्ध्वनयन् व
चनान्तरमुदाहरति। अन्योन्यावित्यादि। माघ इति। स च भाष्यानुगुण एवेति भावः। तथा चार्वाचीनमतं कथमपि नानुरुध्यमित्युक्तम्। तथा च भारविः। क्षितिनभःसुरलोक
निवासिभिः कृतनिकेतमदृष्टपरस्परैरिति प्रायुङ्क्त। अत्र हि अदृष्टः परस्परो यैरिति विग्रहे प्रथमान्तता स्पष्टैवेति दिक्। तृतीयादिषु पुंवदिति प्राचो ग्रन्थं परिष्कुर्वन्नाह। अत्र के
चिदिति ॥ ४६ सो गौणो मूलव्यपदेशः। न चैकरूपं भागानां स्थौल्यं किंतु यथामूलमुपचीयते स्थौल्यमिति तद्भाव इति भावः। समासवद्भावस्यैवेति। तत्र लक्ष्यभेदेन क्वचित्प्र
वृत्तिरेव क्वचिदप्रवृत्तिरेव। अतएव भाष्येऽन्यशब्दस्य समासवद्भावरहितमेवोदाहरणमितरशब्दस्य तत्सहितमेव दत्तम्। वचनान्तरमिति। द्वितीयादीनामिति शेषः ॥

एकशेषप्रतिबन्धेति। एकार्थीभावयोग्यद्वितीयाभावादुभयत्रापिवृत्तित्वाभावइतितत्त्वम्। एतेन यां यां प्रियद् इत्यत्र न द्वित्वं किं तु द्वावेव यत्तच्छब्दौ भिन्नभिन्नरूपेणैव बुद्धिस्थकान्तानां परामर्शकाविति सर्वासां नम्रमुखीत्वप्रतीतिरित्यपास्तम्। प्रेक्षणविषययत्तदार्थव्यापकत्वस्य नम्रमुखीत्वेपि प्रत्ययेन शाब्दप्राप्तेर्दुर्वारत्वाच्च ईदृशे विषये द्विर्वचनसाधुताया एव शाब्दे णबोधाय। मन्येतसेति। यत्तदोर्द्वित्वेन वीप्सितार्थोपस्थितेः केनापि तत्पदेन पूर्वोपस्थितरूपेण परामर्शोपपत्त्या प्रयोजनाभावान्न तत्पदे वीप्सात्र। कचित्तु स्पष्टत्वाय तच्छब्देपि द्वित्वम्। व्यञ्जनान्तमपि यस्मात् कार्यमुच्यते तं तं भजन्त इत्यजादेरिति सूत्रे भाष्यप्रयोगात्। रभसादिति। द्विर्वचनस्य वृत्तित्वाभावः। पूर्वपद एव तस्य प्रवृत्तिश्च राभस्यबीजम्। परस्परव्याघातादिति। तृतीयादिषु

वस्तुस्थितिमाह। अन्येत्विति। अतिप्रसङ्गादिति। तथा च एकशेषप्रतिबन्द्या द्विर्वचनस्यापि वृत्तित्वमाश्रियत इत्युक्ते न पुंवद्भावो न शङ्क्यः। तस्य विरोधात्। कारकं चेद्विजानीयात् यां यां मन्येत सा भवेत्। इत्यकथितसूत्रस्थभाष्यविरोधश्चेति भावः। यत्तु प्राचीनग्रन्थं व्याचक्षाणैरुक्तम् अन्योन्यमित्यादावन्यामन्यामिति द्विर्वचने कृते सर्वनाम्नो वृत्तिमात्रे पुंवद्भाव इति पूर्वोक्तरूपद्वयोरपि पुंवद्भाव इत्यादि तत्सर्वं रभसात्। एतच्च मूले एव ध्वनितम्। यच्चापि तृतीयादिषु पुंवदिति प्राचीनग्रन्थं व्याचक्षाणा आहुः तृतीयादिषु पुंवद्भावो विशेषस्तेन टाप् न। अत्र तृतीयादिष्विति अविवक्षितम्। द्वितीयायामपि पुंवत्त्वस्येष्टत्वादिति तच्चिन्त्यम्। पुंवत्त्वं विशेष इति विशेषाभिधानमविवक्षितमिति च स्वोक्तेः परस्परव्याघातात्। मूलकृता पुंवद्भावस्य स्पष्टत्वान्न ह्यस्माभिस्तत्रैव व्याख्याततत्त्वाच्चेति दिक्। यथायथमिति। नलोकेति षष्ठीनिषेधः। सिद्धान्तकौमुदीव्याख्यासेयं प्रौढमनोरमा। समाप्तं तत्र पूर्वार्द्धं तेन तुष्यतु शंकरः॥ इति श्रीभट्टोजिदीक्षितविरचितायां प्रौढमनोरमायां सिद्धान्तकौमुदीव्याख्यायां पूर्वार्द्धं समाप्तिमगात् ॥

७) विशेष इत्युक्तेः न्यग्रविशेषाभाव इति लभ्यते। तृतीयादिष्वित्यस्याभावे सर्वत्रैव तल्लाभेन तस्य विशेषत्वभङ्ग इति भावः। अस्पष्टत्वादिति। पुंवद्रूपमिति हितेनोक्तमिति भावः। आञ्जस्येनेत्येवेति। अत्र केचिदित्यादिना मदुक्त्या मूलस्वारीत्येति भावः। विस्तरस्त्वस्मत्कृते शब्दरत्ने मदन्तेवासिकृतशब्देन्दुशेखरमञ्जूषयोश्च द्रष्टव्य इति शुभम् ॥ * ॥ इति श्रीमद्दीक्षितभट्टोजिपौत्रदीक्षितहरिविरचिते प्रौढमनोरमाव्याख्यानिलघुशब्दरत्ने सुबन्तं समाप्तम् ॥ * ॥ नमस्तस्मै गणेशाय नरकुञ्जररूपिणे। यस्यागस्त्यायते नित्यं विघ्नसागरशोषणे॥ श्रीगुरुचरणसरोजाभ्यां नमः ॥ * ॥

॥ श्रीविश्वेश्वरी जयति ॥

# ॥ मनोरमाशब्दरत्नयोरुत्तरार्द्धम् ॥

॥ श्रीसंकष्टनाशिनी विजयतेतराम् ॥

म॰ भा॰ २४७

श्रीगणेशायनमः॥ ग्रन्थमङ्गोकृतमिति॥ मङ्गलादीनिमङ्गलमध्यानिमङ्गलान्तानि शास्त्राणि प्रथन्तेवीरपुरुषकाणीत्यादि भाष्योक्तफलोद्देशेनेत्यर्थः।ताभ्यां वित्तैरिति।ते
नवित्तइतिचणप्रत्ययेनख्यापनकर्तृत्वेनतदुक्तानुष्ठानकर्तृत्वेनचप्रसिद्धैरित्यर्थः।श्रुतिसिद्धत्वेपीति।एषआत्मापहतपाप्मेत्यादिश्रुतिसिद्धत्वेपीत्यर्थः।पारमार्थिकत्वादिति।नेहना
नास्तिकिंचनेतिश्रुतेरितिभावः।निरूढंप्रसिद्धम्।तत्सर्वमिति।मूलंव्याख्यानंचेत्यर्थः।तत्रमूलेइदम्।नखतन्त्रसूत्रम्।गुप्तिज्किद्भ्यइत्यादौवक्ष्यमाणेतत्संबन्धात्हेतुमतिचेत्या

श्रीगणेशायनमः॥ ग्रन्थमध्येकृतंमङ्गलंशिष्यशिक्षार्थमुपनिबध्नाति।श्रोत्रेति।हायनान्तयुवादिभ्योणितिसूत्रेश्रोत्रियस्ययलोपश्चेतिवार्तिकाच्छ्रोत्रंश्रोत्रियत्वम्।
अर्हत्तायोग्यता।गुणवचनब्राह्मणादिभ्यःकर्मणिचेतिसूत्रेअर्हतोनुम्चेत्युक्तेः।ताभ्यांवित्तैः।किंचगुणैर्गुणवद्भिः।रूपादाहतप्रशंसयोर्यपितिसूत्रेन्येभ्योपिदृश्यतइत्यु
क्तागुण्याब्राह्मणाइत्यस्यभाष्यादाबुदाहृतत्वात्।नोहूयमानइति।स्तौतेर्यङन्तात्कर्मणिशानच्।अपिशब्देनापांततोविरोधंध्वनयति।वस्तुतस्तुनविरोधः।स्तुतिप्र
योजकीभूतानामनन्तकल्याणगुणानांश्रुतिसिद्धत्वेपिविषयादिवद्व्यावहारिकत्वात्।तदभावस्यपारमार्थिकत्वात्।एतच्चोत्तरमीमांसायांनिरूढमेव। पूर्वार्द्धइति।
हलन्तेषुकिन्नादिष्वित्यादनन्तुप्रासङ्गिकमितिभावः।अथेति।इहापिकृत्सुणवः स्त्रियामजअणिनुणइत्यादिप्रासङ्गिकंबोध्यम्।प्राधान्येनतुतृतीयाध्यायस्याएव
होच्यन्तइतिभावः।इहप्रावाधातोःआतृतीयाध्यायान्तवक्ष्यमाणाःप्रत्ययाधातोर्हेयाइत्युक्तम्।यद्धिधौधातुग्रहणंयोगविभागेनव्याचष्टेइतितद्व्याख्यातृभिरुक्तं
तत्सर्वमिहोपेक्षितंयोगविभागस्यनिर्बीजत्वात्।इशेति।अनुबन्धवैलक्षण्यादितिभावः।प्रदर्श्यतइति।यद्यपिपञ्चमलकारेरूपाणीहनव्युत्पाद्यन्तेतथापि
स्वरूपेणलकारःप्रदर्श्यते।तथापिलःकर्मणिलस्येत्यादिसूत्रविषयतांव्युत्पादयितुमितिभावः ॥

दौतत्संबन्धाच्चाव्याख्यानमप्यसंगतमित्याह।योगविभागस्येति।नचप्रकृत्यर्थेतिप्रतिधातुभनन्तलडादेशानांशक्तिकल्पनापेक्षयैकधातोरेवशक्तिकल्पनेलाघवादितिभावः।तु
ल्ययुक्त्याकर्त्रादीनामपिधातुवाच्यत्वंप्रत्ययास्तुद्योतकाअतएवतेषांविशेषणत्वमितिपरे।तस्यलटःस्फुटमितिभावकर्मकर्तृरूपमित्यर्थः ॥ रत्न॰ २४७

द्योत्य एवेति। तद्बीजं तूक्तम्। निरूढः। भाष्यादिप्रसिद्धः। अनुमातुं शक्यत इति। गुणः कृताभसंस्कार इति न्यायेन भावकर्मणोः कर्त्तरीति लविशेषणम्। तत्र वर्त्तमानस्येत्यर्थ इति भावः।
तयोरेवेत्यस्यानेकर्मणि कृत्यक्तखलर्थाः भावेऽकर्मकेभ्य इति न्यासः कार्यः। अनुदात्तङित इति कर्त्तरि कर्मव्यतिहारे इत्युत्तरमेव पठनीयमिति तात्पर्यम्। इत्येवास्त्विति भावक
र्मणोरित्युत्तरं भावेऽकर्मकेभ्य इति नियमार्थं कार्यमित्यर्थः। विपरीतेति। एवं च कर्त्तरि न स्यादिति भावः। चकार इति। सचकर्मणो ऽसंभवात्कर्त्तुः समुच्चायक इति नोक्तदोष इति भा

वर्त्तमाने लट्। वर्त्तमान इति प्रकृत्यर्थविशेषणं तदाह। वर्त्तमानेत्यादि। लट् स्यादिति। तस्य वाच्यं तु उत्तरसूत्रे स्पष्टम्। वर्त्तमानकालस्तु द्योत्यः। एवं लङादि
ष्वपि भूतादिकालो यथायथं द्योत्य एवेति निरूढः पन्थाः। वस्तुतस्तु वाच्यत्वेपि न क्षतिरिति विध्यादिसूत्रे वक्ष्यामः। लः कर्मणि च। चात्कर्त्तरीत्यनुकृ
ष्यते। सकर्मकविषयं चेदम्। अकर्मकेषु कर्मणीत्यंशस्य बाधितत्वात्। उत्तरवाक्येन तत्र विशेषविधानाच्च। तदेतदाह। सकर्मकेभ्य इति। भावे चेति च
कारेणापि कर्त्तैवानुकृष्यते न कर्म असंभवात्। तदाह। भावे कर्त्तरि चेति। यद्यपि भावकर्मणोरात्मनेपदविधानाच्छेषात्कर्त्तरीति परस्मैपदविधानाच्च
ज्ञापकात् अकाराणां भावकर्मकर्त्तारोर्थाः अनुमातुं शक्यन्ते तथापि असत्यस्मिन्सूत्रे सकर्मकेभ्योपि घञादिवद्भाव एव लकाराः स्युः। ततश्च घटं क्रियत इदे
वदत्तेनेत्यादि प्रसज्येत। तन्निवृत्त्यर्थमिदं सूत्रम्। न चैवमकर्मकेभ्यो भाव इत्येवास्तु भावेऽकर्मकेभ्य एवेति नियमार्थमिति वाच्यम्। भाव एवेति विप
रीतनियमापत्तेः। तस्माद्भावे चेति चकार आवश्यकः। न चैवं भावे चेत्याद्येवास्त्विति वाच्यम्। भावे इव कर्त्तर्यपि अकर्मकेभ्य एवेति नियमापत्तौ सकर्म
केभ्यः कर्त्तरि लकाराभावापत्तेः। नन्वेवमपि लश्चेत्यस्तु। कर्मणि तु ज्ञापकाद्भविष्यतीति चेन्न ॥ ७ ॥

वः। न च भावकर्मणोरित्यस्यानेकर्मणि भावेऽकर्मके
भ्य इति विधायकमस्त्विति वाच्यम्। एवं वचने आनुमानिकवचनकल्पने च लाघवाभावात्। इत्याद्येवास्त्विति। भावकर्मणोरित्युत्तरमिति भावः। लश्चेत्यस्त्विति। कर्त्तरि कृत्
लश्च। भावेऽकर्मकेभ्य इति न्यासोस्तु भाव इत्यादि विधायकमेवेति भावः। ज्ञापकादिति। कर्मणीति कर्मार्थकलानुवादेन तङ्विधानात् ज्ञापकादित्यर्थः ॥

श्रैयर्थ्यादिति। नचतुत्रकर्मणि चकृत्स्येत्यायत्सुत्रेन पूर्वसूत्रानुकर्षइतिवाच्यम्। लाघवाभावादिति तात्पर्यम्। गौरवादिति। अनन्तकृतीनां शक्यतावच्छेदकत्वेनानुगमःतासांकृतित्वेनानुगमेचैगौरवमित्यर्थः। तल्लाभाच्चेति। एवंचान्यलभ्यतया नत्रशक्तिर्वक्तुमशक्येतिभावः। नामार्थयोरिति। समानविभक्तिकनामार्थयोरित्यर्थः। न्यायादिति।

उत्तरसूत्रेनयोरित्यनेनपरामर्शार्थंकर्मणीत्यस्यावश्यकतयाज्ञापकानुसरणक्लेशस्यवैयर्थ्यात्। तस्माद्यथान्यासमेवरमणीयम्। अत्रनैयायिकाः। लकाराणां कृतावेवशक्तिर्लाघवात्। नतुकर्त्तरि। कृतिमतः कर्तृत्वेनतत्रशक्तौगौरवात्। प्रथमान्तपदेनैवतल्लाभाच्च। देवदत्तः पचतीत्यत्रहि देवदत्तोविशेष्यः यत्नोविशेषणम्। आश्रयत्वंतुसंसर्गइति। तच्चापचन्तंदेवदत्तंपश्य। पचतेदेवदत्तायदेहीत्यादौशतृशानचादीनामपितिबादिवल्लादेशत्वाविशेषेणतेभ्यः कृतिमात्रबोधापत्तेः। नचेष्टापत्तिः। तत्राभेदसंसर्गस्यैववक्तव्यतयाकर्तृत्वस्यैवत्वयाप्यभ्युपगमात्। नामार्थयोरभेदस्यैवसंसर्गत्वात्। नन्वतएवगौरवप्रामाणिकतयाशत्रादीनांकर्त्तरिशक्तिः। तिबादीनांतुकृतावेवेतिवैषम्यमितिचेन्नैवम्। स्थान्येववाचकोलाघवान्नत्वादेशोगौरवादितिहितवमतम्। अतएवरामइत्यादौसुप्येनैकत्वेशक्तिरित्यादिस्तदीयानांव्यवहारः। एवंस्थितेतिबादीनांशत्रादीनांचस्मारकतयातिपिस्थानीयत्वंबोधकस्तुलकारएवसचशत्राद्यन्तेकर्त्तरिशक्तइतिस्थितेतिङन्तेकथंकृतिंबोधयेत्। अन्याय्यश्चानेकार्थत्वमितिन्यायात्। अथवैयाकरणरीतिमाश्रित्यसर्वत्रादेशाएववाचकाइतिब्रूषेतर्हिघटंघटेनहरेवविसोवेत्यादिषुसर्वेपदादेशाइतिन्यायेनपदस्फोटोवाक्यस्फोटश्चसिद्ध्येदिति ॥

किंचत्वयालत्वंशक्ततावच्छेदकंवाच्यंतच्चनतद्ज्ञानतोपिबोधात्। किंचस्थानिनांकर्तृयङादिभेदेनानैयत्याद्व्यवहृतत्वाच्चतेषुशक्तिग्रहोदुरुपपादइत्यपिबोध्यम्। इत्यादिष्विति। आदिनावःनइति। न्यायेनेति। तथाहरेवेत्यादौपूर्वरूपादिस्थानेव्याकरणान्तरेपदलोपादीनांविधानाद्व्याकरणानांकलहेपदसंमोहेनार्थस्यापिसंमोहाद्बोधानापत्तौसमुदायएवशक्तिकल्पनापत्स्येत्यपिबोध्यम् ॥ 

द्वित्वनिमित्तत्वाभावादिति। न च यङि परत ईत्वमिति तन्निमित्तस्य यङो विशिष्टस्य द्वित्वनिमित्तत्वमस्त्येव। अवयवस्य कार्यित्वेऽपि न तस्यैव प्रतिनिमित्तत्वं न हि कार्यी निमित्तत्वेनेत्य त्रापि यथा कथंचिन्निमित्तत्वं कार्यित्वञ्च गृह्यत इत्यत्र मानमस्ति जेघ्रीयत इत्यादेः प्रत्युदाहरणत्वपरभाष्यप्रामाण्येन तन्निमित्तकार्यिपदयोर्मुख्यार्थत्वस्यैवाऽऽगीकारादिति वाच्यम्। अरिरिषतीत्यस्याप्यसिद्धेः। न हि तत्र गुणनिमित्तस्यार्धधातुकसञ्ज्ञस्य सशब्दस्याकारविशिष्टस्य द्वित्वं प्रति कार्यित्वं शायितरीत्यत्रापि इकारस्यैव कार्यित्वेन ज्ञापकस्याशिथिलत्वाप त्तेश्च। यदि तु येगन्ताङ्गस्येत्यर्थात् तत्त्वस्य कार्यित्वन्तर्हि अत्रापि यङन्तस्य द्वित्वमित्यर्थात्तुल्यम्। तस्मान्न हि कार्यीत्यत्रापि यथा कथंचिन्निमित्तत्वादि गृह्यत इति युक्तम्। अचीतिकम थै मित्यस्ये जेघ्रीयत इत्याद्यर्थमर्थमित्यर्थः। अधिजगे इति तु प्रयोजनं ङाङ्लिटीत्यत्र द्विलकारकनिर्देशाश्रयणात्तस्य लावस्थायां प्रवृत्तेः। न च तस्य विषयसप्तमीत्वाङ्गीकारेणाने

वस्तु न स्तु अचीति व्यर्थम्। घ्रीयघ्रीयशय्य इति द्वितीयाजवधिकस्यैकाचः कार्यितया यङो द्वित्वनिमित्तत्वाभावात्। अचः किम्। असूषुपत। इह स्वापेश्चङीति संप्रसारणे निषिद्धेऽभ्यासे उवर्णो न श्रूयेत। न च द्वित्वे कृते पुनः संप्रसारणम्। न संप्रसारण इति निषेधात्॥

मित्तिकत्वं तद्भावभावितामात्रेणैव तद्बुद्धिभावभावितामात्रेणापि निमित्तत्वस्य युक्तत्वात्। तस्य तत्रोपात्तलिङ्बुद्धिभाव एव निमित्तमित्यनिमित्तत्वाभावः सर्वत्रैव वात्र शास्त्रे बुद्धिकृतमेव निमित्तत्वमिति स्पष्टं ह्विगोर्लुगिति सूत्रे मनोरमायाम्। अत एवाऽऽङ्गाधिकारे आर्धधातुक इत्यादीनां विषयसप्तमीत्वेऽपि परदेशस्य विषयकबुद्धिभावेन जायमानतया परनिमित्तत्वे न तद्विषयेचः परस्मिन्निति स्थानिवत्त्वप्रवृत्तिः इदमेवाचीति ईदृशनिमित्तत्वाश्रयणे लिङ्गं ध्वनितञ्चेदं प्रकृतसूत्रे चोप्रादिति सूत्रे च भाष्ये इत्यन्यत्र विस्तरः। निषिद्धे इति। द्विर्वचनेचीत्यनेनेति भावः। पुनः संप्रसारणमिति। द्युतिस्वाप्योरित्यनेनेति भावः। निषेधादिति। अस्य च व्यवहितेऽपि प्रवृत्तिरिति स्पष्टमेवाकरविदाम्। इदमपि प्राचामनुरोधेन संप्रसारणग्रहणसामर्थ्यादेकवर्णव्यवधाने यून इत्यादावस्तु प्रवृत्तिः। प्रकृते प्रवृत्तौ तु न मानमिति वक्तुं शक्यत्वात् प्रत्युदाहरणान्तरन्त्वन्यत्रोक्तम् ॥

रूपातिदेशेति। नचात्रष्टूपसेद्विस्यात्पूर्वमिपङ्ः प्रसत्याद्वित्वेकार्येस्यानिरूपातिदेशेपियणितस्त्वेमानाभावेननिन्युरित्यसिद्धिरितिवाच्यम्। आभीयत्वेनेयङःसिद्ध्यापण
प्रवृत्तेःसंप्रसृदात्तत्वादिति। नचविहितविशेषणानिस्तारः। धातुस्वरस्यदुर्वारत्वेनासंभवापत्तेः। अनेकाच्त्वादिति। एवञ्चनिषेधोनस्यादितिभावः। एकाचोविहित
सेत्यर्थेनापीदंसुसाधम्। नचतदालावस्थायामडितिपक्षेअकार्षीदित्यादौदोषः। ञ्रिसिचोरपिस्यतासिवञ्चावस्थायामेवप्रवृत्त्याङ्गसञ्ज्ञानिरपेक्षत्वेनान्तरङ्गत्वाद्वि
यद्यपीहाजादेशःस्यानिवत्स्यादितिरूपातिदेशपरतयासूत्रेव्याख्यानंकाशिकादौप्रसिद्धंफलंचतुल्यमेवतथापिस्यानिवद्ग्रहणंनिवर्त्यनञ्ज्ञा
नुवर्त्यनिषेधपरतयाव्याख्यानमपिभाष्यारूढंलघुचेतितदेवाश्रितम्। एवंहिसतिस्यानिवदितिशब्दाधिकारप्रयुक्तक्लेशोनास्ति। नपदान्तेतिनिषेधा
नन्तरंपाठस्यानुगृहीतोभवतीतिदिक्। उभयान्वयीति। मध्येपाठात्पूर्वोत्तराभ्यांसंबध्यतइत्यर्थः। तत्रोत्तरान्वयफलंकर्तुङ्न्तुमित्यादाविण्निषेधःनित्स्व
रेणसंप्रसृदात्तत्वात्पूर्वान्वयफलन्तुबिभित्सतितिपिपक्षतीत्यादौनिषेधः। द्वित्वेकृतेऽनेकाच्त्वात्। स्यादेतत्। विशेष्यदलमेवतर्हिमास्त्वितिशङ्कते। एकाचः
किम्। ननुबिभित्सतीत्यादितौल्याद्यङ्लुक्यपिस्यादेवतत्राह। स्मरन्तिहीति। श्विपाशपेत्यादि। श्विपायया। स्यतिहन्तियातिवातिद्रातिप्सातीत्यादि। श
या। सनीवन्तेतिसूत्रेभरेति। अनुबन्धेननिर्देशोद्विधा। स्वरूपेणइत्संज्ञकत्वेनच। आद्योयथा। शीङःसार्वधातुकेगुणःदीङोयुडिति। द्वितीयस्त्वनुदा
त्तङितइत्यादि। अतएवनाग्लोपिशास्वृदितामितिसूत्रंशासेर्यङ्लुकिनप्रवर्त्ततेस्वरूपेणानुबन्धनिर्देशात्। सूत्रेशासिग्रहणंप्रत्याख्यायऋशा
सुइतिऋदित्पठनीयइतिमतेतुइत्संज्ञकत्वेनानुबन्धनिर्देशात् ॥ ७ करणोत्तरमेवाडादिप्रवृत्तेःस्पष्टंचेदमेकाचोद्वेइत्यत्रभाष्ये। तर्हिमास्त्वि
ति। उपदेशेनुदात्तस्यैकाच्त्वव्यभिचारादितिभावः। नचवधिव्यारत्यर्यन्ततात्तत्तामर्थ्येनोपशमात्रेएकाचोग्रहणादितिवाच्यम्। आद्युदात्तनिपातनेनासिद्धेरित्य
भिमानात्स्वरूपेणेतिशासुइतिपाठात्। सूत्रे। नाग्लोपीतिसूत्रे। इत्संज्ञकत्वेनेति। ऋदित्पदेनतद्ग्रहणादितिभावः ॥

नमज्यतेइति।पाठेप्यनित्यत्वेनवारणमन्यथायङ्लुगन्तेभूवादयइतिसनाद्यन्ताइतिधातुत्वंनस्यात्गणनिर्दिष्टत्वात्।अनित्यत्वेमानञ्चपस्पशोवागुणोयङ्लुकोरित्यादि।
अतएवयङ्लुकिद्वित्वंभष्भावादिसिद्ध्यति।एतन्मूलएवयत्रैकाज्ग्रहणंकिञ्चिदितिपाठःक्वचिदितिसूत्रेकैयटेइत्यन्ये।अनुदात्तपाठस्यैवेति।नचानुदात्तमन्तोदात्तत्वबो
धनार्थमत्वर्थलक्षणयैवोपपत्तौशास्त्रबाधेमानाभावात्।सूत्रकारेणेति।भाष्यवार्त्तिककृतोरप्युपलक्षणमेतत्।एतेनवधादेशे ... शआद्युदात्तत्वनिपातनमूलकसकृदाद्यु

तुयङ्लुक्यपीच्छन्तितैःशासेरुकारोनपठ्यते।गणेनयथा।बेभिदीति।चेच्छिदीति।रुधादिभ्यःश्नम्।एकाज्ग्रहणंप्रकृतसूत्रे।तेनबेभिदिता।चेच्छिदिता।अत्रेण्नि
षेधोन।एतच्चेति।ननुश्तिपाशपेत्याद्यंशेकथमिदंज्ञापकमितिचेत्।एकदेशानुमतिद्वारापूर्वाचार्यपठितपरिभाषायाःज्ञापनस्यगतिकारकोपपदानामित्या
देष्टत्वात्।अनन्यार्थेश्तिपादिनिर्देशेज्ञापनसंभवाच्च।नहूतइति।नचमत्वर्थलक्षणायांमानाभावः।वसंस्रादीनामनुदात्तपाठस्यैवतत्रमानत्वात्।वधरिति।य
त्तुनद्याद्यन्तयेनिट्कारिकास्वदन्तपर्युदासउक्तोव्याघ्रभूतिनासएवचप्राचानुसृतःसइहोपेक्षितः।सूत्राननुगुणत्वात्।तथाहि।कर्त्ताहन्तेत्यादौसर्वेसर्वपदादेशा
इतिन्यायेनकरित्यादिरादेशः।तस्ययथास्थान्युपदेशंगृहीत्वानिषेधःप्रवर्त्तते।एवंवधादेशेपिप्रवर्त्तमानःकेनवार्यताम्।अदन्तपर्युदाससामर्थ्येनेतिचेत्।न।सू
त्रकारेणदेशेपर्युदस्तत्वादितिभावः।इणःषीध्वम्।इण्कोरित्यधिकारेपिपुनरिण्ग्रहणंकवर्गनिरासार्थम्।तेनेहन।पक्षीध्वम् ॥

त्मनामितिचादन्तानामप्युदात्तोपदेशत्वाभावबोधनात्तच्चकथादिषुस्वतोवधादेशेउदात्तनिपातनसामर्थ्यादित्यपास्तम्।यत्तुहनोवधइत्यत्रास्मव्यञ्जनान्तत्वेवृद्धिःवंअ
अदन्तत्वेतुनदोषइतिभाष्येउक्तं,तन्नउपदेशेनेकाच्त्वान्निषेधाभावादिट्सिद्धिरित्येवंपरतयाकैयटेनव्याख्यातम् ॥

म॰श॰ २६२ विहितानामिति। एवञ्चाङ्गादितिन कर्त्तव्यमिति लाघवमिति भावः। नत्त्रीध्वमिति। इणन्तादिति हिनानौशीध्व मादौ नामितपर्ये षीध्वमः सासाद्विधानासंभवः सीयुटः षत्वस्य च
विधानोत्तरकालत्वात्। तस्माद्यस्य विहितस्य षत्वसीयुड्योम्यतातस्येति वाच्यमः सावयदिधत्वं न स्यात् स्यादेव षत्वमिति प्रकृते प्यस्ते वेत्यभिमानेनेदं च विषीध्वमिति या
न्तमिहाङ्गेनेणन्तम्। इणन्तादङ्गादिति स्वरूपकथनमिदम्। इतिकेचिदिति। अत्रारुचेबीजन्तु भाष्ये स्यादर्शनं सूत्रान्तरस्थेन गोबलीवर्दन्यायग्रहणे च नदृढतरं मानमिति।

अङ्गात्परेषामिति। विहितानामितितु नोक्तम्। अदिद्वमित्यादावव्याप्तेः। लिहदुहनहां ढत्वघत्वधत्वे षुलिसीध्वम्। पुस्त्रीध्वम्। नत्तीध्वमित्यत्रातिव्याप्तेश्च। अ
ङ्गात्किम्। वेविषीध्वम्। अर्थवद्ग्रहणादेवसिद्धेः केचिदर्थवद्ग्रहणपरिभाषा न प्रवर्त्तत इति ज्ञापनार्थमिदम्। तेनानिनस्मन्नित्यादि सिद्धम्। एधिषीध्वमिति। इ
णः षीध्वमिति ढत्वं तु न भवति। षीध्वंभक्तस्येडागमस्य वद्ग्रहणे न ग्रहणादिणन्तादङ्गात्परत्वाभावात्। विभाषेट इतीटो विशिष्य ग्रहात्। गोबलीवर्दन्याये
नेड्व्यतिरिक्त एवेणिह ग्राह्य इतिकेचित्तदाह। इड्भिन्न इति ऊहृदन्तैरिति। अकारस्तूपेक्षितः तद्बीजन्तूक्तमेव। ऊदन्ता भूप्रभृतयः। ॠदन्ताः कृतप्रभृतयः। युमि
श्रणामिश्रणयोः। रु शब्दे। रुङ् गतौ। रेषणे चेत्यपि केचित्। क्ष्णु तेजने। षीङ् स्वप्ने। प्लुङ् प्लवने। णु स्तुतौ। टुक्षु शब्दे। टुओश्वि गतिवृद्ध्योः। डीङ् विहायसा गतौ। श्रिञ् से
वायाम्। वृङ् संभक्तौ। वृञ् वरणे। निहताः अनुदात्ताः इत्सन्नीहलन्ताः कान्तादिक्रमेणाह। शक्लृ शक्तौ। कान्त एकः। खमपङान्ता न सन्त्येव। चान्ता अपि पकाराद्या वी
नान्येवर्णास्तदादयो न सन्तीत्याशयेनाह। पच् इति। डुपचष् पाके षच समवाये व्यक्तीकरणे ॥

रेषणे चेत्यपि केचिदिति। अत्रारुचिबीजन्तु निरनुबन्धकत्वेन साहचर्येण च युमिश्रणे इति लुग्विकरणस्यैव ग्रहणमुचितम्। परिभाषाद्वयेन लुग्विकरणपरिभाषाबाधात् राम॰
अत एव समन्त्यामम्भयोर्द्वं किं न करोष्ये सत्वहीनवदिति भट्टिः सङ्गच्छते ॥ २६२

द्यावेपीति। इदं दुर्गवर्धमानादिरीत्या। अन्यैस्तु सेदित्वस्वीकारेण भाष्ये निर्दित्पाठेन तदूहासंभवात्। अतएव पचिविस्तारवचने इति चुरादेरिदित्वात् णिजभावेपि नग्रहणम्। युजिर्योग इति। शावपि। फलभादयो न सन्तीत्याशयेनाह। युचीति। एवमग्रेपि बोध्यम्। मुच्लृ मोक्षणे। रिचिर् विरेचने। रिच वियोजनसंपर्चनयोरिति योजादिकस्य। वच परिभाषणे। ब्रुवो वचिरपि। वचिर्यौजादिके पिभाव्यवपीत्येके। विचिर् पृथग्भावे। षिच क्षरणे। चान्ताः षट्। प्रच्छ ज्ञीप्सायाम्। छान्त एकः। त्यज हानौ। णिजिर् शौचपोषणयोः। भज सेवायाम्। भञ्जो आमर्दने। भुज पालनाभ्यवहारयोः। भुजो कौटिल्य इति च। भ्रस्ज पाके। टुमस्जो शुद्धौ। यज देवपूजादौ। युजिर् योगे। रुजो भङ्गे। विजिर् पृथग्भावे। षञ्ज सङ्गे। सृज विसर्गे। जान्ताः पञ्चदश। अद भक्षणे। क्षुदिर् सम्पेषणे। खिद दैन्ये। खिद्यति। खिन्दति। खिन्ततिश्च। छिदिर् द्वैधीकरणे। तुद व्यथने। नुद प्रेरणे। पद गतौ। भिदिर् विदारणे। विद सत्तायाम्। विद विचारणे। शद्लृ शातने। षद्लृ विशरणादिषु। ञिष्विदा गात्रप्रक्षरणे। स्कन्दिर् गतिशोषणयोः। हद पुरीषोत्सर्गे। दान्ताः पञ्चदश। क्रुध कोपे। क्षुध बु------क्षायाम्। बुध अवगमने। बन्ध बन्धने। युध संप्रहारे। रुधिर् आवरणे। अनोरुध कामे इति दिवादिश्च। राध संसिद्धौ। व्यध ताडने। शुध शौचे। साध संसिद्धौ। षिध संराद्धौ। धान्ता एकादश। मन ज्ञाने दिवादिः। हन हिंसागत्योः। नान्तौ द्वौ। आप्लृ व्याप्तौ। क्षिप प्रेरणे। दिवादिस्तुदादिश्च। कुप स्पर्शे। तप सन्तापे। तप ऐश्वर्ये दिवादिः। तप दाहे इत्यपि णिजभावपक्षे। तिप क्षरणे। तृप प्रीणने। दृप हर्षविमोचनयोः। दृभौरधादीवेट्कौ। दृह पाठस्त्वनुदात्तेत्स्वेवेतदर्थः। लिप उपदेहे। लुप्लृ छेदने। टुवप बीजसन्ताने। शप उपालम्भे। ञिष्वप् शये। सृप्लृ गतौ। पान्तास्त्रयोदश। यभ मैथुने। रभ राभस्ये। डुलभष् प्राप्तौ। भान्तास्त्रयः। गम्लृ गतौ। णम प्रह्वत्वे शब्दे च। यमु उपरमे। रमु क्रीडायाम्। मान्ताश्चत्वारः। क्रुश आक्रोशे। दंश दशने। दिश अतिसर्जने। दृशिर् प्रेक्षणे। मृश आमर्शने। रिश कश हिंसायाम्। लिश अल्पीभावे। लिश गतौ च। विश प्रवेशने। स्पृश संस्पर्शने। शान्ता दश। कृष विलेखने। भौवादिकतौदादिकौ। त्विष दीप्तौ। तुष तुष्टौ। द्विष अप्रीतौ। दुष वैरूप्ये। पुष पुष्टौ। पिष्लृ संचूर्णने ॥ ७ युजसमाधावित्यस्यापि ग्रहणं बोध्यम्। विनिगमनाविरहात् भाष्ये युजीति धात्वेकदेशे कारविशिष्टस्यैव ग्रहणं न त्विकानिर्देश इति लयुक्तम्। इकानिर्देशस्यैवक्रमात् ॥

विषिशिषी।ओहाङ्गत्यादिकरोधादिकौ।विष विप्रयोगे इतिक्र्यादिरपीतिन्यासः।कचवर्गजा इति।पूर्वार्द्धे पान्तानां कान्तचान्तादित्यादिरर्थः उत्तरार्द्धे क चर्द्दकाः १ण१५ण१५टाः

विष्लृ व्याप्तौ।शिषॢ विशेषणे।इह जिषु विषु मिषु इति कषखषशिषेति च दण्डकद्वये पठितौ भ्वादौ अपि।विशिशिषी ग्राह्याविति माधवादयः।नेति बोपदेवादयः।श्लिष

श्लेषणे।श्लिष आलिङ्गने।षान्ता एकादश।घस्लृ अदने।शविकरणः प्रकृत्यन्तरम्।अत्तेरादेशस्तु स्थान्युपदेशे ऽनुदात्तेनापि सिद्धम्।वसनिवासे।सान्तौ द्वौ।दह भस्मीकर

णे।दिह उपचये।दुह प्रपूरणे।दुहिरिति भ्वादिस्तु नेह गृह्यत इति संप्रदायः।णह बन्धने।मिह सेचने।रुह जन्मनि प्रादुर्भावे च।लिह आस्वादने।वह प्रापणे हान्ता अष्टौ।क

चवर्गजादधनपाभमशाः षसहाः क्रमात्।कचकौ षणटाः ख ङो गघजाः ष्टख वः स्मृता इति सङ्ग्रहः।तृप्यति दृप्यतीत्यत्र श्यना निर्देशस्य फलमाह।तुदादाविति।अन्यनिवृत्तये इ

ति।निवर्त्तनीयास्तु।जिषिदा स्नेहनमोहनयोः।पदस्थैर्ये।सेधति बोधतीचेति भ्वादिकाः।मनुअवबोधने।तनादिकः।पुषपुष्टौ।पोषतिः पुष्णातिश्च।श्लिषदाहे।भ्वादिकः।

वसआच्छादने।अदादिकः।एते सेटः।युज बन्धने तु क्र्यादिः।अनिट्।तथा।अन्यनिवृत्तये सानुबन्धा निर्दिष्टा इत्यर्थः।तथाहि।णिजिर्तुदादिलयदादिः।ओविजी भयसञ्चलनयो

रिति तुदादिः।शक्यतिश्च सेडेव।यद्यपि माधवादयः शक्यतेरप्यनिट्त्वमिच्छन्ति तथापि चन्द्रगोमिप्रभृतीनां मतेन बोध्यम्।अत एव बोपदेवो धातुद्वयेन रूपद्वयं फलतीत्याशये

न शक्नोति शक्यत्योर्द्वयोरपि लकारमनुबन्धमासञ्जत्।विन्दतिरिति।लाभार्थः।इष्ट इति।अनिट्त्वेनेष्ट इत्यर्थः।तथा च चान्द्रसूत्रम्।विदेर्लुक इति।भाष्यानुक्ता इति।अनु

क्ताः न तु प्रत्याख्याताः।तथा च भाष्यमप्युपलक्षणतया नेयम्।तेन रक्तं रागात्।शुष्क धृष्टौ।क्तेन नञ्विशिष्टेनानञ् इत्यादिसौत्रव्यवहारात् तन्त्रान्तरसंवादाच्च।अनुप्रतिपन्न

मित्यादिसार्वलौकिकव्यवहाराच्चेति भावः।शपूर्वादित्यतद्गुणसंविज्ञानो बहुव्रीहिः।तेन शपो न शेषः किं तु श्यामेवेति बोध्यम् ॥

ॐ ११खो डो १३ गइ घ४ न १०ट११

स॰॰॰ इत्यर्थः कादयः क्रमेणैकादिसंख्यापरा इति बोध्यम्।ओविजीति।नचास्येदित्वसामर्थ्यादेव सेट्त्वावधारणे विजिरिति सानुबन्धपाठो व्यर्थ इति वाच्यम् न तत एवैवं पाठात्॥

आस्पदमिति। प्रतिष्ठिकरं नाम ग्रामादि वा। यथा मया प्रतिष्ठा लब्धेति स्थापनेति यथा त्वयास्य प्रतिष्ठा कृतेति। अवस्थानमिति। ——— यथा कृते प्रतिष्ठेति एकत्रस्थाप
नं मन्त्रादेः सूत्रादेर्वा। सन्दर्भ इति। शब्दानामित्यर्थः तन्त्रावृत्त्यादिनेति। वक्तुः तन्त्रेणोच्चारणं बोद्धुरावृत्त्या बोध इत्यर्थः। आदिनैकशेषावृत्ती। असंभवाच्चेति। अभ्यासादेशस्थाने
गाधृ। आस्पदे स्थापना अवस्थाने वा प्रतिष्ठा। एकत्रस्थापनं सन्दर्भो वा ग्रन्थः। नाधृ नाधृ। उपतापो रोगः। उपघात इत्यन्ये। आशिष्येवेति। अनुदात्तेत्त्वादेवसि
द्धे नियमार्थं वार्त्तिकमित्यर्थः। अत एकहल्। तन्त्रावृत्त्यादिना लिटि त्वादेशविशेषणमेतस्य निमित्तं चेत्याह। लिण्निमित्तेति। क्ङिति लिटीति च। यत्तु प्राप्सिद्धकृता
-भ्यासादेशे हीनस्येति व्याख्यानम्। तन्न। अभ्यासग्रहणस्याधिक्यात्। आदिग्रहणस्यागेन न्यूनत्वाच्च। पेचतुरित्यादौ हलादिः शेषेणाभ्यासस्यानादेर्हलो लुप्तत
याऽसंभवाच्च। अभ्यासैकदेशस्यादेशः समन्तुकत्वस्याभ्यासस्येति चेन्नर्हि व्याप्तत्वाप्रसिद्धिः। चकणतुरित्यादावप्येकदेशस्यैव चुत्वादिप्रवृत्तेः। भदि। कल्याणं म
ङ्गलम्। सुखमात्मगुणः। भदि स्तुति। मोदो हर्षः। मदो गर्वः। स्वप्नमालस्यम्। मदी हर्षे दिवादौ। हर्षग्लेपनयोर्घटादौ। मद तृप्तियोगे चुरादौ। नश सदद। शसु हिंसाया
म्। दन्त्यान्तः। यत्तु प्राचा शशीति तालव्यान्तं पठित्वा शशशुतगनाविति धाताविदं सूत्रं संचारितं तदाकरविरोधादुपेक्ष्यम्। गुणशब्देन भावितस्येति। अवयवाव
यविभावः षष्ठ्यर्थः। भावितत्वञ्च प्रयोज्यत्वम्। साक्षात्परम्परासाधारणम्। तथा हि। शशरतुः पपरतुरित्यादौ गुणशब्देन अर् क्रियते तदवयवोऽकारः। लुलविथे
त्यादौ तु गुणशब्देन ओकारः। तस्यावादेशस्तदवयवोऽकारः। सकर्मक इति। यथा। स्वदस्व हव्यान्यनुभवेत्यर्थः। अकर्मक इति। यथा। अपां हि तृप्ताय न वारिधारा स्वादुः सुग
न्धिः स्वदते तुषारेति। न स्वदते न रोचत इत्यर्थः ॥ ६ ॥ भव इत्यर्थः। घटादाविति। अपूर्वो घटादौ पठ्यत इति मते नेदं यह्वः ष्वदिवादिपठितस्यानूद्यत इति शेषः। तेन
सनाधिक इति भावः। गुणशब्देनारिति। उरण् रपर इति सूत्रेणैकवाक्यतया ऋकारान्ताङ्गस्य ऋकारस्य गुणो भवतीति विधानादिति भावः। तदवयवोऽकार इति। नशसददवा
दिगुणानामित्येव सिद्धे गुणग्रहणसामर्थ्याद्गुणशब्देन भावितस्याविकारमादाय लुलविथेत्यादावपि प्रवृत्तिरिति भावः ॥

व्याहतैवेति। अयोगोनव्यवच्छिद्यत इति स्वोक्तेरयमर्थः। षोपदेशत्वमावेद्यत इत्यस्य तद्योगोऽव्यवच्छिद्यत इत्यर्थात् इति भावः। प्रत्याख्यानार्थमेवेति। एवं हि तत्र भाष्यं द्वि
वेरपि द्वितीयष्टकार इति सत्वे कृते ष्टुत्वेन सिद्धं तेष्ठीव्यत इति तर्हि न सिद्ध्यति। द्वितीयषकारकोऽपि स्त्रियां क्रियते तेष्ठीव्यते तेष्ठीव्यत इत्युभयसिद्ध्यर्थं तस्य तर्हि सत्वं प्राप्नोति। ए

अपि च धातुपाठे येषामादौ षकारो न पठ्यते साध्यतिस्यलस्यादीनां तेषामनेन षोपदेशत्वमावेद्यत इति स्वोक्तिरपि व्याहतैव। यत्त्वन्ययोगव्यवच्छेदे ष्ठिवेः सत्वनि
षेधानर्थक्यं स्यादित्युक्तम्। तन्न। सत्वनिषेधप्रत्याख्यानार्थमेवाकारे ष्ठिवि। षष्ठकार इति पक्षस्य प्रक्रान्तत्वेनेष्टापत्तेः। यदप्ययोगव्यवच्छेदे सेवतिर्दन्त्यादिरपीति मैत्रे
यादिमतविरोधोद्भावनम्। तदपि न। सेवृ ष्ठेवृ इति धातुद्वयपाठवादिनां द्वितीयधातुपाठसामर्थ्येन धातुलोपपत्तेः। तादृशफलविशेषविरहे योग्यव्यवच्छेदस्य निर्दो
षत्वादिति दिक्। ह्लादी २७ दुदित्वं श्वीदितो निष्ठायामितीड्भावार्थं ह्लादो निष्ठायामित्युपधाह्रस्वः। आह्लन्नः। आह्लन्नवान्। स्वद आस्वादने। २८ अषोपदेशत्वादसिस्वदत्।
षकाररहितोऽप्ययमिति। तथा च प्रयुज्यते। मधुम्लुतहुतमिव सुपूतमिति। मन्थ विलोडने ४२ हिंसायामक्रे शनयोद्दीप्त्येके। अयं क्र्यादौ च दृहत्वाग्रे निरनुषङ्गः पठित
श्लेषणत्वाम्। ४७ अयमुदिदिति काश्यपादयः। तद् तन्निविरोधादयुक्तमिति माधवः। तथा हि। अनिट्कारिकासु सिद्ध्यतिबुद्ध्यत्योः श्यनानिर्देशात् सिधितं बुधितमिति वृत्ता
वुदाहृतम्। ऊदित्वे तु उदितो वेति क्त्वायामिड्विकल्पात्। निष्ठायामिण्न स्यात्। यस्य विभाषेति निषेधात्। अत एव न्यासपदमञ्जर्यादिष्वपि सिधेरुदित्वमनार्षमित्युक्तम्। उपस
र्गात्सुनोतीति। सुनोत्यादीनां पञ्चानां श्तिपा निर्देशो यङ्लुङ्निवृत्त्यर्थस्तेनाभिसोषवीतीत्यादौ षत्वं नेत्याकर:

वं तर्हि द्विषकारकः सः आद्यस्य सत्वे कृते ष्टुत्वेन सिद्धं पदलिदृशीनते इत्यत्र तर्हि धुट् प्रसज्येत। एवं तर्हि यादीष्टिवुष धातोरुपि। तादृशफलेति। धातुद्वयपाठरूपेत्यर्थः। एकधातुपाठे योग्यव्यवच्छेदस्य निर्दुष्टत्वादिति भावः। आकार इति। अस्मारुचिवीजं तु सेवतिस्तोभत्योः शर्पूर्वा इति स्वयः शेषेण तयोः फलाभावेन पञ्चानामित्यसङ्गतमिति ॥

म॰ प्रा॰ तद्बीजान्तरमप्याह। स्यादिष्वेवेति। नच गणनिर्देशात्स्यादिषित्यस्य यङ्लुक्यप्राप्तिः। गणपाठप्रसिद्धगणनिर्देशस्यैवात्र ग्रहात् अन्नतूपसर्गात्सुनोतीति सूत्रस्थस्यादीनां ग्रहणम्। न चा
२६६ भ्यासेन स्वनिमित्ताक्षेपात्तत्र परेति यमोन चैतद्यङ्लुगन्तइति वाच्यम्। सत्यङ्न्तस्य द्वित्वविधानेन तेन तत्परत्वाक्षेपात्। यङ्गन्ते भ्यासस्य द्वित्वनिमित्तपरत्वासंभवेन तेन तदाक्षेपा
संभवाच्च तदन्तत्वाक्षेपे तु दोष एवनेति दिक्। ण्यन्तादृपि नामधातुरिति शेषः। इत्याहुरिति। अत्रारुचिबीजन्तु णिलोपे सति स्यैकाच्त्वेपि आचारक्विबन्ताद्यङ्। लुग्विधानेन मानम
सिद्धसूत्रस्य भाष्यविरुद्धं च तदिति। हरदत्तइति। तादृशयङ्लुक्सत्वे दृढतरमानाभावो रुचिः। मतान्तरमिति। अत्रारुचिबीजन्तु गत्यर्थे षत्वप्रवृत्त्यात सच्चारितार्थ्ये न गतिभिन्नार्थे ष्टित्वपा
स्यादिष्वेवाभ्यासस्य षत्वम्। न तु सुनोत्यादिष्विति नियमेनाभिमतार्थमेतत्। सेनयेति। ण्यन्तः। सेनया अभियाति अभिषेणयति। शपा निर्देशो यङ्लुङ्निवृत्त्यर्थः। नत्वानेका
च्त्वे न यङ्संभवः। क्वौ णिलोपे ततः आचारे — यङः संभवादित्याहुः। सिधेति। शपा निर्देशो यङ्लुङ्निवृत्त्यर्थो दैवादिकनिवृत्त्यर्थश्चेति हरदत्तः। तेन प्रतिसेषिधीतीत्यत्राभ्या
से षत्वं न। अत्र माधवेन मतान्तरमुपन्यस्तम्। सिद्ध्यतिनिवृत्त्यर्थ एवायं शपा निर्देशः। स्तिपा शपेति निषेधस्तु नेह प्रवर्त्तते। सेधतेर्गतावितिनिषेधसूत्रे स्तिपा निर्देशाज्ज्ञापका
त्। सहि यङ्लुकि षत्वपरित्राणेनार्थवान्नत्वन्यथेति। इण्कोरित्यधिकृतं तत्रोपसर्गे कवर्गस्यासंभवादिणैव संबध्यते। तात्स्थ्याच्छब्द ह्य मित्याह। उपसर्गस्यादिति। इणन्तादुपसर्गा
दिति तु न्याय्यं स्यात्। निःषुणोतीति निःषेधतीत्यादावव्याप्तेः। सिद्धान्ते तु नुम्विसर्जनीयशर्व्यवायेपीति षत्वं भवत्येव। यत्तु दुःष्षुणोति दुःषेधतीत्यादि प्राञ्च उदाजह्रुस्तच्चिन्त्यम्। दुरः षत्वणत्वयो
रुपसर्गत्वप्रतिषेधात्॥ ७ शयेति निषेधबाधे मानाभावइति। भवत्येवेति। तवतु विरोधात्तत्सम्भव एव न स्यादिति भावः। दुरइति। षत्वणत्वयोः रुत्वस्यासिद्धत्वेन तद्विषयोपसर्गत्वप्रतिषेधपरे दुरः
चेतेति वार्तिके कृतरेफसान्तस्यापि ग्रहणे न सान्तयोरपि तन्निषेधात्। अत एव सुषामादिषु दुष्टशब्दपाठश्चरितार्थः सह्यपदुःसु धुस्ये कुरिति दुःपूर्वकस्य धातोः कुप्रत्ययेसाधु। अन्यथा दुस्पूर्वकाद्दे व
कुप्रत्ययमङ्गीकृत्योपसर्गाद्रिते वषत्वे सिद्धे तद्वैयर्थ्यं स्पष्टमेव। न चास्य रूढत्वे नावयवार्थाभावादुपसर्गत्वाभावः। अत्यन्तरूढे षु निष्ठादिषु षत्वानापत्तेः। अर्थवत्त्वारोपेणेति चेत्प्रकृतेपि तुल्यं दुरः पा राम॰
ठस्तु दुरपतइत्यादौ रुत्वस्यासिद्धत्वेन लत्वाभावार्थ तुरस्तु दुलयतइति रूपं यत्र तु रुत्वमसिद्धं निःकुषइत्यादौ तत्र रान्तग्रहणेपि न सान्तग्रहणमिति भावः। आविदूर्यमिति। सामीप्यमित्यर्थः॥ २६६

निपातनादिति। यत्वर्थीभावेऽव्ययीभावस्य नञ्तत्पुरुषेण सह विकल्पात् अव्ययीभावात् ष्यञ् सुलभ इति तत्र धर्मि पराविदूरशब्देनाव्ययीभावेऽर्थासङ्गतेः। धर्मपरे तस्मिंस्तु ष्यञेवैक
यत्क्रियायुक्तास्तं प्रत्येवोपसर्गा इत्युक्तम्। तेनेह न। निर्गतः सावको यस्मान्निः सावकः। ण्यन्ते तु प्रादीनां प्रकृत्यर्थविशेषकत्वेऽभिषावयति। ण्यर्थविशेषकत्वे तु सुनोतिं प्रत्यनु
पसर्गत्वाभावान्न षत्वम्। अभिसावयति। एवं स्तनादिष्वप्यूह्यम्। स्यादिष्वभ्यासेन प्राक्सितादिति च वक्ष्यते। तत्र सौत्रक्रमज्ञानस्योपजीव्यत्वात्सौत्रक्रमेणैव षत्वप्रकरणं
व्याचष्टे। सदिरप्रतेः। पञ्चर्थप्रथमेत्याह। सदेरिति। स्तम्भेः सौत्रस्यैवेति। स्तन्भु स्तुम्भु इति सूत्रे निर्दिष्टस्य रोधनार्थस्य। न तु ष्टभि स्कभि प्रतिबन्ध इति पठिष्यमाणस्येति
भावः। एतच्च लक्षणप्रतिपदोक्तपरिभाषया लभ्यते। षत्वविधौ हि नकारविशिष्टरूपमुपात्तं तच्च सौत्रस्य प्रत्यक्षम्। इदितस्तु लाक्षणिकम्। तेन न वितस्तम्भत इत्यादौ
षत्वं न। नन्वेवमुत्तम्भते इत्यादौ उदः स्थास्तम्भोः पूर्वस्येति न प्रवर्तेत इति चेत्। न। तत्र हि स्थास्तम्भोरिति मकारविशिष्टं रूपमुपात्तं तच्चोभयोरपि लाक्षणिकमित्यवि
शेषादुभयग्रहणात्। एतच्च सर्वं माधवग्रन्थे स्पष्टम्। ननु सदिस्तम्भोरित्येव कुतो न सूत्रितं तत्राह। योगेति। अवाच्चेति सूत्रे सदेः संबन्धो माभूदिति भावः। नानुवर्तेत
इति। स्तम्भेरित्यत्रेत्यर्थः। तथा चैतदर्थोऽपि योगविभाग इति भावः। अवाच्चा। आलम्बनमाश्रयणम्। यथा यष्टिमवष्टभ्यास्ते। अविदूरस्य भाव आविदूर्यम्। न नञ्पूर्वात्त
त्पुरुषादिति निषेधे प्राप्ते अत एव निपातनाद्भावप्रत्ययः। वेश्च। विष्वणति मासम्। भोजने किम्। विस्वनति वीणा। परिनिविभ्यः। षेवषेसशब्दं। भुङ्क्ते इत्यर्थेवने। षिञ्बन्ध
ने। क्तान्तः। अजन्तश्चादिषितः विषयः। प्रत्ययविशिष्टग्रहणं किम्। विसिनोति। यत्तु केचित्। विषिण्वन्तीति विषया इति प्रयुञ्जते तत्र विग्रहे षत्वणत्वे प्रामादिके। षिवु
तन्तुसन्ताने। षह मर्षणे। सुट् आगमः। परिष्करोतीति यथा। स्तुस्वञ्जोरुपसर्गात्सुनोतीत्येव सिद्धे पर्यादिपूर्वयोरेतयोः सिवादीनां वाड्व्यवायेऽपीति विकल्पार्थं पुनर्वचन
म्। स्यादिषु। इवाक्ये। यद्यपि निषिषेध — स्यादावभ्यासस्योपसर्गात्सुनोतीत्यनेन न सिद्धमभ्यासात्परस्य त्वादेशप्रत्यययोरिति नयापि ॥
ल्यकापत्तिरिति भावः ॥

आद्यं वाक्यमिति। स्यादिष्वभ्यासेन चेत्येतदित्यर्थः। अत्राप्यवायेपीत्यनुवर्त्तते। अपिनाऽव्यवायेपि। सेनयेति। अत्र सेनाशब्दस्याव्युत्पन्नत्वेनादेशसकाराभावइतिभावः। अवर्णान्तेति नन्वेणपरत्वाभावादितिभावः। नच पूर्वत्रासिद्धत्वस्य द्वित्वे निषेधात्। पूर्वस्मात् तुरुपसर्गेणेति पसेन्तरङ्गत्वात्पूर्वं षत्वे कृते षत्वानामेव द्वित्वे षितष्ठाविस्यस्य सिद्धिरेतद्वचनं विनापीति वाच्यम्। पूर्वं धातुः साधनेनेति पक्षस्य मुख्यत्वादिति बोध्यम्। एकपदेति। पदस्येत्येकत्वविवक्षणात् अखण्डैकपदेत्यर्थः। तेन सोमसुत् स्यतिरित्यादौ समासेपि नेति बोध्यम्।

आद्यं वाक्यं फलत्रयार्थम्। तथाहि। अषोपदेशार्थम्। सेनया अभियातुमिच्छति अभिषिषेणयिषति। अवर्णान्ताभ्यासार्थञ्च। अभ्यासनञ्चात्र भिदोपितष्ठौ। षणिप्रतिषिद्धार्थञ्च। अभिषिषिक्षति। षिच क्षरणे। स्तौतिण्योरेवेति नियमान्निवर्तितषत्वं तदप्युपसर्गमाश्रित्य भवति। अभ्यासस्येति द्वितीयवाक्यन्तु नियमार्थम्। स्यादिष्वेवाभ्यासस्य षत्वं न मुनोत्यादिष्विति। तत्फलन्तु षूङ् प्रेरणे। अभिसुसूषति। अत्रोक्तनियमादभ्याससकारस्य षत्वं न। द्वितीयस्यतु स्तौतिण्योरेवेति नियमान्नापोऽन्तकर्मणि। अभिसिषासति। इह षणे। भावादभ्यासात्परस्य षत्वं पूर्वस्य तु न। उक्तनियमात्। षिधू शास्त्रे। ४० शास्त्रं शासनमिति। अन्ये तु शास्त्रविषयकशासनमित्याहुः। माङ्गल्यं मङ्गलक्रिया। स्वार्थे ष्यञ्। झलो झलि। सस्य लोपः स्यादिति। पदस्येति वर्त्तते। तत्र प्रत्यासत्तेर्झलः झलिसस्येति निर्दिष्टानान्त्रयाणामेकपदसंबन्धित्वं विवक्षितमतः सोमसुत्स्यातेत्यादौ। णोपदेशास्त्विति। नद शब्दे। नट अवस्यन्दने चुरादिः। यस्तु नट नृत्तावितिघटादिः स नेह गृह्यते। नाटीति दीर्घनिर्देशात्। नाथृ नाधृ याच्ञादौ। टुनदि समृद्धौ। नक्क नाशने ॥

उरस्येति ज्ञापकाज्झलादौ प्रत्यये एवायं लोप इत्यन्ये। घटादिरिति। भ्वाद्यनुवादरूप इत्यर्थः। नच घटादौ चुरादेरेवानुवाद इति वाच्यम्। नान्ये मितो हेताविति ज्ञपादिपञ्चकव्यतिरिक्तस्य स्वार्थणिजन्तस्य मित्वनिषेधात्। एवञ्च यस्य नाटीत्येव रूपं तस्यात्र पर्युदासः भौवादिकस्य नट यति नाटयतीति रूपद्वयसंत्त्वेन प्रनाटयतीत्यादौ नाटिरूपेपि णत्वं भवत्येव। वाक्यार्थाभिनयं कारयतीत्यर्थ इति भावः ॥

एधतिरिति। भूसहित एधतिरित्यर्थः। महान्वाह इति सत्तारूपब्रह्मस्मारकत्वेन चोभयोर्माङ्गलिकत्वमिति भावः। षोडयतीति। षोडन्तमाचष्टे इति णिचि टिलोपे पचाद्यचि षोडः आत्म
नः इच्छती — ति क्यचि रूपमिति कैयटः। एतच्चेति सूत्रस्याप्यनुग्रहणं चेत्यपि बोध्यम्। उपदेशोस्तीति षकारादिभ्यः आचारक्विपि नास्त्येवान्यथा सुब्धातुलाभावाद्वार्त्तिकारम्भेस्या

न्नू नये। नू ती गात्रविक्षेपे। एभ्यो भिन्नाद्दत्यर्थः। दन्दशूक क्रियायामिति। दन्दशूककर्तृकायां क्रियायामित्यर्थः। क्लिदि परिदेवने। ७४। अस्यानुदात्तेत्सु पठितस्येह पाठः परस्मैपदार्थः। स्वरितेत्सु तु पाठो न कृतः। क्रियाफलस्य कर्तृगामित्वेपि परस्मैपदं यथा स्यात्। शुन्ध शुद्धौ। ७५। अयं शौचकर्मणि शुजादौ। शुध शौच इति दिवादाव विट्। प्रथमं माङ्गलिक एधतिरुक्तस्तदनु शेषं नैव तवर्गीयान्तान्पठित्वामात्रकापाठक्रमेणाह। अथेति। सुब्धातुरिति। सुब्धातूदाहरणं षोडयति षण्डयतीत्यादि। एतच्च वार्तिकं भाष्ये प्रत्याख्यातम्। तथाहि। धात्वादेरिति सूत्रे उपदेश इति वर्तते। न च सुब्धातूनामुपदेशोस्ति। ष्ठिवुष्वष्कतीनां तु षकारादौ। लोपो व्योरिति यलोपः। यत्तु प्राचा सुब्धातुष्ठ्येषके त्युक्तम्। ष्ठ्यायतीत्युदाहृतञ्च। तदनाकरम्। भाष्यवार्तिकयोः ष्ट्यैदृत्यस्य सत्वनिषेधाभावात्। स्त्यः प्रपूर्वस्य। प्रस्त्योन्यतरस्यामित्यादौ स्त्यारूपापन्नयोर्द्वयोर्ग्रहणमिति हरदत्तादिमहाग्रन्थविरोधाच्च। एवञ्चोभयोरपि स्त्यायति। प्रस्तीतः। प्रस्तीमदित्यादिरूपाणि तुल्यान्येव। ये तु वदन्ति। धातुपाठे स्त्यै ष्ट्यै इति द्विपाठसामर्थ्यात्सत्वं नेत्याग्रह इति। तन्न॥ तिष्ठ्यासति। अतिष्ठ्यत् इत्यादौ षत्वप्रवृत्त्या चरितार्थत्वस्य माधवादिग्रन्थेषु स्पष्टत्वात्। सृपूर्वला ए ह्रा ए। अत्र ह्रस्वः आप्याने इत्यपि पठ्यते। आप्यामो दैर्घ्यमिति कौशिकः। कदर्थनमिति स्वामी। उखउखि। सकृत्प्रवृत्तत्वादिति। यत्तु माधवेनोक्तमभ्यासमात्राश्रयत्वेनान्तरङ्गे ह्रस्वे कर्तव्ये पूर्वपराश्रयस्य बहिरङ्गस्य सवर्णदीर्घस्यासिद्धत्वाद्ध्रस्वो नेति ॥

न प्रस्यास्या नेतु नेति फलभेदः स्यादिति भावः। द्वयोरिति। आत्वेनो
भयोरपि लाक्षणिकतया लक्षणप्रतिपदोक्तपरिभाषानवसर इति भावः। षत्वप्रवृत्त्येति। स्त्यै इत्यस्य तिस्त्यासतीत्यादाविति भावः ॥

न्त्वाटन्तुरित्यादाविति। आटेत्यस्याप्युपलक्षणमिदम्। भाष्यकैयटयोरिति। एओङ्सूत्रे इति शेषः। विकल्पितत्वादिति। परे तु फणादिष्वपि भ्रातृ इति पठ्यते। एवञ्चास्यानुव

न चाटन्तुरित्यादावतिप्रसङ्गः। अश्नोतेश्चेत्यनेनैकहलोपदि भवति तर्हि अश्नोतेरेवेति नियमात्। न चास्य अश्नातिमात्रनिरत्वार्थत्वं शङ्क्यम्। तथा त्वेहि नाश्न इत्ये

वञ्चूयात्। यद्वा। द्विहल्ग्रहणं प्रत्याख्यायते। अवर्णोपधस्य यदि भवति अश्नोतेरेवेति नियमात्सर्वं सिद्धमिति भाष्यकैयटयोः स्पष्टम्। ऋजि भृजी। द्वितीय ईदि

त्। श्वीदितो निष्ठायामिति नेट्। भृक्तः। भृक्तवान्। भ्रस्ज पाक इति तौदादिकस्य। भृष्टवान्। ऋञ्ज्याञ्ज्ञक्ते इति। संमतातरङ्गिण्योस्तु आनृञ्जे इत्युदाहृतं तन्त

त्रामादिकमिति भावः। एज भेज भ्राज्। अत्र न्यासकारः। अवश्यपठितव्येन फणादिकेन भ्राजत इत्यादिसिद्धेरिह पाठो नार्थ इत्याह।। तन्न। व्रश्चेतिषत्व

विरहार्थमिह पाठात्। तत्र हि राजसाहचर्यात्फणादेरेव ग्रहणमिति स्थितम्। यद्वा न्यासेपि इवशब्देनापमर्षः सूच्यते। इह भ्राजेरुदित्वमनुदात्तेत्त्वमात्रफ

लम्। भ्राजभासेत्यादिना चङ्परे णावुपधाह्रस्वस्य विकल्पितत्वात्। अविभ्रजत्। अवभ्राजत्। अत्र रेजिरपि कश्चित्पठ्यते तदनार्षम्। रेजते अग्ने पृथिवी मखे

भ्यः। इत्यत्र राजतेश्छान्दसमेत्वमिति भट्टभास्करोक्तेः। कुच शब्दे। अयं गत्ताविति स्वामी। ज्वलादौ तुदादौ णार्थो मुजादौ। ग्लुञ्चु षस्ज गतौ। आत्मनेपद्य

पीति। हेतुमति सूत्रे यदभिप्राये षु सज्जत इति भाष्यप्रयोगादिति भावः। गुजि अव्यक्ते शब्दे। अयमादित्पीति शाकटायनादयः। गुञ्ज शब्द इति

तुदादौ। अर्च पूजायाम्। अयं चुरादौ स्वरितेत्। इह पाठस्तु कर्तृगे फलेपि परस्मैपदार्थः। शाकटायनस्त्वयमात्मनेपदीत्याह। प्र[illegible]लेखकानां म

त पिलितङ्। एतच्च सर्वमिहैव माधवेनोक्तम्। चुरादौ तु तेनैवात्रत्यस्वग्रन्थविपरीतमुक्तं तत्र परिनिष्ठितरूपे विवादाभावेपि वदद्व्याघातो [illegible]।

एवेति ध्येयम् ॥

घ तरमस्तु एवञ्च भ्राजभासेति सूत्रे भ्राजिग्रहणमास्तु धातुभेदेन रूपद्वयसिद्धेरित्याहुः

नञ्प्रापितस्यैवेति। क्रादिषु तस्यैव प्राप्तेरिति भावः। एकस्यैवेति। अत एवोपदेशेत्वतवत इति सूत्रे नित्यानिटस्तस्यार्त्तिर्व्यावर्त्यत्वेन भाष्ये उक्तः। अन्यथा तद्भावे ऋतो भारद्वाजस्ये
ति विकल्पः तत्त्वेप्यदित्त्वप्रयुक्तविकल्पस्यैवसत्त्वेन तदसङ्गतिः स्पष्टैव। न तु क्रादिनियमेन प्राप्तत्वेन नित्य इडिति विशेषोस्त्येवेति इदमेवमतं युक्तमिति भावः। विपरीत इति। अ
ष्टानामपीति शेषः। अत एव स्तुत इति निर्देशप्रदर्शनमग्रे न च ऋतो भारद्वाजस्येति नियमप्राप्तिस्सेटो निषेधाय क्रादिग्रहणं विज्ञार्थमिति वाच्यम्। तथाहि सति स्तुद्रुस्रुश्रुऋतो

निषेध इति। नेड्वशीति प्रक्रमात् न त्वप्रापितस्यैवाभावस्यायं नियमो न तु विभाषाबलल्लभ्यस्यापि। तेन सिषेधिथ। सिषेद्ध। सिषिधिव। सिषिध्वेत्याद्युभयं भवति।
केचित्तु याथान्त्यमिति भावः प्रतिषेधनिबन्धनो विकल्पनिबन्धनो वा सर्वो बाध्यत इति मन्वानाः सिषेधिथेत्यादि एकमेव रूपं न त्वनिट्कमपीत्याहुः। ननु विपरीत एव नि
यमोस्तु। क्रादिभ्य एवेडुण्न तर्हि लिद्यो वेति। मैवम्। कृते ग्रन्थे तमधीष्टाभृतः। परिवृत्तो रपः। स्तुतस्तोमयोरित्यादिनिर्देशविरोधापत्तेः। स्यादेतत्। अस्तु प्रकृत्याश्रयस्य नियमः प्रत्य
याश्रयस्य तु न संभवति। इड्ग्रहणस्य वैयर्थ्यस्याप्राप्तनिषेधप्रापकत्वात्। न ह्यत्र प्रकृत्याश्रयः प्राप्नोति। कृञ उदात्तत्वात्। नापि प्रत्ययाश्रयः। यलोऽकित्त्वात्। एवञ्च बभूविवेत्यादौ भु
कः किति निषेधो दुर्वार इति चेत्। मैवम्। बभूथाततन्थजगृम्भववर्थेति निगम इति सूत्रेण छन्दसि बवर्थेति निपातनात्। भाषायां वृञस्य लइटः स्वीकर्तव्यत्वात् ग्रहणस्य फल
विषयत्वायोगात्। वमादीनाञ्चाकित्त्वेन नियमस्य सुस्थत्वात्। अचस्तास्वत्। उपदेश इति। एतच्चोत्तरसूत्रादिहापकृष्यते। नित्यग्रहणमनिड्विशेषणम्॥

भारद्वाजस्येत्येव पठेदिति भावः। विरोधापत्तेरिति। किं च कृञादीनामनुदात्तपाठवैयर्थ्यापत्तिरित्यपि बोध्यम्। न संभवतीति। वङ माद्याय तत्संभवेऽपि वृञमादाय विधेः सं
भव इति भावः। अपकृष्यत इति। एतच्च ऋतो भारद्वाजस्येति सूत्रे स्पष्टम्। तदपकर्षं च धेडादेर्धिधेत्यादिसिद्धये ज्ग्रहणम्। एतेनोपदेशे सृजन्तानामात्वविधाने नै
जन्तासरत्रस्मतोः संभवेन कृग्रहणमेव युक्तमित्यपास्तम्॥

म·श· अपेक्षायामिति।अजन्तस्य धातोः प्रयोगमात्रावच्छेदेनेड्भावाप्रसिद्धेस्तथापेक्षेतिभावः।एवं थल्यपीति तेन तासौ दृष्टस्येड्भावस्य थल्यतिदेशः।तेनाद्घस्लादेशे जघसि
२७० थेत्यत्रावसिथेत्यत्र च नित्यमिट्।न चानयोस्तासेरभावेन विशेषणाभावप्रयुक्तो विशिष्टाभावोऽस्त्येवेति वाच्यम्।तादृश्येवेत्यतस्तासौ नित्यस्य न वृद्ध्य इत्यतोऽन्ये श्चानुवृत्त्यैव ता
सि नित्यानिट् थली प्वेत्यर्थेनैव सिद्धे तास्वदित्यनेन यस्य तासाविड्भावो दृष्टस्तस्यैव थल्यतिदेशान्न दोषः।स्थानिवद्भावेन तु न तासौ नित्यानिट्त्वमतिदेशो शास्त्रीयमात्

कनित्यमनिडित्यपेक्षायान्तासेः सन्निधानात्तत्रैवेति विज्ञायते तासि च क्लृप इति सन्निहितं वानुवर्तत इत्याह तासौ नित्यानिडिति।नास्वदिदि स प्रभृत्यन्ता
इतिः।यथा तासौ न भवति एवं थल्यपीत्यर्थः।नित्यमनिटः किम्।दुधविथ नायन्तासौ नित्यमनिट्।स्वरत्यादिना विकल्पितेट्त्वात्।अस्य थलि नित्यमिडिति काशिका।
एतच्च विकल्पनिबन्धनस्यापीड्भावस्य क्रादिनियमेन निवृत्तिरिति पक्षे बोध्यम्।निषेधनिबन्धनस्यैवेति पक्षे तु नित्यग्रहणाभावे स्वरतेस्थलीड्विकल्पो न स्यादिति बोध्य
म्।किं च।उत्तरार्थमपि नित्यग्रहणम्।तेन क्रमेरपि चक्रमिथेति भवति।न हि क्रमिस्तासौ नित्यानिट्।स्नुक्रमोरनात्मनेपदनिमित्ते इति वचनात्परस्मैपदे सेट्कत्वात्।उप
देश इत्यपकर्षस्य फलं तु भारद्वाजस्त्रे स्फुटीभविष्यति।उपदेशेऽत्वतः।उपदेशे किम्।कर्षाञ्चकर्षिथ।अत्वतः किम्।भेत्ता।बिभेदिथ।तपरकरणं किम्।राद्धा।रराधिथ।
तासौ किम्।जिघृक्षति।जग्रहिथ।नित्यानिटः किम्।अङ्क्ता।अञ्जिता।आनञ्जिथ।चक्रमिथ।ऋतो भारद्वाजस्य।दीर्घान्ते पुतावन्नायन्निषेधः।ऋत इति तपरकरणा
त्।ह्रस्वान्तेषु अचस्तास्वदित्येव सिद्धः।वृङ्वृञोर्यद्यपि सेटौ तथापि वृङः थल् नास्ति।आत्मनेपदित्वात् ॥

इतिभावः।थलि नित्यमिडिति।नित्यग्रहणाभावे भारद्वाजनियमेन विकल्पः स्यादितिभावः।इतिपक्षे विति तु नावृत्तिविरोधादयं पक्षोऽयुक्त इति सूचितम्।अत्वतः किमिति राम:
अत्वतस्तास्वत्थल्यनिटो नित्यमुपदेश इत्येव कार्यमिति प्रश्नः।अजन्तात्वभिन्नोऽज्वान् व्यावर्त्य इत्युत्तरम् ॥ २७०

इट्टाभाव्यमिति। न चक्रादन्तेषु विकल्पेन निषेधार्थमिति वाच्यम्। अचस्तास्वदिति सामान्यसूत्रप्रणयने भारद्वाजातिरिक्तैरप्यदन्ते निषेधस्यैवाङ्गीकारेण सत्यन्तरानुसन्धा-
नद्वारा विकल्पस्यासम्भवादिति भावः। तस्येति। उपदेशेऽत इत्यस्येत्यर्थः। इहेति। ऋत इति सूत्रे। एवञ्चैतस्य दंसं बन्धवान्यदृष्णिषेध इत्यर्थादुक्तार्थलाभ इति भावः। इदमत्रे-
ऋजस्तु कन्दसि वव्रर्थेति निपातनाद् द्राघापाभिदाभाव्यम्। न च हृत्वादिषु परत्वान्नित्यत्वाच्च गुणे रपरत्वे च कृते नजन्तत्वादचस्तास्वदित्यस्याप्रवृत्तिरिति वा-
च्यम्। तत्रोपदेशग्रहणस्यापकर्षणात्। तस्मान्नियमोऽयमित्याह। कृदन्तस्यैवेति। स्यादेतत्। स्तुद्रुस्रुश्रुवामपि थलि भारद्वाजनियमादिट् स्यात्। न च क्रादिसूत्रे
स्वादीनां चतुर्णां ग्रहणेनास्य बाध उचितः। येन नाप्राप्तिन्यायेन क्रमादेः क्रादिनियमप्रापितस्यैव बाधौचित्यादित्याशङ्क्याह। न चेति। नन्वेवमुपदेशेऽत्वत इत्य-
स्यैव बाधः स्यात्। अदन्तेषु तस्य प्रसङ्ग एव नास्तीति यदि न ह्यचस्तास्वदित्यस्यैवास्मात्तत्कथं योगद्वयप्रापितस्य युक्त। अत्राहुः। द्वयोरनन्तरमस्यारम्भाद्बाध-
ज्ञासेति निटस्पतस्यैतन्निषेधः स भारद्वाजस्य मते ऋकारान्तस्यैवेति व्याख्यानात्तवैष्टसिद्धिरिति। एवञ्चेह तास्वत्यन्तनिटो नित्यं मा सीत्यनुवर्तत इति फलितो-
ऽर्थः। यद्वा। क्रादिसूत्रे स्तुप्रभृतीनां ग्रहणमेव इड्द्वयस्यापि बाधकमस्तु। पुरस्तात्प्रतिषेधकाण्डकरणसामर्थ्यात्। अनाश्रितविधानविशेषमिणमात्र-
मनारभ्याधीतेन प्रतिषेधेन यथा बाध्यते तथेन द्वयेहितत्। पक्षद्वयमपीदमाकरे स्थितमिति मूलेष्पुपनिबद्धम्। स्वजमन्थे। अत्र केचिल्लक्षमद इति प-
ठन्ति। राजकम्पने। शिष्टोत्वात्मनेपदी गतः। टुओस्फूर्जा। द्वितीयशुच। स्फूर्जे घुः। ओंकारो निष्ठानत्वार्थः। स्फूर्णः स्फूर्णवान्। आदितश्चेत्यनिड्कर्म। स्फूर्गु-
णं स्फूर्जितं वानेन। विभाषाभावादिकर्मणोरिति वेट् ॥ ॐ वससूत्रे भाष्ये ध्वनितम्। इड्द्वयस्यापीति। क्रादिनियमभारद्वाजनियमप्रापितस्यापीत्यर्थः। अ-
नाश्रितेति। नआश्रितो विधानविशेषो येन नाप्राप्तिरूपो यस्य न दित्यर्थः। इणमात्रमिति। अनन्तरमनन्तरञ्चेत्यर्थः। अनारभ्याधीतेनेति। विधिमनारभ्याधीतेनेत्यर्थः।
दं व स्वेकाजाद्दुसामित्यत्र भाष्ये स्पष्टम्। तदाह। पक्षद्वयमपीति। मूले केचिदिति। [illegible] आद्योत्रेति बोध्यम्

१६नेचेति। मदनं चित्तविकारविशेषः। गच्छतु मदिरागृहम्। इत्यग्र इति। प्रथममित्यर्थः। अग्रं पुरस्तादुपरि परिमाणे पलस्य च। आलम्बनेऽसमूहं नग्रानेस्मृतिन पुंसकम्। अधि
२७१ अस्य दीर्घो निर्देशो नोपधायाश्चेति दीर्घस्यानित्यत्वज्ञापनार्थम्। मूर्छेति। हुर्छेति। इत्यपि भवतीति केचित्। क्षिस्ये। अस्याजन्तेषु पाठ उचितः। क्षिणिधास मगत्योरिति
तुदादौ। क्षो षू हिंसायामिति क्र्यादौ। क्षिणु हिंसायामिति तनादौ। बोपदेवस्तु क्षि क्षये ऐश्वर्ययोरिति भ्वादिम्। क्षिष हिंसायामिति स्वादिं वैदिकं ज्या हा। लजलजि। लज्जा
न। लज्ज्यात्। ओलजी ओलस्जी व्रीडने इति तुदादौ। लज प्रकाशन इति कथादौ लज्जीति पटपुटादिदण्डके भाषार्थः। तुजि पालने। भाषार्थेष्वपि पुजादौ। गजगाजि।
गजमदने च अयङ्कुरादावपि शब्दार्थः। गर्ज शब्दे इत्यग्रे। वज व्रज। ववजतुः। वव्रजतुः। अद। शोपध इति। तथा च नन्द्रा इति द्वित्वनिषेधाद् दकारं विहाय टिघान्तस्य
द्वित्वे दकारस्य इत्वे चर्त्वे च। अदिट्टिषते। आदिट्टिदत्यादि सिद्ध्यति। न च परत्वात्पागेव ष्टुत्वम्। असिद्धत्वात्। मदाहुः। पूर्वत्रासिद्धे नास्ति विप्रतिषेधो भावादुत्त
रस्येति। न चान्तरङ्गत्वात् ष्टुत्वं स्यादेवेति वाच्यम्। सत्यपि तस्मिन् शास्त्रासिद्धतया दकार एवायमिति बुद्ध्या द्वित्वनिषेधात्। न च पूर्वत्रासिद्धीयमद्वित्वे इति नि
षेधः शङ्क्यः। द्वित्वे हि सः। न तु द्वित्वनिषेधेऽपीति भावः। तोपध इति। तथा च पूर्वत्रासिद्धीयमद्विर्वचन इति ष्टुत्वस्यासिद्धत्वात् दकार इत्ययम् हि नस्य द्वित्वे हलादिशे
षे अटिट्टिषते। आटिट्टिदत्यादि सिध्यतीति भावः। अयमनादरे चुरादिः। पटृ चलने। अयङ्कुरादावपि। स्फुट। अयं तुदादावपि। विशरणार्थोऽयं परस्मैपदि
षु। भेदनार्थश्चुरादौ। वटि एकचर्यायाम्। एकचर्या असहायगमनम्। वण्ठरण्डाकल्प इति ङ्ङ्श्चेति सूत्रे भाष्यम्। अयमनिदित्त्वोल्यार्थः। परस्मैपदिषु।
मठि कठि शोके। मठ मदनिवासयोः। कठ कृच्छ्रजीवने इत्यग्रे परस्मैपदिषु निरिदितौ। कठ शोक इति चुरादौ। हिठ विबाधायाम्। अमुं परस्मैपदिष्वपि पठन्ति। वि
बाधनं [illegible]म्। कुडि दाहे। वैकल्यार्थः परस्मैपदिषु पठिष्यते ॥ ७ ॥ केचन प्रधाने च प्रथमे चाभिधेयवदिति मेदिनी ॥ ङ्ङ्श्चेति सूत्रे इति। सत्रविषय इत्यर्थः। रामः
परिमाणाख्यायामिति सूत्रे ङ्ङ्श्चेति सूत्रमुपादायन तु [illegible] यमि ङ् कुएव वण्ठरण्डाकल्प इति भाष्योक्तेरेवमुक्तम्। विबाधनमिति। विबाधेति भावे प्रत्यय इति भावः ॥ २७१

ङिः पाठस्येति। कुडि सङ्घात इति पूर्वं पाठात् व्यवहारादिति। वश्प्रत्याहारस्येति शेषः। स द्विकेति। निसंचद्विगुतस्येत्यर्थः। एतदुपपादितुम्। पठत्यन्ता इति। अत कुणसं
मान्त्यार्थः कुटादौ। रक्षणार्थश्चुरादौ। वडि विभाजने। मडि च। अत्र द्वितीयो वेष्टनेऽपि। अत एवाष्टयक् पठितः। मडि भूषायामित्यग्रे परस्मैपदिषु। णौ हर्षे च। भडि परि
भाषणे। कल्याणार्थश्चुरादौ। पिडि। अयमन्चुरादावपि। मुडि खण्डनार्थः परस्मैपदिषु। तुडि। अयमनिदित् परस्मैपदिषु। हुडि। वरणं स्वीकारः। स्कुडि विकसन इत्ये
के पठन्ति। युक्तं चैतत्। हुण्डेर्हिः पीठस्य वैमर्थ्यात्। वरणसङ्घातयोरिति पाठस्यैवोचितत्वात्। चडि कोपे। अयं चुरादावपि। शडि। तालव्योष्मादिः। शण्डो सुरपुरोहितः।
पोडिगन्ध। नाशार्थश्चुरादौ। कडि मदे। भेदने चुरादिः। अनिदिदिहैव। तुदादौ च परस्मैपदी। खडि मन्थे। खुडि इत्येके। खडि भेदने इति चुरादौ। हेडृ होडृ। हेड वेष्ट
ने इति घटादौ। होडृ गताविल्यग्रे परस्मैपदी। बाडृ। वशादिरिति। पवर्गीयेणैव वृत्तिकृतां व्यवहारो न तु दन्त्योष्ठ्येन। तथा सति आवर्त्या लाभात्। वेशाद्युक्तिर्यथास्या
त्। शाडृ। डलयोरैक्यात् क्लालत इति काश्यपः। अत एव मैत्रेयेण शालो शाले सुदाहृतं। शैषद्वर्गे। अस्योष्मादिष्वर्द्दरन्न वक्ष्यते। तदेतदति शौटीर्यमौडुलोमेर्न मृष्यतीति
कल्पतरुः। यौडृ सम्बन्धे। यणादिः। कटे। अयमनेदिदग्रे। किट खिट त्रासे। त्रासो भयोत्पादनम्। किटिर्गतौ पठिष्यते। इह पाठस्त्वर्थभेदात्। केचिदिह न पठन्ति। चटे इत्येके।
नठ स्वठ। जेटतुः। जभ ठतुः। शटन्तौ। णोपदेशोऽयम्। नत्यर्थ्युदासेन। टीति सवृडिकनिर्देशेनावश्यद्भ्यार्थस्य चौरादिकस्यैव ग्रहणात्। हट दीप्तौ। हाटकम्। सञ्ज्ञायाञ्च
तिण्वुल्। बाहुलकाद्क्रियामपि। षठ सटा। अजन्ताट्टाप्। लुट विलोडने। अयन्दिवादावपि। भाषार्थश्चुरादौ। प्रतिघाते द्युतादौ। स्तेयार्थः परस्मैपदिषु। डान्तो यमित्येक
इति। यद्यपीतः प्रभृति पठत्यन्ताः टवर्गान्तीयान्ता इति कौशिककाश्यपादयो वदन्ति ते चास्मादनन्तरं पिड हडीति पठन्ति। तथापि पिटक हाटक वेटो विट प्रभृतिषु टव
र्गप्रथमस्यैव प्रसिद्धत्वाद्देशान्तरे तन्मतमुपेक्षितम्। विट। इन्। वेटिः। कृदिकारादिति ङीष्। वेटी। विटः। इगुपधलक्षणः कः। विटः प्रश्निष्येति। उदाहरन्तीति वस्य मा
णेन संबध्यते। इयत्तुरिति। द्वित्वे कृते एरनेकाच इति यणं बाधित्वान्तरङ्गत्वात्सवर्णदीर्घः ॥ ७ ज्ञानो बहुव्रीहिः ॥

मट्टभास्करइति। अन्येतु त्रीण्यम्बकानि नेत्राणि यस्येति तत्पुरुषमिति माहुः। उचितमिति। पद्लाघवादितिभावः। परन्तु नकृतमनुदात्तङितइत्यादौ तदनुवृत्तये धातोः कर्मणइत्यादौ धा
तुपदत्यर्थसन्देहनिवृत्तये चेति शेषः। उपदेशग्रहणानुवृत्त्येति। एकदेशस्वरितत्वप्रतिज्ञानादिति भावः। तत्रकस्योपदेश इत्याकाङ्क्षायामुपस्थितत्वादार्धधातुक इत्येव विभक्तिविपरि
णामेन संबध्यते इति बोध्यम्। वार्त्तिककृतेति। सत्सिच्सूत्रे वधभावात्तौ पुरि विप्रत्वं विप्रतिषेधेनेति वदतेत्यर्थः। अन्यथा आदेशानामन्तरङ्गत्वेन विप्रतिषेधासङ्गतिः स्यादिति भावः।
एविकद्रिश्चि। अधिअम्बा शब्दः। त्र्यपःशब्दः। अकारो ओकारो मकारः प्रतिपादकः। अस्येति त्र्यम्बक इति भट्टभास्करः। अभिरभीइति। असुन्। अम्भः। तस्यापत्यम्। आभिर्भीषः। अम्भसोलोपश्च
ति बाह्वादिपाठादिञ् सलोपश्च। तद्धितान्विति। पूर्वसवर्णबलाभवरत्याप्रवृत्तिबीजमित्यर्थः। जभीजभौ। आद्यइदित्। जभ्यम्। जृभिर्विनाशार्थस्तुरादौ भ्वादौ परस्मैपदिष्वपि केचि
त्। सनाद्यन्ताः। सन्क्यच्काम्यच्क्यङ्क्यषोऽथाचारक्विप्णिज्यङौ तथा। यगाय ईयङ्णिङ् चेति द्वादशामी सनादयः। भूवाद्य इत्यस्यानन्तरं सनाद्यन्ता इति न सूत्रितम्। सनादीनामि
यत्तायाअलाभप्रसक्तेः। सनाद्यन्तात्वस्यानन्तरं भूवादयश्चेति पठितुमुचितम्। कास्प्रत्ययात्। अच्छन्दसीत्येव नोक्तम्। ब्राह्मणे प्यागदृष्टत्वात्। अथाह च्छन्दसे पर्दसास्मक्रे। पुत्रा ना
मन्वयामासेत्यादि। अतोलोपः। आर्धधातुके स्यादित्येतच्चानुदात्तोपदेशेत्यादिसूत्रादुपदेशग्रहणानुवृत्त्यालभ्यते। तत्फलन्त्वयपञ्जगतौ। आभ्यां क्विपि लोपो व्योरिति लोपश्च
लोपाभावः। अतयत्। नन्वेवं वध्यादित्वाद् वतो लोपेन स्यात्। आर्धधातुक इत्यस्य विषयसप्तमीत्वेपि लिङिलुङीत्यादीनां परसप्तमीत्वस्य वार्तिककृतास्वीकारात्।
वधादेशस्यादन्तत्वाच्चेति चेत्सत्यम्। अत एवापरितोषाद्भाष्यकृता लिङित्यादीनामपि विषयसप्तमीत्वं स्वीकृतम्॥ ७ लिङीत्यादिविशेषनिर्देशे तु हशेषणार्धधातु
कइत्यस्यापि परसप्तमीत्वमेव। विशेषनिर्देशाभावे त्वत्र स्तेर्भूरित्यादौ विषयसप्तमीत्वमार्धधातुके इत्यस्येति स्यात्सिचमूत्रे कैयटे एव स्पष्टम्। भाष्यहृद्येति। एकाच उपदेश
इति सूत्रे इति शेषः। तत्र हि एवमुक्तं वध इत्युपतिषेधः प्राप्नोति वधिपीष्ट नैष दोषः। आद्युदात्तनिपातनस्वरः प्रकृतितः प्राप्तस्वरस्य बाधको भविष्यति। एवमप्युपदेशिवद्वचनात् अः प
यैषसन्निपातस्वरः प्रकृतिस्वरं बाधते एवं प्रत्ययस्वर प्रयुक्तनिपातमपि बाधेत। नैष दोषः। आर्धधातुकीयाः सामान्येन भवन्तीति। वस्तुतो वार्त्तिकमतमप्येवमेव विप्रतिषेधस्तु यथातथास्ति

म.श. तदाह। विस्तर इति। कौस्तुभे। वे। ड्रेषाष्ठे। पणाय्यामिति। तस्मायप्रत्ययान्ताद्प्रत्ययेटापिव्यवहारमित्यर्थः। नेतिवाच्येइति। णिलोपोनेत्यर्थः। अचकाङ्क्षदिति। प्रत्ययस्याङ्ग
२७२ शेउपस्थितकाङ्क्षत्वेनतदन्वयस्यैवौचित्यात् आङ्क्षःपरेणाविति नाचो विशेषणमिति भावः। सनियइति। सतियइत्यर्थः। इद्ध्यस्तोतिण्योरित्यत्र कैयटेस्पष्टम्। तचेति। गुणानाञ्च
एतच्चभावकर्मप्रक्रियायां स्फुटीकरिष्यते। विस्तरः शब्दकौस्तुभेबोध्यः। जयादित्यादिमतमाह। स्तुतावेवायप्रत्ययइति। भट्टिस्तुव्यवहारेप्ययंप्रयुङ्क्ते।
नचोपलेभे वणिजां पणाय्यामिति। अयामन्ता। नेतिवाच्ये अयादेशवचनंत्यपिलघुपूर्वादित्येवमर्थम्। प्रस्तनय्यानह्यत्रगुणायौलभ्येते। आम्। कारयामास।
अन्तः। गण्डयन्तोमण्डयन्तः। औणादिकोझच्। झोन्तः। आलुच्। स्पृहयालुः। स्पृहिगृहीत्यादिना आलुच्। आय्येतु उणादिषुवक्ष्यते। स्पृहयाय्यः। स्तनयित्नुः। इष्णुच्।
पारइत्येव। णेश्छन्दसीति इष्णुच्। णेरिति। णिङ्ङिचोः सामान्यग्रहणम्। एवमग्रेपि। वार्त्तिकस्योक्तिसंभवमाह। णिलोपस्येति। क्तिजन्तमिति। तन्नतितुत्रेतीण्नि
षेधादिति भावः। आर्द्धधातुकमात्रमिति। मात्रशब्दः कार्त्स्न्ये। क्ति भिन्नमपीति भावः। णौचङि। उपधायाः किम्। अचकाङ्क्षत्। सन्यतः। तपरकरणङ्किम्। पापच्यते। सन्।
पापचिषते। यत्तु वदन्ति सनियोभ्यासः सन्निमित्त इति विज्ञानादत्राप्रसङ्ग इतितन्न। अधीषिषते। प्रतीषिषतीत्यादावव्याप्तेः। नहिकार्यीनिमित्तत्वेनाश्रीयते। अरिरिष
तीत्यादावतिव्याप्तेः। नचैवमपिपपक्षतीत्यादावव्याप्तिः। अभ्यासस्यसन्परत्वाभावात्। नचयेननाव्यवधानन्यायेनसन्प्रकृत्याव्यवहितेपिप्रवृत्तिरितिवाच्यम्। प्रतीषिषतीत्यत्रैवाव्यव
धानसंभवादिति चेन्मैवम्। सनाधातुनास्तिप्यसनिसति यो धातुस्तन्नन्तस्तदीयाभ्यासस्येतिव्याख्यानात्। नचोक्तव्याख्याने प्रमाणाभावः। तपरकरणस्यैव तत्र प्रमाणत्वात्। किञ्च अ
कारग्रहणमपि तत्र मानम्। अन्यथा सन इत्येव ब्रूयात्। एवं ष्विते जगद्दानदधानादिशब्देभ्यः आचारक्विबन्तेभ्यः सनिकृते दुष्टंभवत्येव। पापच्यतेः सनीत्वप्राप्तिं सौत्रतपरक
रणबलेनेत्संवारयद्भिर्हरदत्तादिभिरपि स्वीकारात् तत्त्वरसात् ॥ ७ पराथत्वादितिन्यायेनसनीत्यस्यसाक्षादनुबाधेऽन्वयसंभवति अश्रुतेतद्विशेषणेऽन्वयायोगादिति भावः। दूषणान्तरमा
हा। अधीषिषतीत्यादि। अभ्यासस्येति। अभ्यासाकारस्येत्यर्थः। अव्यवधानसंभवादिति। एवञ्च पापविषतइत्यादावपिनप्राप्तिरिति भावः। सनइत्येवेति। अलोन्त्यस्येत्यनेनान्त्यस्येति भावः ॥ राम:
२७२

भाष्योक्ते श्चेति। नन्वेवं व्याख्यानेऽपि प्रत्ययस्य सन्नन्तत्वप्रयुक्ताभ्यासस्येत्यर्थे न यन्तात्सनि दोषः। किञ्च तपरत्वाभावे ऽस्येत्युक्तौ न लाघवम्। किञ्च यथालक्षणमप्रयुक्ते इत्यस्याप्रयुक्ते ल
क्षणाभावस्यैव योग्यतानुसरणस्येति अर्थ इति बहुशः कैयटेन व्याख्यानादस्यैवार्थस्य युक्तत्वाच्च। जगदादिभ्य आचारक्विबन्तेभ्यः सनो नाभिधानमेवोचितम्। अपि च सन्य
ङोरित्यत्र सन्यभ्यासाकारस्येति व्याख्यानेऽपि षङोऽल्लोपस्य स्थानिवत्त्वात् यङन्तात्सनि दोषः। अपि च सन्निमित्ताभ्यासस्येत्यर्थेऽपि स्त्रौ तिण्योरिति सूत्रे ऽपीपिषतीति प्रयोगादत्र सूत्रेन हिका
यथालक्षणमप्रयुक्ते इति भाष्योक्ते श्चैतस्या लाभावत्। दीर्घो लघोः। लघोरभ्यासस्येति व्यधिकरणे षष्ठ्यौ अभ्यासावयवस्य लघोरित्यर्थः। न तु समानाधिकरणे असंभ
वात्। अत्समुदायस्य लघुसंज्ञास्ति ह्रस्वं लघु इति सूत्रितत्वात्। लघुनि चङ्परे ऽनग्लोप इति सर्वमिहानुवर्तते तच्च प्रागवदेव हेतुधा व्याख्येयम्। तदाह। सन्व
द्भावविषय इति। एतेन हलादेरिति प्राचोक्तं निर्मूलत्वादुपेक्ष्यमित्यपि ध्वनयति। नहि मुनित्रयोक्तिं विना हलादेरिति पूरयितुमुचितम्। न वा वृत्तिकारादिभिरप्युक्त
म्। यत्तु तत्पौत्रेण भाष्य तं हलादेरित्यर्वाचीनमतेनोक्तमिति। यच्च तेनैव हेतुमण्णौ औन्दिदत्। आड्डिडत् इत्यादि व्याख्यावसरे उक्तं हलादेरित्युक्तेरर्वाचीनमते दी
र्घो न। स्वमते तु दीर्घो भवत्येवेति तत्तुच्छम्। औन्दिददित्यादावङ्लघ्वोरुभयोरपि णिचः प्रति विशेष्यत्वे दीर्घस्याप्राप्तेः। चङ्परे हि यदङ्गं तन्नद इति न तदीयोऽभ्यासः।
न वा चङ्परणिच्परं यल्लघु तत्परः। एवञ्च स्वमते दीर्घो भवत्येवेत्युक्तिरसङ्गतैव। आटिटदित्यादिभाष्यादिसकलग्रन्थविरुद्धं च। एतेन भाष्योदाहरणमेव हलादेरित्यस्य
पूरणे प्रमाणमिति केषाञ्चिदुत्प्रेक्षापि प्रत्युक्ता। दीर्घाप्राप्त्यैवोदाहरणसौष्ठवस्योक्तत्वात्। यदपि वदन्ति। हलादेरिति सामर्थ्याल्लभ्यते। तथाहि। चङ्परे णौ यदङ्गं तस्य योऽभ्या
सस्तस्य दीर्घो विधीयते। अजादेस्तु अजादेर्द्वितीयस्येति वचनादङ्गावयवस्याभ्यासो न त्वङ्गस्य। न ह्यवयवावयवः समुदायस्यावयव इति निर्वाहः। नस्यासार्वत्रिकत्वादिति ॥
र्यत्वस्य न प्रवृत्तिरत आह। आस्तान्तावदिति। तपरत्वप्रयोजनविचार इति शेषः। सूत्रितत्वादिति। एवञ्च निर्दिष्टस्यानिकत्वादचश्चेति लिङ्गाभावादलोन्त्यस्येति च न प्रवर्तते। परे तु लघ्वन्ताभ्या
तस्येत्यर्थे अलोन्त्यपरिभाषया चेष्टसिद्धिरित्याहुः। चङ्परणिच्परमिति। इदमेव व्याख्यानं प्रकृतसूत्रस्य भाष्ये कैयटे णिश्रीति सूत्रस्थ कैयटारूढमिति सन्यत्र प्रपञ्चितम्। इत्यादिभाष्यादीति। इ त्याद्युदाहरणपरभाष्यादीत्यर्थः ॥

अल्विधित्वादिति। यद्यप्युपदेशइत्यस्य तत्रापकर्षणे नस्यान्युपदेशेऽजन्तत्वमस्त्येवेति नतदर्थस्यानिवृत्त्यापेक्षोपदेशेत्वतद्रूपस्यप्राप्तेश्चतथाप्युपलक्षणमिदम्। प्रत्यासत्त्या
यन्निमित्तवैकल्पप्रयुक्तोपदेशाप्रवृत्तावतिदेशप्रवृत्तिर्मृग्यते तस्यधर्मस्यशास्त्रीयस्यैवग्रहणान्नदोषइतिबोध्यम्। गुणायादेशयोरिति। गुणेइगन्तत्वाभावादप्राप्त्यायादेश
इतिभावः। नसिचीति। सिचिवृद्धेर्येननाप्राप्तिन्यायेनान्तरङ्गबाधकत्वादितिभावः। ज्ञापनार्थमिति। न्यायसिद्धस्यैवबोधनार्थमित्यर्थः। नत्वपूर्वमिदंज्ञापकमितिभ्रमितव्यम्। अन्तत्वा
अवङ्स्फोटायनस्यविधित्वात्। वदत्यन्तायांवाचिउवदियेति। कृत्वेयदृदित्ययवच्चस्तपनात्मजायाइतिपल्लवस्यप्रमादएव। श्वयतेरः। पररूपमिति। अतोलोपस्तुनभवति। आर्द्धधा
कोपदेशकालेयदकारान्तमितिव्याख्यातत्वात्। अश्वयीदिति। नचिहान्तरङ्गत्वाद्गुणायादेशयोः कृतयोर्यान्तत्वादेववृद्धिनिषेधोऽस्तुकिंण्श्विग्रहणेनेतिचेत्सत्यम्। नसिच्य
न्तरङ्गत्वमस्तीतिज्ञापनार्थंण्श्विग्रहणम्। तेनचिरिणोतिजिरिणोत्योर्यङ्लुगन्तानाञ्चिनीप्रभृतीनाञ्चसिचिअचिरायीत्। अजिरायीत्। अचेचायीदित्यादिसिद्धमिति।
चुलुम्पतीति। लुम्पतीत्यर्थः। उक्तंहिकविकल्पद्रुमे। चुलुंलोपेइतिकास्यनेकाज्ग्रहणंचुलुम्पाद्यर्थमितिवार्त्तिकेव्यवहृतोयम् ॥ ॥ इतिश्यादयः ॥ ॥ ऋतेरीयङ्।
ऋतिः सौत्रइति। तान्तोयंधातुरिकानिर्दिष्टः। वंचिलुंच्यतश्चेत्यनुवादात्। यत्तुवदन्ति। ईयङोदीर्घोच्चारणात्तान्तोयम्। इदन्तत्वेहिसवर्णदीर्घेणैवसिद्धेरियङमेवकुर्यादि
ति। तन्न। एरनेकाचइतियणापत्तौसवर्णदीर्घस्यदुर्लभत्वात्। नचयङेवास्तु। अकृत्सार्वेतिदीर्घोपपत्तेरित्युक्तेसोचिता। सन्यङोरितिद्वित्वापत्तेः ॥
संभवादित्यन्यत्रविस्तरः ॥ इतिश्यादयः ॥ अनुवादादिति। ऋदन्तधातोस्तुनतत्रग्रहणंव्याख्यानात्। कमेर्णिङितिसाहचर्याच्चहलन्तस्यैवग्रहणंबोध्यम्। यणापत्ताविति। न
नुकतोपीत्यन्यायेनधात्ववयवभिन्नस्यैकारभिन्नस्यैववाचोनिमित्तत्वमितिवाच्यम्। ईदृशेस्थलेतन्न्यायाविषयस्यान्यत्रोपपादितत्वात्। तुल्यन्यायेनणिचिगुणाद्यनापत्तेश्चेति
इत्युक्तेश्चेति। तेनसिद्धेईकारोच्चारणन्तान्तत्वेप्रमाणमित्युक्तेरसेत्यर्थः। क्यप्रत्ययेनसिद्धेईयङ्करणन्तान्तत्वज्ञापनार्थमित्यन्यत् ॥

अनुवृत्तेरिति। अर्थान्तरासंभवाच्च हलादेर्हेरित्यर्थ इति भावः। उच्चारणार्थ इति। अत्राङ्गं न प्रत्ययास्ते पस्तत्र हकाररूपप्रत्ययस्य हान्तस्य चासंभवात्तस्य यावयव ह स्येत्यर्थः। तेन वाग्
हरिरित्यादौ न दोषः। हुश्नल्भ्य इति विशेषणन्तु श्रुतत्वाङ्स्येव। एवञ्च ह स्येटाव्यवहितत्वाद्गुदिहीत्यादौ न दोषः। अत्तादित्यत्र तु न धिः। हल्त्वात्त्विधित्वेन स्थानिधर्मत्वाभावेन चस्था
निवत्त्वाभावात्। स्पष्टञ्चेदं प्रकृतसूत्रे भाष्ये। अत एव पुस्तीतात् जहितात् शिष्टात् स्तादित्यादौ शानज्यौ आचहौ, शाहौ, घसोरेद्धाविति न। तत्रापि हादाविलर्धात्। पूर्वव्याख्याने तु परत्वा

रूपायाञ्चेत्येक इति। ऋतीयत इति विकल्पपक्षे यथेषु ऋतीयतेस्यात्। घृणयोरिति नानार्थवर्गे च भट्टमल्लेनाभिधानात्। अर्त्तेनञ्चऋतीयाच हृणीयाच घृणा
र्थका इति। जुगुप्साक रुणोभयपर्याविनाघृणाशब्देनार्त्तेनादेरर्थनिर्देशं कुर्वन्नमरोपि ऋतीयतेर्द्व्यर्थतायां प्रमाणमिति धातुचन्द्रोदयेप्युक्तत्वाच्चेति भावः। शेष
त्वादिति। यत्तु प्रसादकृता ह्यस्य भावे आर्त्तिष्टेत्यादावात्मनेपदमुदाहृतम्। तत्प्रामादिकमिति भावः। हुझल्भ्यो। घसिभसोर्हलीत्यतो हलीत्यनुवृत्तेर्हिङादेर्न। रुदि
हि। अपिहि। अत्तादिति। धित्वात्परत्वात्तातङ्। स्थानिवद्भावेन पुनर्धित्वन्तु न। सकृद्गताविति न्यायात्। पहाहेर्धिरिति स्थान्यादेशयोर्हयोरपीकार उच्चारणार्थः ह
कारस्य धकार आदेशः। तेन हतीत्यपि नानुवर्त्यम्। नापि तातङः प्रसङ्गः। अनुदात्तो। वनतीतरेषामिति। वनतेर्व्यभिचारान्न विशेषणमिति भावः। यत्तु प्राचा एषा
मनुनासिकस्य लोप इत्युक्तम्। तन्न। नमिमन्यो र्मिहन हमुचमस्यादीनामनन्त्यस्यापि लोपप्रसङ्गात्। अनुदात्तोपदेशादिति। अनुनासिकान्ता इति भावः। तनो
त्यादय इति। अत्रापि प्राग्वत् ॥

तातङि सकृद्गतिन्यायेनैतानि नाद्दञ्च स्थानिवत्सूत्रे भाष्ये स्पष्टम्। न चासंभवरूपविरोधाभावात्कथं परत्वेन व्यवस्थेति वाच्यम्। युगपत्प्रवृत्तौ स्वस्वनिमित्तानन्तर्याभावरूपासंभवसत्त्वात्
तादृशासंभवस्यैव विप्रतिषेधशास्त्रप्रवृत्त्युपयोगी। स्थानिवद्भावस्तु कार्यप्रवृत्त्युत्तरं न प्रवृत्तिकाल इति युगपदसंभवः स्पष्ट एवेति दिक्। ध्वनितञ्चेदं स्थानिवत्सूत्रे भाष्ये ॥

म र ५.दृनैति। [illegible] मिच्पात्वेन विशेषणान्तुः स्यस्य तु नरदिः ण्यल्लोपाविति पूर्वविप्रतिषेधेनाल्लोपेन बाधादिति भावः। वधाद्दसा यामिनि स्वतन्त्रस्य त्वदन्तत्वप्रतिपादकभाष्यप्रामाण्येन नसदृशेऽपि वि
२८७ षये प्रयोग [illegible] निबोध्यम्। नत्फलमिति। पुंस्त्वानमित्तादौ कृत्वाभावादिरूपम्। विधिसामर्थ्यादिति। न चात्रापि खघादेरेवानुकरणं लक्षणचक्षुःसंपन्नञ्च यत्त्वमिति नासिद्धत्वोपयोग इति
[illegible] नावधीत्स्वमनाह्लादेरितिवद्धिर्नेति भावः। वसिङ्॥ असंदर्शनेपीति। विम्बारूपामिचष्टे शचीभिरित्यादौ तथा व्याख्यातत्वादिति भावः। अन्नेद्दिनद्दिति। न
स्मि [illegible] दन्त इति सूत्राद्दन्तग्रहणानुवृत्तेरिति भावः। एवञ्च [illegible] षसिङ् इकारस्थाने अकार एव वक्तुमुचितः। रुद्घादिरिति। तत्फलन्तु प्रागेव प्रपञ्चितम्। अस्यतिवक्तीति। स्वा
नीय [illegible] विधिसामर्थ्यादयत्वं नासिद्धम्। स्वतन्त्रस्य स्याते: सार्वधातुकमात्रविषयताया वक्ष्यमाणत्वात्। ईशः से। ईडजनोर्ध्वे च। अत्र सेध्वे इत्येतन्तयोरनुकरणम्। अविभक्तिकश्च निर्दे
श इत्याङ्करः। यत्तु प्राचा स्याईईडजनोरितीडजजनिषीमुक्तम्। तत्पत्तिडि: ऐडिध्वमित्युक्तन्तदाकरविरोधादुपेक्ष्यम्। यद्यपि जनेः श्यना भाव्यन्तथापि छान्दसत्वात् श्यनो लुकि उपधालो
पाभावे च जनिषे जनिध्वे इति बोध्यम्। णिसि चुम्बने आचमामेति। उह्यैतषे निमन्त्रोर्निसानं जुहोमुख इति दर्शनान्तस्यैव प्रयोगादिति भावः। किंच नुम्विसर्जनीयशर्व्यवायेपीति सूत्रे वृत्तिन्या
मपद्मज्योद्यः सर्वे षम्या। अस्य तालव्यान्तत्वे सङ्गताः स्युः। तत्र हि नुमादिभिः प्रत्येकं मथाये पत्वमिष्यते। तेन निंस्ते निंस्वेत्यत्र नेत्युक्तम्। अस्य तालव्यान्तत्वे तु व्रश्चादिषत्वे षढोरिति क
त्वे कत्वर्गीयत्वेन पत्वं दुर्वारमिति कयं प्रत्युदाहृियेत। णिजि शुद्धौ। सेट्। व्याप्रभृतिना णिजं सिचिमिति निरनुषङ्गस्य पठितत्वेन जैहोत्यादिकस्यापि न एव तत्र ग्रहणात्। शिजि अव्यक्ते।
तालव्यादिः। योषेषशिंक्ते विततापि धन्वमिति दर्शनात्। क्तप्रत्यये शिञ्जितम्। आवश्यकणिन्यन्तान्ङीप्। शिंजिनी। भूषणानां तु शिञ्जितमित्यमरः। मौर्वी ज्या शिञ्जिनी गु
ण इति च। तारैः शिंज इलयसुभगैरित्यत्रानुदात्तेत्त्वलक्षणस्यात्मनेपदस्यानित्यत्वात् शता बोध्यः॥ ७ वाच्यम्। लौकिके प्रयोगे रुद्धेः तस्य क्वाप्यसत्त्वेन तदनुकरणस्य वक्तुमशक्यत्वात् कृतप
त्वप्रयोगस्य त्वानामेवानुकरणादिति भावः। स्पष्टा चेयं रीतिरुपधायिति सूत्रे भाष्ये। अविभक्तिकश्चेति। नेनरोड्दुमिति सिद्ध्यति। वृत्तिन्यासेति। भाष्येत्यपि बोध्यम्। तत्रापि निंसेः प्रतिषेधो वाच्यः। निंस्ते निंध्वे सु रामः
केः षत्वन्दुर्वारमिति। तथा च निङ्क्षे इति स्यादिति भावः। तालव्यान्तस्याप्यङ्गीकारेण वाधकमित्यथो निरनुषङ्गस्येति। निरनुस्वारस्येत्यर्थः। वार्तिकमतेनेति। परसप्तमीति व्याख्यात्रेकदेशीमतेनेत्यर्थः। भाष्येति २८७
। [illegible] सप्तमीति सिद्धान्तिमते इत्यर्थः। आद्यन्द्विर्वचने चीत्यत्र भाष्येऽस्त्यद्वितीये सप्तमे च भाष्ये स्पष्टम् ॥

नैमित्तिकत्वादिति। आगमप्यन्त्रसुवचम्। उदीतइति। इदंभावे निष्ठायांस्वप्नम्यन्तम्। उदयकालइत्यर्थः। उदयतीति शेषो भवतीति वेत्यन्ये। आविर्भावार्थकत्वादिति। नचव्यतीहारस्यानेक
धूङ्। सुधूञिषइति। स्वरत्यादुक्तेन न्यायेनेह नित्यमिट्। सोतासवितेति। स्वरतिसूतीतिवेट्। तुरुस्तुशम्यमः। अपिदीर्घमिति। यत्तु प्राचाएभ्यः परस्यपितः सार्वधातुकस्ये
तिव्याख्यातन्तत्प्रामादिकमितिभावः। स्मरन्तीति। न्यासकारवर्द्धमानादयः। यत्तु पदमञ्जर्यामुक्तं ब्रवीतीत्यत्रबहुलंछन्दसीतिवा पोलुगि निर्दृश्यते तच्छन्दस्यमेवेर्वक्ष्यमाणं
लेखकप्रमादात्पूर्वं पतितमिति माधवः। आपिशलास्तु तुरुस्तुशम्यमः सार्वधातुके छन्दसीति पठन्ति। इणगतौ। औवादिकस्येति आशीर्लिङीति भावः। विद्यादौ तु समी
यादिति न भवत्येव। केचित्तु वीगतौ। सत्रदीर्घमीकारं प्रश्लिष्टमाहुरित्यनुपदं वक्ष्यते तन्मते विद्यादावपि भवत्येवेत्यवधेयम्। वार्त्तिकमतेनाह। लावस्थायामिति। भाष्य
मतेनाह। विवक्षित इति। उभयथापि द्विर्वचने चीनि सूत्रं नेह प्रवर्त्तते। आद्ये निमित्तलाभावात्। द्वितीये त्वनैमित्तिकत्वादिति भावः। वीगति। एकदेशिमतमाह। अत्रैका
रेपीति। तथाचदीर्घोपक्रमे कविकल्पद्रुमः ईलकान्तिगतिव्याप्तिक्षेपप्रजनखादनेइति। लइत्यदादेःसञ्ज्ञा॥ प्रयुञ्जतेचानहितरणिरुदीनेदिक्पराधीनवृत्तिरिति कर्म
व्यतिहारेतङ्। न चनगतिहिंसार्थेभ्यइतिनिषेधः शङ्क्यः। उत्पूर्वस्याविर्भावार्थकत्वात्। ख्याप्रकथने। सनेति। शर्परेविसर्जनीय इत्युक्तेः। यद्यस्माद्प्या। ढुधातुकंस्यात्त
र्हिसस्यानीढुर्वारइतिभावः। मामाने। नास्येति। ङि·तएवतत्रग्रहणमितिमेङ्·धातौ निरूपितत्वादिति। विदाङ्कुर्वन्। लोटोलुगिति। आमइतिसूत्रे लेरित्यनुवर्त्तयतां मते
नेदमुक्तम्। निष्कर्षेतु तेनैव लुगित्यवधेयम्। उपसर्गप्रादुर्भ्यां। प्रादुस्स्थेति। प्रादुस्इतिसान्तमव्ययम्। प्रादुषइतिप्राचाङ्ग्रन्थेषु मूर्द्धन्यपाठः प्रामादिकः। मृजूशुद्धौ।
केचिद्मृषितंपठन्ति तदनाकरम्। भिदादिपाठानर्थक्यापत्तेः। क्ङिःत्स्वजादाविति। एतच्चेक्कोगुणवृद्धीइतिसूत्रे भाष्यकारैरर्थत उक्तम्। रुदिर्। घित्वनेति। सकृदितिन्यायात्।
प्रागुक्तरीत्यापिद्वैधासमाधानंस्मर्त्तव्यम्। जक्षभक्षस्वभामेति। जक्षन्क्रीडन्रममाणइत्यादौ जक्षादित्वस्य निर्विवादत्वात्। सकलधातुवृत्तिकारैस्तथास्वीकाराच्चेति भावः ॥
निष्ठ्वा। कथमन्नस्यइतिवाच्यम्। कालान्तरस्यतरणौ भेदमारोप्य तदुपपत्तेरित्याहुः। सकृदितीति। अन्यथापरत्वप्रवृत्तिस्तथोक्तम्। द्वेषेति। तदेवमुख्यम् ॥

निषेधापवादत्वादिति। ओर्ङित्वेपि नहि कार्यीतिन्यायेन तन्निमित्तनिषेधाप्रवृत्तेः। अत एव मृणोतीत्यादौ गुण इति भावः। भङ्क्तेति। अयजुसीति यकारप्रश्लेषेण अयकारादौ जुसीत्येवं रूपमि
त्यर्थः। भङ्क्त्वा स्वस्वसूत्रं भङ्क्त्वेत्यर्थः। णोनेति। तस्मिन्हि परत्वेन लोपं बाधित्वा युक् स्यादिति भावः। ई हल्यघोरितीत्वं स्यादिति। ई हल्यघोरित्यतो हलीत्यनुवर्तमाने तदपवादभूतमि दरिद्रस्येतीत्वं स्यादि
जुसि च। अज्ञादाविति। क्तस्याचीत्यतः चीत्यनुवर्तत इति भावः। यत्तु प्राचा शृणुयुरित्यादौ यासुटो ङित्त्वान्न गुण इत्युक्तम्। तन्न। जुसि गुणस्य निषेधापवादत्वात्। भङ्क्त्वा व्याख्यानन्तु
क्लिष्टत्वादुपेक्षितम्। भाष्यारूढस्य स्पष्टस्य समाधानस्यैव लाभात्। दरिद्रा। प्राचोक्तमनुवदति। यत्त्विति। निर्मूलमेवेति। यत्तु व्याख्यातृभिरुक्तम्। आमो भावे आतो लोपे कृते आत औणल इत्यौत्वं ने
त्यादि तद्दूहतम्। तथा हि। आत औणल इत्यत्र प्राथम्यादौकारे कर्तव्ये औकारवचनं दरिद्रातेरालोपे पिश्रवणार्थं सदाम भावे लिङ्गमिति पारायणिकहरदत्तमाधवादिभिरुक्तं स्वयमप्युपन्यस्तत्वात्।
तत्र कर्मैतस्याप्रवृत्तिः। यदपि दरिद्रेस्समर्थनानर्थमुक्तम्। रुचा रणे विशेषाभावादौकारविधानमिति। तदपि रभसात्। तस्मिन्पक्षे आमो दुर्वारत्वात्। विवक्षितेति। तेन दरिद्रेरस्मर्यपाद
धेत्यादन्तलक्षणो न किन्तु पचाद्यजेवेति भावः। आदरिद्रुरिति। सिजभ्यस्तेति भेर्जुस्। लङः शाकटायनस्यैवेत्यादन्तलक्षणो विकल्पस्तु न भवति। परत्वात् श्नाभ्यस्तयोरित्यालोपे आकारान्तस्यैवा
भावादिति माधवः। न च दरिद्राभिरिति स्थिते अल्लोपात्परत्वादप्यादत्वाच्च ई हल्यघोरितीत्वं स्यादिति वाच्यम्। अकृतव्यूह इति न्यायात् ई त्वे हि हलादित्वं निमित्तम्। तच्च विनाशोन्मुखं जुसो भावि
त्वात्। वशकान्तौ। भाषायामप्यस्य प्रयोगो दृश्यते। जयाय सेनान्यमुशन्ति देवा इति। इत्यदादयः। चत्वारः परस्मैपदिन इति। होष्येदित्यादयस्तु के पाञ्चित्य योगाः प्रामादिका एव। कथन्तर्हि स्मरा
ग्नौ जुह्वानाः सुरभिघृतधाराहुतिशतैरिति सौन्दर्यलहरी। नायं शानच्। किं तु चानश्। डुभृञ्। द्वितः क्त्रिः। भृत्रिमम्। चान्द्रास्तु द्वितं पठित्वा भरथुरित्युदाहरन्ति। माङ्। ई हल्यघोः। अ
त्र घोरित्युक्तं माङ्ग्र्यापे रुक्तम्। मिमीते। घुमास्थेतीत्वमिति तत्त्वामादिकम्। तत्रार्धधातुक इत्यनुवृत्तेः। तथा च काशिका। आर्धधातुक इत्यधिकारोनल्य पीतियोगं यावदिति ॥
त्यर्थः। के चित्तु परत्वाल्लोप इति माधवोक्तमसङ्गतमङ्गसंज्ञा सापेक्षत्वोपापेक्षया तनिरपेक्षजुसोः त्वरङ्गत्वात् तस्माद्यदि विकल्पस्यानिष्टत्वे दृढनरं मानन्तदा पूर्वप्रतिषेधएष्टव्योव्यवस्थितविभा
षावानो चेत् विकल्पे दृष्टापत्ति[illegible]वं माधव[illegible]तिनमित्याहुः ॥ इत्यदादयः ॥ श्रीसङ्कटनाशिनी विजयतेतराम् ॥

प्रत्ययविषयत्वादिति। यद्यपीदं सूत्रद्वयोरिकौतत्रत्यभाष्यविरुद्धं तथापि तत्र सहेः पाठो हरदत्तसंमत इति विवक्षितेऽर्थे न दोष इति भावः। उभयोर्ग्रहणे इष्टे व्याख्यानमेव शरणम्। महाद्रिरिति। ती
मिति सूत्रे इषेः श्यन्प्रत्ययात्तकारे प्रतिषेध इति वार्त्तिकात्सहेः श्यन्विकरणस्येड्विधौ ग्रहणं भवत्येव इष्यलुभादेरिवसहेरप्यकार उच्चारणार्थ एव। षत्वविधावप्युच्चारणार्थं तेवो वितेसन्ये।
दीडोऽनुकरण इति। येतु सन्त्यास्तत्रे दीदेङ् धेटामनुकरणानित्यत्वस्याप्य प्रकृतिवदित्यतिदेशादनैमित्तिके आले चतुर्णां दारूपाणां द्वयोर्धारूपयोरेकशेषकृत्वाद्वन्द्व इति वदन्ति तन्मतेनेद
तिमद्विमसीम। अत्र केचित्तीमेत्यपि पठन्ति। व्रीड। पञ्च व्रीडः व्रीडमाव इति मेसत्संप्रति इति कालिदासः। व्रीडादिवाभ्याशगतेर्विलिल्ये इति माघः। गुरोः श्लेषकारः ——— मन्दासं ह्री
स्त्र पाव्रीडेत्यमरः। षह शुह। अत्र सहेः पाठो हरदत्तादीनामनभिमत इति माधवः। तदापातत्तः। शकिसहोश्चेति सूत्रे षह मर्षण इति वृत्तिमुपादायनतु षह शुह चक्रार्थ इत्यस्येव पर
सैपरिनोऽनुबन्धकस्य ग्रहणं प्राप्तमित्याशङ्क्याननुबन्धपरिभाषायाः प्रत्ययविषयत्वादुभयोरपीह ग्रहणमिति हरदत्तोक्तेः। अत्रात्रेयः। परिनिविभ्य इति षत्वम्। परिषहइति। तोषसहे
तो द्विकल्पस्तु मास्यभवति। सहेतिशब्दतनिर्देशादित्याह। अत्रेदं वक्तव्यम्। षत्वविधावपि शब्दतनिर्देशस्तुल्यः। तथा च सत्वमपि माभूत्। तत्राकार उच्चारणार्थ इति चेदिद्विकल्पेपित
थास्तु। तस्मादुभयमस्तु मास्तु वा मतद्वैजरतीयं युक्तम्॥ आकरग्रन्थास्तु सर्वेप्यत्रोदासीनाः। तदिह तत्त्वमहद्भिर्निर्णेयमिति। नपुंसके भावे क्तः। सुहितं तृप्तिः। जेरतुरिति। ग्रन्थकृत्तामि
तिमुणे हृते माज् भमुत्रसामिस्येत विकल्पः पूङ्। नित्यमिडिति। एवञ्च प्राचां ग्रन्थे च सूर्यैर्यदुक्तं सुष्टुविक्षेसुषुवहे इत्यादि तन्नामादिकमितिभावः। दीङ्। दिदीये इति। परमपि यणं नाधि
त्वानिवत्वादीयुट्। मीनाति। एज्निमित्त इति विषयसप्तमी। तेनोपदाय इत्यत्र यङ् सिद्धति। अन्यथा परत्वात्। अदास्तेति। स्याघ्वोरिच्चेत्येतन्नभवति। दीङोऽनुकरणे दारूपासंभवेना
पुत्वात्। अतएव प्रनिदातेत्यादौ नेर्गदेति णत्वमपि न भवति। डीङ्। डीनः डीनवान्। स्वादिषु पाठसामर्थ्यान्निष्ठायामिण्न। इदिहि सतिमवधानादोदितश्चेति नत्वस्याप्रसङ्गः ॥
माप्रसिद्धं तं प्रकृतिग्रहणं शिदर्थं कर्तव्यं प्रणिधयतीत्यादौ नेर्गदेति णत्वं यथा स्यादिति वार्त्तिकोत्यानानापत्तेः। दीङः प्रतिषेध स्थाघ्वोरित्वे इति वार्त्तिकानुत्थानापत्तेश्च। तस्मात्कृतात्वदाधामेवानुकर
णं सुत्रेऽस्मिन्निति तात्पर्यं सत्र पिवावैरेव निर्णेयत्वात्। तस्मात्तु स्याघ्वोरिति सन्निपातपरिभाषया वारणीयमिति तन्मोऽजनरात्रेभाष्येसत्त्वम्। एवञ्च प्रणिदानेत्यादौ नेर्गदेति णत्वं भवत्येवेत्यन्ये ॥

सीरदेवादयइति। अत्राह विर्भाष्यानुक्तत्वमाइ इति विहितेनेति। अर्थाभावेपिसौत्रत्वात्स्वकृते साधुतेत्यर्थः तत्रक्रयादिषु पठितोयमस्तिरनुबन्धोलीधातुः परस्मैपदी अयमात्मनेपदीतिबोद्धव्यम्। स्यादिष्वेवे
डयितव्यश्चस्तुभौवादिकस्य निष्ठाशीङिस्वन्निष्ठेतियोगविभागात्कित्वमितिशीरदेवादयः। मीङ्। हिंसायेति। अतएवाकर्मकत्वमितिभावः। मिमीतिक्र्यादौ। डुमिञितिहस्वान्तः स्वादौ। मीग
ताविति चुरादौ। लीङ् श्ले। रेता। रेष्यते। लीङ्। धक्रेति। सार्वधातुकेयगितिविहितेन। व्रीङ् इत्यो क्र्यादिः। व्रीवरणइतिक्र्यादौ। प्रीङ् प्रीतौ। प्रेता। प्रेष्यते। प्रीञ् तर्पणे। क्र्यादौ चुरादौ च। घोन्त
कर्मणि। अभिष्यतीति। उपसर्गात्सुनोतीतिषत्वम्। अभि ससाविति। स्यादिष्वेवाभ्यासस्यषत्वमितिनियमादभ्यासस्यनषत्वम्। नापिद्वितीयस्यास्यादिषितिसूत्रेण स्यादिष्वेवतद्विधानात्।
धूरीगूरी। गूरउद्यमनइत्यात्कुस्मीपः। गुरइविद्यमधूपलुदादौ। पाठान्तरमिति। द्रविडाचार्यनिरुक्तकारादिबहुसंमतमेतत्। अत्रमन्त्रप्रयोगमुदाहरति। युतयामेति। हिरण्यपाणिः सवितेतिवर्ग
स्यप्रथमवरममन्त्रपोरपिपस्मानशब्देन्नोदाहर्तव्यः ननु इति। न्हेधइतिधत्वम्। उदाहरणमाहेमा। अकर्मकत्वप्रयोजकस्यकस्यचिदर्थस्येतिभावः। शुषशोषणे। शोष्टा। शोक्ष्यतीत्यादि। श्लि
षआलिङ्गने। अनिट्कोप्ययम्। ननुदाहार्थकभौवादिकवत्स इति दर्शयति। श्लेष्टेति। शलइगुपधादितिसूत्रानन्तरंश्लिषआलिङ्गनइतिसूत्रितंतच्चैकयोगत्वेनैवप्राचाव्याख्यातम्। तथाचस
तीदंसूत्रमङोबाधनार्थंस्यात्। अङस्त्वर्थान्तरेसावकाशः। एवञ्चकर्तरि परस्मैपदेसिद्धमिष्टम्। कर्मणितुतशब्देसमाश्लेषिकन्यादेवदत्तेनेतिविषिध्यते। सोपिपरत्वात्क्सः। तथाचसमाश्लि
क्षाताङ्न्येद्इत्यादौक्सः। किंतुकर्मण्यातंप्रभृतिषुनालिङ्गनेशलइगुपधेतिक्सः प्राप्नोति। इष्यतेचासिच्। समाश्लिक्षतजतूनिकाष्ठैरिति। तमिमन्दोषमुद्धर्तुंयोगविभागेनव्याचष्टे। श्लि
षइति। अनिटः किम्। श्लिषुदाहेइतिसेटोमाभूत्। सामर्थ्यादिति। यदिहिश्लिषइतिप्राप्तस्यनियमेनतर्हिकस्याक्यतमाविधिरेवास्तु। फलस्यतुल्यत्वादितिभावः। शलइगुपधादित्यस्येति
तेनात्मनेपदेनालिङ्गनेचिण्विषयादन्यत्रक्सिजेवनतुक्सइतिभावः। प्रत्यासत्तादिति। आलिङ्गनंह्युपगूहनपरिष्वङ्गापरपर्यायंप्राणिकर्तृकमेवेतिभावः। योगविभागफलंदर्शयति। क
र्मणीत्यादिना। अश्लिक्षाताम्। इत्यादौक्ससिचोर्विशेषाभावात्। अश्लिक्षत। अश्लिषदित्युदाहृतम्॥ ७ ति। अनिणः परस्यसस्येत्यर्थः। तुदादाविति। चुरादौलत्रहस्लोपधइति वक्ष्यति। अर्थस्येतीति।
अर्थस्यात्त्वेतीत्यर्थः। अङोबाधनार्थमिति। तदर्थमपूर्वविधिरेवस्यान्ननियमइत्यर्थः। क्सइति। सिद्धायद्यपीविशेषः। किंत्विति। तथापीत्यर्थः। कर्मणीति। कर्मव्यतिहारे कर्तरि चेत्यपिबोद्धव्यम्। इष्यतेचसि

लिङिअस्य पाम्यसि श्लिष्टोवेसनान्नेटाट्टेपिङ्कैपाद्ये
लोपस्याप्रसक्तेः। सिचइति। भाषेरीविशेषः॥

व्याख्यानमेवेति।कुटादिसाहचर्यात् श्रूयमाणविकरणस्यैव ग्रहणमिति व्याख्यानमिति भावः।नेदं प्रवर्त्तनइति।अत एव लिट्यभ्यासस्येति सूत्रे ऽस्य वार्त्तिकस्य प्रथमो पास्यैतन्निङन्तविहायकं इन्ते उदाहृतं भा
ष्ये।वार्त्तिकं प्रवर्त्ततामिति।व्यचेः कुटादित्वं वक्तव्यं किं प्रयोजनमजिणितिसंप्रसारणार्थमिति भाष्यसन्दर्भविरोधस्तदनुवादेन प्रवृत्ताविति बोध्यम्।किं च लङ्गृत्वात् विधेयस्य कुटादित्वस्य वचनशतेनापि नि षे
विजइट्।इह च ङिर्यस्येति सूत्रान्मण्डूकप्लुत्यापस्यादिरित्यनुवर्तते।तेनेडादिः प्रत्ययो लभ्यते।ननूक्तमेकवचनमेवतथाहि सतीति विजिषीषे त्यत्रैव स्यात्।ओविजी भयचलनयोरित्ययमेव गृह्यते।
नतुष्टम्भार्थ इरितन्।तस्यानिङ्त्वादितिहरदत्तादयः।नच क्रादिनियमात् लिटि इट्संभवस्येवेति वाच्यम्।तत्र किलेन गतार्थत्वादिति भावः।वस्तुतस्तु नेदं युक्तम्।विवेजिथेत्यिषलीट् संभवात्।तत्र
च पित्त्वेन कित्वाभावात्।न च पूर्वसूत्रे कुटादीनां प्रक्रान्तत्वात् कपञ्चिन्नसाहचर्यात्तुदादेरेव ग्रहणं न जुहोत्यादेरिति वाच्यम्।रुधादावपि पठितत्वादुद्विजितेत्युदाहरद्भिर्माधवादिभिः सह विरोधापत्तेः।
तस्मादिह तुदादिरुधादौ ग्रहणे जुहोत्यादेश्चाग्रहे व्याख्यानमेव शरणम्।अत्र प्राचा ऽस्मिन्नोहूर्ज इति व्याख्यातम्।तन्निष्फलत्वान्निर्मूलत्वाच्चोपेक्षितम्।नह्यस्याभावस्यं संभवति।न वा वृत्तिकारैरञ्जि
दित्यनुवर्त्तितम्।अयं च व्याजो पर्युदासेनेति।प्रसज्यप्रतिषेधे हि वाक्यभेदः।समर्थसमासश्च प्रसज्येतेति भावः।तस्मादुक्तसिद्धीप्सुरसन्नता सिप्रभृतिषु नेदं प्रवर्त्तते।एतच्च हरदत्तमाधवादिग्रन्थेषु स्पष्टम्।
यत्तु प्राचा ऽविधीदित्यादिसिजादीनां ङित्वं स्वीकृत्योदाहृतं तत्तदाकरविरोधादुपेक्ष्यम्।यत्तु वदन्ति।कान्तव्येव्यचेः कुटादिषु पठितत्वात्कि इम्।कुटादित्वमनूद्यासिनिषेधमात्रमनेन क्रियते।लाघ
वात्।एवं चविधेयभेदाभावेक वाक्यभेदः।तस्मान्माधवादिग्रन्थ एवासङ्गत इति।अत्रेदं वक्तव्यम्।कान्तव्येकुटादिषु पाठेपि पाणिनीयेतदभावः स्पष्ट एव।तथा च कथन्तदनुवादेन वार्त्तिकं प्रव
र्त्तताम्।एवं चाप्राप्तं कुटादित्वं विधीयत इति हरदत्तोक्तिस्तदनुवादिनी माधवोक्तिश्च निर्बाधैव।असमर्थसमासस्तु दुरुद्धर इत्युक्तमेव।तस्माद्व्याकरमेव गृहीतुमुचितम्।न त्वर्वाचीनेषु पक्षपातो
युक्त इति दिक्।उच्छि उञ्छे।उच्छी विवासे इमौ भ्वादिगणे पठितौ।इह पाठस्तु उच्छृतीउच्छन्तीत्यत्राच्छीन द्यौरितिनुम्विकल्पार्थः।पूर्वपाठस्तु स्वरार्थः।तथाहि उच्छतिउच्छतीत्यादौ घिद्वचनेश
विबादीनामपित्वादनुदात्तत्वे धातुस्वरेणाद्युदात्तं पदं शेषेतु प्रत्ययस्वरेण मध्योदात्तमिति ॥ ॐ दुमशब्दतथा ऽनसीत्यं शबेपर्यन्तस्युक्त ङित्वनिषेधेनुमचेर्ङित्वमनसीत्येव वदेदित्यपि बोध्यम्।पि
द्वचने इति।नमादेरण्यपलक्षणम्।अदुपदेशात्परत्वेन तेषामप्यनुदात्तत्वेन तत्रापि स्वरेविशेषादित्याहुः।मध्योदात्तमिति।अन्यत्र विकरणेभ्य इति निषेधस्तु सार्वधातुकस्वरापेक्षया विकरणस्वरस्य व

लीयस्त्वंनेत्येवंपरत्वन्निवर्त्तिज्ञापकेभाष्येस्पष्टमितिभावः॥

मानत्वादिति। नचवार्णपरिभाषयागुणेनुकोः प्राप्तिरितिवाच्यम्। स्त्रोरितिम्मतुक्रिदेशेनतुग्विपयेवार्णादाङ्मित्यस्याअनाश्रयणात्। सुप्रसिद्धत्वादिति। बहुशोव्यवहारेणक्रियासामान्यवा चित्वेनचसुप्रसिद्धत्वादित्यर्थः। अनयवलाक्षणिकस्यमानुबन्धकस्यचकुरूपस्यकरोतेरेवग्रहणमितिभावः। प्रत्याख्यानादिति। यस्याकारोच्चारणंविनानसिद्धिस्तत्रतत्सामर्थ्यात्तत्कल्पनसं द्विहल्ग्रहणेस्येति। नचोपलक्षणत्वेमानाभावः। अदुपधस्यचेदस्तोतेरेवेतिनियममाश्रित्यद्विहल्ग्रहणंप्रत्याचक्षाणस्यभाष्यकारस्यैवतत्रमानत्वात्। लोभिता। लोभ्येति। तीपस हेतिवेटाकुरशब्दे। करोतेरेवेति। सुप्रसिद्धत्वात्। यथागोशब्दस्यानेकार्थत्वेप्यर्थप्रकरणादिविशेषंविनास्वर्गवज्रादयोनगृह्यन्तेतथाकुरतीरमितिभावः। मुरसंवेष्टने। इगुपधलक्षणः कः। मुरोदैत्यः। मुरारिर्विष्णुः। घुरापश्चादित्वादच्। घोरः। हूहन्त्योऽक्ष्यादिरिति। उद्धरक्षस्सहस्रनमिन्द्रेतिप्रयोगात्। इषदच्छायाम्। केचिदुदितंपठन्ति। तत्फलन्तुइद्विकल्पेक्तविधौचसानुबन्ध सेवपाठाद्द्विवादिकक्रैयादिकयोस्तन्निवृत्तिरित्याहुः। अनुदित्पाठस्तुभाष्यवार्त्तिकसंमतः। निक्रादौस्फुटीभविष्यति। तिलस्नेहने। तिलति। कप्रत्ययेतिलः। तेलतीतिगतोघापि। चिलुवस ने। पचादित्वादच्। चेलम्। चेलतीतिशापि। बिलसंवरणे। इत्योष्ठ्यादिरिति। आविलमितिदर्शनात्। घिलषिलउञ्छे। आद्यस्तालव्यादिः। द्वितीयोमूर्द्धन्यादिः। मिलश्लेषणे। अयंस्वरितेत्त्व पिपठिष्यते। इहपाठस्तुकर्त्तृगेपिफलेपरस्मैपदार्थः। लिखअक्षरविन्यासे। लेखिता। लेखिष्यतीत्यादि। कथंतर्हिलिखितुंस्वयमेवलिखिष्यतेइतिप्रमादएवायम्। सञ्ज्ञापूर्वकत्वेनानित्यत्वा यावासमाधेयम्। यत्तुकेचित्। गाङ्कुटादिभ्यइत्यत्रकुटस्यादिःकुटादिः। कुटआदिर्येषामितितत्पुरुषबहुव्रीह्योरेकशेषमाश्रित्यतस्मादधुस्तत्वालेखितेत्यादौगुणनिषेधापत्तेः। नचेष्टापत्तिः। वृत्ति कारहरदत्तादिविरोधात्। अपाचतुष्याच्छकुनिष्वालेखनेइतिसौत्रप्रयोगविरोधाच्चेत्याहुस्तन्नावत्। कथंलिखापयति। अत्राक्षेपः। लेखनंलिखः। घञर्थेकः। तमाचष्टइतिणिच्। आपुकोदीर्घोच्चारण परिपूतेत्यादिभागवतम्। अत्रआर्षोदीर्घइतिश्रीधरोक्तिस्तुएतद्ग्रन्थदर्शनप्रयुक्तत्वादुपेक्ष्येतिभावः। मृड्। ङित्त्वंस्वरार्थम्। तथाहि। माहिमृतेत्यत्रलसार्वधातुकानुदात्तत्वेकृतेधातुरुदात्तः। सि ज्लोपस्यपूर्वत्रासिद्धत्वात्तुना। ङित्त्वसामर्थ्यादित्यन्यत्रविस्तरः॥ ५७ भवेपत्रनकल्पनेनमानमित्यपिबोध्यम्। ननुमास्तुनियमत्वंविधित्वमेवास्तु। किंङित्त्वेनेत्यतआह। ङित्वमिति। सामर्थ्यादेवेति।

दृत्यादावपीति। किंचनद्विशिष्टस्यानुकरणे धातुनिर्देशाभावेन श्तिपोनापत्तेरित्यपि बोध्यम्। श्नुविशिष्टेपीति। ननु वेः स्कन्नेरितिवत्कर्मेस्कभ्नातेरित्युक्तिरस्तोतेश्चेतिवदन्यविकरणधातुष्वार
सार्थस्यरुचेराह। उदाहृतञ्चेति। एवञ्चव्याख्यानादर्थविकरणनिर्देशोऽदृष्टार्थ एवेतिभावः। तथा च माधवेनेति। अत एव हलः श्न इति सूत्रे श्नाग्रहणञ्चरितार्थम्। अन्यथा स्तन्भु स्तुन्भु स्कन्भु स्कु
न्भु स्कुञ्भ्यः श्नु श्नाश्चेत्यादिभ्यः हलः शानज्भावित्येव कुर्यात्। श्नेत्यस्य स्तम्भ्वादिभ्य इत्यनुवृत्त्या क्र्यादिभ्य इत्यस्य इत्यनुवृत्त्याहल इत्यत्र क्र्यादिभ्य इत्यनुवृत्त्या प्रत्ययान्तरविधानेन सिद्धेः। मम तु तथा न्यासे
स्तन्भ्वादिभ्यः सौत्रेभ्यः शानजनापत्तेर्नैतथान्यासः शक्यक्रियः। स्तन्भ्वादीनामप्यनुवृत्तौ श्नोरपि विषये तदापत्तिरिति दिक्। अत्रोभयत्रापि लक्ष्यनिर्णयो बहुदर्शिभिः कार्य इत्यलम्। अप्रा
एवं श्नुस्येति। आत्मनेपद इति भावः। स्तम्भुस्तुम्भु कारोपधः। विष्टभ्नातीति। स्तन्भेरिति षः। वेः स्कभ्नातेर्नित्यम्। विष्कभ्नातीति। यत्तु प्राचोक्तं स्कभ्नातेरित्युक्तेः स्कभ्नोतेर्नेति तदप्रामा
णिकमितिभावः। तथा हि। स्कभ्नातेरित्यत्र यदि श्नाप्रत्ययविशिष्टं रूपं विवक्षितं तर्हि विष्कभितमित्यादावपि न स्यात्। अथ धातुमात्रं विवक्षितं तर्हि श्नुविशिष्टेपि तस्मिन् वि
तस्मिन्नेव षत्वेन। उदाहृतञ्च तत्रापि षत्वं माधवादिभिरिति दिक्। हलः श्नः। यत्तु प्राचो ग्रन्थं व्याचक्षाणैः सौत्रेभ्यः शानच् नास्तीत्युक्त्वा स्तम्भान इत्युदाहृतं तन्त्वयुक्तम्पि प्राचो ग्र
न्थस्यानुगुणं शाबाहलः श्न इति सूत्रस्थ तावुपन्यासात् अन्यथा प्रथमोपस्थितान् स्तम्भुप्रभृतीनुपेक्ष्य तावद्दूरगमनायोगात्। तथाप्यनाकरत्वात्तदुपेक्ष्यम्। तथा च मा
धवेन स्तभाने त्युदाहृतम्। हलः। अङ्गावयवात् किम्। निरुतन्दुरुतम्। श्नन्थ। वक्तव्याविति। नन्वान्तरोक्तौ इहाप्याश्रयणीयमावित्यर्थः। संयुक्तहलमध्यस्थस्यानुन्योरादेशादि
तावाशौवचनम्। पहोलिटि। एकाचः किम्। यङ्लुकि माभूत्। न चेष्टापत्तिः। आकारप्रश्लेषविरोधादिति स्फुटीकरिष्यते। विहितस्येति किं प्राहितम्। न चात्र णिलोपस्य स्था
निवद्भावः। दीर्घविधौ न निषेधात्। ग्रहीषीष्टेति। न लिङीति दीर्घनिषेधो नेह। वृतदित्यनुवृत्तेः॥ इति क्र्यादयः॥ ॐ प्रोवचनमिति। भाष्यानुक्तत्वादिदमप्रमाणमिति मूले हरदत्तादय
इत्यनेन सूचितम्। आकरे विहरदत्तेलर्थः। भाष्ये तु नैन दृश्यते। स्थानिवद्भावदिति। पञ्चमीसमासेन तत्प्राप्तिः। एवञ्च ग्रहेः परत्वाभावेन विहितविशेषणाभावेपि न क्षतिरिति भावः। दीर्घविधाविति।
विण्मुलोः कमेश्चिङीतिसूत्रस्य भाष्यप्रामाण्यात् त्रैपादिकदीर्घस्यापि न पदान्तसूत्रे ग्रहणम्। वरेयलोपस्वरवर्जमित्यत्र दीर्घोप्युपलक्ष्यत इति मते इदम्॥ इति क्र्यादयः॥

कउपयोगइति। सन्वद्भावविषयेहि दीर्घोनतु तेनेतिभावः। विकल्पविषयइति। सञ्ज्ञापूर्वकाइत्यर्थः। स्थितमिति। एवंप्रयोगं दृष्ट्वा साधुत्वनिर्णयः कार्यइतिभावः। पाठादिति। ऊहृइत्येरितिलङ्घ
बोधनायाऽनुवादरूपमिति। ऋकारान्तत्वस्येट्कत्वे निमित्तत्वाभावइतिभावः। निष्पन्नत्वमिति। नचऋच्छत्यृतामितिगुणप्रवृत्तयेऋतश्चेति ऋगादयप्रवृत्तयेक्रियमाणं दीर्घोच्चारणमनर्थं
अचूचुरदिति। प्रमादकृतास न्वल्लघुनीति सन्वद्भावइत्युक्तम्। तस्यप्रकृतेकउपयोगइतिसएवप्रष्टव्यः। सामान्यापेक्षमिति। नन्वेवमाधृषाद्वेतिव्यर्थमिति चेन्नैवम्। ज्ञापकसिद्धस्यासा
र्वत्रिकत्वात्। अन्यथासञ्ज्ञापूर्वकस्य विधेरनित्यत्वादिकल्पविधयः प्रायेणव्यर्थाः स्युरिति सर्वोपप्लवः स्यात्। एवञ्चास्मिन्पक्षे आधृषीयाणामेवपाक्षिको विकल्पः। अन्येषान्तु शिष्टप्रयोगाद्व्य
वस्थितइत्यर्थः। वृत्तिकृतेति। तत्रैवन्यासकृता निष्पन्नात्स्फुराद्यति सामान्याकारेणाभिधानाद्वेतिबोद्धव्यम्। नन्वैयर्थ्यमिति। यद्यपि प्रथमपक्षेपि सार्थक्यमुपपादितं तथाप्यस्मिन्पक्षे
वैयर्थ्यशङ्कापिनेत्यर्थः। तद्विन्त्यमित्यादि। अयंभावः। यन्त्रितन्त्रिमन्त्रिकुद्रयोहि संयोगान्ताः। तेषांनकारविशिष्टपाठेप्यनिदितामितिलोपोनलभ्यते। नकारस्यानुपधात्वात्। तकयन्तेषा
मिदित्वंणिजभावंज्ञापयेत्। चिन्त्यादित्वादेणिजभावपक्षेनलोपव्यावृत्त्या सार्थकतां लभमानइकारोणिजभावञ्ज्ञापयतीत्युचितम्। नचेहतथेतिस्फुटंवैषम्यम्। अतएवकविकल्पद्रु
मे। यन्त्रितन्त्रिमन्त्रिकुद्रियोनित्यणिजन्ताएवोक्ताइति। ओकारइदित्येकइति। लण्डयति। लण्डति। अस्मिन्पक्षेनिष्ठायांरूपेविवदन्ते। लड्नः। अनुबन्धबलान्नेडित्येके। लण्डिनः। अनु
बन्धबलादिड्भावधानेपिनत्वमित्यन्ये। ओदित्वमस्मिन्नवेतिपक्षद्वयमपिमाधवबोपदेवादिग्रन्थेस्थितम्। ओदित्वपक्षेपिनिष्ठायामिडस्ति नवेतिमतद्वयम्। काव्यकामधेनौ
स्थितम्। वृपूरणे। तद्वेति। एतच्चश्रीभद्रादीनांमतं माधवेनोपन्यस्तम्। नत्विदङ्गोदस्समम्। धातुपाठकृतापाणिनिनाविशिष्येवोदात्तानुदात्तानांपाठात्। नहिर्क्षकारान्ताः सेड्काइतितेन
परिभाषितम् येनेत्थंतस्याशयः कल्प्येत। अतएवकविकल्पद्रुमेपारयतेर्निष्पन्नत्वमुक्तम्। उर्ऋत्। इत्यरामिति। दीर्घोपधेउपधायाश्चेतिइत्प्राप्तः। मृजेर्वृद्धिः। इतरेषामृवर्णोप
धानामरइतिविवेकः। नन्विहउरित्यनुवाद्यसमर्पकेणसावर्ण्यात् ऌवर्णोपिगृह्यते। ऋदित्यनेनतुभाव्यमानत्वान्नग्राह्यः तथाचअचीकृपदितिप्रसज्येतेति चेत्मैवम् ॥
ज्ञापकमितिवाच्यम्। ऋकारान्तत्वप्रयुक्तकार्यविशिष्टरूपाणाञ्जोहोत्यादिकमादायसिद्धेर्ज्ञापितेपिचारितार्थ्यासंभवेन ज्ञापकासंभवादितिभावः ॥

प्रवृत्तेरिति। ततः प्रवृत्ते ऋकारे लत्वप्रवृत्त्येष्टसिद्धिरिति भावः। लृकारोपधएवेति। कृपणः कृपेत्यादौ ऋकारश्रवणन्तु लत्वाभावबद्दलृकेन सिद्धमिति भावः। स्यादेवोक्तदोष इति। न च तपर
सूत्रे प्रत्यय इत्यस्यासंबध्येन भाव्यमानेन ऋकारेणापि लृकारग्रहणसत्वादन्तरतमपरिभाषया लृकारस्य लृकारेणेष्टसिद्धिः न परत्वं हि लृकारस्य दीर्घऋकारस्य च स्थानित्वे सार्थकमिति ग्राहकस्
त्रिपरेणाण्ग्रहणे स्यत परत्वस्य ज्ञापकतापि भाष्योक्तायुक्तेति वाच्यम्। उरृदित्यनेनानन्तरस्येति न्यायेनाचीकृतदित्यादावित्वबाधनापत्तेः। ऋदुपधत्वेतूरृदित्यत्र लृकारग्रहणे फलाभावेन दीर्घस्य
र स्यर्थतैव तपरत्वस्य वक्तव्ये ति तत्सामर्थ्याद्वा द्यसामान्यचिन्तामाश्रित्यास्य सर्वबाधकत्वस्वीकार इत्यदोषो मन्दादिभ्योऽनुकरणेभ्यो णिचतुनाऽनभिधानात्। ध्वनितञ्चेदमम्मुं ऋकारोपधं ब्रुवता पाणिनि
लत्वस्यासिद्धत्वेन पूर्वमेव अरं वा धित्वा उरृदित्यस्य प्रवृत्तेः। यदि परं कृपूसामर्थ्यादिति लृकारोपधएव पठ्येत। तदा स्यादेवोक्तदोषः। एतेन चलीकॢपत इत्यादौ रीगागमादूर्ल्लत्वापेक्षु पोरो
लइति सूत्रमस्तु नाम। धातुस्तु लृकारोपधएव पठ्यताम्। एवं हि प्रक्रियालाघवं लभ्यते। ऋकारैकदेशस्य लृकारैकदेश इति व्याख्यानक्लेशोपि न भवतीत्युत्प्रेक्षापि परास्ता। अचीकॢपदित्यत्र उ
क्तदोषस्य ध्रौव्यात्। एतच्च सर्वं कैयटे स्पष्टम्। स्मापयत इति। आत्वन्तु नेह भवति नित्यं स्मयतेरिति निर्देशात्। हेतुमण्णावेव तद्विधानात्। शुल्वमाने। पवर्गतृतीयान्तोयमिति बोपदेवः। तथा च प्रयु
ज्यते शुल्वसूत्रमिति। चुट च्छेदने। चोटयति। चुटतीति शेगतम्। व्रज मार्गे। वाजयति। मार्गयति। व्रजेत्येके। व्राजयति। केचित्तु मार्गेति न धात्वन्तरं किन्तु मार्गसंस्कारो धात्वर्थ इत्याहुः। मृग
अन्वेषण इति कथादौ। मार्ग अन्वेषण इति युजादौ। सज्जिक्तकु जीवने। सज्जयति। सज्जति। त्रपमिच्च। अपञ्ज्ञान इति। प्रतिपत्ति चेतनाः। प्रत्यक्षशास्यामित्यादौ तथा दर्शनात्।
तापनेचेति। ग्लापन्तु इत्सूत्रे च्चीप्समानो बोधयितुमिष्यमाण इति व्याख्यानात्। यम च परिवेषणे। परिवेषणमिहेति। चन्द्रस्य परिवेष इत्यादौ तथा प्रसिद्धेः। नत्विति। तत्रघटादित्वादेव
सिद्धेरिति भावः॥ ७ नेतिनात्पर्यात्। स्मयतेरिति निर्देशादिति। शपा निर्देशेन तत्प्रकृतिभूतस्मिधातोरेव ग्रहणमिति भावः। युक्त्यन्तरमाह। हेतुमण्णावेवेति। स्मयतेरिति सूत्रे हेतुभय इत्यनुव
र्तते भय इति धात्वर्थोपलक्षणमेवञ्च प्रत्यासत्त्या हेतुव्यापारवाचकणिच्येव प्रवृत्तिरिति भावः। चन्द्रस्येति। अण्यन्तात्परिविषेर्ल्युटि वेष्टनम्भोजनाच तदर्थः। भोजनाय भुज्यनुकूलः पात्रेऽर्दनीय व.
स्तुप्रक्षेपः। ण्यन्ताल्ल्युटि वेष्टनार्थ इति बोध्यम्। घटादित्वादेवेति। भुज्यर्थयम धातोर्हेतुमण्णौ घटादिपठितेन क्रमुरञ्जोमन्ताश्चेत्यनेन रूपसिद्धिः। यमोपरिवेषण इति निर्मितस्तु भोजनार्थत्वादिति

हेतुमण्णन्तस्येति। वेष्टनरूपार्थकाच्चुरादिण्यन्ताद्यमपनेर्हेतुमण्णौ से। ऽर्थ इत्यर्थः। एवञ्च तत्र यमपनीत्यसङ्गत्यर्थैव सिद्धेश्चुरादिण्यन्ते वेष्टनार्थामित्वविधानस्य वैयर्थ्यापत्तेर्यमोपरिवेषण इति
निषेधस्तु अनन्तरस्येतिन्यायेनामन्तत्वप्रयुक्तस्यैव। इह तु वेष्टनरूपार्थनिमित्तञ्चुरादिपठितवचनेन मित्त्वमिति भावः। युक्त्यन्तरमाह। तत्रैव घटादित्वादेवेति। यमोपरिवेषण इति मित्त्वनिषे
धसूत्रे भोजनावेष्टनापि गृह्यत इति मते घटादिपठितामन्तत्वेनैव सिद्धेरित्यर्थः। तत्रैवेति। चकारः मिद्धेरित्यनन्तरं योज्यः। घटादिपठिते तत्र वचने तु वेष्टनं नैव गृह्यते पूर्वोत्तरसाहचर्येण हेतु
नापीति। हेतुमण्ण्यन्तस्य हिंसोऽर्थस्तत्र घटादित्वादेव सिद्धेरिति भावः। नान्येमितौ हेतौ। ज्ञपादिभ्य इति। मुख्यमते पञ्चभ्यः मतान्तरे तु चपिरहिभ्यां सह सप्तभ्य इत्यर्थः। पूर्णोलोके। पुण्येत्यन्ये इति।
ईदृशे पुंको शाशुद्धिः कीदृशीति विन्त्यम्। उक्तञ्च स्वामिना। पाठे र्थे चाभमभ्रंशान्महतामपि मोहतः। नविद्मः किञ्जिहीमोत्र किमुपादद्महे वयमिति। चूर्णसङ्कोचे। पुनः पाठोऽर्थभेदकृतः। मर्चेचे
ति। अयम्धातुर्मिदचोन्त्यात्परैकेपरे नोपन्यस्तः। प्रयुज्यते च। मर्तो मर्तमर्चयतिदृप्येनेति। तस्मात्केषाञ्चिदिह पाठमात्रेण प्रामाणिकोऽयमिति न मन्तव्यम्। मैत्रेयमतमाह। अर्हन्नदन्तोक इति। ए
क इत्यस्य रसोद्भावनम्। तदीजन्तु अनयोरिदित्वादेव नुम्भवति तुम्बनीतिसिद्धेरर्दनेर्थेभूवादौ पाठोऽनर्थः स्यात्। अदर्शने त्व र्थभेदात्सोपि सार्थक इति। चुटि च्छेदने। चुण्टयति। चुण्टति। इलप्रेरणे।
इलनीतितुदादौ। म्रक्ष म्लेच्छने। म्लेच्छनमपशब्दनम्। म्रक्षणेप्ययम्। तच्च तैलादिना अभ्यञ्जनम्। म्रक्षयति। म्रक्षतीति सङ्घाते। शपि। म्लेच्छ अव्यक्तायां वाचि। इहाव्यक्ता वागपशब्दनम्। म्लेच्छ
तीतिभ्वादौ। गुर्द पूर्वनिकेतने। गूर्दयति। पूर्वनिकेतन इति पठित्वा पूर्वनिवास इति केचिद्व्याचक्षते। पूर्वतीति पूर णे शपि गतम्। जसि रक्षणे। जस्यतीति श्यनि मोक्षणे गतम्। इहैव हिंसायाञ्जासयती
ति भविष्यति। तथा नाडनेपि। जसु हिंसायाम्। अस्य णिजनित्यः। क्त्वायामिड्विकल्पार्थाद्दुदित्करणाल्लिङ्गात्। जासयति। जसित्वा। जस्त्वा। जस्तम्। पिडि। पिण्डयति। पिण्डति। रुष रोषे। शुपि हिंसायाम्। रोष
तिश्यनि रुष्यतीति गतम्। डिप क्षेपे। सङ्घाते तत्रैव कुसीयः। डिप्यति डिपती तिश्यन्शयोर्गतम्। स्तूप। स्तूपयति। अतुष्टपत्। दसे त्यप्येके इति। पितेव पुत्रन्दसयेर्वचोभिरित्यत्र भट्टभास्करेण दसयेसन्दर्शनमि।
सयोवैव वत्प्रवृत्त्याफलाभावादितिवोद्यम्। तदीजस्त्विति। इदित्त्वस्य णिजिकल्पज्ञापकत्वे तु सोपि पाठे प्रयुक्तस्त्वेवन्ये भूवादाविति। वा सदृशे भ्वादावित्यर्थः। यद्वा भ्वादौ वादौ चेत्यर्थः। आत्ववदादिगणस्तस्मा
द्वेधा धातुरादिप्रभृतिभ्यः इत्यत्र वहुष्वीहितत्पुरुषयोरेकशेष इति पक्षस्यापि धातुसञ्ज्ञासूत्रे भाष्ये ध्वनितत्वादिति भावः। अपशब्दनमिति। नस्त्वेच्छितवादि त्यस्यनापभाषितवाद्इतिविवरणस्यश्रुतेर्दर्शनादिति

भवः। मधुलीकं। टरस्पृष्टौमिलादिकसमनवाचित्सयाटे
गतसाटस्थापितसाटकवलिनपदतिकापम् ॥

अयन्दिवादाविति।वा।आशेत्यनेनस्यनःस्वात्तत्फललाभेनदिवादाविस्तुक्तिर्धातुरस्यन्तरानुसारेणवा।आम्नस्यादिति।अनुकुस्मतेति चनस्यात्कुस्मयतइत्यत्रस्वरेविशेषश्चस्यादित्यपिबोद्धम् ॥
दसदासिदर्शनदंशनयोरितिचौरादिकस्यस्वत्ययेनदृद्ध्यभावःधातूनामनेकार्थत्वादभिमतार्थलाभइतिव्याख्यातत्वादितिभावः।स्पश।।स्पाशयते।अपस्पशत।अत्स्मृदृत्वरेत्यादि
नाभ्यासस्याकारः।इत्यपवादः।स्पशति।स्पशतेइतितुस्पशबाधनस्पर्शनयोरितिभ्वादेर्गतम्।तर्जभर्त्स।तर्जयते।भर्त्सयते।कथन्तर्हितर्जयन्निवकेतुभिरितिरघुकाव्यम्।भौवादि
कस्यतर्जतेर्हेतुमिणि।वस्तगन्धं।अर्दनेहिंसा।वस्तेतिदन्त्योष्ठ्यादिः।कूणसङ्कोचे।दीर्घोपधोयंह्रस्वोपधस्तुकथादौभविष्यति।शब्दोपकरणयोःकुणतीतिशेगतम्।भ्रूण।भ्रूणय
तभ्रूणोर्भको गर्भश्च।यस्तपूजायाम्।अचः।यक्षः।गूर।दीर्घोपधोयम्।गूरयते।ह्रस्वोपधस्तुदिवादौतुदादौच।किंच।चुरादौरनीदित्।इतरावीदितौ।शामयतइति।आकुस्मीपत्वा
नङ्।कथन्तर्हिनिशामयतदुत्पत्तिमित्येतदनेनसिद्धमितिवदन्तीतिचेत्।स्वार्थणयन्ताद्धेतुमण्णिचिइतिगृहाण।नचार्थासङ्गतिः।निरन्तेप्रेषणाद्धातोःप्राकृतेर्थेणिजुच्यते इ
तिति।ह्यन्तानल्लक्षयते।लक्षयतीतितुगतम्।कुत्स।ण्यासश्रन्थेतियुच्।कुत्सना।यूनश्चकुत्सायामितिनिर्देशादङ्।कुत्सा।त्रुट।अयन्दिवादौतुदादौच।भलआभण्डने।आभण्ड
ननिरूपणम्।पवर्गतृतीयादिरप्ययमिविदेवः।कुट्टप्रतापने।कुट्टयतेइतिक्षीरस्वामी।मैत्रेयादयस्तुकुटेतिपठित्वाकोटयतेइत्युदाहरन्ति।वञ्चुप्रलम्भने।वञ्चयते।क्त्वाया
मिड्विकल्पार्थादुदित्करणात्णिजनित्यः।वञ्चति।वञ्चिता।ऊदिदयमितिकेचित्तन्मतेवङ्क्त्वापि।वञ्चित्वा।वचित्वा।वक्त्वा।वञ्चिलुञ्च्यृतश्चेतिसेटः क्त्वः कित्त्वविकल्पनात्स
सेलोपः।इड्भावेतुनित्यम्।निष्ठायांवक्तम्।वृषशक्तिबन्धने।केशवस्वाम्यादिमतमाह।प्रजननसामर्थ्यमिति।मैत्रेयमतमाह।शक्तिसंबन्धइति।प्रातिपदिकमिति।स्मयतेःकुश
ब्दपूर्वाद्न्येषामपिदृश्यतइतिसूत्रेऽन्येभ्योपिवक्ष्यमाणत्वात्।उप्रत्ययेकुगतीतिसमासेननिष्पन्नमित्यर्थः।यद्यपिकुस्मयतेइत्यादिस्मिङोलडादिषुसिद्धंतथापिप्रकुस्म
यतइत्यादिनस्यात्।उपसर्गस्यधातुव्यवधानायोगात्।किंच।कुस्मयाञ्चक्रइत्याम्नस्यात्।कणनिमीलने।काणःस्वभावादयमेकनेत्रनिमीलनवचनः।काण्या
दीनामिति।तेचहेतुमण्णौवक्ष्यन्ते।चटस्फुट।चाटयति।स्फोटयति।निषेधाल्लिङ्गादिति ॥

विशब्दनार्थादिति।अन्वयेत्यादिः।भ्वादेस्तुनविशब्देनवृत्तिः घुषिर विशब्दनइतितत्रपाठादितिभावः।क्स्यादिश्चेति।द्रष्टव्यइतिशेषः।वस्तीमहीति।अभियुक्तप्रयोगादितिभावः।इदमेवे कारेपस्कारयोः २
विशब्दनार्थादस्मादनन्तराणिष्ठानास्तीतिकिं प्रतिषेधेनेतिभावः।लसश्लिप्ययोगे।स्वामीतुशिल्पोपयोगइतिपठित्वालषेतिमूर्द्धन्यान्तङ्क्षि विलसठन्तीत्याह।यतनिर्यौस्वामीतुनि
कारस्थानेनिष्कारेतिपठित्वानिराकारः परिभवइतिव्याख्यत्।क्रियानिघण्टौचपतत्नेप्रेषनिराकारेयातयेदृप्युयस्कृतावितिः।निसोयं धान्यधनयोः प्रतिदाने।ऋणंनिर्यातयति
प्रतिददातीत्यर्थः।रकलगाएकयति।लागयतिरकेश ङ्कायाम्।लगेशङ्के इतिघटादौ।अञ्जुविशेषणे।विशेषणंव्यावर्तनम्।वसस्नेहेत्यादि।अयंनिवासेभ्वादिःक्स्यादिश्च।वस्त
इत्याच्छादने।वस्यतीतिस्तम्भने।वासउपसेवायामितिदीर्घोपधः कथादौ।कुपेश्चेति।क्षीरस्वामीतुकृपेस्तादर्थ्यइतिपठित्वातादर्थ्यइतिप्रस्तुतस्यभुवोर्थेमिश्रीकरणेअय
वातश्चब्देनकृपिः परामृश्यतेतस्ययोर्थःसामर्थ्यलक्षणःतस्मिन्निति द्वेधाव्याख्यात्।स्वदिमभिव्ययेति।क्षीरस्वामीतुआङ्पूर्वात्स्वदेःसकर्मकाण्णिजितिव्याख्यत्।एतद्द
हवोनाद्रियन्ते।आकुस्मादिति।पूर्वसूत्रात्धृषादागर्वादिति परत्रचाङोभिविद्धार्थवायाःसर्वसंमतत्वेनतन्मध्यपतित्वेनापितथैवव्याख्यायाउचितत्वात्।पोषयतीति।शप्दृश्यन्
स्यासुपुष्टेगतः।घाटयतीति।अयंसङ्घातेगतः।पुनःपाठोर्थभेदात्।एकदेशिमतेनाह।लडितडनलत्वेति।लण्डयति।लण्डति।ताडयति।नाडयति।स्वादइस्येकेइति।अस्मि
न्मतेपूर्वत्रापिआस्वादस्सकर्मकादितिदीर्घपाठोबोध्यः।दीर्घस्यत्विति।इदमेवदीर्घपाठस्यफलम्।ह्रस्वपाठेप्युपधावृद्ध्याआस्वादयतीत्यादिरूपाणान्तुल्यत्वात्।सन्नन्ते
पिसिस्वादयिषतीतिरूपन्तुल्यमेवसः स्विदिस्वदिसहीनाञ्चेतिसूत्रेणाभ्यासेणःपरस्यसकारोनतुषत्वमितिवक्ष्यमाणत्वात्॥आस्वादीयासमाप्ताः॥अथाधृषीयायु
जादयः।आधृषाद्वा।योग्यताबलाण्णिजितिसंबध्यतेयुजेर्णिजभावेनिष्कृतांस्पष्टयितुमुदाहरति।अयौक्षीदिति।षहमर्षणे।अस्येहपाठोवृत्तिकारादीनामनभिमतइतिदिवा
दौषहशुहचक्यर्थइत्यत्रावाचोमेतिमाधवः।एतच्चप्राचीनसग्रन्थविरुद्धम्।तत्रहिस्वयमेवैतद्विपरीतंप्रतिपादितमितिसहृदयैराकलनीयम् ॥ ७ ति।षत्वाप्रवृत्तिरूपमित्यर्थः
सः स्विदीति।नचस्विदिसाहचर्येणास्यहेतुमण्णावेवप्रवृत्तिः।निरनुबन्धकपरिभाषयास्यापितत्रग्रहादितिभावः।णिशब्देनचणिमात्रग्रहणमितिबोध्यम्।प्राचीनेति।दिवादिस्थेत्यर्थः ॥

म·श· भाष्यकारोक्तेरिति। नामतेरितिरूपासम्भवाच्चेतिबोध्यम्। लुकानिर्देशादिति। ख्यातिसाहचर्येणतयानिर्णयइतिभावः। स्यादेवेति। वचिस्वपीतिसूत्रेतुस्वपिसाहचर्यंलुग्विकरणपरिभाषाभ्यां
२९६ मायामाह्लेभयोर्ग्रहणमितिभावः। मुख्यमतेइति। निष्ठाशीङ्स्वित्रसाहचर्येणादितएवग्रहणमिति। ननूच्चारणार्थइति। उच्चारणार्थानामपीत्संज्ञेतिभाष्यसम्मतेपक्षेनापीत्संज्ञकइतिअस्ये
ईरक्षेपे। ईरयति। ईरति। अदादौईर्त्तेइतिगतौकंपनेचगतः। लेतेति। विभाषालीयतेरित्यात्वंनभवति। लिनातिलीयत्योर्यकानिर्देशइतिभाष्यकारोक्तेः। वरीतेति। वृतोवेतिवा
दीर्घः। वृषीष्ट। वरिषीष्ट। अवृत। अवरिष्ट अवरीष्ट। लिङ्सिचोरात्मनेपदेष्वितिवेट्। लिङि नलिङीतिदीर्घनिषेधः। आवारिष्टाम्। अवारिषुः। सिचिपरस्मैपदेष्वितिदीर्घनिषेधः।
सिच्अनिटृकतांस्पृष्टयति। रेक्तेति। अशिक्षदिति। क्सः यत्तुदेवेनसिचिवृद्धिअशैषीदित्युक्तंतदस्यानिट्त्वादयुक्तमितिप्रामाणिकाः। तर्पितेति। सेट्। अनिट्त्तुश्यनानिर्देशात्।
कृदी। ईदित्वान्निष्ठायांनेट्। कृण्णः। कृण्णवान्। ग्रन्थतीति। ग्रन्थ्वातीतिसन्दर्भेक्र्यादौगतम्। वदसन्देशवचने। ववदतुरितियजादेस्तुऊदतुरितिगतम्। वचतीति। अंतादौवक्तीति
गतम्। अवाक्षीदिति। अस्यतिवक्तीत्यङ्नलुकानिर्देशात्। वचिस्वपीतिसंप्रसारणन्तुकित्सुस्यादेव। उच्यात्। मुषतितिक्षायाम्। अमृषदत्तइतिबोपदेवः। तन्माधवादयोनम
न्यन्ते। धृषप्रहसने। शाकटायनस्त्वनिडित्याह। तन्मतेधृष्टः। मुख्यमतेधृषितः। एतुपशुबन्धनइतितालव्यान्तं मैत्रेयादयःपठन्ति। इत्याधृष्टीयः। अथादन्ताइति। वक्ष्यमाणेषु
धातुषन्तोकारोविवक्षितो। ननूच्चारणार्थोनापीत्संज्ञकः। अनुनासिकत्वाप्रतिज्ञानादित्यर्थः। यत्तुप्रसादकृतोक्तंधातुसूत्रमेतदिति। तन्न। धातुपाठेअनुपलम्भेः वहुनिकारैरस्प
ष्टत्वाच्च। एतेनअदन्तत्वविधानार्थमिदमितिप्रत्युक्तम्। यदिक्वचिदुपलभ्येततथाप्युक्तरीत्याअनुपादस्यैवन्याय्यत्वात्। स्तनगदी। अनेकाच्त्वेनषोपदेशत्वाभावात्षत्वंनास्ति
नषिषतिकलगतौ। कलयति। कलतेइतिशपिगतम्। तनोहेतुमण्णौ। कालयति। साम। सामयति। धात्वन्तरेणगतार्थत्वभ्रमंव्यावर्त्तयितुमुदाहरति। असमामदिति। पल्यूल। ना
सपल्यूलनेनवासः पल्यूलयेयुरितितैत्तिरीयाणांसंहिता। पल्यूलनंशोधनद्रुममितिभाष्यम्। ऊनपरि। असमाप्तौच। डिनशब्दस्यहिलमिष्टन्तत्रदुर्लभम्। ॥ ७॥ व्याख्यानंन। पिलहृ एम:
वहृतिबोध्यम्। सोत्तव्याख्यानफलन्तुउच्चारणार्थानामित्संज्ञत्वबोधनमेव। धात्वन्तरेति। धान्त्वसामप्रयोगेइत्यस्यस्थानेधामसान्त्वप्रयोगेइतिपठतांमतेनेदम्। पल्यूलेति। द्ववपिपवर्गीयौ। शोधने २९६

द्वित्वात्परत्वादिति।अन्तरङ्गत्वादित्यर्थः।उक्तार्थेज्ञापकमिति।उद् ऋजुअञ्जुप्रभृतिभ्यआचारक्विबन्तेभ्यः सनोनभिधानज्ञापकपरभाष्यत्रामाण्यादितिभावः।उडुडावयिषतीति।द् ट्व्यारभ्याद्
र्शोक्तत्वादुदाहृतमत्वाचारक्विबन्ताण्णिजादिस्त्वेदृढनरंमानमस्ति।केचित्तुउलुंपादिवदुडवतिग्काशगमनानुकूलव्यापारार्थकोधातुः पक्षिणउडावयतीत्येवंलोकव्यवहार।दितिव
द्वित्वात्परत्वाद्लोपस्त।नचद्विर्वचनेचीतिसूत्रेणद्वित्वेकर्तव्येअल्लोपस्यस्थानिवद्भावोनिषेधोवेहलभ्यते।णिचोद्वित्वनिमित्तत्वाभावादतआह।ओःपुयणीत्यादि।णिचोद्वित्वनिमि
त्तत्वाभावेपितन्निमित्तकस्याजादेशस्यनिषेधःस्थानिवत्त्वंवालिङ्गंनसाद्भ्रतोलिङ्गत्वओःपुयण्जीति सूत्रमितियथाश्रुतग्राहिणः।तेषामयमाशयः।तेनहिसूत्रेणबिभावयिषति।
लिलावयिषतिजिजावयिषतीत्यादावाभ्यासोवर्णस्येत्वंविधीयतेतत्त्वणिचेवपवर्गयणजानामवर्णपराणाम्तत्रैवसंभवादिति।नत्वेतद्युक्तम्।पिपविषते।पिपविषतीत्यत्रसूत्र
स्यचरितार्थत्वात्।तथाहिपूङोयोसेस्वसनिस्मिपूङ्रञ्ज्वशामितिसनीवन्तेतिवसूत्राभ्यामिटिकृतेद्विर्वचनेचीतिसूत्रप्रवृत्त्यासन्नीहाभ्यासेउकारःतस्मात्संपूर्णसूत्रस्यज्ञापक
त्वोक्तिरसङ्गता।अतआह।वर्गप्रत्याहारेत्यादि।अबीभवत्।अमीमवत्।अरीरवत्।अलीलवत्।अजीजवत्।बिभावयिषतीत्यादिसिद्धिर्हिवर्गादिग्रहणस्यफलंव्यमतेत्स्य
सेउवर्णस्यदुर्लभत्वात्।अकारस्यसन्यतइतीत्वेनरूपसिद्धेश्चदुरुपपादम्।अतोवर्गादिग्रहणंव्यर्थंसदुक्तार्थेज्ञापकमित्यर्थः।ज्ञापनफलन्तुयत्रओःपुयणिस्यस्याप्राप्तिस्त
त्रबोध्यम्।तद्यथा।युयावयिषति।उडुरिवाचरतिउडवति।ततोणौसन्।उडुडावयिषति।चडि।औडुडवत्।तुतावयिषति।अतूतवत्।ऊर्णुनावयिषति।और्णूनवत्।पुस्कुर्द्
ति।अपुस्कुरदित्यादि।तदेतत्सकलमभिप्रेत्यभगवतावात्स्यायनेनोक्तम्।ओःपुयण्जिषुवचनंज्ञापकंणौस्थानिवद्भावस्येति।एतच्चानित्यातुल्यजातीयस्यज्ञापकमितिपवर्गादे
रन्यस्मिन्नपिहल्यवर्णपरएवस्थानिवत्त्वमित्यवचिकीर्षतीत्यादौनातिव्याप्तिरितिसिद्धान्तितम्।अत्रावर्णपरत्वङ्किंपित्त्वप्रवृत्तिवेलायांविवक्षितम्।किंवापरितिष्ठितेस्थपश्चात्।
तुस्तावयिषतीत्यादौतदभावात्।नाद्वित्वः।औननदित्यादौतदभावादित्याशङ्क्याह।प्रक्रियायामित्यादि।कचिद्वर्णपरत्वंविवक्षितम्।नत्वमुकत्रैवेत्याग्रहेबीजमस्तीतिभावः।
दन्ति।सिद्धान्तितमितितथाभावेउर्णोः।ओःपुयण्जिषुवचनज्ञापकंणौस्थानिवद्भावस्यपद्येतत्ज्ञाप्यतेःचिकीर्तद्त्रापिप्राप्नोतितुल्यजातीयस्यज्ञापकम्।कश्चतुल्यजातीयोपस्याजातीयकाः द

वार्त्तिकाशय इति। पिपविषत इत्यादौ पर्यवचनावश्यकतोभयोरपि समा। वार्त्तिकस्य द्विर्वचनेचीत्यस्यानुमानिकस्य च खण्डनतात्पर्यकत्त्वविरुद्धं स्यात् तत्रातो लोपस्य गुणनादिति भावः। ओ
दोतादेशस्येत्यत्र समानाधिकरणबहुव्रीह्याश्रीकारे तुस्तावयिषतीत्यादौ दोषः स्यादत आह। ओदोतोरिति। इदञ्च वचनमुत्तरत्र स्यातदित्युत्तरं पाठ्यन्ते नोदितिना पूर्वमिति बोध्यम्। फलान्तर
द्विर्वचनं यणयवायावादेशाल्लोपोपधालोपणिलोपकिकिनोत्त्वेभ्य इति। तथा च दध्यत्रेत्यादौ सावकाशो यण् चयनञ्चायको। लवनम्। लावक इत्यादौ चायवायावः। गौ इः
कम्बलः इत्यादावल्लोपः। जघ्नतुरित्यादावुपधालोपः। कारणाहारणेत्यादौ णिलोपः। निपूर्त्त इत्यादावुत्त्वञ्चेत्येतानि नव। बिभिदतुरित्यादौ सावकेशे नह्यत्त्वेन पूर्वविप्र
तिषेधाद्बाध्यन्ते तेन चकतुः चिक्रायलुलावः। विवपिथ। लुलविथ। पपतुः। तस्थतुः। जग्मतुः। जघ्नतुः। आटिटत्। ततुरिर्जगुरित्यादि सिद्धम्। एवञ्च द्विर्वचनेचीति सूत्रं नार
म्भणीयमिति वार्त्तिकाशयः। भाष्यकारस्त्वाह। चक्रतुरित्यादि सिध्यतु। तुस्तावयिषतीत्यादौ त्वन्तरङ्गत्वाद्वृद्ध्यादौ कृते अभ्यासेत्त्वं येतानह्यन्तरङ्गेण
सह विप्रतिषेधः। अतुल्यबलत्वात्। तथा च वचनं कर्त्तव्यम्। ओदोदादेशस्य तु टुतु श्रादेरभ्यासस्यात उद्भवनीति। ओदोतोरादेशो यस्मिंस्तङ्गेन तस्य योभ्यासः च्युटुतुश्र
आदिस्तदकारस्योत्त्वादिलक्ष्ये। तुस्तावयिषति। उड्डावयिषति। नुनावयिषति। ऊर्णुनावयिषति। शुश्रावयिषति। पुस्फारयिषतीत्यादि। एवञ्च सूत्रमतमेव प्रबलमि
ति। एवं च तो भाष्यकारस्य ओ जावकदित्यादावभ्यासेकारो यदि सम्मतः स्यात् तर्हि तदर्थं यत्नान्तरमास्थेयमिति वार्त्तिककारं प्रति गौरवान्तरङ्गं पन्नापाद्येत्। तस्मा
दल्लोपस्य स्थानिवत्त्वं भाष्यकाराणामनभिमतमिति निर्णीयते। वामनादयस्तु महाभाष्यविसंवादादुपेक्ष्या इति। एतच्च सर्वं बोपदेवग्रन्थपर्यालोचनया पर्यवस्यती
ति सत्यमेव किन्तु बोपदेवस्यैवेह महान् प्रमादः न तु वामनादीनाम्। तथा हि। यत्तावदुक्तं अवर्णपर एवह लि स्थानिवत्त्वं वदता उवर्णादेशस्यैव तदभिप्रेतमिति। तन्न।
आज्ञक दित्यादावपि द्विरुक्तौ प्रक्रियादशायामभ्यासोत्तरखण्डे वर्णस्य सुलभत्वात्। ननु नासौ प्रयोगे समवैतीति चेत् किन्ततः। नहि प्रयोगसमवायित्वम् ॥
म्। वचनान्तरकरणरूपम्। भाष्यकाराणामिति। ज्ञापकस्य सजातीयापेक्षत्वात् सूत्रकारस्याप्यसंमतमिति बोध्यम् ॥

विशेषणंभाष्येदत्तमिति।अपूर्वतद्दानेतुगौरवमितिभावः।ओः पुयण्जिष्वित्यत्रओरित्युक्तिस्तुसूत्रैकदेशग्रहणान्नाधिकेतिन्ततद्वलेनकुकल्पनाभिनिवेशः कार्यइतिबोध्यम्।विशेषणादानेच
परिनिष्ठितरूपार्थशास्त्रारम्भेणतत्वस्यावर्णपरत्वमिवप्रक्रियादशायांशास्त्रप्रवृत्त्यातत्रत्यस्यापिग्रहीतुमौचित्येनवार्तिकेपुस्फारयिषतीतिसिद्धयेचुटुतुशरादित्वस्यैवावर्णपरत्वस्याप्यःनिय
तस्यैवग्रहीतुमौचित्येनचविनिगमनाविरहेणसर्वत्रप्रवृत्तिरित्याह।एवञ्चेति।बहवइति।निन्यतुरित्यस्यसिद्धयेइयङ्पाठःकर्तव्योजग्लावित्यादिसिद्धयेवृद्धिपाठःकर्तव्यइत्येवंरूपाइत्यर्थः
अन्यानप्याह।नचयेति।आह्लोपादीनामिति।यणोपिनित्यताबोध्या।आरम्भणीयत्वादिति।इष्टानिष्टविवेकस्यलक्षणैकचक्षुष्कैर्वचनमन्तरेणाज्ञातुमशक्यत्वादितिभावः।सुतरामिति।नित्यबाधाये
विशेषणंभाष्येदत्तम्।एवञ्चतुनावयिषतीत्यादौद्वित्वप्रवृत्तिवेलायामवर्णाभावेपिपश्चाद्भाविनत्तमाश्रित्ययथास्थानिवत्त्वादिकंप्रवर्त्ततेतथेहपश्चात्तद्विरहेपिप्रक्रियादशायान्तत्वा
दितिनकोपिदोषः।एतच्चसुधातुवृत्तौकीर्तयतेर्धातुवृत्तौचमाधवग्रन्थेस्पष्टम्।यदप्युक्तंवार्तिकदूषणपरभाष्यस्वरसोऽत्रमानमिति।तदपिन।भाष्येहिदूषणदिङ्मात्रमुक्तम्।ननुदूष
णान्तरंनास्तीति।तथाहि।बहवस्तत्रदोषाःनचयथाविप्रतिषेधएवतावदयुक्तः।आह्लोपादीनांनित्यत्वात्।द्वित्वस्यानित्यत्वेनातुल्यबलत्वात्।किंचपूर्वविप्रतिषेधेसर्वत्रवचनस्यारम्भ
णीयत्वाद्द्वित्वसुतरान्तयेतिकुलाघवम्।अपिचक्रियमाणंवचनंनित्यानिवाऽन्तरङ्गानपिबाधेत।ततश्चनिनवनीयिषतिदिद्वनीयिषतीत्यादावप्यभ्यासेउकारःश्रूयेत।यदितुओदौदा
देशस्येत्यादिवचनङ्गत्वात्तदेवान्तरङ्गाणामबाधेत्तापकंब्रूषेतर्हिनदेववचनंनिनवनीयिषतीत्यादावपिप्रवर्त्ततेतितद्दोषतादवस्थ्यम्।तद्वारणाययत्नान्तरमास्थेयम्।एवंस्थि
तेऔजढदित्यादावभ्यासेअकारादेशोविधेयःस्यादित्यपिवार्तिकमतेदूषणान्तरमस्तु।तस्मादित्थंवार्तिकंस्वयमूहनीयम् ॥ ओःत्यर्थः।एकावःप्रथमस्येत्यादिसापेक्षद्वित्वापेक्षयायणादी
नामन्तरङ्गत्वात्तद्बाधायेत्यपिबोध्यम्।यत्नान्तरमिति।अभ्यासविशेषणंसनीतिपूरणीयम्।तेननिर्दिष्टपरिभाषयाऽनेकव्यवधानेनदोषइतिभावः।किंचजोःसौत्रात्णिविसनिलुङिचजिजावयिषति
अजीजवदित्यत्रौदौदादेशस्येत्यनेनाभ्यासेत्त्वापत्तिस्तदर्थमोःपुयणित्यत्रजग्रहणंकार्यम्।नचतत्रवचनेचकारएवपठनीयोनतुशब्दइतिवाच्यम्।गुङ्घुङ्भ्यांणिविचङिसनिचाऽजूगवदि
त्यादौदोषापत्तेः।किञ्चाऽभ्यासविशेषणेसनीतिकृतेपितुतावयिषतीत्यादौवारितार्थ्येनतुष्टवयिषतीत्यादावनापत्तिः।षकारेणापिकेनव्यवधानादितिबोध्यम्।एवंस्थितइति।दोषपरभाष्यस्यउपल

णिचइति। उपलक्षणं णिङोपि तेनाऽऽतस्थदिति सिद्ध्यति। श्रोत्रियाः। यथाश्रुतग्राहिणः। अजन्तस्येति। जकारान्तस्यासज्ञकपण्(?)वर्गपरभिन्नस्येत्यर्थः। तत्रासन्यतइत्यनेनैव सिद्धेरितिभा
ओदौदादेशस्यत्रुटुतुशराद्रेरभ्यासस्योत्वमिति ततः अल्लोपवनोणिचेति। अल्लोपवनो इत्यभ्यासस्य णिचेऽत्त्यात्। औजढत्। आञ्जकत्। एवं स्थिते वामनन्यासकारादिग्रन्थाः वै
याघ्रपद्यवार्तिकं च भाष्याविरोधेन समर्थितं भवति। सरस्वतीकण्ठाभरणग्रन्थोप्यत्रैवानुकूलः। यदपि बोपदेवेनोक्तं वैयाघ्रपद्यवार्तिके औजिढदित्येव पाठः सांप्रदायिकः
। श्रोत्रियास्तु प्रमादाज्जिस्थानेऽपठन्तीति तदप्येतेन प्रत्युक्तम्। उक्तरीत्या सर्वसौष्ठवे श्रोत्रियाणां प्रमादइत्यस्यैव प्रामादिकत्वात्। यदपि बोपदेवेन स्वश्लोके थे उपष्टम्भक
तयोपन्यस्तम्। दुर्गगुप्तेन दुर्गटीकायां त्रिलोचनदासेन कातन्त्रपञ्जिकायां वर्द्धमानमिश्रेण कातन्त्रविस्तरे हेमसूरिणा हैमव्याकरणे। एतच्च ज्ञापकमजान्तस्यापवर्ग
परस्यावर्ण एव वेदितव्यमिति प्रदर्शितमिति। अभिनवशाकटायनेन शब्दानुशासने णिच्निमित्तावपि प्राप्। तच्चावर्णपर इति प्रदर्शितमिति। तदेतत्सर्वं वामनादीनां
प्रतिकूलम्। प्रक्रियादशायामवर्णपरमस्तीत्युक्तत्वात्। तस्मात् औजकदित्येव न्याय्यमिति स्थितम्। यत्तु भट्टैर्ऊनधातोर्माधवीयधातुवृत्तौ नोनयति ध्वनयती
ति सूत्रे काशिकापदमञ्जर्योश्च औनिनदित्यभ्यासे इकारसहितं ईर्ष्यत्यर्थे। तत्सर्वं लिपिप्रमादप्रयुक्तमेव। स्थलान्तरस्थप्रागुक्तमाधववामनग्रन्थविरुद्ध
त्वात्। तदेतत्सकलमभिप्रेत्याह। प्रकृतेत्विति। औननदिति। नोनयतिध्वनयत्येलयत्यर्दयतिभ्य इति चङ्निषेधस्तु नेह कृतः। तत्र गुपेश्छन्दसीति पूर्वसूत्राच्छ
न्दसीत्यनुवृत्तेः। तस्योदाहरणन्तु मा त्वायतो जरितुः काममूनयीः मा त्वाग्निर्ध्वनयीद् धूमगन्धिरित्यादि। अन्नसि चिवृद्धिर्न। ह्म्यन्तेति सूत्रेण्यन्ते तन्निषेधात्। यत्तु
प्राचा दूनयमपि लोकइत्युपनिबद्धम्। यच्च व्याचख्युः छन्दसीति नानुवर्त्तते विभाषा धेट्श्व्योरिति विभाषाग्रहणञ्चानुवर्त्तत इति तन्न। सूत्रेन ञ्जौ वेयर्थ्यापत्तेः स्व
स्यादिसर्वग्रन्थविरोधाच्च। अतएव छन्दसीति नानुवर्त्तत इति केषाञ्चिदुत्प्रेक्षापि प्रत्युक्ता॥ तथा च भट्टिः। येनार्दिदद्दैत्यपुरम्पिनाकी तिप्रागुङ्। अतिस्तेनदिति। अनेकाच्त्वेनाषो
पदेशत्वात्षत्वं न। मृग। मार्गयति मार्गती। तिमार्गरापणीयस्य ॥ ७ वः। दूनम्। चङ्। तन्निषेधरूपम्। अतएवेति। इत्यादिविरोधादेवेत्यर्थः। एतेन नोनयतीति सूत्रे ऊनयत्यादीनां परस्पर

अकारफलस्येति। गर्ववान् बभूवेत्यर्थे गर्वाञ्चकारेत्याम् रूपस्येत्यर्थः। आकारइति। पक्षपरिग्रहइत्यस्य स्थाने पक्षापरिग्रह इति पठितं मतद्वयम्। इकारश्चिन्त्यादेः ईकारोक्षीद्
त्यस्य उकारोऽवश्चुड्यस्य। तस्यैव पाठान्तरे ऊकार इति बोध्यम्। ननु वाक्यशेषं समर्थयिष्यामहे संप्रश्नप्रार्थनेषित्यादिप्रयोगाल्लोपाभावस्यैव कल्पनानुचितेत्यत आह। वस्तुतः सोऽपिने
अदन्तत्वसामर्थ्यादिति। अयं भावः कथमतिगणयतीत्यादावुपधावृद्धिनिवारणेनाचकथदित्यादावग्लोपित्वाद्दीर्घसन्वद्भावविरहेण सारभामप्रभृतीनामुपधाह्रस्वव्यावर्त्त
नेन ग्रहमृगप्रभृतीनामुपधागुणव्यावर्त्तनेन चादन्तत्वं सार्थकम्। गर्वादीनान्तु अदन्तत्वे प्रागुक्तफलासंभवात् णिज्विकल्पोऽनुमीयते। युक्तञ्चैतत्। चिन्त्यते त्रादित्वं सामा
न्यापेक्षज्ञापकमिति मते इहापि अकारफलस्य स्पष्टत्वात् विशेषापेक्षज्ञापकमिति मतेऽपि तत्र तत्र आकार इकार ईकारः उकार ऊकारश्चेत्यनुबन्धाः यच्छज्ञापकतयास्वीकृ
ताः। यथा चक्षअविशब्दन इति निषेधः। तथा अदन्ततायास्तु एवं सति मतद्वयेऽप्येकरूपफललाभात्। यत्तु वोपदेवेनोक्तं अग्लोपित्वं स्थानिवत्त्वं स्थानिवत्त्वञ्चादन्तत्वप्रयोजनम्।
यन्नस्येतेन षिद्वेतेमत्राल्लोपविकल्पनमिति। अत्रेदं वक्तव्यम्। विकल्पस्तावदनेकदोषदुष्टो निर्मूलश्च लोपाभावस्यैव सुवचत्वात्। वस्तुतस्तु सोऽपि न। अन्यत्र क्लृप्तेन णिज्विकल्पे
नैव कृतार्थत्वे पूर्वस्य लोपबाधस्य कल्पनाया अन्याय्यत्वात्। यत्तु अदन्तत्वसार्थकत्वाय वाल्लोप इति प्राचो ग्रन्थव्याख्यायां गोरुक्तं वाचनिक एवात्र विकल्प इति तद्व्याहतम्। निर्मूल
त्वाद्विवाचनिकः तर्हि अदन्तत्वसार्थक्यायेति कथमभिधानात्। किं च कस्येदं वचनमन्त्ययेन वाचनिकतोच्यत इति न किञ्चिदेतत्। एवञ्च गर्वापयत इत्याद्युदाह
रणमप्यसाध्वेव। अङ्क्षापयतीत्यादि सुतराम्। अङ्क्षयतेरकारस्य प्रागुक्तरीत्या आज्व[illegible]श्रवणेन कृतार्थत्वात्। एवमर्थापयते इत्यपि। यत्तु आर्त्तिथ्यमनेति
प्राचोदाहृतं तत्तु सुतरामशुद्धम्। आर्त्तयपतेरत्राभ्यासेऽकारश्रवणात्। चङ्परेणाथित्वस्याङ्गं लघुं प्रति वा विशेषणनेति पक्षद्वयेऽपि दीर्घो लघोरिति दीर्घस्य दुर्वारत्वाच्च ॥
ति। अल्लोपविकल्पोऽपि नेत्यर्थः। लोपबाधस्येति। याचिकस्येत्यर्थः। अन्यथादादिषु पिनेषामित्वज्ञाबाधस्य स्यादिति भावः। सुतरामशुद्धमिति। पुकोऽभ्यासे ह्रस्वस्य चासङ्गतेरिति भावः। तदुपपा
दयति। आर्त्तयतेरत्रेति। आकारश्रवणादिति। तस्माद्धेतोरल्लोपबाधे मानाभावेन पुको दुर्लभत्वमिति भावः। आर्त्तयपतेति क्वचित् कोपपाठः। अभ्यासे ह्रस्वासङ्गतिमाह। चङ्परे इति ॥

आवश्यकत्वादिति। तेनोनधातौ अल्लोपस्यैवाङ्गीकारादिति भावः। रुद्धाविति। परत्वादिति भावः। व्यवधानमिति। एवञ्चाङ्परणिपरलघुपरत्वासंभव इति भावः। भाष्यसम्मतेपक्षे दोषोऽस्त्येवेति शङ्क-
ते। चङ्परे इति। इतिग्रहणेति। द्विःप्रयोगपक्षे। नादिष्टादचः पूर्वत्वमस्त्येवेति यद्यपि तदाभ्यासस्य कार्ये कर्तव्ये धात्ववयवादेशस्य तत्रेति बाधकस्थानिवत्त्वं नेत्यर्थस्याभ्यासस्यासवर्ण इति सूत्रस्थास
मदपि व्याचख्युः। हलादेरित्युक्तेर्नैदीर्घ इति तदपि न। हलादेरित्यस्य निर्मूलत्वात् उक्तत्वात्। न न्वंगयणत्वद्विरुच्यते इति माधवोक्तरीत्या नेह दीर्घ इति चेन्न। तन्मते अल्लोपस्यावश्यकत्वा
दिति दिक्। परत्वाद्वृद्धाविति। लोपः शब्दान्तरप्राप्त्या अनित्यः। वृद्धिरनित्येति तु स्पष्टमेव। उभयोरनित्यत्वेऽपि द्वे कृते तायामौकारस्यावादेशात्पूर्वमेव परत्वाद्वर्णादाङ्गं बलीयस्त्वाच्च औ लो
प इत्यर्थः। एवञ्चानग्लोपित्वाद्दीर्घसन्वद्भावौ स्तः। न च टिलोपस्य स्थानिवद्भावेन व्यवधानं शङ्क्यम्। तथाप्यङ्गस्य णिच्परत्वानपायात्। चङ्परे णौ यल्लघ्विति पक्षे कथमिति चेत् अ
भ्यासस्यादिष्टादचः पूर्वत्वेन स्थानिवत्त्वमेव नास्तीति गृहाण। अत एव मुण्डमिश्रेतिसूत्रे हलिकल्योरदन्तनिपातनं भाष्यवार्त्तिकयोराश्रितमिति भावः। वृद्धेर्लोप इति। शब्दान्तरप्राप्त्ये
सत्यामपि कृताकृतप्रसङ्गित्वमात्रेणेह नित्यत्वं स्वीक्रियते। भुवोवुक्लोनित्यत्वादित्यत्र यथेति भावः। इह भाष्यद्वयस्य परस्परविरोधे परत्वाद्वृद्धिरिति मुख्यः पक्षः। वृद्धेर्लोपो बलीया
निति तु प्रौढिवादमात्रमिति हरदत्तः। तद्विपरीतं कैयटः। भाष्यद्वयप्रामाण्याद्वृद्धेः पूर्वं पश्चाद्वा कामचारेण टिलोपे रूपद्वयमपि साध्विति मतान्तरम्। मतत्रयमपीदं सुधातुरसोमा
धवेनोपनिबद्धम्। अयञ्च मतभेदो णिज्भिन्नविषयः। णेर्णिचि तु ण्यल्लोपाविति पूर्वविप्रतिषेधान्निष्कर्षरीत्या अपवादत्वाद्वा प्रागेव णिलोपः। उपधाह्रस्वत्वे सन्वद्भावदीर्घयोश्च णेर्णिचीत्यु
पसंख्यानात् ण्याकृतिनिर्देशाद्वा अबीवददित्येव रूपमित्यवधेयम्। लङर्थे त्विति। तेन ण्यन्ताद्भावकर्मणोर्भूतभविष्यतोर्द्वित्वबहुत्वयोश्च प्रत्ययाः सिद्ध्यन्तीति भावः। कंसवधमाचष्टे इति। कृद्ग्र
हणे गतिकारकपूर्वस्यापि ग्रहणात्कंसवधशब्दः कृदन्तः। ततो णिच्। अप्प्रत्ययस्य लुक् कृतस्यैव यथा प्रकृतिः हन इति तस्याविकारपरित्यागेन स्वेन रूपेणावस्थानं तदेतदाह। अहन्निति ॥
वर्णग्रहणेन ज्ञापनान्न दोष इत्यवधेयम्। आश्रितमिति। एतदर्थं ज्ञापनार्थमेवेति भावः। न च यथेष्टं नामधातुष्विति द्वितीयस्य द्वित्वे कलल्लदित्यभ्यासे ऽकारश्रवणार्थं तच्चरितार्थम्। एकाचन्न
यसन्निधान एव यथेष्टमित्यस्य प्रवृत्तेरित्यन्यत्र निरूपितम्। रूपद्वयमपीति। लक्ष्यभेदेनेति भावः। ण्याकृतीति। ते प्राग्धातोरित्यत्र गत्याकृतिनिर्देशवदिति भावः ॥

म॰श॰ ३०० नतुलुप्यमानस्यकृतइति।तथासतितत्प्रकृत्यर्थेयादृशं कारकत्वादृशं णिच्प्रकृत्यर्थे पीत्यर्थः स्यात्तच दुष्टः कंसं ज्ञातयतीत्यत्रषष्ठ्यापत्तेस्तदाह।तथासतीति।अतिदेश
द्वयेनापीति।प्रकृतिवत्कारकमित्येतावतापिधात्वन्तर्भूतत्वबोधनद्वारा तद्रहितणिजन्तस्यधातुत्वेनतयोःसिद्धिःकार्यातिदेशेननयोःसिद्धिस्तुस्पष्टैवेतिभावः।असङ्कीर्णेति।द्वितीया
दिकङ्कारकातिदेशस्यफलं।णिचोधातुप्रत्ययत्वाभावात्कुत्वतत्वादिकार्यातिदेशस्य फलमितिभावः।द्वितीयादिकमित्यादिशब्दार्थोदेवदत्तेनपाचयतीत्यादौतृतीया।कुत्वतत्वादिकमि
त्यत्र इति।हेतुमतिचेति प्रकृतेरिति।नतुलुप्यमानस्यकृतः तथासतिहेतुमत्त्वयायादृशन्तस्यातिदेशोनलभ्येतइष्यतेचसः तथैवभाष्यकारेणोदाहृतत्वादितिभा
वः।इहदृष्टमतिदिष्टङ्कारकङ्कार्यञ्च।तत्रआद्यद्विवचनेऽतिदेशद्वयेनापिसिद्धातः।असङ्कीर्णोदाहरणन्तुद्वितीयादिकम्।कुत्वतत्वादिकञ्चेतिविवेकः।इहकं
सवधसुभद्राहरणादिनिरूढोपाख्यानएवणि जितिनाग्रहः।किंतुप्रतिपादनमात्रेतेनराजागमनमाचष्टेराजानमागमयति।यद्यपीहकृत्स्नकृतोराजाकर्त्तास्तितथा
पिगमेर्हेतुमत्योगनिवृत्तेतिकर्मीभूतः तद्वदेहापि।राजानमित्यस्यप्रकृतिभागोपयप्यन्तर्वर्तिन्याषष्ठ्याप्रत्ययलक्षणेनपदत्त्वयापिनकारश्रवणंभवत्येवारु
पातिदेशबलात्।देवदत्तपाकमाचष्टेदेवदत्तेनपाचयतीत्यत्रतृतीयैवभवति।गतिबुद्धीतिनियमेनकर्मत्वापहारेकर्त्तृत्वस्यैवस्थितेरितिदिक्।कर्त्तृग्रहणस्य
फलमाह।नत्विति।कथ्रिति।कर्त्तृग्रहणाभावेचक्षुषापश्यतिचक्षयतीत्यादावेवस्यात्।नतुकरिभिरवबध्नातिअनकरयतीत्यादौ।लोकेइन्द्रियाणामेवकरण
त्वेनसुप्रसिद्धत्वादितिभावः।सङ्ग्राम।सङ्ग्रामेति।प्रातिपदिकंयुद्धार्थकङ्कर्जर्यमिच । मनो।अनुदात्तेदिति।भृशादिभ्योभुवीतिसूत्रेकैयटहरदत्ताभ्यामुक्तत्वा
दितिभावः।एतेनास्यानुदात्तेत्त्वमपाणिनीयमितिमाधवोक्तिःप्रत्युक्ता।नचैवंभाष्योक्तमुपसर्गद्वयकरणज्ञापकंभज्येतेतिवाच्यम्।युद्धेयोग्यामशब्दइत्युक्तैव ॥

त्यादिनाराज रामः
नमगमयतीत्यादावल्लोपाभावः।प्रातिपदिकमिति।प्रातिपदिकाधिकारादिदंलभ्यम्।कैयटेति।अवयवस्सङ्ग्रामयतेः सोपसर्गादुत्पत्तिवक्तव्या।असङ्ग्रामयतशूरइत्येवमर्थन्तनियमार्थस्सङ्ग्रामयते ३००

सामर्थ्यादिति। केवलग्रामशब्दस्य लोके युद्धे प्रयोगाभावादिति भावः। सामर्थ्येन समस्तस्य विशिष्टस्यैवोद्देश्यकोटौ प्रवेशात्तनाद्यन्ता इत्यत्र तदादिनियमसत्त्वेऽपि सङ्ग्रामेति विशिष्टस्य धातुत्वसिद्धिः। न चेदं णिजर्थमित्यनुबन्धासञ्जने मानाभावः। तत्करोतीत्येव सिद्धेः। न चास्य समानोपसर्गत्वं सङ्ग्रामशब्दार्थस्य क्रियात्वाभावादिति वाच्यम्। सोपसर्गादित्यस्य सोपसर्गसमानाकारादित्यर्थेनादोषात्। मैत्रेय इति। अत्राहु विबीजन्तु अनयोरखण्डत्वेनैतद्घटकसुदुरो रूपसर्गसमानाकारत्वेऽपि पूर्वपदत्वाभावः। अत एव

सामर्थ्यात्तं पूर्वस्य लाभे तद्विशिष्टपाठो ज्ञापक इति भाष्याशयात्। नन्वेवमप्यसत्सङ्ग्रामतेति न सिध्येत्॥ अग्लोपित्वाभावेनोपधाह्रस्वापत्तेरित्याशङ्क्याह। अकारप्रश्लेषादिति॥ स्तोमश्लाघायाम्। अग्निष्टोमः। अग्नेः स्तुत्स्तोमेति षत्वम्। सुखदुःखतत्क्रियायाम्। तच्छब्देन सुखदुःखे प्रातिपदिकार्थौ निर्दिश्येते। प्रातिपदिकाद्धात्वर्थ इति सिद्धेऽनयोः पाठः सोपसर्गात्प्रत्ययार्थ इति मैत्रेयः। रूपरूपक्रियायाम्। निरूपयतीत्यनेकार्थत्वाद्विचारणेयम्। ग्रन्थान्त इति। धातुपाठस्यान्त इत्यर्थः॥ इति चुरादयः॥ हेतुमति च। प्रेषणादाविति। आदिशब्दादध्येषणे तत्समर्थाचरणे च। तत्र भृत्यादेर्निकृष्टस्य प्रवर्तना प्रेषणमित्यर्थः। गुर्वादेराराध्यस्य प्रवर्तना अध्येषणं प्रार्थनेत्यर्थः। तत्समर्थाचरणमपि बहुधा। अनुमतिरुपदेशोऽनुग्रह इति। तत्र यस्यानुमतिं विना क्रिया न निष्पद्यते। सोऽनुमतिमात्रेण प्रयोजकः। यथा राजा वैद्यादिस्तु ज्वरितः कषायं पिबेदि ति उपदेशमात्रेण। यस्तु केनचिज्जिघांसितं पलायमानं निरुणद्धि सोऽपि हन्तुरनुग्राहकत्वेन। अमी च सर्वे विशेषा अर्थप्रकरणादिगम्याः। सर्वानुगतं प्रवर्तनासामान्यं णिचोऽर्थः। नन्वेवं णिचो लोडादीनाञ्च ॥

दुःखशब्दे इदुपधस्येति षत्वं न विसर्गान्तस्य पदत्वाभावात्। व्युत्पन्नत्वे सुधातोर्दुलधातोः खेऽन्त्ये धात्वन्तस्य विसर्गो बाहुलकात् बहुलमन्यत्रापीति णिलुगिति बोध्यम्। यद्वापि दुःपूर्वात्खनतेर्डे दुःखमिति तदापीतरेतरनिपातनात् णत्वाभाव इति बोध्यम्। एतेनात्र षत्वमङ्गीकृत्य दुष्खेनेत्यादौ णत्वाभावः षात्पदान्तादिति निषेधादिति जिनेन्द्राद्यस्तत्परास्तम्॥ ॥ इति चुरादयः॥ अनुग्राहकत्वेनेति। अचेतनोऽप्यनुग्राहकत्वेन प्रयोजको यथा भिक्षा वासयति कारीषोऽग्निरध्यापयतीत्यादौ ॥

तद्भावेति। उभयत्रापि णेर्णिच्युपसंख्यानस्य तत्रोक्तत्वादितिभावः। अर्वाचीनमतइति। पूर्वान्वयि। तत्परत्वाभावाच्चेति। अभ्यासस्येतिशेषः। ततोणिलोपइति। एवञ्चाभ्यासस्यानादिष्टाद्चः पूर्वत्वम स्त्येवेतिभावः। माख्यादमेइति। रूपस्यानिवत्वेनिषेधेचेत्यर्थः। पृथगुपादानादिति। निमित्तत्वेनोपादानादित्यर्थः। आनाधेचेतिद्वित्वे बहुव्रीहिवद्भावेपीतिपाठः कर्मधारयवद्भावेपीतिकाचित्कः पाठोलेख कयोरिति। ह्रस्वदीर्घयोरित्यर्थः। एतच्चप्रकृताभिप्रायम्। अवीवदद्वीणांपरिवादकेनेत्यादौतुसन्वद्भावस्यापिदृश्यमेवपूर्वपक्षसिद्धान्तौद्रष्टव्यौ। ण्याकृतीति। तथाचणावङ्गस्यचुरइत्यस्य नास्यलो पइतिभावः। मत्वप्राचारूपान्तरमुदाहृतम्। अचुचोरदिति। तद्भाष्यविरोधादुपेक्ष्यम्। औन्दिददिति। अत्रप्रसादकृत्। अजादित्वाद्दीर्घोलघोरितिनार्वाचीनमतेस्वमतेतुस्यादेवेति। एवञ्चवदताआरिट त्। आशिशतइत्यादौसर्वत्रसिद्धान्तेदीर्घोभवतीत्युक्तम्। सोयंमहान्प्रमादः। चङ्परेणौयदङ्गं उर्‌अट्इत्यादितस्येहद्वित्वाभावात्तदीयस्यदीर्घभाजोऽभावाच्च। चङ्परेणौयल्लघुतत्परत्वाभावात्तदिह्म धवहरत्तकैयटादिसकलमतेपिदीर्घसोक्तिसंभवाभावेकथंदीर्घइष्टापत्तिः कृतेतिनविद्मःसादेत् । द्विःप्रयोगोद्विर्वचनंषाष्ठमितिनिर्विवादम्। अन्यथाआरिटदित्यादौणिलोपोनस्यात्। एवंस्थिते द्वितीयप्रयोगविषयीभूतञ्चङ्परंणिचमप्रतितदादिग्रहणादाटिटदित्यङ्गम्। एवञ्चचङ्परेयदङ्गं न्तदीयोयोभ्यासस्तस्येतिपक्षेकथन्नदीर्घइतिचेत् अत्रवदन्ति। लघोपरे द्विदीर्घः लघुश्चेह णिच्तल्लोपः प्रथममेवप्रवृत्तः। नित्यत्वादन्तरङ्गत्वाच्चवर्णाश्रयत्वाच्चप्रत्ययलक्षणत्वनास्ति। स्थानिवद्भावोपिनभवति। अभ्यासस्यादिष्टाद्चः पूर्वत्वात्। दीर्घविधौतन्निषेधाच्चेति। अत्रेदंवक्तव्यम्। चङमेवलघुमाश्रित्य त हिदीर्घोस्तु। किंचणिचः स्थानिवद्भावोपिसुलभः। यत्तूक्तंअभ्यासस्यादिष्टाद्चः पूर्वत्वादिति। तन्न। टिशब्दस्यहिद्वित्वम्। ततोणिलोपः। एतच्चद्विर्वचनेचीतिसूत्रस्यभाष्यादवयेपितुल्यम्। यदप्युक्तंदीर्घवि धौनिषेधादिति। तदपिन। निषेधस्याष्टमिकदीर्घविषयत्वात्। अतएवहिपूर्वत्रासिद्धीयेनस्थानिवदित्याश्रित्यदीर्घग्रहणंभाष्येप्रत्याख्यातम्। तस्माद्दीर्घस्यदुर्वारतयानेदंप्रसादखण्डनंसम्यगिति किंतर्हिसम्यगितिचेत्उच्यते। दीर्घोलघोरित्यत्रचङ्परस्यणेः पृथगुपादानात्तदितरएवलघुः कार्यी। तत्रकौण्डिन्यन्यायात्। यथाद्वित्वविधौरहाभ्यामित्युपादानाद्रेफेतरस्यैवपरः कार्यित्वन्तद्वत्। यथाना नलोपोनसइतिसूत्रेनञ्भिन्नस्यैवोत्तरपदस्यनिमित्तत्वात्बाधेचेतिद्वित्वेकर्मधारयवद्भावेपिनेत्यत्रनलोपोनेतिहरदत्तादिभिरुक्तन्तथेहापि ॥ ७ कप्रमादात्। ननुदधिदानेः वसंप्राप्तेनकस्यविधानात्व पूर्वपक्षएवसंक्रामितेप्राप्तेनिमित्तत्वोक्तेर्बाधउचितः। प्रकृतेणिचोलघोरित्यनेनाग्रहणेकोनाधः। अतएवकरोतीत्यादौगुणः अनपातेनन्यायेनकृभिन्नस्यैवार्धधातुकादेर्निमित्तत्वंस्यात्। नलोपोनञइत्यत्रापिन ञोनिमित्तत्वंनावश्यम्प्राप्तमितिबाधन्नैतन्मायावसरः किंचनिमित्तभूतस्यापिप्रत्ययस्यभवामीत्यादावङ्गेप्रवेशोदृष्टस्तथाणिचोपिनदादिग्रहणात्कार्यिकोटौप्रवेशोदुर्वारः ॥

द्रव्यरूपेणाह। सञ्ज्ञा चेति। उद्धृतत्वादिति। तन्मध्यपतितन्यायाप्रवृत्त्येत्यर्थः। अन्यथा अन्तरङ्गत्वेन प्रथमोपस्थितमादायैवाङ्गत्वं न तु द्वितीयमित्यर्थानङ्गीकारे। किं बहुनेति। तन्मध्यपति
तन्यायाप्रवृत्त्येत्यर्थः। न्यायलभ्येति। विरोधन्यायलब्धतन्मध्यपतितन्यायाप्रवृत्तिरूपेऽर्थे इत्यर्थः। अत एवेति। अङ्गत्वाभावादेवेत्यर्थः। तत्र कौण्डिन्यन्यायेति। अङ्गत्वमङ्गीकृत्य यथाप्रा
दीर्घत्वं याऽनेन न्यायेन वारितस्तथेत्यर्थः। परं तु अन्तरङ्गस्य प्रथमोपस्थितस्याभ्यासावयवणिच आनर्थक्यात्तस्य यत्वाभावेन तमादायाङ्गत्वं दुर्लभम्। किञ्चैवं प्रतीषिषतीत्यादावित्यानां
पतिः प्रत्यासत्त्या सन्निमित्तकाङ्गावयवाभ्यासस्यात स्तेनेत्वविधानात् अज्झनेति दीर्घस्तु नहनादिसाहचर्येणार्थवदजन्ताङ्गस्यैव तेन दीर्घविधानात्। द्वितीयपक्षे पूर्वभागस्याङ्गत्वे
वस्तुतस्तु आटिटदित्यादौ णिज्निमित्ताङ्गसञ्ज्ञा प्रथमणिचः प्राचीनस्यैव न तु तद्विशिष्टस्य। एकस्यैव द्विणिचोर्द्विः प्रयोगः। तथा चाङ्गसञ्ज्ञायां निमित्तभूतो णिच् कथङ्का
ष्यिकोटौ प्रविशेत्। सञ्ज्ञा वा प्रथमोपस्थितं कथं निमित्ततया न गृह्णीयात्। अन्तरङ्गस्यापेक्षायां बीजाभावात्। न च द्वित्वात्प्रागेव प्रवृत्ताङ्गसञ्ज्ञा तन्मध्यपतितमाद्यणिच
मप्यवगाहत इति युक्तम्। द्वितीये टकारान्तर्भावेण प्रत्ययत इति वैपरीत्यस्यापि सुवचत्वात्। ननु यथोभयत आश्रयेनान्तादिवत् विरोधात्तथेहापि प्रत्ययांशेऽङ्गांशे वा तन्म
ध्यपतितन्यायस्याप्रवृत्तिरिति चेत्। सत्यम्। तावतापि त्वदुक्तदोषस्योद्धृतत्वात्। युक्तं चैतत्। अन्यथा प्रतीषिषतीत्यादौ द्वितीयसनं प्रति प्राचीमसनन्तस्याङ्गत्वे इज्झनगमा
मिति दीर्घः स्यात्। किं बहुना जिगीषाजिघांसेत्यादावप्यभ्यासस्य दीर्घः स्यात्। सनः सकारेण विशिष्टस्य द्वित्वे धातोर्द्वितीयभागस्य सनन्तर्भावे हलादिशेषेणैकदेशविकृतन्याये
नाभ्यासोत्तरभागस्य प्रत्ययत्वे प्राचीनस्याङ्गताप्रौढ्यात्। एवं च न्यायलभ्येऽर्थे दिवो जिगीषायामित्यादिनिर्देशोऽपि लिङ्गं बोध्यम्। अत एवाटिटदित्यादौ लघूपधगुणो पिना। अन्य
भ्यासादेव सः। न च णौ चङ्युपधाह्रस्वेन निर्वाहः। तत्र कौण्डिन्यन्यायेन दीर्घस्येव ह्रस्वस्यापि दुर्लभत्वादितिदिक् ॥ ७ ॥ आनर्थक्यात्। अङ्गत्वं तु विकरणविशिष्टेऽनर्थकेऽपि दृष्टमेवातस्तादृशस्याचो
ह्रदतिसूत्रशेषभाष्योक्तन्यायेनोत्तरणिजमादाय प्राक्तनसमुदायस्यैवाङ्गत्वमुचितं द्विःप्रयोगत्वात् द्वितीयेऽपि ततो विहितत्वबुद्ध्यनपायात्। न चैवं समुदायस्यैव विकृतः पूर्वस्तमादाय धातोर्ण्यन्तत्वे
ज्झनेति दीर्घापत्तिरिति वाच्यम्। तस्यानर्थकत्वात्। आटिटदित्यादौ गुणस्तु बहिरङ्गस्य चङ्निमित्तद्वित्वस्यासिद्धत्वाच्चा दीर्घो लघोरिति दीर्घस्तु न। चङ्परे णौ यल्लघु इति भाष्यमते प्राप्नोत्यसावनुस्त्वेन

अ॰ श॰ लावस्थायामिति। द्विलकारकनिर्देशादिति भावः। प्रथममिति। द्वित्वादिति शेषः॥ द्वितीयस्येति। एकाच इति शेषः। अनुवृत्तिर्मास्त्विति। द्वितीयस्येत्यस्यावृत्त्यानित्यन्द्वितीयस्येत्यर्थलाभ इत्यभिमा
२०३ नः। इकारस्यापीति। रेफस्य तु निषेधेप्यस्तिरिति भावः। नचैवमपीति। धातोरादिभूतादचः परानित्यन्द्वितीयस्यैकाचोवयवभूताः संयोगादयोन्द्राद्विर्नेत्यर्थादिन्द्द्रीयिषतीत्यादौ न दोषः। प्रकृ
तेचनिषेधाप्रवृत्तिरूपो दोष इति भावः। पूर्ववर्त्तिमात्रपरमिति। पूर्ववर्त्यचः परान्द्रादित्यर्थः। अवयवपरत्वे हि धातोरादिभूतादच इत्यर्थः स्यादिति भावः। अत्र केचित्। चन्द्रीयतेः सनि नन्द्रा इति नि
अजादेरित्येवेति। नन्द्रा इति सूत्रे अजादेरित्यनुवर्त्तत एवेत्यर्थः। अदिद्रपदिति। ननु लावस्थायामेवाडिति भाष्यकारोक्तपक्षे अजादित्वमस्त्येव। न्याय्यश्च प्रथममट्। परत्वादन्तर
ङ्गत्वाच्च। सत्यम्। द्वितीयस्येत्यप्यनुवर्त्तते नित्यन्द्वितीयस्येति तदर्थः। धातुसञ्ज्ञाप्रवृत्तिकाले इति यावत्। एतच्च तदनुवृत्तिसामर्थ्याल्लभ्यते। नचैवमजादेरित्यस्यानुवृत्तिर्मास्तु इ
ति वाच्यम्। इन्दिद्रीयिषतीत्यत्र दकारस्यापि द्वित्वनिषेधापत्तेः। नचैवमपि चन्दिद्रीयिषतीत्यत्र दोषः स्यादेवेति वाच्यम्। अजादेरिति हि कर्मधारयात्पञ्चमीत्युक्तम्। इह च अ
च इत्येवानुवर्त्त्यैकदेशे स्वरितत्वप्रतिज्ञानात्। अथवादेरित्यप्यनुवर्त्ततां तच्चनावंमवपरं किन्तु पूर्ववर्त्तिमात्रपरं शब्दाधिकाराश्रयणात्। नन्वेवमुत्तरार्थतया द्वितीयग्र
हणस्य सार्थकत्वे स्थिते द्वितीयस्येति न वक्तव्यं भवतीति भाष्यं विरुद्ध्येतेति चेन्न। यत्र सूत्रे पठितन्तत्र मास्त्विति तदाशयात्। कणरणेत्यादि। अत्र प्राचो ग्रन्थव्याच
क्षाणा आहुः। अजीहिठदित्यत्र उपधाह्रस्वे एच इग्घ्रस्वादेशे इति स्थानिवत्त्वाद्वित्वेऽभ्यासह्रस्वदीर्घत्वादीति। तन्न। ओः पुयण्जीति ज्ञापकस्य अचिकीर्तदित्यत्रानित्यत्वात्प्र
वारणाय विशेषविषयतया भाष्ये एवमस्य दृष्टत्वेन स्वमतमपि प्राकृततथैवं वर्णितत्वे नेह स्थानिवद्भावायोगात्। विशेषश्चावर्णवदुत्तरखण्डत्वं उवर्णादेशत्वं चेत्यन्य
देतत्। एतेन सौतीति प्योरिति सूत्रे सिषेचयिषतीत्यत्र सिचेरिदं तु मण्णो गुणे सति निरुक्तिगुणाया देशयोः ॥ ❀ ॥ येषप्रवृत्तौ न मानम्। नच संयोगसञ्ज्ञासूत्रे भा
ष्ये बहूनां सन्निपाते द्वयोः संयोगसञ्ज्ञायामिन्द्रिद्रीयिषतीत्यत्र दोषमाशङ्क्य नवाञ्जिधेरिति समाहितम्। अचः परस्य निषेधविधिरिति तदर्थ इति तदेव भाष्यं मानमिति राम॰
वाच्यम्। अजादेरिति निवर्त्तते इति तद्व्याख्यानभाष्ये उक्तत्वेन तस्याः मानत्वात् तस्य भाष्यस्य भङ्ग्या व्याख्यानेन मानमित्याहुः॥ २०३

णौकृतस्येति।इदंचस्वमनुसारेण।अभ्यासेत्वसन्नियोगशिष्टोपधालोपस्यद्वित्वोत्तरमेवप्रवृत्तेरितिदिक्।तथैवेति।यकारनिर्देशएवेत्यर्थः।इतिवदन्तीति।अत्रहरिदीक्षितोक्तसूत्रस्यभाष्यविरोध
स्तेनंयोर्णौकृतस्यस्थानिवत्त्वेनसिच्शब्दस्यद्वित्वमितिवदन्न्यासकारोऽपिप्रत्युक्तः।अतएवउक्तन्यासबलेनज्ञापकस्यसामान्यविषयत्वम्।अचिकीर्तदित्यस्यसिद्धयेअनित्य
तांचशरणीकुर्वन्क्षीरदेवोऽपिप्रत्युक्तः।अजीहिठत्।सिषेचयिषतीत्यादिरूपंतुइकारैकारविशिष्टस्यद्वित्वेऽपिसिद्ध्यतीतिस्पष्टमेव।एतच्चसर्वंसुधीभिःप्रपञ्चितंमाधवेनेतिदिक्
अपीप्यदिति।णौकृतस्योपधालोपस्यस्थानिवत्त्वात्याय्शब्दस्यद्वित्वेहलादिशेषेईत्वम्।इहाग्लोपित्वादलघुपरत्वाच्चसन्वदित्वदीर्घाप्राप्तेरीत्वंविधीयते।व्रेपयतीति।व्रीवरणे।रीङ्स्र
ये।क्नूयिशब्दे।क्ष्मायीविधूनने।तिष्ठतेरित्।इहतिष्ठिपदितिप्राचोग्रन्थंव्याचक्षाणःणौकृतस्यतिष्ठतेरित्त्वस्यस्थानिवद्भावात्स्थाप्शब्दस्यद्वित्वमित्याहुः।नदस्मदुक्तरीत्याप्रक्रिया
यामवर्णवडुत्तरखण्डत्वेनवस्तुतःसम्यगेव।किंतुतेषांपरस्परव्याघातावहम्।परिनिष्ठितरूपेऽवर्णपरतायास्तैरुपजीवनात्।कथमन्यथाउवर्णादेशएवेतिबोपदेवमतंभाष्यम
तत्वेनप्रागयूयुजच्चितिसुधीभिराकलनीयम्।ल्लियानिर्देशोपङ्लुङ्निवृत्त्यर्थः।अतास्थयत्।पुकोऽपवादइति।एवञ्चपालरक्षणइतिधातुनापालयतीतिरूपेऽसिद्धेलुगागमस्य
पुग्निवृत्तिरेवफलमितिभावः।एवंवोविधूननेजुगित्यत्रापिबोध्यम्।वाजयतीतिरूपस्यवजगतावितिधातुनासिद्धत्वात्।विभाषालीयतेरिति।आत्त्वविधायकस्मारितम्।लि
लोः।लीयतेरिति।लीश्लेषणेक्र्यादिः।उभयोरपियकारनिर्देशोनतुश्यनः।तथाहिसतिलीङ्इत्येवावक्ष्यत्।एतच्चविभाषालीयतइतिसूत्रेप्राचाङ्ग्न्येस्पष्टम्।लीलोरित्यस्यतुनाव
पितथैवोचितम्।सूत्रेहिलिलीङोर्द्वयोरपिग्रहणंनिरनुबन्धपरिभाषायाःप्रत्ययविषयत्वात्इतिवदन्ति।प्रयोज्यकर्त्रीति।यद्यपिप्रथमणिजर्थंप्रतिमनुष्यवागेवप्रयो
जिका।अतएवात्वंप्रवृत्तम्।तथापिद्वितीयणिजर्थाभिप्रायेणेदमुक्तम् ॥
अन्येतुनिरनुबन्धकत्वात्क्र्यादेरेवलीत्यस्यग्रहणेप्रतिपदोक्तत्वाच्चलातेरेवग्रहणेधातुद्वयेनरूपद्वयसिद्धौअन्यतरस्याङ्ग्रहणसामर्थ्याद्त्रयस्यज्ञापकन्यायाप्रवृत्तिरित्युभा
भ्यामप्युभयग्रहणंङ्गीलीङोर्लातेःकृतात्वलीयतेश्चेतिहेतुमण्णावेवपूर्वोत्तरसाहचर्येणास्यप्रवृत्तेश्चौरादिकस्यनग्रहणमित्याहुः ॥

५ लीङ्श्लेषणेदिवादिः

णिनिमित्तस्येति। विषयसप्तम्यामपि तद्धिते द्विगुनिमित्तत्ववन्निमित्तत्वमस्तीति भावः। भाष्यारूढत्वादिति। नन्द्रा इति सूत्रस्थभाष्यारूढत्वादित्यर्थः ॥ ॥ ॥ ॥ ॥

अध्यजीगपदिति। इह णिनिमित्तस्य गाङो द्वित्वे कर्तव्ये स्थानिवद्भावो निषेधो वा नास्ति। सति हि तस्मिन्नजादेर्द्वितीयस्येति णिच एव द्वित्वं स्यात्। ततश्च न प्रक्रियायामन्तरा परिनिष्ठिते रूपे वर्णवदुत्तरखण्डमस्तीति कीर्तयति साम्यात्। ज्ञप्यादिरिति। तेन मित्त्वाद्ध्रस्व इति भावः। स्वादेस्तु मित्त्वं नास्तीत्युदाहरति। चापयतीत्यादि। इति व्यार्थ इति। व्याख्यानद्वयस्यापि भाष्यारूढत्वादिति भावः। षकारस्येति। रेफस्य नन्द्रा इत्यनेन वारणादिति भावः। सन्नन्ते प्रवर्तत इति। यद्यपि सन्नन्तस्यानन्तरं तथापि वचनसामर्थ्यात्तत्र प्रवृत्तिरिति भावः। तृतीयाभावेनेति। इहोपन्यासस्तु आद्यव्याख्यानमादाय प्रकृतोपयोगादिति भावः। इह मूल एव रूपद्वयमुत्पादनेन प्राचो ग्रन्थोपि अर्थाद्व्याख्यातः। प्राचो ग्रन्थं व्याचक्षाणास्तु तद्द्वयस्य तत्सौत्रग्रन्थस्य च प्रामादिकतां महता प्रबन्धेन प्रत्यपीपदन्। तथा च तदीयो ग्रन्थः। क्वचित्तु ऐर्षिष्यदिति षकारादेरपि द्वित्वमुदाह्रियते तद्भ्रान्तप्रक्षिप्तत्वादुपेक्ष्यम्। भ्रमे च कारणं अथवा तृतीयस्यैकाचः षकारस्येत्यर्थः इति प्राचो व्याख्यानम्। तथा हि। यदि तृतीयवर्णस्येति व्याख्यायेत नू ततः कथमैर्षिष्यदिति षकारादेर्द्वितीयस्यैकाचः स्यात्। न च तृतीयस्य वर्णस्येति व्याख्यातुमुचितम्। अध्याहारप्रसङ्गात्। तृतीयस्यैकाच इति ग्रन्थस्वारस्यभङ्गाच्च। तथा च कस्य तृतीयस्य केचिदाहुर्व्यञ्जनस्येति। अपरे पुनराहुस्तृतीयस्यैकाच इति वृत्तिन्यासकारहरदत्तौ व्याख्याताम्। तृतीयस्येति। तृतीयव्यञ्जनसहितस्यैकाच इत्यर्थः। अत्र षकारस्य द्विर्वचनं न भवति। अपरे पुनरिति। अस्मिन्पक्षे ईर्ष्यतेः सनि कृते इति व्याख्येयम्। अन्यथा तत्संबन्धिनस्तृतीयस्यैकाचोऽसंभवात्। माधवोप्येवम्। तस्मादैर्षिष्यदित्येकमेवात्र रूपं साधीयो नत्वैर्षिष्यदिति निष्पन्ने तृतीयस्यैकाचोऽसंभवात्। न चाटि कृते तमेवापेक्ष्य षकारादिस्तृतीय एकाजिति वाच्यम्। अन्तरङ्गत्वादाटश्चेति वृद्ध्या विघातात्। अन्तरङ्गत्वादेव वृद्धेरसिद्धत्वमपि नास्ति। नापि स्थानिवद्भावः। वृद्धेः पूर्वस्य पूर्वस्माद्विधेरभावादिति न युक्तमुत्पश्याम इति। इह कश्चित्त्वित्यादिना न युक्तमुत्पश्याम इत्यन्तेन तदीयग्रन्थेन मूलटीकयोः को दोष उपन्यस्त इति विभावनायामुक्तरूपं प्रकृतवार्त्तिकेन न सिद्ध्यतीति मूले दोषः ॥

सोऽस्यादिति। षकारस्येति एवकार इतिवत्समुदायात्कार इति भावः॥ ॥ इति ण्यन्तप्रक्रिया॥ ॥ प्रवृत्तिभेदेनेति। आवृत्त्येत्यर्थः। अजन्तस्येति। अत्रार्थे प्रत्याहारबहुवचनयोः प्रमाणत्वं
टीकामात्रं तु षकारस्य तृतीयैकवचनोक्तिरयुक्ते दोष इति लभ्यते। तत्र न तावदाद्यः। प्रकृतवार्त्तिकस्य तत्राप्रवृत्तावपि अजादेर्द्वितीयस्य। नन्द्रा इति सूत्राभ्यां रूपसिद्धे
स्वसूहत्वात्तथापि द्वितीयः। अनन्ताभिप्रायेण टीकाग्रन्थस्य सौष्ठवात्। सर्वज्ञैनैतदिह मूल एव ध्वनितम्। मात्सर्यमुत्सार्य गुणगृह्यैराकलनीयम्। निवृत्तेति। तथा चो
क्तम्। निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजुच्यते इति। तेनेति। यत्तु चक्षिङो ङित्करणं अनुदात्तेत्त्वप्रयुक्तस्यात्मनेपदस्यानित्यतां ज्ञापयतीत्युक्तत्वात्तेन प्रार्थयन्तीतिसि
द्धमिति माधवादिभिरुक्तं तद्दृष्ट्यस्थवीयः। तस्यागर्वादात्मनेपदविधानात्। यदपि तरङ्गिण्यां ङ्णकृतमात्मनेपदमनित्यमिति ज्ञापनार्थश्चक्षिङो ङकार इति
तदपि न। चक्षिङो गणकृतात्मनेपदस्यासंभावितया मूलशैथिल्यात्। यदप्याहुः। प्रार्थनं प्रार्थः तत्कुर्वन्ति प्रार्थयन्तीति तदपि न। धातुसंज्ञानिमित्ते प्रत्यये कर्त्तव्ये
उपसर्गाणां पृथक्करणस्य ज्ञापयिष्यमाणतया अर्थवेदसत्यानामित्यापुकौ दुर्वारत्वादिति दिक्॥ इति हेतुमण्ण्यन्तप्रक्रिया॥ धातोः कर्मणः। इच्छायामिति सुतला–
त्कर्मत्वं समानकर्तृकत्वं च न स्पेक्षमेव गृह्यत इत्याशयेनाह। इष्णिकर्मण इत्यादि। पिसनोरिति। प्रागुक्तव्याख्याविकल्पादिति भावः। अज्झन। गमः सामान्येन ग्रहणान् ग
म्लृ गतावित्यस्मात् सञ्जिगंसते इत्यत्रापि स्यादत आह। अजादेशगमेरिति। सनिचङ्ङ्श्चेति सूत्राभ्यां विहितस्येणिङोरादेशस्य। इण्वदिक इति। इक आदेशस्य चेत्यर्थः।
एतच्च सूत्रेऽज्ग्रहणाल्लभ्यते। तथा हि। इह सनीत्येव वक्तव्यम्। दीर्घश्रुत्योपस्थितेनाच इत्यनेनाङ्गस्य विशेषणात् अजन्ताङ्गस्य दीर्घः। विचीषति। ततः हनिगम्योः ए
वच्चाज्ग्रहणमतिरिच्यमानं प्रकृतिभेदेन गमेर्विशेषणार्थमजन्ताङ्गस्य दीर्घो भवति। अजादेशगमेश्चेति। इट्स। क्रमुदन्त्यादिति। चिकीर्षतीत्यादौ तु अज्झनगमामि
तिदीर्घकृतेनेदं प्रवर्त्तते उपदेशाधिकारात् लाक्षणिकत्वाद्वा। तस्योदाहरति। दुधूर्षतीति। धुर्वी कौटिल्ये। अज्झनेति दीर्घ उदोष्ठ्यपूर्वस्येत्युत्त्वं रपरत्वं हलि चेति दीर्घः ॥
बोध्यम्। लाक्षणिकत्वादेति। वर्णग्रहणेऽपि न त्वप्रवर्त्तते ऽन्तत्वभाष्यसम्मतत्वात्। तत्राऽप्रवृत्तिज्ञापकस्यानित्यत्वे एव तात्पर्यमिति भावः। सन्निपातपरिभाषाविरोधान्नेत्यपि बोध्यम् ॥

क्नतश्चसंयोगादेरित्यत्रेति। इड्विधायकेसूत्रइत्यर्थः। भाष्यमिति। तन्विधायकसूत्रेइतिशेषः। शेषे। शेषाधिकारे॥ ॥इतिसन्नन्तप्रक्रिया॥ ॥किन्त्वेति। अन्यत्वेत्यर्थः। अनित्यता नेनेति। अन्यथा ग

त्यर्थेभ्यः कौटिल्येविशेषविहितेनयङाक्रियासमभिव्याहारार्थयङलुक्कौण्डिन्यन्यायेनबाधेसिद्धे नित्यग्रहणंव्यर्थंस्यादितिभावः। इदमत्रत्यकैयटानुरोधेन। परेतुक्रियासमभिव्याहारार्थे

यन्तुप्राचात्रतश्चसंयोगादेरित्यत्रलिङ्सिचोरितिप्रकृतेपिइट्सनिवेत्यतोमण्डूकप्लुत्यासनीत्यप्यनुवर्त्यदिध्वरिषतीतिरूपान्तरमुदाहृतम्। तन्न। सनीत्यस्यानुवृत्तेरनाक

रत्वात। आत्मनेपदेष्वित्यनुवृत्तेः। परस्मैपदान्तोदाहरणस्योक्तिसंभवाभावाच्च। स्मिपूङ् पूङोङ्कारोच्चारणंपूञोव्यावृत्त्यर्थन्तेननत्सपुपूषतीत्येव। सनिग्रहेतोण्निषेधात्।

अत्राञ्जेरशोश्चऊदित्वाद्विकल्पेप्राप्तेपूङउगन्तत्वान्निषेधेप्राप्तेक्स्मिङोस्तुअनिटत्वादप्राप्तेवचनम्। सिस्मयिषतइति। स्तौतिण्योरितिनियमान्नषः। शैषिकादित्यादिभाष्य

म्। शेषेभवः शैषिकः। अध्यात्मादित्वाट्ठञ्। मतुबर्थेभवोमतुबर्थीयः। गहादित्वाच्छः। मतुबर्थोस्यास्तीतिमतुबर्थिकः। अतइतिठन्। व्रीह्यादिति ठन्॥ इतिसन्नन्तप्रक्रिया॥ यस्य

हलः। सङ्घातग्रहणमिति। तेनाहमीदमन्नीदित्यादौनातिप्रसङ्गः। किंच अर्थवद्ग्रहणपरिभाषयापुत्रकाम्येत्यत्रनातिप्रसङ्ग इतिभावः। मकारपरस्येति। एतेना

र्थमास्मत् आरयेत इतिप्राचामुदाहरणंव्याख्यातम्। भाष्योदाहरणस्यसामान्यापेक्षज्ञापकत्वात्। नित्यङ्कौ। नित्यशब्दोऽवधारणार्थइत्याह। कौटिल्यएवेति। त

त्रकौण्डिन्यन्यायस्यानित्यतानेनज्ञाप्यते। तेनपूजितोयःसुरासुरैरित्यादौभूतेक्तःसिद्ध्यति। अन्यथामतिबुद्धिपूजार्थेभ्यश्चेतिवर्तमानेक्तेनबाध्येत। ततश्चकर्तरि

तृतीयानस्यात्। तस्यचवर्तमानइतिषष्ठ्याबाधात्। जभजभ इह। पसगतौ सैत्रः। दन्त्यान्तोयमिति। स्पशबाधनस्पर्शनयोरितिधातोर्माधवः। सत्वे स्कीपतइति।

अत्रप्राचोग्रन्थेषठ्यतेसुटोबहिरङ्गत्वात्नसंयोगादिर्त्वेनगुणइति। तन्न। परत्वाट्टीडित्कृतेततोद्वित्वे अभ्यासव्यवायेपीत्यभ्यासात्परस्यसुटिकृतेसाभ्यासङ्कस्यासंयोगादि

त्वमदन्यवलक्ष्यनास्तीतिगुणप्राप्तेरभावात्॥ ७ यङोयीत्यतयातद्वृत्तेर्धातोरित्यर्थेनानुवाद्यत्वनविधेयत्वन्तत्रकौण्डिन्यन्यायस्यविधेयविषयत्वाच्चरितार्थविषयत्वेतिस्पष्टमिदचो

न्यात्। तन्त्रेभाष्ये। भाष्यकृताचारितार्थ्यम्। क्रियासमभिव्याहाराविवक्षायांचारितार्थ्यात्। नित्यग्रहणस्वनभिधानमाश्रित्यभाष्येप्रत्याख्यातमित्याहुः। परत्वादिति। द्विस्वादित्यादिः। पूर्वस्मात्

नचेति। द्वित्वादिति। द्वित्वनिमित्तयङन्त इत्यर्थः। परत्वादिति। उत्कृष्टत्वात् अन्तरङ्गत्वादित्यर्थः। सुटि कृते इति। तनोयङो निषेधः। रीङ् प्रवृत्तेः प्रागिति। अपवादत्वादिति भावः। द्वित्वाच्च पर
त्वाद् इति बोध्यम्।           ।गुणेति। यङि चेत्वनेनेति भावः। कृतयोरेव सुडिति। सुट् निमित्तोपसर्गयोग इत्यर्थः। एवञ्च पूर्वस्मात् तुः साधनेनेति पक्ष एवेति पूर्वं यङि द्वित्वे सिडि सुट् प्रा
दोष इति भावः। अत्रैवार्थे ज्ञापकान्तरमाह। अतएवेति। संयोगादित्वाभावादिति। पक्षान्तु टि अङ्गस्य संयोगादित्वाभावादित्यर्थः। भाष्यकृतेति। तेन ह्यडभ्यासव्यवायेपीति सूत्रे व्याख्यायते अत्र पक्षे
स्वमते गुणाभावस्तु यङि चेत्यत्रापि मित्वग्रहणानुवृत्त्या बोध्यः। भाष्योक्तनिषेधवचनाद् वा। प्रत्ययोत्पत्तिवेलायां संयोगादित्वस्य विवक्षणात् संस्करतुरित्यादौ गुणसिद्धिः सस्वरतुरिति व
न च संकृ इत्यस्यामेवावस्थायां द्वित्वात् परत्वात् सुटि कृते रीङ् प्रवृत्तेः प्राक् गुणप्राप्तिः शङ्कनीया। अडभ्यासव्यवायेपीत्यस्यारम्भेणाडभ्यासयोः कृतयोरेव सुट् न प्रागि
ति निर्णयात्। अतएव संस्करतुरित्यत्र संयोगादित्वाभावाद् गुणो न सिध्यतीति संयोगोपधग्रहणं कर्त्तव्यमित्युपसंख्यायते। न च भाष्यकृता पूर्वस्मात् तु रुपसर्गेणेति दर्श
ने सुटोन्तरङ्गत्वोक्तेः संस्कृ इत्यस्यैव द्वित्वाभ्युपगमात् गुणप्राप्तिरिति वाच्यम्। तन्मते सुटो बहिरङ्गत्वादिति परिहारविरोधादित्यास्तां तावत्। सिचो यङि। अभ्यासस्य का
रस्योपसर्गात् सुनोतीति ततः परस्य तु स्यादिष्वभ्यासेन चेति प्राप्तं षत्वं निषिध्यते। न कवतेर्यङि। कोरित्येवं व्याख्येशपानिर्देशस्य फलमाह। कौतिकुवत्योस्त्विति। कुशब्द
इत्यदादेः कूङ् शब्दे इति तुदादेश्च निवृत्तिः फलमिति भावः। यद्यपि कोरित्युक्तेपि तौदादिकस्य प्रसङ्गो नास्ति दीर्घान्तत्वात्। तथापि कौतिग्रहणस्यार्थक्रियमाणः शपानि
र्देशः लुग्वतिमपि व्यावर्त्तयतीत्यत्र तात्पर्यम्। न च लुग्विकरणपरिभाषया निर्वाहः ॥ ७ दिति बोध्यम्। निषिध्यते इति। यद्यप्युपसर्गात् सुनोतीत्यादिनिषेधबाधकत्त्व
यापि येन नाप्राप्तिन्यायेन सात्पदाद्योरिति निषेधस्यैव बाधकं अयन्तु निषेधः सर्वबाधको व्याख्यानात् एतदर्थमेवोपसर्गादित्यनन्तरं निषेधप्रकरणं कृतं आदेशप्रत्यययोरित्येतन्मा
त्रबाधकत्वे हि तत्प्रागेव कुर्यादिति भावः। शपानिर्देशस्येति। यङ्लुग्निवृत्तिस्तु न फलं यङः परत्वाभावात्। न च यङन्तात् द्विर्भाष्यमनेयङोवयवत्वोपादानेका एतन्मते तत्र व्यावृत्त्य
र्थः सः। श्तिपा निर्देशो न सिद्धेर्यङ्लुग्व्यावर्तकेनेनरव्यावर्त्तनावपि बाधकाभावाच्च ॥

म·प्र· निरनुबन्धकेति। सा प्रत्ययविधिविषयेति तु भूवादिसूत्रस्थभाष्यविरुद्धत्वादसङ्गतमिति भावः। कुङ् इत्येवेति। न च पर्यायेण लाघवगौरवाभावः। कवतेरित्यस्यानुबन्धर
३०६ हितधातुमात्रार्थत्वेन पर्यायत्वाभावादिति दिक्। कुत्वेनेति। अभ्यासाच्चेति कुत्वेनेत्यर्थः। ननु हिन्वोरिकारोच्चारणेनोत्वबाधवत् हकारोच्चारणसामर्थ्यात् द्वित्वाभावे कुत्वं न स्या
दिति चेन्न। शास्त्रबाधकल्पनापेक्षया हकारोच्चारणं कुत्वप्रवृत्त्यर्थमित्यस्यैव कल्पयितुं युक्तत्वात्। तत्र तु येन नाप्राप्तिन्यायेन हिन्वोरपवादत्वेनेकारोच्चारणस्य तद्बाधक

निरनुबन्धकपरिभाषाया अपि जागरूकत्वेन उभयग्रहणप्रौढ्यात्। वस्तुतस्तु कुङ् इत्येव सुवचम्। हतेर्हिंसायामित्यादि यद्यपि द्वित्वाभावेपि कृते कुत्वेन जेघ्नी
यते इति सिद्ध्यति तथापि प्रक्रियालाघवाय पुनरुक्तम्। अत्र यदि ग्पादेशेनैव घ्नीभावेन द्वित्वं न बाध्यते विषयभेदात्। यङन्तावयवस्य हि द्वितीयाजवयविकस्य द्वि
त्वं प्रकृतिमात्रस्य घ्नीति। वेवीयते इति। हल इति वा अकृत्सार्वेति दीर्घः। चायः की। दीर्घोच्चारणं यङ्गर्थम्। अतएव न लुमतेति निषेधोपि तत्र न प्रवर्तते। चेकीतः।
ईघ्रा। दीर्घोच्चारणं प्राग्वत्। यत्तु वदन्ति प्रक्रियालाघवार्थमिति तन्न। चायः की इत्यत्रापि तथात्वापत्तेः। ननु माधवग्रन्थबलेन वैषम्यं स्वीकुर्म इति चेन्न। युक्तिविरो
धेतस्यापि त्याज्यत्वात्। शाश्मतरिति। परत्वादन्तरङ्गत्वाच्च यङादेशे कृते द्वित्वम्॥ इति यङन्तप्रक्रिया ॥

त्वमेव युक्तम्। विषयभेदादिति। अपवादत्वेन बाधे विषयैक्यापेक्षणादिति भावः। एकवचने गुणसत्वेन विशेषाभावादाह। चेकीम इति। प्राग्वदिति। नन्वस्य चाविसुक्ता
र्थं च दावश्यकमतो न लुमतेति निषेधबाधेनमानम्: ... त्वतन्त्रापि चाविति दीर्घेणेष्टसिद्धिः। ईत्वस्य येनानाप्राप्तिन्यायेन दीर्घापवादत्वात्। दीर्घान्तेपि पर्जन्यवल्लक्षणप्रवृत्तेरि
ष्टप्राप्तेरिति चेन्न। इष्टापत्तेः। तत् ध्वनयन्नाह। नस्यापीति। दीर्घोच्चारणं प्राग्वदिति वदतोपीत्यर्थः। नन्वसंभवरूपविरोधाभावात्परत्वमसङ्गतमत आह। अन्तरङ्गत्वाच्चेति। रामः
पिकुर्तीति विषयसप्तमीत्यन्तरङ्गत्वमिति भावः ॥ ॥ इति यङन्तप्रक्रिया ॥ श्रीगुरुचरणाभ्यां नमः ॥ ३०६

ज्ञापकमाश्रित्येति। तच्चपूर्वमुपपादितम्। ज्ञापकत्वाच्चेति। दाधर्त्तीति सूत्रे हि तन्निपातनं भूधातोश्छन्दसि लोट्येव गुणाभावो नान्यत्रेत्येतदर्थमिति स्पष्टं भाष्ये। तत्र सङ्को
चेमाभावेन यङ्लुकि छन्दसि लडादाविव लोट्यपि गुणो बोध्यते। न च क्वाप्यन्यत्र माभूत् बोभवतीति लेटि भाष्ये उदाहरणाच्छन्दोविषयक एव नियमः स्यादिति वा
च्यम्। तस्योपलक्षणत्वादिति दिक्। गुणनिषेधः सिध्यतीति। धात्वंशलोपनिमित्तत्वादार्द्धधातुकस्येति भावः। तद्व्याहतमिति। सप्तम्यन्तप्रत्यये परतः पूर्वकार्यत्वेना

यङो। अचीति न प्रत्याहारो गृह्यते किन्तु प्रश्लिष्टः यङः साहचर्यात्तदाह। अच्प्रत्यय इति। चकाराद्धलमित्यनुकृष्यते। ये तु छन्दसीत्यनुकर्षयन्ति तैरपि
भाषायां यङ्लुक् क्वचित्स्वीकर्त्तव्य एव। हुश्नुवोः सार्वधातुक इति सूत्रे हुश्नुग्रहणं प्रत्याचक्षाणेन वार्त्तिककृता तदनभ्युपगमेपि हुश्नुग्रहणज्ञापकमाश्रित्य
भाष्यकारैस्तदभ्युपगमात्। यथोत्तरं मुनीनां प्रामाण्यात्। बोभूतु इति। निपातनस्यापि ज्ञापकत्वाच्च। एतच्च मूल एव स्फुटीभविष्यति। अनैमित्तिकोयमिति।
बहुलग्रहणेन क्रियमाण इत्यर्थः। अच्प्रत्यये विधीयमानस्तु तन्निमित्तक इति स्पष्टमेव। तेन लोलुवः पोपुवः इत्यादौ न धातुलोप इति गुणनिषेधः सिध्यति।
यङन्तत्वादिति। सन्यङोरिति षष्ठीव्याख्यानादिति भावः। प्राचा तु तत्र सप्तमी व्याख्याय इहानङ्गकार्यत्वान्न लुमतेति द्वित्वनिषेध इत्युक्तम्। तद्व्याहतम्। य
त्तु तत्सौत्रेण व्याख्यातमङ्गाधिकारे विहितत्वादित्यर्थ इति। तन्न। न लुमतेति सूत्रे ऽङ्गाधिकारो न गृह्यते किन्त्वाङ्गमनाङ्गं वा प्रत्यये परे पूर्वस्य विधीयमानं स
र्वमिति भाष्यादौ निर्णीतत्वात्। अन्यथा राजपुरुषादौ नलोपाद्यसिद्धिप्रसङ्गादिति दिक्। नन्वेकाच इति विधीयमानं द्वित्वं श्तिपा शपेत्यादिना निषिध्यते
ति चेन्न। गुणो यङ्लुकोरित्यनिकौ च लुकीत्याद्यभ्यासकार्यविधिभिर्द्वित्वानिषेधस्य ज्ञापनात्। धातुत्वादिति। क्विबन्तेष्विव प्रत्ययोत्पत्तेः ॥

नङ्गकार्यत्वोक्तिर्विरुद्धेति भावः। न लोपाद्यसिद्धेरिति। आङ्गस्यैव निषेध इत्यभिमतिस्यानङ्गत्वात् निषेधाभावे मत्वे न नलोपो न स्यादिति भावः। द्वित्वानिषेधस्येति। त
त्परिभाषाभावस्यैव ज्ञापकमित्यन्ये ॥

म॰ प्र॰ प्राक्प्रवृत्ता याद् इति। यङ्न्त इति शेषः। निरपवादत्वेनेति। एकदेशविकृतन्यायेनावस्थितत्वादिति भावः। यथोद्देशेद्दम्। भूवादिसूत्रेति। चर्करीतमित्यस्यादादौ पाठेन यङ्लुङ्
३०७ न्तस्याभ्वादित्वादिति भावः। वर्णमात्रवृत्तिरूपेति। प्राधान्येन तद्वृत्तिरूपावच्छिन्नाश्रयमित्यर्थः। विद्यार्थमिति। यत्र प्रत्ययः प्राधान्येनाश्रीयते तत्राल्विधौ विद्यार्थः। यथाऽतृणे

प्राक्प्रवृत्ता या धातुसंज्ञा याः निरपवादत्वेनावस्थितत्वात्कार्यकालपक्षेपि भूवादिसूत्रप्रवृत्तेश्चेति भावः। यत्तुक्ताचख्युः प्रत्ययलक्षणेन धातुत्वमिति। तदन्याय्यम्। उपदेशेन सिद्धे दुर्बलस्यातिदेशस्यानादर्त्तव्यत्वात्। यत्रहीति। यस्तेन तदर्थप्रतिपादकं माधवग्रन्थमनूद्य प्राचीनग्रन्थव्याचक्षाणैरुक्तम्। तदेतदाकारविरुद्धम्। यत्तु दाधर्ति सूत्रे भाष्यम्। तेतिक्ते इति किं निपात्यते तिजेर्यङ्लुगन्तस्यात्मनेपदं निपात्यते। नैतदस्ति प्रयोजनम्। सिद्धमात्मनेपदम्। अनुदात्तङित आत्मनेपदमिति नियमार्थन्तर्हि भविष्यति। अत्रैव यङ्लुगन्तस्यात्मनेपदं भवति नान्यत्रेति। क्व मा भूत्। बेभिदीति चेच्छिदीतीति इति। तथा च वामनोपि तेतिक्ते इति तिजेर्यङ्लुगन्तस्यात्मनेपदं निपात्यते। यङोङित्वात्प्रत्ययलक्षणेन यङ्लुगन्तस्यात्मनेपदमन्यत्र न भवतीत्येतदेव ज्ञापकमिति। उपपादितञ्चैकैयटहरदत्ताभ्याम्। यद्यप्यनुदात्तङित इति ङित्वनिमित्तमात्मनेपदं न प्रत्ययनिमित्तम्। तथापि लोलूयत इत्यादौ यङ्न्तादात्मनेपदं तत्प्रत्ययस्य ङित्वादिति प्रत्ययलक्षणं भवत्येव। न चैवं ङ्कोहितमित्यवादयोपिस्युरिति शेक्यम्। वर्णमात्रवृत्तिरूपाश्रयस्यैव द्वितीयप्रत्ययग्रहणेन व्यावर्तितत्वात्। यदुच्यते वर्णाश्रयेनास्ति प्रत्ययलक्षणमिति। ङित्वन्तु समुदायवृत्ति न वर्णमात्रवृत्तीति न व्यावर्त्यत इति। इह तंदत्तदित्यादिना न व्यावर्त्यत इत्यन्तेन संदर्भेण माधवं प्रति किं दूषणमभिधित्सितम्। आकारविरोधो युक्तिविरोधो वा। नाद्यः। प्रत्ययलोप इ—ति सूत्रे हि विद्यार्थं नियमार्थञ्चेति पक्षद्वयमाकरे उपन्यस्तम्। आद्ये यत्र वर्णस्य विशेषणतया आश्रयणं तत्सिद्धिः फलम्। यथाऽतृणेडित्यत्र इमागमस्य। द्वितीये तु सुदृषदित्यत्र सोर्मनसी अलोमोषसी ॥ ७५ ॥ ङित्यादौ हलादौ पिति सार्वधातुके विधीयमान इमीति भावः। नियमार्थमिति। यत्र प्रत्यय राम॰
स्यासाधारणं रूपमाश्रीयते तत्रैव कार्ये प्रत्ययलोपे, न तु प्रत्ययाप्रत्ययसाधारणमित्येवं नियमार्थमित्यर्थः ॥ ३०७

असन्त्वत्वेति। असन्त्वं हि प्रत्ययाप्रत्ययसाधारणम्। अभ्युच्चयवादमात्रमिति। तृणह इति सूत्रे। विनेत्यनुवर्त्य तृणहानि इत्यादिप्याप्तेर्नोहलीत्यननुवृत्त्याः तृणेडित्यादिसिद्धावन
न्त्र फलाभावादिति भावः। प्रथमपक्षेति। वार्त्तिकसंमतविधिपक्षेत्यर्थः। अनास्थेति। पूर्वपक्षानुसारेण दुर्बलसमाधानत्वादिति भावः। वस्तुतो वार्त्तिकानुसार्येकदेशिनः शङ्कायान्तद
नुसार्येकदेशिन एव तत्समाधानं न सिद्धान्तिन इत्यदोषः। आत्मनेपदमित्येव सिद्धान्तयुक्तिरिति बोध्यम्। न च यत्र प्रत्ययस्य विशेष्यत्वं तत्रैवेति नियमोऽस्तु एवञ्चेदं भाष्यं मुख्यपक्षाभिप्र
इत्यसन्त्वप्रयुक्तस्वरस्यस्यानिवत्त्वबलेन प्रापितस्य निवृत्तिः फलम्। तत्राद्यः पक्षोऽभ्युच्चयवादमात्रं द्वितीयस्तु मुख्य इति भाष्यकैयटपदमञ्जर्यादिषु स्थितम्।
एवं स्थिते दाधर्त्तिसूत्रस्थं भवदुपन्यस्तं भाष्यं प्रथमपक्षाभिप्रायेण। अत एव हि नियमार्थं तर्हि भविष्यतीति वदता भाष्यकारेण तत्रानास्था ध्वनिता। अन्यथा — तर्हीति
भविष्यति इति च न ब्रूयात्। एतेन तदनुसारिणो वृत्तिकैयटहरदत्तादिग्रन्था अपि व्याख्याताः। माधवस्तु द्वितीयपक्षाभिप्रायेण प्रवृत्तः। तथा च मुख्यपक्षपातिनि माधवग्र
न्थेऽभ्युच्चयपक्षबलेनाकरविरोधोद्भावनं कथमौचितीं लभेत। नापि युक्तिविरोधः। संभावितानां विरोधानामाकर एव बोधितत्वात्। भवद्भिरिह विशिष्यतदनुप
न्यासाच्चेति दिक्। यद्यपि वदन्ति अदादिषु चर्करीतं परस्मैपदीति परस्मैपदग्रहणं भाष्यकारोक्तनियमसिद्धपरस्मैपदानुवादः। अदादित्वमात्रं तु विधीयत इति। अ
त्रेदं वक्तव्यम्। परस्मैपदीति पाठ एव तावत्प्रायेण नास्ति नियमसिद्धमित्यप्यसङ्गतम्। अप्राप्तेरेवोक्तत्वात्। एवञ्चानुवादोऽपि नास्त्येव। अदादित्वविधानं व्यर्थम्। न
हि अदादीनामपि अदादित्वं विधीयते। तत्र पाठमात्रेण तन्निर्वाहात्। तदेतत्सकलं ध्वनयति। चर्करीतं चेत्यदादौ पाठाच्छपो लुगिति ॥
यकमेवेति वाच्यम्। एजेत्यादौ पदत्वानापत्तेः। आकर एव बोधितत्वादिति। तदुद्धारप्रकारश्च अविनेत्याद्यनुवृत्तिरूप उक्तः। वस्तुतस्तिजेरनुदात्तत्वात्तेतिक्ते इत्यत्रानुदात्तेत्वात्तङिति श
ङ्कार्थः। श्तिपा शपेति निषेधस्तु नास्त्येवेति नियमेन वारणमिति भाष्यार्थः। ननु परस्मैपदीति पाठाभावेऽपि चर्करीतमित्यस्य परस्मैपदिसमभिव्याहारेण पाठात् यङ्लुगन्तस्य परस्मैपदि
त्वं बोध्यत एवेत्यत आह। नियमसिद्धेति। तन्निर्वाहात्। अदादित्वनिर्वाहात्। अदादौ पाठादिति। एवं श्यनाद्यप्रवृत्तिरित्यपि बोध्यम् ॥

नेदेतेदिति। वहयतीत्यस्यारुचिग्रस्तत्वमित्यर्थः। इत्यर्थादिति। नाग्लोपीति निषेधस्तु न प्रवर्तितानित्यत्वाचेत्यभिमानः। सदृशत्वात्सणिकश्री शब्दात् णिचि श्रीसदृशीं शोभावत्त्वेनाकरोदित्यर्थः। इत्यन्ये। असस्रजदिति। नन्विदमयुक्तं णौ चङ्युपधाया इति सूत्रेनाग्लोपीति प्रत्याहारग्रहणस्य वृद्धेर्लोपो बलीयानित्यर्थज्ञापकत्ववदतो भाष्यकृतः प्रामाण्यादिकारोकारोपधाणौ संभावस्यैके पठन्ति युक्तत्वात्। नन्वेकारोकारान्तेलोपस्य स्थानिवत्त्वादेव ह्रस्वप्राप्तौ अकग्रहणं वैयर्थ्याद्गुणप्रौढिवादइति वाच्यम्। चङ्परनिर्ह्रासेऽस्थानिवत्त्वनिषेधादिति चेन्न। स्रग्विन्शब्दाण्णिचि विन्लोपे कृते निमित्ताभावेन नाग्लोपीत्यस्य प्रवृत्तौ फलाभावेन ज्ञापकत्वस्य सुस्थत्वात्। इतो णेरभावे हि लुग्विधायके विन्ग्रहणं व्यर्थमेव स्यात् विन्विषये मतोः सत्त्वेन तल्लुकैव स्रजिमदित्यादिसिद्धेः।

नदेतेध्वनयतीत्यवहयतीत्यन्यदिति। श्रीमतीमिति। एतेन सप्तस्वरिस्तुभुवनान्तरेषु यामदृक्षुयाशिश्रयदाश्रयः श्रियामिति माघश्लोके शिश्रयदिति प्रचुरः पाठोऽपि व्याख्यातः। श्रीमतीमकरोदित्यर्थात्। पयस्यतीति। अत्रेदमवधेयम्। विन्मतोर्लुकि सन्वदित्वादिकं न। अग्लोपित्वात्। अनग्लोपिनेति सिद्धान्तस्य भाष्यारूढत्वात्। तेन स्रग्विनमाख्यत् असस्रजत्। पयस्विनीम्। अपपयसत्। गोमन्तम्। अजुगवत्। स्रजं पयइत्यादिविग्रहे तु असिस्रजत्। अपीपयत्। अजूगवदित्यादि। एवञ्च प्राचां सुध्यातोः सन्वद्भावो वेति व्यवस्थाशून्यं यदुक्तं तन्निर्मूलत्वादुपेक्ष्यम्। स्थवयतीति। अत्र गुणस्याचो ञ्णितिवृद्धिः प्राप्ता अङ्गवृत्तपरिभाषया प्रातिपदिकाद्धात्वर्थे इति बहुलग्रहणाद्वा नेति सिद्धान्तः। एवन्द्वयतियवयतीत्यत्रापि। ज्यापयतीति। वृद्धस्य चेति ज्यः। सच प्रियस्थिरेति वर्षादेशेन सह विकल्प्यते तदाह। वर्षयतीति। उरुमिति। अत्र वरादेशे वृद्धिर्नेति सुधातुवृत्तौ माधवः। ऊर्णोतेर्धातुत्वेनोतु स एव वृद्धिमुदाजहार। बाहुलकादिह वृद्धिविकल्प इति तदाशयं ध्वनयन्नुदाहरति। वरयति। वारयतीति। इति नामधातुप्रक्रिया। कण्ड्वादिभ्यो यगित्यनुवर्तते। वेति निवृत्तं तदाह। धातुभ्यो नित्यमिति। द्विधा इति। यदि हि प्रातिपदिकान्येव स्युः तर्हि यकः कित्त्वं व्यर्थं स्यात्। तद्धि गुणनिषेधार्थम्। यदि तु धातव एव स्युः तर्हि कण्ड्वादौ दीर्घान्नात्रपठेत्। अकृत्सार्वेति सिद्धत्वात्। ७ विनन्तात्तु नेश्वमादिरजादौ गुणवचनादेवेत्युक्तेः। अत्रान्तरङ्गत्वात्पूर्वं ज्ञातस्य भत्वस्य णिलोपेऽप्यनिवृत्तेर्नकुत्वमिति दिक्। गोमन्तमजूगवदिति पाठः। अचो ञ्णितीति वृद्धेर्दुर्वारत्वात् प्रापयतीति भाष्योदाहरणेन दर्शनात् स्रजजयतिन्यायेन वृद्ध्यभावे तु ह्रस्वपाठोऽपि सूप⁻पादः। असिस्रज⁻दित्युत्तरमपपयदिति पाठः। पयस्शब्दात् णिच्यस्लोपित्वात्। सिद्धान्त इति। दवयतीति टेरिति सूत्रे भाष्ये उदाहरणात्। अत एवादेशोत्तरमुपधावृद्धिरपि नेति भावः। वारयतीति वरयतीत्युचितं द्वयवतीतिवत्॥ ॥ इति नामधातुप्रक्रिया॥

म·श·
३२०

सार्थक इति। नैतेभ्यः क्विप् इष्यत इति भाष्येण यगन्तेभ्यः क्विबभावात् यङन्तेभ्यः क्विपेदं सिद्धमिति न शङ्क्यमित्यर्थः। कृञर्थ इति। करण इत्यनुवर्तत इति तद्भावः। कृञर्थाविवक्षायां कण्डूमित्याद्य
द्वैविध्ये तु धातुभ्यो यकि गुणनिषेधेन कित्त्वं सार्थकम्। कण्डूरस्त्वित्यादि संग्रहितप्रयोगसिद्ध्यै दीर्घपाठोपि सार्थकः। उक्तञ्च भाष्ये। धातुप्रकरणाद्धातुः कस्य चासञ्जनादपि।
आह चायमिमन्दीर्घं मन्ये धातुर्विभाषित इति। यत्तु प्राचोक्तम्। कण्ड्वादिभ्यो यक् स्यात् कृञर्थ इति। यच्च कण्डूं करोति कण्डूयतीति। यच्च नामधातुत्वाद्यथेष्टं द्वित्वप्राप्ते कंड्वादेस्तृ
तीयस्येति निषिध्यत इति न देतत्सर्वमाकरविरुद्धम्। अनेकदोषप्रसङ्गाच्च। तथाहि। कृञर्थ इत्युक्त्या करण इत्यस्यानुवृत्तिर्लभ्यते। तृच्चार्थे प्रत्युतानर्थकारिणि जन्ते विवप्र
कृतिप्रत्ययाभ्यां व्यापार द्वय प्रतीत्यापत्तेः। कण्डूं करोतीति विग्रहोप्यशुद्धः। न च प्रातिपदिकान्येव कण्ड्वादयः। तेभ्यः करणे यगिति तस्यार्थ उचितः। धातवः प्रातिपदिका
नि चेति कण्ड्वादयो द्विविधा इत्यस्य प्राचाप्युक्तत्वात्। अत एव नामधातुत्वादित्याद्यप्यशुद्धमेव। धात्वधिकाराद्धातुभ्य एव यगिति सिद्धान्तात्। धातोर्लङादौ कण्डूवतीत्याद्यनि
ष्टप्रसङ्गाच्चासुस्कदुः स्वादिप्रातिपदिकेभ्यो यकि अल्लोपासंभवेन सुस्यतीत्याद्यसिद्धिप्रसङ्गाच्च। यत्तु परिष्कुर्वन्तीत्यादि लग्रन्थाशयः। कण्ड्वादीनि प्रातिपदिकान्येव
यक् वैकल्पिकः। अत एवोक्तं कृञर्थ इति विगृहीतञ्च कण्डूं करोतीति न हि धातुभ्यो यकि प्रातिपदिकेभ्यो वा नित्ये यकि अयं विग्रहः संभवति। एवञ्च नामधातुत्वादिसमगे
या कुथन्तर्हि द्वैविध्यमुक्तमिति चेत्। इत्थं यगन्ताः सन्तो धातवः। केवलास्तु प्रातिपदिकानीति। यद्वा यगन्तधात्ववयवे श्रुते धातुशब्दो गौणः। प्रत्यय सदसद्भावाभ्यामवस्थाभे
दाद्द्वैविध्यम्। नैवं सुस्यतीत्यादौ अतो लोपेन स्यादिति वाच्यम्। यकः कित्त्वेनावश्यकत्वाल्लोपवाधार्द्धधातुकस्यैव ज्ञापनात्। अत एव द्विधा इत्येवोक्तं न तु धातुभ्यो यगिति।
अग्रे द्वं वक्तव्यम्। प्रातिपदिकाद्धिधानं करण इत्यस्यानुवर्तनञ्च न तावत् सूत्रानुगुणम्। त्वदुक्तपक्षे हि यङ्विधेः प्रागेव यकं विदध्यात्। धातोरित्यस्यानपेक्षितत्वात्। तथान्यासे
पाठस्तु धातोरित्यस्य संबन्धमेव द्रढयति। हेतुमतिगुपूधूपेति पूर्वोत्तरसूत्रयोर्धातु ——— ग्रहणसंबन्धस्य निर्विवादत्वात्। तत्र देशपठिते कण्ड्वादिसूत्रे तदुपेक्षायां बीजाभावा
त्। आर्द्धधातुकसञ्ज्ञारूपफलस्य यङादौ निर्णीतस्य यक्यपि सत्त्वाच्च ॥ ७ ॥ पीति तत्तात्पर्यम्। न च प्रातिपदिकान्येवेति। तानि च फलांशमात्रार्थकानीति भावः। अल्लोपासंभवेनेति।

रामः
३२०

द्विगिति। दिगर्थस्तु यथयं नामधातुषित्वे वसिद्धे कण्ड्वादेस्तृतीयस्येत्यस्य नियामकत्वापत्तौ गौरवम्। ममतु विद्ध्यर्थत्वं स्पष्टमेव। नामशब्दस्य सुबन्तपरत्वे तु तद्
प्रांशाम् लेषिरोधः। किंच कण्डूरित्यादौ सत्वभूतार्थाभिधानात मक्समभिव्याहारे चासत्वभूतार्थाभिधायित्वादर्थभेदेन शब्दभेदाच्च द्वैविद्ध्यएव पर्यवसानम्। दृषि
एतेनाल्पेषकत्वाल्लाघवाच्चाई धातुकत्वमेव यकः कित्वेन ज्ञाप्यतइति प्रत्युक्तम्। अप्रकृतस्याई धातुकत्वस्यकल्पने प्रकृतधात्वधिकारत्यागे च वि
परीतगौरवे स्फोट्टत्वात्। यङादीनामिव यकोप्याई धातुकत्वसञ्ज्ञाया अनायाससिद्धत्वाच्च। नापीदं भाष्यानुगुणम्। धातुप्रकरणादित्यादि भाष्येणसह
विरोधस्य स्पष्टत्वात्। नापि व्याख्येय ग्रन्थानुगुणम्। द्वैविद्ध्यग्रन्थस्य हृदयशून्यत्वापत्तेः। यत्तु व्याख्यातं यगन्ताः सन्तो धातवइत्यादि तदपि न। यगन्ताः कण्ड्वा
दयइत्यस्यव्याहतत्वात्। नहि यगागमो येन तद्विशिष्टः कण्ड्वादिः स्यात्। कण्ड्वादयइत्यस्य तद्विशिष्ट समुदायोर्थइति चेत्। तर्हि नासौ प्रातिपदिकमिति स्पष्टमेव।
किंच सकल प्रातिपदिकानां कृजादि प्रकृतितया कण्ड्वादितुल्यद्वैविद्ध्य सत्वात्। किमेषामेव विशिष्यतत्कथनेन तस्माद्यथाकरमेवगुणगृह्ये ग्रहीतुमुचितमितिदि
क्। अस्तु। केचिन्मनस्तु प्रताप इति पठन्ति। तत्रापि मनस इत्यर्थनिर्देशान्तर्गतमेव। एवं पूर्वभावेइति पूर्वशब्दोपि। पूर्वभावः पूर्वत्वम्। केचित्तु मनस पू
र्वइति धातूनत्वा मनस्यति पूर्वतीत्युदाजकुः। तच्च मतन्यातु चन्द्रोदये समर्थितं शब्दकौस्तुभे तु दूषितन्ततएवावधार्यम्। इति कण्ड्वादयः॥ प्रथमस्येत्युप
लक्षणम्। अजादेस्तु द्वितीयस्येत्यपि बोद्ध्यम्। यथेष्टमिति तु नेह प्रांशं नामधातुत्वस्य निराकृतत्वात्। अतएव मूले कण्ड्वादयो नामधातुषु नोक्ताः। किंतु तान्स
माप्य पृथगेवोक्ताः। प्राचस्तु तन्मद्ध्ये पाठो दुष्टएव। अचः परस्मैयेति। हेतुमण्णिच्प्रकरणेप्युत्यादितमेतत्। षत्वन्नास्तीति। आदेशोयः सकारस्तस्य हि ष
त्वमुक्तमयन्त्वादेशस्यावयवोनत्वादेश इति भावः॥ इति प्रत्ययमाला ॥
त्वमिति। वृत्त्यावर्थनिर्देशरहितगणपाठे सुलेट्लोट्लोलाद्दत्येव पाठस्तत दूषितमिति भावः॥ इति कण्ड्वादयः॥ श्री नमः ॥ प्रत्ययमालाच ॥

इत्यादेरिति। आदिना विभाषाभावादिकर्मणोरित्यादिनं ग्रहः। येन च पदान्तरसंबन्धनिमित्तकार्यं पदसंस्कारपक्षानाश्रयणं ज्ञाप्यत इति भावः। अत्र स्मृताविति। स्मरणपूर्वमाददातीत्यर्थः। सिद्धत्वा
यत्तु दुर्घटवृत्तावुक्तं पदसंस्कारपक्षानाश्रयणाददोष इति। तन्न। पदान्तरसमभिव्याहारे नियमप्रवृत्तेर्दुर्वारत्वात्। अन्यथा युष्मद्यस्मत्सामानाधिकरण्येऽपि त्वदुक्तरीत्या प्रथमपुरुषाप
त्तेः। वानि स्वपामित्यादेर्वैयर्थ्यापत्तेश्चेति दिक्। आङो दः। कथं तर्हि व्याददते विहगा इति मुखं स्वकीयमिति। कर्त्रभिप्राये भविष्यति। एतेन मुखं व्यादाय स्वपितीत्यत्र सुप्ताव्याददत इति
व्यत्यासेन प्रयोग इति प्रत्यभावपरीक्षायां वाचस्पतिप्रयोगोऽपि व्याख्यातः। आङो दः। डि इति शिष्टस्य ग्रहणान्नेह। भिक्षामाददाति। अत्र स्मृतावाकार इति हरदत्तः। एतेन प्रतीकमादद
मीति विवरणग्रन्थो व्याख्यातः। शिशेर्जिज्ञासायाम्। शिक्षविद्योपादाने इत्यस्य नेह ग्रहणम्। अनुदात्तेत्त्वादेव सिद्धत्वात्। किं तु शकेः सन्नन्तस्य। स निमीमेतीस्। तदेतदाह। धनुर्विषय
इत्यादिना। नियमार्थमिति। न चैवं नाथतेरनुदात्तेत्त्वं व्यर्थमिति वाच्यम्। तस्य नाथत इति युजर्थत्वात्। मातुरनुहरतीति। सादृश्यमात्रमिह विवक्षितम्। न तु प्रकारता ताच्छील्यम्। श
प उपालम्भे। कथं तर्हि नीवीं प्रति प्रणिहिते तु करे प्रियेण सख्यः शपामि यदि किंचिदपि स्मरामीति। अत्राहुः। स्वाशयं प्रकाशयामीत्येव तावदिह विवक्षितं न तु शपथ इति। प्र
काशन। स्थेयो विवादपदनिर्णेता। तिष्ठन्तेऽस्मिन्निति व्युत्पत्तेः। बाहुलकादधिकरणे यत्। उदोऽनूर्ध्व। उत्पूर्वात्तिष्ठतेरनूर्ध्वे परिस्पन्दे वर्तमानादित्यर्थः। इह प
रिस्पन्दस्यानूर्ध्वत्वं नामोपरिदेशसंयोगफलकत्वाभावः। यद्यप्युदोऽनूर्ध्व इत्युक्तेऽपि क्रियावाचकत्वं लभ्यत एव तथापि परिस्पन्दतालाभार्थं कर्मपदम्। तदेत
दाह। ईहायामेवेति। समो गम्यृच्छि। वृत्तिकारस्तु समो गम्यृच्छिप्रच्छिस्वरत्यर्तिश्रुविदिभ्य इति पठित्वा दृशेरुपसंख्यानमाह। तत्र वार्तिकानुपूर्वीभङ्गः केषांचि
देव सूत्रे प्रक्षेपे दृशेरेव बहिष्कारे बीजाभावात् मुनित्रयानुसारिणा तदुपेक्षैवोचितेति भावः। ग्रामं सङ्गच्छतीति। कथं तर्हि तच्चैकं समगच्छतेति। आर्षत्वा
त्। यद्वा चतुर्वर्णादित्वात्स्वार्थे ष्यञ्। एकं समपद्यतेत्यर्थः ॥ दिति। न च नियमार्थम्। विधित्वौचित्यात्। सादृश्यमात्रमिति। एतच्च तद्धितार्थेत्यत्र भाष्ये स्पष्टम्।
न तु शपथ इति। एतद्ध्यनुरोधेन। भाष्ये शप उपलम्भन इति पाठात्। उपलम्भनं प्रकाशनमिति कैयटाच्च ॥

साहचर्यादिति। आत्मानसहकृतादितिभावः।तादृशेनहिलुम्विकरणपरिभाषावाध्यते।अतएवभाष्येसंविनदृत्युदाहृतम्।किंचवेत्तेर्विभाषेतिरुड्विधानेनवेतेरात्मनेपदमावश्यकन्तत्र
वेत्तेरेवेति।पत्येपदिभ्यांसाहचर्यादितिभावः।विन्दतिर्हिस्वरितेत्।सनोविचारणार्थयोस्त्वनुदात्तेत्त्वादेवसिद्धम्।अड्विधौत्विति।लुप्तविकरणेनशास्तिनासाहचर्यादिति
भावः।गन्धनेहिंसेति।गन्धअर्दने।अर्दहिंसायामितिचुरादौपाठादितिभावः।सहसावर्तनेसाहसिकः।ओजःसहोऽम्भसावर्तत इतिठक्।तस्यकर्मसाहसिक्यम्।ष्यञ्।तदेत
दाह।तेनसहसेति।नचैवंपरदारानितिकर्मणोऽनन्वयःशङ्क्यः।साहसिक्यस्यप्रयोगोपाधित्वात्।धात्वर्थस्तुवशीकरणम्।एधोदकस्येति।एधाश्चउदकञ्चएषांसमा
हारएधोदकम्।तस्येतिविग्रहः।उदकपर्यायोदकशब्दोऽप्यस्ति।तथाचहलायुधः।आपस्तोयंवनंसपयःपुष्करंमेघपुष्पंकंपानीयंसलिलमुदकंवारिवाःशंवरं
चार्णःपाथःकुशंजलवनक्षारमंभोम्बुनीरंप्रोक्तंप्राज्ञैर्भुवनममृतञ्जीवनीयंदकञ्चेति।अभिभवेचेति।येत्वभिभवेछन्दसीतिपठन्तितेषामपिछन्दसीविप्रायोवा
दइतिहरदत्तः।माणवकमुपनयतइति।विनिन्युरेनङ्गुरवोगुरुप्रियमित्यत्रतुआचार्यकरणस्याविवक्षितत्वान्नतङ्।हर्म्यतलादिति।भाष्येतुहर्म्यतलमितिप्रचुर
पाठः।तत्रोद्गमपूर्विकायांव्याप्तौक्रमिर्द्रष्टव्यः।कथन्तर्हिनभस्समाक्राममतिचन्द्रमाःक्रमादिति।व्याप्तिमात्रमिहक्रमेरर्थोनतूद्गमनम्।अतोनतङ्।प्रोपाभ्याम्।उ
पक्रमतइति।उपपराभ्यामितितुनेहप्रवर्तते।वृत्त्याद्यर्थाभावात्।अप्राप्तविभाषेति।नचवृत्त्यादिसूत्रंसोपसर्गेचरितार्थमियन्तूभयत्रविभाषास्त्वितिवाच्यम्।उ
पपराभ्यामितिनियमस्योक्तत्वात्।अनुवदतेकठःकलापस्येतिअनुःसादृश्ये।तेनकलापस्येतितुल्यार्थयोगेशेषलक्षणाषष्ठी।समस्ततीया।संपूर्वाच्चरतेस्तृ
तीयायुक्तादित्यर्थः।दाण।भाष्येत्विदंसूत्रंप्रत्याख्यातम्।तथाहि।योदास्यासहभुञ्जानस्तयादत्तंस्वयंभुङ्क्तेस्वयञ्चतस्यैददातितत्रायंप्रयोगइष्यते ॥
हिंसेदृशात्वेलुग्विकरणग्रहणमितिभावः।अनवद्यःशङ्क्यइति।सहसाप्रवृत्तिरेवप्रकुरुतेइत्यस्यार्थस्तत्रचसप्तम्युचितेतिभावः।सहसेत्यस्यबलात्कारेणाऽविचारेण 
वेत्यर्थः।क्रमिर्द्रष्टव्यइति।उद्गममात्रेऽकर्मकत्वमितिभावः।नत्रायमिति।अशिष्टव्यवहारेपरस्परकरणरूपेकर्मव्यतिहारेचेत्यर्थः ॥

तत्रस्वीकारमौपे इति। अत एव इह कस्मान्न भवति स्वं शाटकान्तमुपयच्छतीति भाष्यं सङ्गच्छते। णेरणौ। क्रियापर इति। उत्तरवाक्येनाणौ कर्मणः कर्तृत्वविधानादिति भावः। ननु
कर्मपदस्याक्रियापरत्वे कर्मवत्कर्मणेत्यस्याग्रे णेरणावित्यनेन इत्येव सूत्रणीयं स्यादणौ कर्मस्थक्रियया तुल्यक्रिय एव कर्त्ता ण्यन्ते कर्मवदिति सूत्रार्थ इति चेन्न। विभक्तिद्वैध्याप
तत्र च सहयुक्ते तृतीया। कर्मव्यतिहारे तङ्। दानपूर्वके भोगे यमधातुर्बोध्य इति। एतेन कर्मव्यतिहारोदाहरणेषु व्यतिशब्दप्रयोग आवश्यक इति भाष्यन्नः प्रयुक्ताः सम
इति षष्ठीति। दास्या संयच्छत इत्युदाहृत्य शिष्टव्यवहारे तु ब्राह्मणीभ्यः संप्रयच्छतीति प्रत्युदाहरन् भाष्यकार इह व्याख्याने प्रमाणम्। उपाद् स्वकरणे स्वीकार इति। यत्तु वृत्तिकृ
ता पाणिग्रहणमेवेष्यते तेनेह न। परभार्यामुपयच्छति। दासीत्वेन स्वीकरोतीत्यर्थ इति। तद्भाष्यविरुद्धं तत्र स्वीकारे आत्मनेपदस्योक्तत्वात् इति भावः। तथा च भट्टिः। प्रायुङ्क्त उ
पायंस्त महास्त्राणीति। समः। समो गम्यृच्छिभ्यामित्यतो विच्छिद्य पाठः सकर्मकादपि विधानार्थ इति ध्वनयन्नुदाहरति। सङ्गृणीते शास्त्रमिति। भुजो। भक्षण इति वक्तव्ये अनवन इ
तिवचनमर्थान्तरेऽपि तङर्थमिति ध्वनयन्नुदाहरति। बुभुजे पृथिवीपाल इति। इहेति। उपभोग इत्युपलक्षणम् आत्मसात्करणस्यापि। इह च रुधादेरेव ग्रहणम् अनवन
इति प्रतिषेधात्। संयोगो विप्रयोगश्चेत्युपक्रम्य विशेषस्मृतिहेतव इत्यभियुक्तोक्त्यानुभवबलेन च संसर्गबहिःप्रयोगस्यापि विशेषावधारणोपायत्वात्। तेन भुजकौटि
ल्य इत्यस्य तुदादेः परस्मैपदमेव। विभुजति पाणिम्। णेरणौ। इह स्यादित्यन्तेन णेरिति व्याख्यातम्। अणौ यत्कर्म णौ चेदिति भिन्नं वाक्यम्। कर्मशब्दः क्रियापरः कर्त्तरि क
र्मव्यतिहार इतिवत्। तदेतद्व्याचष्टे णौ या क्रिया सैव चेदिति। सकर्त्तेति वाक्यान्तरम्। अणावित्यादि चेच्छब्दान्तमिहानुवर्त्तते कर्मशब्दश्च कारकविशेषपरः शब्दाधिका
राश्रयणात् तदेतद्व्याचष्टे णौ यदित्यादिना। अपरस्याम् इत्यंशं व्याचष्टे नत्विति। इह प्रसज्यप्रतिषेधो नातीव दुष्यतीति व्याख्यातः। न त्वत्राभिनिवेष्टव्यम्। पर्युदासस्य न्याय्यत्वात्।
लक्ष्यविसंवादाभावाच्च पूर्वविप्रतिषेधेनेति ॥ ७ ते। सैव चेदिति। सामर्थ्यादेवकारलाभः। अध्यारोपितप्रेषण द्वितीयकक्ष्यायामधिकप्रवेशेऽपि तत्तत्तायाः असत्त्वाद्वाक्यस्यैव वैयर्थ्या
पत्तेः। अनुवर्त्तते इति। यद्यप्येकयोगेनानुवृत्तिरिति इको गुणेत्यत्र भाष्ये उक्तं तथाप्यत्र वाक्यभेदसत्त्वात्स्वरितत्वसामर्थ्यादाकाङ्क्षावशाच्च संबन्ध इति भावः ॥

प्र·श० भाष्योदाहरणमिति। नचायंभाष्यप्रयोगः क्रियाफलस्यपरगामित्वे। एवञ्चकर्तृगामिनिक्रियाफलेपरत्वादणावकर्मकेत्यस्यप्रवृत्तौनकिंचिद्बाधकमितिवाच्यम्। तदर्थमावश्यकस्यपरगामि
३२३ त्वपिपरत्वात्प्रवृत्तेर्दुर्वारत्वात्। नहिकर्त्रभिप्रायेइतिनत्रानुवर्त्ततेफलाभावादितिभावः। नचाणावकर्मकादित्यत्रोद्देश्यतावच्छेदकावच्छेदेनान्वयस्यव्युत्पत्तिसिद्धतयाऽण्यन्तावस्थात्वावच्छे
देनाकर्मकत्वप्रतीतेरत्रतदप्राप्तिः। राजानंपश्यतीत्यत्रापितदण्यन्तावस्थात्वादितिवाच्यम्। सामानाधिकरण्येनान्वयभ्रमवारणायतदङ्गीकारादित्यभिमानः। विभाषोपपदेनेत्यस्यविषये
स्यैवप्रवृत्तौदृष्टान्तरमानसत्वेनद्विषयोर्वाचनिकएवसइतिबोध्यम्। अन्यत्रभावक्रिययोः पर्यायत्वदर्शनादाह। अपरिस्पन्देति। विषयत्वापादनंविषयत्वापत्त्यनुकूलोव्यापारः। अंशद्वयेति
अत्रचप्रमाणंस्यंयतेराजेतिभाष्योदाहरणम्। अणावकर्मकादितिप्राप्नोति। निवृत्तप्रेषणत्वेनाकर्मकत्वादितिभावः। नन्वेतत्सूत्रंकर्मवत्कर्मणेत्यनेनैवगतार्थमित्याशङ्क्या
हा। कर्तृस्थेत्यादि। अपरिस्पन्दनसाधनसाध्योभावः। सपरिस्पन्दसाधनसाध्याक्रियातत्रकर्मस्थभावेषुकर्मस्थक्रियेषुचकर्मवदित्यतिदेशःप्रवर्त्ततेनत्वन्यत्रेतिसिद्धान्तयिष्य
तइतिभावः। तत्रकर्तृस्थभावकमुदाहरति। पश्यन्तीत्यादि। ज्ञानविशेषविषयत्वापत्त्युपसर्जनविषयत्वापादनवचनोदृशिः। सकर्मकाणांमंशद्वयाभिधायितायाआवश्यक
त्वात्। धातूपात्तव्यापाराश्रयः कर्त्ता। व्यापारव्यधिकरणधातूपात्तफलशालिकर्मेतिसिद्धान्तात्। तदेतदाह। चाक्षुषेत्यादि। प्रेरणेति। सौकर्यविवक्षयेतिभावः। पश्यतिभावइ
तिकर्त्तरिलट्। उक्तञ्च। निवृत्तप्रेषणंकर्मस्वक्रियावयवेस्थितम्। निवर्त्तमानेकर्मत्वेस्वेकर्तृत्वेवतिष्ठतेइति॥ इहकर्मवदित्यतिदेशस्याप्रवृत्तेःकर्मकर्त्तरियथाययंशब्दादयस्ते
नशुद्धेनकर्त्रातुल्यम्। ततइति। विषयत्वापत्तिमात्रवृत्तेर्दृशेरित्यर्थः। तुल्योर्थइति। विषमयोःप्रेषणप्रतीतेसमयोश्चतत्त्यागादितिभावः। तत्रतृतीयेति। आद्यद्वितीययोस्तुण्यन्त
त्वाभावादुक्तिसंभवस्यनास्तीतिभावः। क्रियासाम्येपीति। प्रथमकक्ष्यासहेत्यर्थः॥ ७ फलव्यापाररूपेत्यर्थः। नचचतुर्थकक्ष्यायांफलमात्रवाचकत्वेनाणौक्रियेत्यंशाभावेनोदाहरणा
नुपपत्तिः। एवञ्चैवंतत्रक्रियाशब्देनग्रहणात्। पद्यातनापितत्समानाधिकरणव्यापारप्रतीतिरस्तिअंशद्वयेत्यस्यव्यधिकरणांशद्वयेत्यर्थः। निवृत्तप्रेषणम्। त्यक्तप्रेषणधात्वर्थफलाश्रयस्वस्व रामः
क्रियावयवे। स्वनिष्ठकर्मतानियामकधातुवाच्यैकदेशेफलरूपेतत्समानाधिकरणव्यापाररूपेवाआधेयतयास्थितमित्यर्थः। निवर्तमानेइति। प्रकृतधात्वर्थव्यापारव्यधिकरणफलाश्रयत्वाभा ३२३
वादितिभावः। अवतिष्ठतेइति। प्रधानभूतधात्वर्थाश्रयत्वादितिभावः। विषयत्वापत्तिमात्रेति। तत्समानाधिकरणव्यापारवाचकादित्यर्थः ॥

न्यूनाधिकभावेति। विनिगमनाविरहादेवकारेणोभयोरप्यव्यवच्छेद इतिभावः। एवकारस्यान्ययोगव्यवच्छेदपरत्वादाह। अधिकेति। एवञ्चाण्यन्तावस्थावाक्यद्वयेपिप्रत्यासत्त्यैवैकवाक्यताह्येवादिनांमते
पिनदोषः। न्यूनत्वमात्रव्यवच्छेदस्तुनोक्तः असंभवात्॥ अध्यारोपितप्रेषणद्वितीयकर्त्रायांसूत्रस्यदुर्वारत्वेनव्यवच्छेदकवाक्यवैयर्थ्यापत्तेश्च। कर्मत्वावस्थायांकर्मनिष्ठफलव्यापारयोरुभयोरपि
द्वितीयामुदाहृत्येति। अणौयाक्रियासैवचेदित्यस्यन्यूनाधिकभावव्यवच्छेदपरत्वेदं बोध्यम्। अधिकव्यवच्छेदमात्रपरत्वेतुप्रथममामप्यादायतत्संभवात्। कर्तृस्थक्रियमुदाहरति। एव
मित्यादिना। इत्थंनिवृत्तप्रेषणप्रक्रियांमनुसृत्यअध्यारोपितप्रेषणक्रियायामाह। पद्येति। हेतुत्वारोपादिति। अत्रापिसैवकर्तृविवक्षैवबीजम्। प्रेषणांशत्यागेनप्रेषणान्तरारोपेणापिसै
कर्तृप्रतीतेरनुभवसिद्धत्वादितिभावः। अर्थप्राप्तवदिति। उदाहरणीभूतयोऽश्वारमकस्यो पद्यद्वयेपिप्रेषणांशभानाभावादितिभावः। आधिक्यादिति। अस्मिन्पक्षेणौवत्ताक्रियेत्यनेनाधि
क्यमात्रंव्यवच्छिद्यतेनतुन्यूनत्वमपि। अन्यथातृतीयकस्यायामपिनस्यात्। प्रकृतसूपात्तप्रेषणांशत्यागेनन्यूनताध्रौव्यादितिभावः। णेरितिकिम्। आरोहन्तीतिनिवृत्तप्रेषणान्माभूत्। न
चणौचेदितिवाक्यशेषेश्रुतत्वात् णेरेवभविष्यतीतिवाच्यम्। अण्यावित्यस्यापिश्रुतत्वात्। किंचउत्तरार्थमवश्यंणेरितिवाच्यमेवतदिहैवस्पष्टार्थमुक्तम्। अणौयदित्यादिचेदित्यन्तङ्किम्।
अध्यारोपितप्रेषणपक्षेद्वितीयकस्यायांमाभूत्। अणौयत्कर्मणौचेत्सकर्तेतिकिम्। निवृत्तप्रेषणपक्षेतृतीयकस्यांमाभूत्। वाक्यार्थत्रितयंसूत्रेद्वौचपक्षावुदाहृतौ। कस्याञ्चतस्रस्तित्वस्य
पक्षयोर्याउदाहृताः॥ ॥ प्रथमंस्यतृतीयेहतृतीयेननिवारिता। द्वितीयस्यद्वितीयातुद्वितीयेनेतिसङ्ग्रहः॥ ॥ यत्तुमाघकाव्येकरेणुरारोहयतेनिषादिनमिति। तत्णिचश्चेतिसिद्धम्।
नतुप्रकृतसूत्रस्यविषयः। अध्यारोपितप्रेषणद्वितीयकस्यारूपत्वात्। एतेनसत्सन्ततंदर्शयतेगतस्मयःकृताधिपत्यामिवसाधुबन्धुतामितिव्याख्यातम्। बन्धुतांतंपश्यतिसतांदर्शयते।
यद्वा। बन्धुताकर्तृकृताधिपत्यामिवलोकःपश्यतिसतुदर्शयति। उभयथापिणिचश्चेत्येवतङ् नतुप्रकृतसूत्रेणेतिदिक्। अत्रेदमवधेयम्। कर्मशब्दोऽत्रक्रियापरइतिकाव्याऽऽकरग्रन्थेषुयद्यपिनो
क्तंतथापिन्याय्यत्वात्मुनित्रयानुगुण्याद्बाधकाभावाच्चहतयोक्तम्॥ ॥ धातुवाच्यत्वेनाकर्मकाणामंशद्वयाभिधायकत्वेपिनाधिक्यमितिबोध्यम्। आधिक्यमात्रं। व्यवच्छिद्यतेइति। एतदेवन्या
य्यमित्युक्तम्। नन्वण्यावित्यस्यश्रुतत्वेपियथावारणसीस्थोवरोमथुरायामस्तिचेद्विवाहोभवतीत्युक्तेविवाहाधिकरणत्वंमथुरायाएवप्रतीयतेनतुश्रुतायाअपिवारणस्यास्तथाअणौयाक्रियासाणौचे
त्क्रियातत्रयत्कर्मतच्चेण्णौकर्तादित्युक्तेण्यन्ताधिकरणत्वमेवात्मनेपदस्यप्रतीयतेनत्वण्यन्ताधिकरणत्वमतआह। किंचेति ॥

भ·प्र· ३२५

ण्येकर्मत्वं प्रतिपाद्यते इति। अण्यौ द्विकर्मकाणामेव उदाहरणत्वसंभव इति भावः। कर्त्तृत्वप्रतिपादनादिति। अण्यौ यत्कर्म स कर्त्तेति वाक्ये उद्देश्यतावच्छेदकावच्छेदेन विधेयान्वयस्यौत्सर्गिकत्वे नकर्मत्वावच्छेदेकर्त्तृत्वविधानेन कर्मसत्ताप्रतिपादनस्य कर्त्तुमशक्यत्वेन कर्मान्तरनिवृत्तिपरत्वस्य वक्तुमशक्यत्वादिति भावः। अण्यौ कर्त्तृत्वादिति। कर्त्तृकर्मेतरकर्माभावस्यैव भवताविव क्षितत्वादिति भावः। ननु स्थलरूपमत्राधिकं कर्म। तस्य मूलभूतान्यन्तावस्था मनुष्या आरोहयमाणं हस्तिनं आरोहयन्तीत्येवसौकर्यातिशयप्रतिपादनाय प्रेरणावृद्धिवत् तत्प्रतिपादनाये

प्राचा ग्रन्थास्तु सर्वेपि प्रायेण शिथिला इत्यूहृ इति ज्ञात्वा कृतद्विं चितत्स्यातन्त्रं इत्यूह्यतां बुधैः। तथाहि। इह सूत्रे अण्यौ यत्कर्मण्यौ चेन्न देवकर्मेति कर्मान्तरनिवृत्तिः क्रियते न तु ण्यौ कर्मण्यौ कर्तृत्वं प्रतिपाद्यते। स कर्त्तेति वाक्यान्तरेण तस्य कर्त्तृत्वप्रतिपादनात्। एकैकस्याङ्क्रियायां कर्त्तृत्वकर्मत्वासंभवात्। न चैवं दर्शयते भृत्यान्राजेति भाष्यविरोधः भूस्वरूपस्य कर्मणः सत्त्वादिति वाच्यम्। अण्यौ ये कर्त्तृकर्मणी तद्भिन्नकर्मव्युदासे तात्पर्यात्। अत्र चोक्तभाष्यस्यैव प्रमाणत्वात्। एवञ्च स्मरयत्येनं वनगुल्मः स्वयमेवेति को किलस्य कर्मत्वे पि प्रत्युदाहरणं युज्यत इति तावत्कैयटेनोक्तम्। तच्चैतव्याख्यातृभिः परिष्कृतम्। कर्त्तरि कर्मेत्यतः कर्त्तरीत्यनुवृत्तं प्रथमया विपरिणम्यते। सम्बध्यच्च यदिति नपुंसकमनपुंसकेनैत्ये कशेषः। तेनाण्यौ कर्मकर्त्राण्यौ कर्मत्वेप्यदोषः। एवञ्च करेणुरारोह्यते निषादिनमिति माघप्रयोगोप्युपपद्यत इति। अत्रेदं वक्तव्यम्। एवं वर्णयतां केयटादीनां प्रकृतसूत्रस्य भाष्यवार्त्तिकग्रन्थाः सर्वेप्येव विरुध्यन्ते। आरोहयमाणो हस्ती स्थलमारोहयति मनुष्यानित्यत्रातिव्याप्तिशङ्कायां मनुष्यानिति कर्मणः सत्त्वान्नातिव्याप्तिरिति हि प्रथमप्रघट्टके स्थितम्। कर्मकर्त्तृत्वात्सिद्धमिति शङ्कायां यक्चिणोर्निवृत्त्यर्थं नियमो यमिति हि द्वितीयप्रघट्टके। कर्त्तृस्वभावकार्यमिदं सूत्रमिति तु तृतीये प्रघट्टके। तत्राद्यो विरुद्धः मनुष्याणामण्यौ कर्त्तृत्वात्। वफलांशवृत्त्यादिकर्मकत्वकरणात्। एवञ्चोर्ध्वदेशः न तत्त्यं वस्तु तदुभयसंयोगानुकूलो व्यापारो धात्वर्थः। स्थलशब्देन गजपृष्ठसंकाश्रमयमुपवेशनस्थानमुच्यते। आरोहन्ति हस्तिनं हस्तिपका इति त्वारोहयमाण इत्यस्यैव मूलभूता आरोहयमाण इत्यन्तं सूत्रोदाहरणप्रदर्शनमारम्भार्थं हस्तीति मध्यमणिन्यायेनोभयान्वयि यथा तत्रानेनात्मनेपदं स्यात्तथात्रापि स्यादिति प्रथमप्रघट्टकाशय इति चेन्न। मनुष्याः स्थलमारोहन्तीति तन्मूलभूतान्यन्तावस्थाप्रदर्शनपरतद्व्याख्यानग्रन्थविरोधात् ॥ प्र·भः ३२५

यामेवेति॥ आधृषीयत्वेन पक्षे णिजभावादिति भावः॥

नचलनार्थत्वमिति। किन्तु स्पन्दनार्थत्वमिति भावः। स्पन्दनत्वञ्च द्रवद्रव्यजन्यतावच्छेदकं ज्वलनत्वव्याप्यजातिविशेषरूपमिति चलनार्थत्वमिति बोध्यम्। अथ कथमिति। निगरणशब्देन भ

क्षणमिव न पाद्मीति सूत्रेण ग्रहणात्पानमपि गृह्यते। यद्यपि द्रवद्रव्यस्य गलादधःकरणं पानं तथापि द्रवःद्रव्यस्योपलक्षणत्वेन धात्वर्थत्वाभावान्निगरणार्थत्वमस्त्येवेति भावः। वस्तुतः पानं ना

आह च। स्वरितत्वाद्वाहिः क्र्यादौ लिखितं कश्चुरादिषिति। तन्नेति बहवः। चन्द्रो हि णिजभावपक्षे स्वरितेत्त्वं चरितार्थमित्याह। मैत्रेयादयस्तु स्वरितेत्त्वमनाकरमित्याहुः।

तदेतत्सर्वं हरदत्तोऽपि सञ्जग्राह। एवं विधिर्नञ्चुरादिणिजन्तात्स्यादिति कश्चन निश्चिनुते स्म। आप्तवचोऽत्र न किञ्चन दृष्टं लक्ष्यते स्वरितेत्त्वमनार्षमिति॥ समुदाङ्भ्यः। आङ्पू

र्वकस्य यमेः सकर्मकार्थम्। अकर्मके त्वाङो यमहन इत्येव सिद्धम्। अनुपा। अकर्मकात्त्वेत्येव सिद्धे वचनमिदं सकर्मकार्थमिति ध्वनयन्नुदाहरति। गाञ्ज्ञानीत इति॥ इत्यात्मनेप

दम्। परैर्मृषः। यौजादिकस्येति। सहि स्वरितेत्। शाकटायनमते त्वनुदात्तेत्। उभयथापि न्याय्यमेवेह ग्रहणम्। उपाद्यमः सकर्मकविषयमिदमुत्तरसूत्रानुरोधात्। अत एवाह य

न्नदत्तमिति। बुधयुधादिहप्रद्रुस्रूणां यदा न चलनार्थत्वं तदर्थं ग्रहणम्। चलने तु उत्तरसूत्रेण सिद्धम्। निगरणा। निगरणं भक्षणम्। अदेः प्रतिषेध इति। एतच्च ग

तिबुद्धीति सूत्रे भाष्ये उक्तम्। वृत्तिकृते ह्यस्य स्थले योजितम्। अथ कथम्। न पीयतां नाम चकोरजिह्वया कथञ्चिदेतन्मुखचन्द्रचन्द्रिका। इमाङ्गिमाचामयसे नवस्तु

षीविरञ्चकोरस्य भवन्मुखस्य शीदिति श्रीहर्षः। आङ्पूर्वाच्चमेरनेन परस्मैपदौचित्यात्। सत्यम्। आचामयेति लोडन्तं छित्वा किं नाचामयेरिति व्याख्येयम्। अस्य

स्त्रीर्थ...स्त्रीः तया सह वर्तमाना से। ततः संबोधने सुः सलक्ष्मीके हे दमयन्तीत्यर्थः। अणावक। अणौ किं आरोहयमाणं प्रयुङ्क्ते आरोहयते। णेरणाविति सूत्रेउ

दाहरणत्वेन यो ऽकर्मको निर्णीतस्तस्माद्धि तीयेणौ मा भूत्। स हि णावकर्मकः। न्यम्भवती त्यर्थे पर्यवसानस्योक्तत्वात् ॥

नपिपासानिवृत्त्यनुकूलो व्यापारः। भक्षणञ्च निवर्तको व्यापारः। सर्वेषामिन्द्रियाणाञ्च बुभुक्षापिपासे तेतरे योपनिषदि स्पष्टम्। संबोधने सुरिति। पञ्चमीसमासस्य नित्यत्

वाएङ्ह्रस्वादिति संबुद्धिलोप इति भावः। अणौ किमिति। न च तदभावे विशेषणद्वयविशिष्टात् ण्यन्तादित्यर्थमूलोक्तोदाहरणे परस्मैपदानुपपत्तिः। बुधादिसूत्रस्याह चर्मेण

म॰ श॰ सद्‌तिरभसादिति। नस्यभ्वादौ पाठादिति भावः। निवृत्तप्रेषणतयेति। निवृत्तधात्वर्थस्य धिकरणप्रेषणतयेत्यर्थः। समानाधिकरणप्रेरणया च णिचः साधुत्वमिति केचित्। भेदस्येति। चुरादिणि
३२७ केचित्तु स्वार्थण्यन्ताद्धेतुमण्णा विलासस्य प्रत्युदाहरणमाहुः। तद्भाष्यादिविरुद्धम्। तथा हि। बुधादिसूत्रादिह णेरित्यनुवर्तते। बुधादिभ्यश्च हेतुमण्णिरेव संभवतीति तद
[illegible]र्थविधिः। अणाविति निषेधोऽपि प्रसक्तस्तस्यैव न्याय्यः तेन चुरादिण्यन्ताद्धेतुमण्णौ परस्मैपदं भवत्येवेति भाष्यादौ स्थितम्। अत एव चेतयमानं प्रयुङ्क्ते चेतयत
इति कैश्चित्प्रत्युदाहरणं रतिकृता दूषितम्। तत्र वितण्डने तने इति चुरादिषाक्रियाये धातुर्वैरिप्यः। यत्तु न्यासकारहरदत्ताभ्यामाख्यातं चित्ती संज्ञाने चुरादिरकर्मक
इति तद्‌तिरभसात्। एतेन रूपयते हरिरिति प्राचः प्रत्युदाहरणं प्रत्युक्तम्। रूपरूपकरणे चुरादिः रूपस्य सकर्मणो धात्वर्थेऽन्तर्भावादकर्मकः ततो हेतुमण्णिचि रति
कारदूषितेन चेतयतेन इत्यनेन समानयोगक्षेमत्वात्। वस्तुतस्तु उभयमपि समर्थयितुं शक्यम्। तथा हि। स्वार्थण्यन्तादेकस्मिन्नेव हेतुमण्णौ चेतयति रूपयतीत्यस्तु ना
म। तस्योनिवृत्तप्रेषणतया अकर्मकतामाश्रित्य द्वितीये हेतुमण्णौ तु प्रत्युदाहरणत्वं न वार्यते। युक्तं चैतत्। रूपयत्यं प्रयोजयतीति विगृह्य ता प्राचाम् जिणिज्भ्यां प्रत्य
तिहूर्यं वदतां हेतुमण्णिद्वयस्य विवक्षितत्वात्। हेतुमण्णेरेकत्वे हि प्रयुङ्क्ते इति शुद्धेनं तु णिनैव व्यग्रहीष्यन् न तु [illegible]नेनेति दिक्। यत्तु प्रसादकृतोक्तं णिग्रहणे णिजातग्र
[illegible]त्वाविवक्षयेदमिति तत्तु भाष्यादिविरोधादुपेक्ष्यमेव। धापयेत इति। अस्य स्तनार्थत्वात् धिशुमित सकर्मकत्वम्। समीचीदिति। प्रथमाद्विवचनम्। वाक्यन्दती
ति पूर्वसवर्णदीर्घः॥ इति पदव्यवस्था॥ भावो भावनेति। उत्पत्त्यर्थाद् भवतेर्णिजन्तात् एरजिति भावः। एरजण्यन्तानामिति त्वनार्षम्। कल्यादिभ्यः प्रतिषेधमात्रं हि भाष्ये स्थि
तम्। कल्योमन्त्रोर्थ इति त्रयपरावोदाहृताश्चेलस्वधेयम्। भवते तत्त्वार्थत्वं ण्यन्तस्य भवतेः मुद्रे न करोति नानुल्यार्थत्वं दर्शयति। उत्पादनाक्रियेति। धातुत्वेनेति। तत्र जा
तिः द्विवृद्धिसूत्रे आदैच्शब्दस्य जातिशब्दत्वादिति वदतां [illegible]पटेन तथा ध्वनितत्वात् तु हेलाराजीयादौ स्पष्टं तथाभिधानाच्चेति भावः॥ ६ चहेतुमण्ण्योरित्यर्थः। तत्तु भाष्येति। तत्र श॰ म॰
[illegible]ण्यन्ताद्धेतुमण्णौ परस्मैपदमुक्तम्॥ ॥ इति पदव्यवस्था॥ ॥ एरजिति। तत एव घञ्विभावनेति बोध्यम्। तथा ध्वनितत्वादिति। संज्ञाशब्दानां जातिशब्दत्वस्य ध्वनितत्वादिति भावः। ३२॰१

भावनाप्रतीयतइति। नचविध्यर्थप्रवर्त्तनयाक्षिप्यतइतिवाच्यम्। विध्यभावेपितत्प्रतीतेः। नहितत्प्राद्योविधावेवेतिनियमः। पचेत्यादौविधिसंभावनायाअप्यभावाच्च। ननुमास्तुतत्रत
त्प्रतीतिरतआह। कारकेति। हेत्वन्तरमाह। अस्तिचेति। तदुपपादयति किंकृतमित्यादिना। पचेत्यादेः पाकंकुर्वित्यादिविवरणाच्चेत्यपिबोध्यम्। नचतत्रकर्त्तृकर्मभ्यान्तदाक्षेपः। पचे
त्यत्रतद्प्रतीतेर्दुर्वारत्वात्। किंचाक्षिप्तायां पदार्थान्तरानन्वयापत्तिः। अन्यथाधूमोयंज्वलतीत्यपिप्रयोगःस्यात्। किंचतदाक्षेपेणपचतीत्यादावपितत्प्रतीतिसिद्धावनन्यलभ्यस्यश
ब्दार्थतयातिङन्तत्वशक्त्यनापत्तेः। नचतत्रापिप्रत्ययवाच्यभावना। तव्यकाष्ठैः पाकइत्यापत्तेः। कर्तृव्यापारस्त्विति। शब्दशक्तिस्वाभाव्याद्धात्वर्थसमानाधिकरणभावनैवतत्राख्यातार्थः। अ
धात्वर्थाच्चेति। एतेनभावनातिङ्प्रत्ययवाच्येतिमीमांसकमतन्तग्राह्यमितिध्वनयति। तथाहि। भोक्तव्यमित्यादौ तिङन्तंविनापिभावनाप्रतीयतेकारकापेक्षाचदृश्यते। अस्तिच
[illegible]निसामान्याधिकरण्यम्। किंकृतंव्यम्। भोक्तव्यम्। किंकृतवान्। भुक्तवान्। किंच। भावयतिघटमितिवत्स्वरमतेभवतिघटमित्यपिस्यात्। तुल्यार्थत्वात्। दृष्टान्तेहिकर्तुःकुंभकार
स्यव्यापारं राजाचेष्टेदार्ष्टान्तिकेत्वास्मातप्रत्ययः। ननुप्रयोजकव्यापारोणिजर्थः कर्तृव्यापारस्त्वाख्यातार्थइतिवैषम्यमिति चेत्। कारकचक्रप्रयोक्तुः कर्तृत्वेघटस्यातथा
त्वात्। यदितुधातुनोक्तक्रियेनित्यंकारकेकर्तृतेष्यतइतिभर्तृहरिप्रतिपादितरीत्याप्राधान्येनधातूपात्तव्यापारस्वरूपंकर्तृत्वन्तदापितन्मतंकस्तर्हीदानीमाख्यातार्थः।
व्यापारस्यधातुनैवाभिहितत्वात्। अपिचाधातोःसकर्मकाकर्मकत्वविभागउच्छिद्येत। अकर्मकाच्चेत्यादिसूत्राणिचविरुध्येरन्। ननुसिद्धान्तेपिक्रियायाःकर्मापेक्षानिय
मात्कथमकर्मकतेतिचेत्। फलव्यापारयोःसामानाधिकरण्यवैयधिकरण्याभ्यांसकर्मकाकर्मकविभागाभ्युपगमात्। किंच। ज्योतिष्टोमयाजीत्यादौकरणेयजइतिणिनि
रस्मत्पक्षएवसङ्गच्छते ॥ ७ ॥ त्वभावितण्यर्थतातुनसर्वत्रेतिनतदापत्तिरितिभावः। ननुतिङ्योगेतिङर्थभावनाश्रयत्वमेदतन्मतेकर्तृत्वन्तदर्थभावनाव्यधिकरणफलवाचकत्वञ्च
सकर्मकत्वन्तत्समानाधिकरणार्थवाचकत्वञ्चाकर्मकत्वम्। भावनाचव्यापारसामान्यं प्रकृतिरितिरथोगच्छतीत्यादौनदोषइत्यस्वरसादाह। किंचज्योतिष्टोमेति। असमस्तएवेति
परमतेतुतदसङ्गतिः। प्रत्यासत्त्यासमर्थः पदविधिरितिपरिभाषणेनचयज्यर्थनिरूपितकरणेउपपदेतन्निरूपितकर्त्तरिवाच्येणिनिरितितदर्थः। सचतन्मतेःसङ्गतइतिस्पष्टमेव।

म.भा. तदुपात्तांशान्तरस्या यज्युपात्तयागरूपस्य भाव्यतयेति। पचतीत्यादाविव्यर्थः। करणतयेति। शब्दशक्तिस्वभावादितिभावः। स्त्रीत्वस्येति। यदितत्रटाबादीनांद्योतकतया विशेषणत्वन्तर्हि
कर्तृत्वेन धातूपात्तांभावनां प्रतियजित्वेन तदुपात्तस्यांशान्तरस्यकरणत्वात् पचाद्योहिधातुत्वेन भावनामाहुः। तच्चांशान्तरं भावनां प्रतिप्रायेण भाव्यतयासङ्गच्छते। ज्यो
तिष्टोमेयाजीत्यादौतु करणतया। ज्योतिष्टोमाख्येनयागेनस्वर्गं भावितवानित्यर्थप्रतीतेः। स्पष्टञ्चेदं णिनिविधौहरदत्तग्रन्थे। एतेनह्यर्थः पचिरिति भाष्यंव्याख्यातम्। भट्टि
श्चाह। विभज्यसेनां परमार्थकर्मा सेनापतीं श्चापि पुरन्दरोथ। नियोजयामास स शत्रुसैन्ये करोतिरर्थेषु विवसर्वधातूनिति। ननु क्रियाया धात्वर्थत्वे पचतीत्यादौ एककर्तृका
वर्तमानापचि क्रियेतिक्रियाविशेष्यकोबोधोनस्यात्। प्रत्ययार्थप्रति प्रकृत्यर्थस्यविशेषणतायाऔपगवादौक्लृप्तत्वादिति चेन्न। प्रत्ययार्थः प्रधानमितिह्युत्सर्गः। सच
हत्यज्यते। क्रियाप्रधानमाख्यातमिति स्मरणात्। पाचिकेत्यादौ स्त्रीत्वस्य विशेषणत्वाभ्युपगमाच्च। प्रत्युत तवैव पचतीत्यादावनुपपत्तिः। पचन्तंपश्येत्यादौ शतृशान
चोः कर्तृप्राधान्यस्यसर्वसम्मततया तिङ्स्वपितथात्वापत्तेः॥ शत्रादीनान्तिङन्त्वलादेशत्वस्याविशिष्टत्वाच्च। आदेशानाञ्चस्थानिस्मारकत्वे स्थान्यर्थाभिधायित्वे वार्थैक्य
मुज्यते। अतएव हि युष्मदि समानाधिकरणे मध्यमः अस्मद्युत्तम इत्यादि पुरुषव्यवस्था सङ्गच्छते। अभिहिते कर्तरि प्रथमेत्यादि चानवसमानाधिकरण इत्यनेन स्था
भिधेयसंख्यान्वयित्वमभिहितशब्देन चाभिहितसंख्याकत्वंविवक्षितमितिवाच्यम्। सूत्रानन्गुणत्वात्। कृत्तद्धितसमासैः संख्यायाअनभिधानात्तदभिहितेपि
तृतीयाप्रसङ्गाच्च। नचकृत्स्वनभिधानमेवकर्तुरनभिधानमिति वाच्यम्। भावार्थकलकारेपि कर्तरि प्रथमापत्तेरितिदिक् ॥
प्रकृतेपितथावक्तुं शक्यम्। कृतीति। भावनेत्यर्थः। दिगिति। तदर्थस्तु भावलकारे कर्त्रादिकारकान्वयानापत्तिः। तत्रापि तस्यावाच्यत्वे तदन्वयिनि संख्यान्वयाङ्गीकारेणद्वि गमः
तीयाद्यापत्तेः। किंचसमानकर्तृकयोः पूर्वकाल इति सूत्रासङ्गतिः समानकर्तृकक्रिययोः पूर्वकाल इति क्रियायांवर्तमानाद्धातोः क्त्वेतितदर्थादिति ॥ ३२८

सामानाधिकरण्यमिति। असत्वभूतक्रियायाः सत्वार्थकयुष्मदादिसामानाधिकरण्यासंभव इति भावः। भाष्यमिति। यकृमन्त्रे इति आदिः। द्रव्यधर्मानिति। एवञ्च घटादिपदप्रतिपाद्यघ
टादिद्रव्ये द्वलिङ्गादिहेतुना घञन्तादिप्रतिपाद्ये सत्वमनुमीयत इति भावः। इदमप्यव्ययकृदतिरिक्तविषयम्। कृत्स्वेषु नपुंसकेतरलिङ्गयोगाभावेनासत्वव्यवहारः केषांञ्चिदिति बो
ध्यम्। अनन्वितात्स्यादिनि कारकाणामसत्वभूतक्रियान्वयित्वनियमादिति भावः। घञादौ। घञाद्यन्ते। आख्यातशब्दे। तिङन्ते क्रियाप्रधाने वा। भागाभ्याम्। प्रकृतिप्रत्ययाभ्याम्। साध्यम्। क्रिया
धात्वर्थः। साधनं कारकं प्रत्ययार्थः। घघञादिष्विति। सिद्धत्वसाध्यत्वोभयविशिष्टो धात्वर्थो घञन्तवाच्यः सिद्धत्वरूपो धर्मश्च घञ्द्योत्यस्तदाह। साध्यत्वेनेत्यादि। सत्वभावस्त्विति। तथा च
सामानाधिकरण्याभावादिति। भावाभिधायिनो हि लकारस्य क्वापि न सामानाधिकरण्यं कर्माभिधायिनस्तु तत्संभवात्पुरुषत्रयमपि यथायथमुदाहरिष्यते। तिङ्वाच्येति। कृद्वाच्या
यास्तत्सत्वरूपत्वमिदमेव। तथा च भाष्यम्। कृदभिहितो भावो द्रव्यवत्प्रकाशत इति। द्रव्यधर्मान् लिङ्गसंख्याकारकादीन्। द्योतीत्यर्थः। अत एव पाकं पाकेनेत्यादि। यथायथन्विती
त्यर्थः। नन्वेवमोदनस्य पाक इति कर्मणि षष्ठ्यनन्विता स्यादिति चान्न। घञादावपि प्रकृतिभागस्यासत्वापन्नक्रियाभिधायित्वाभ्युपगमात्। उक्तञ्च हरिणा। आख्यातशब्दे भागाभ्यां
साध्यसाधनवर्त्तिता। प्रकल्पिता यथा शास्त्रे स घञादिष्वपि क्रमः। साध्यत्वेन क्रिया तत्र धातुरूपनिबन्धना। सत्वभावस्तु यस्तस्याः स घञादिनिबन्धन इति। यत्तु अमृतरसप्रस्य
न्दमाध्वीकभूरिति कुसुमाञ्जलिश्लोके अमृतस्य रसः। रस्यमानममृतमिति याबदिति व्याख्यातं तत्रोपष्टम्भकत्वेन कृदभिहितो भावो द्रव्यवत्प्रकाशत इति वर्द्धमानेनोपन्यस्तं प्रा
चो ग्रन्थं व्याचक्षाणैश्चानुमोदितं तत्तत्वमतिरभसात्। तथा हि। रस इति न भावे कृत्। रस्यमान इति विवरणेन सह विरोधात्। यत्तु द्रव्यवदित्यस्य द्रव्यविशेष्यिकां प्रतीतिं जनयतीत्यर्थ
वर्णनं तन्निर्मूलमनुशासनविरुद्धञ्चेति दिक्॥ ७ कर्त्तरि कृदिति सूत्रे भाष्य इदं सूत्रं भावव्यवस्त्यर्थम्। न च भावे घञिति नियमान्नान्ये कृतो भाव इति वाच्यम्। अन्यः सभावो बाह्यः प्रकृत्यर्थो
ताः एव त्वाविहि इमे आभ्यन्तरे स्युरिति उक्तम्। पाकेन कृतमित्यादिव्यवहारा च स्थियामित्यादिना भावविषेशणाच्च। वर्द्धमानेनेति। द्रव्यवदित्यस्य द्रव्यविशेष्यिकां प्रतीतिं जनयतीति तदर्थ इति तदाश
यः न तदाह। पतित्वादिना। दिगिति। तदर्थस्तु रसयन्दस्य द्रव्यपरत्वे कर्मधारये तस्य पूर्वनिपातापत्तिः। स्यन्दत्वादिवद्रसपदस्य रूढत्वाच्च। किं च सर्वत्र भावस्यैवमेवापत्तौ कर्मणि प्रत्ययविधानेनोपप

म॰ भा॰ देशावगमादिति। उपमानानां बहुत्वेनोपमेयेतिङर्थेपि बहुत्वारोपेण प्रसङ्गः अन्यथोपमाने बहुत्वलोपात् नवैयर्थ्यं स्यादिति भावः। लिङ्गेति। लिङ्गाभावमादाय भिन्नतिङन्तार्थैककर्तृकर्मेति
२२९ दिकेऽपि तुल्यत्वाभावमादाय चान्यत्वमिति भावः। अवहितान्वय इति। एतद्द्विषयेऽपीत्येकं रूपमित्यर्थः। पूर्ववाक्य इति। उत्तरवाक्ये चेत्यपि बोध्यम्। तत्राद्योदाहरणं हरिः सेव्यस्त्वदुक्तश्चेति। अन्य
एकवचनमेवेति प्रायोवादोयम्। भाष्ये उष्ट्रासिका आसन्ते हतशायिकाः शय्यन्त इत्यत्र बहुवचनस्य स्वीकारात्। उष्ट्राणां हि आसिकाः स्वरूपत एव विलक्षणाः हतानां च नानाप्रकारं शेर
ते उत्तानावतानाः विकीर्णकेशाः तिरश्चीनस्थाः। ततश्च यादृशानि हतानां शयनानि तादृशानि देवदत्तादिभिः क्रियन्त इत्यर्थः। अत्र सादृश्याद्यवगमादाख्यातवाच्यस्यापि भावस्य भेदा
वगमाद्बहुवचनम्। आसिकाः शायिका इति च द्वितीयाबहुवचनम्। क्रियाविशेषणत्वेन कर्मत्वात्। न चैवं क्लीबत्वमेकवचनं च स्यादिति वाच्यम्। स्त्रियां क्तिन्नित्यधिकारात् स्त्रीत्वा
वधारणेन सामान्ये नपुंसकमित्यस्याप्रवृत्तेः। बहुत्वावधारणेन एकवचनाप्रवृत्तेश्च। न चैवं सप्तमलोक्ति विरुद्धेति वाच्यम्। लिङ्गः क्रियानाधारकारकयोगाभावमात्रे तात्पर्य
त्वात्। स्यसिचीति। यद्यप्यजादयो द्वन्द्वेन निर्दिष्टास्तथाप्युपदेश इत्यत्र च एव विशेषणं न हनादीनामव्यभिचारात्तदाह। उपदेशे योजिति। अत्र प्राचा उपदेशेऽजन्तेभ्यो हना
दिभ्यश्च परेषां स्यादीनामिडागमः स्यात्। स इट् चिण्वच्चेति व्याख्यातम्। तन्न। सूत्रे हि स्यादयः सप्तम्या निर्दिष्टाः अजादयश्च षष्ठ्या। चिण्वद्भावश्च प्रधानशिष्टः इट् तु चकारेण तत्सन्नियो
गशिष्टः चिण्वदितिं च सप्तम्यन्ता वृत्तिः। स्यसिच्सीयुट्तासिष्विति प्रतियोगिनि सप्तमीनिर्देशात्। न चैतस्य सर्वस्य भङ्गे न विपरीतव्याख्याने बीजमस्ति। चशब्दस्य व्यवहिता
न्वयो निर्मूलः स्यादेतत्। सूत्रस्वरसानुरोधेऽङ्गस्येवेत्यस्यात्। भडादिवत्। अतः इड्विधिवाक्ये स्यादीनामिति विभक्तिविपरिणाम आवश्यक इति चेत्। सत्यम्। पूर्ववाक्ये च राम॰
रितार्थस्य उत्तरत्र विपरिणामो न्याय्य एव। न च तु यथाश्रुतविभक्तेरचरितार्थत्वात् अनुचितो विपरिणामः ॥ २२९
कर्तृकर्मणोर्गुणश्चानिर्दिष्ट इत्यर्थवत्त्वमस्य भाष्यप्रयोगः। अचरितार्थत्वादिति। सर्वथाऽचरितार्थत्वादित्यर्थः ॥

पि प्रयोक्तुमुचितमिति। स्वायत्ते शब्दप्रयोगे इति भावः। इडप्युदात्तः स्यादिति। एवञ्चेडन्तस्याङ्गत्वाभावात्ततः परस्य प्रत्ययत्वाभावाच्च लुकोऽप्राप्तिरिति भावः। प्रत्ययत्वाभ्युपगमादिति। एवञ्च तदादिग्रहणेनाङ्गत्वमपि सुलभमिति भावः। उक्तस्यापीति। इडिवदिटः परस्यापि चिणि दृष्टप्रत्ययत्वमिव चिणः परेऽपि दृष्टप्रत्ययत्वस्यातिदेशसंभवादिति भावः।

तथाहि। हरिः सेव्यः तद्भक्ताश्चेति प्रयोगे उत्तरवाक्ये सेव्या इति विपरिणामदर्शनाद्धरिः सेव्या इत्यपि प्रयोक्तुमुचितम्। यदप्याहुः। विभक्तिव्यत्ययस्यापि बहुलं दर्शनादिति। तद्विभक्तिमात्रमिति स्पष्टमेव। किं च प्राचो व्याख्याने चिण्वदिति तृतीयान्ताद्वतिः। तत्र यथा पूर्वस्य कार्यं वृद्ध्यादिकमतिदिश्यते। एवं तस्य स्वस्मात्परस्य च कार्यमतिदिश्येत। ततश्च चिणि इडप्युदात्तः स्यात्। चिणः परस्येव इटः परस्यापि लुक् प्रवर्तेत। ननु स्थापितोऽसाविट आगमत्वेन प्र[illegible]यवतया प्रत्ययत्वाभावादिति चेन्न। कृते ह्यागमे तद्विशिष्टस्य तया प्रत्ययत्वाभ्युपगमात् झोऽन्त इति सूत्रे प्राचो ग्रन्थं व्याचक्षाणैस्तथैव निर्णीतत्वात्। किञ्च वृद्ध्यादिकार्यस्य प्रत्यये परे विहितस्य इटि परे कथं निर्वाह इत्याशङ्क्य चिणि दृष्टस्य सर्वस्यैवातिदेशे प्रत्ययत्वस्याप्यतिदेशान्न दोष इति तावत्प्राचो ग्रन्थं व्याचक्षाणा एवाहुः। तत्कथमुक्तस्यापि प्रत्ययत्वं न लभ्येत। यत्तु वदन्ति। चिणो लुकि चिण्वदिटोऽसिद्धत्वादिति। तदपि न। न हि चिण्वदित्यतिदेशं प्रतीडसिद्धः। अतिदेशस्य निर्विषयत्वापत्तेः। तथा च लुकोऽपि वृद्ध्यादिसमकक्षत्वेनातिदेशो दुर्वार एवेत्यलमतिक्षोदेन। ननु यदि चिणि दृष्टमात्रस्यातिदेशस्तर्हि हनिणिङादेशा अपि स्युः। घानिष्यते। आयिष्यते। अध्यापिष्यते इति। मैवम्। अङ्गाधिकारबलेनाङ्गस्यैवातिदेशात्। न चैते आङ्गाः। तदेतदाह। अङ्गकार्यमिति। सीयुट इति। तथा च सीयुट्शब्देन तद्विशिष्टं लस्यं तदिति भावः ॥

निर्विषयत्वापत्तेरिति। चिण्वदित्यस्य कार्यातिदेशतयाऽनेनातिदिश्यमानकार्याणामाभीयत्वेन तत्रेटोऽसिद्धत्वेऽतिदेशस्य निर्विषयतापत्तिरिति भावः। अङ्गादिति। अङ्गाधिकारस्यादित्यर्थः। सीयुण्मात्रस्याङ्गत्वासंभवादाह। तथा चेति ॥

म·श· विधिलिङिति। प्रस्नुवीतेत्ययम्। तत्रहि कर्मकर्त्तरिनदुहेतियक्निषेधः। प्रकृतेचहनादिसाहचर्येणाजन्तधातुरूपाङ्गस्यैवग्रहणम्। एतेनयकाव्यवधान
३३० दस्याऽप्रवृत्तौ कथं विधिलिङोव्यावर्त्यत्वमित्यपास्तम्। वलादित्वंनास्तीति। लिङः सलोपइति सलोपादितिभावः। निरपेक्षोह्यसाविति। अतोनित्योऽसाविति भा
वः। स्वरः। साप्तमिकः। अनित्यइति। तत्सापेक्षत्वादितिभावः। एवञ्चऋद्धनोरित्यादेरपितत्सापेक्षत्वादनित्यत्वंबोध्यम्। तदन्तत्वमस्त्येवेति। अङ्गस्यधातोर्वेतिशे

आर्द्धधातुकइत्यनेनव्यावर्त्यस्तुविधिलिङ्। नचतत्रवलादित्वंनास्तीतिवाच्यम्। तस्येहानपेक्षणात्। यदाहुः। नित्यश्चायंवलन्निमित्तोविघाती
ति। अस्यार्थः। भाविष्यतइत्यादौभूस्यइतिस्थितेपरमपिवलादिलक्षणमिटंबाधित्वाचिण्वदिडेवभवति। सत्त्यामपिशब्दान्तरप्राप्तौकृताकृतप्र
सङ्गित्वमात्रेणभुवोवुकइवनित्यत्वाद्वलादित्वनिरपेक्षोह्यसौ॥ परस्त्वनित्यः। अस्मिन्कृतेवलादित्वविघातात्। एवञ्चनित्यत्वात्तेइड्भ्योप्ययमेवे
ड्भवति। एतेनउपदेशइतिकिम्। भाविष्यते। अत्रगुणावादेशयोः कृतयोर्नस्यादितिप्रसादग्रन्थः प्रत्युक्तः। चिण्वदिटोविषयेवलन्निमित्तस्याप्र
वृत्तेर्वलादेशस्यासंभवात्। गुणमात्रेप्रवृत्तेप्यजन्तत्वानपायात्। उपदेशग्रहणफलन्तुमूलएवस्फुटीभविष्यति। चिण्वदिटइति। ननुण्यन्त
स्वर्ध्नोरुपदेशाभावात्कथमिहचिण्वदिट्। नचणेरुपदेशाद्दुपदेशेयोऽचतदन्तत्वमस्त्येवेतिवाच्यम्। आरितास्मारितेत्यादौपरत्वान्नित्यत्वाच्च
रपरेगुणेकृतेचिण्वदिडभावापत्तेः। नहिरान्तस्योपदेशेयोऽचतदन्तत्वमस्तीतिचेन्नैवम्॥ ~~ षः। नचण्यल्लोपाविति पूर्वविप्रतिषेधेनगुणंबाधित्वाणि
लोपप्रवृत्त्याऽस्त्विधौस्थानिवत्त्वाभावेनोपदेशेयोऽचतदन्तत्वन्दुरुपपादमितिवाच्यम्। गुणात्परत्वादार्द्धधातुकस्येडित्यस्यप्राप्त्यातन्नित्यत्वेनबाधित्वाचिण्वदि रामः
डस्त्वप्रवृत्तेर्नदोषइतिभावः। नहिरान्तस्येति। भृञोप्रभृतीनामपिगुणेउपदेशेयोऽचतदन्तत्वाभावाच्चेत्यपिबोध्यम्। उपदेशग्रहणसामर्थ्यादिति। तत्सामर्थ्यादादेशद्वारा ३३०

पितदन्तत्वंविवक्षितमितिभावः॥

म·टी· पतद्रुहे। भाषायांपिकदानीत्याख्ये। माभूदिति। अकारेरेफादिभ्यश्चेद्मिरम्योरेवेति नियमेनेत्सर्थः। इतिवदन्तीति। अत्रारुत्रिवीजन्तुअमोरमद्रत्विप्रयोगवारणायसूत्रस्यावश्यक·
३७७ वर्पोरूपमिति। प्रन्क्षिम्रदेवाअभिवर्पर्वसाभूरित्यादिमन्त्रेषुप्रसिद्धमिदम्। शेपः स्यादृषणंपेलमिति सूभूतिचन्द्रः। अकारान्तोप्ययमितिशेपं च्छलाङ्गूलं शुष्मुन शुष्मना
बोर्चा। मा। शेपः शेपौ च शेफश्च शेफं प्रोक्तस्त्व शेफसेतिद्विरूपकोशः। स्तुरीभ्यां लोतोम्बुवेगेन्द्रिययोरितिविश्वः। रेतः शुक्रे पारदे चेतिमेदिनी। पातेः। नुट्। बवर्गतृतीयादिः। उज्ज्वलद
नस्तुप्रुट् चेत्सत्स्यादिपपाठः। तन्न। पिपाजसा पृथुना। पृथुपाजा। अमर्त्यः इत्यादि नद्धा व्यविरोधात्। अदः। भिक्षुः स्त्री भक्तमन्धोन्नमित्यमरः। द्विजातिशेषेण यद्‌ नदन्ध
सेतिभारविः। समम[र]ः इत्येनेतिश्रुतिः। स्कन्देश्वा अस्तुनः स्वान्ताद्घः। आपः कर्मास्यायाम्। असुनाहुस्वश्च धातोः प्रत्ययस्यतुडागमस्तुवा। अप्नस्वतीमश्विना। अपांसि
सियस्मिन्नधि बाहुलकात्स्तुपलक्षणमाहुस्वनुटोवाच्च इतिव्याख्या अपि वोढाम्। तथाचबुवतेकतमेपिनपुंसकमापः इतिकोशमुदाहृत्यसर्वमापोमयज्जगदिति
प्रयोगो दुर्घटवृत्तौ समर्थितः। रूपे। आप्नोतेरसुन्। हुस्वत्वश्च धातोः प्रत्ययस्य तुट् चेत्यर्थः। अन्नइति। घृलाञ्जश्रुद्वशि। नहेः। दिवि गगने। नभो व्योम्नि नभो मेघे श्रावणे च पतद्रुहे।
घ्राणे मृणालसूत्रे च वर्षासु च नभः स्मृतमिति विश्वः। नभः क्लीबं व्योम्नि द्रुमान्घने। घ्राणश्रावणवर्षासु बिसतन्तौ पतद्रुहे इति मेदिनी। नभस्तु नभसा सार्द्धमिति द्विरूपकोशः
इकारान्तोपि। विश्वोक्तिमाह। आगइति। अमेः। अमन्तिगच्छन्त्यघोनेनेत्यंहः दुरितम्। रंहो वेगः। अहिरहिभ्यामसुना सिद्धेः। घिरघिभ्यामसुनि अङ्घोरङ्घः इति माभूदिति सूत्र
रूपमिति गोवर्द्धनः। तथाचस्यान्मह्योपमचतुर्थत्वमंहसोरंहसस्तथेति द्विरूपकोशः। एवञ्च दन्तार्थाः सिद्धसङ्घैर्विदधतु घृणयः शीघ्रमङ्घोविघातमिति। रङ्घः सङ्घः सुराणा
ञ्जगदुपकृतये नित्यमुक्तस्य यस्स्तोतिप्रीतिप्रसन्नो न्वहमहिमरुचेः सोवतात्सन्दनो व इति घकारपाठोतु श्रासरसिकानां प्रामादिक इतिवदन्ति। देशेहचा। हस्वलेखतेगुहेद् इतिमे
दिनी। अक्षमकि। अङ्कः। अङ्कसी। अङ्कांसि। अङ्गः। अङ्गसी। अङ्गांसि। योगः। योगसी। योगांसि। उचसमवाये। अस्मादसुनि बाहुलकात्कुत्वं नङ्कादित्वात्। ओकः आश्रयमात्रेपि मन्दि
रेपि नपुंसकमिति मेदिनी। भूरञ्जिभ्याम्। भुवः अन्तरिक्षम्। भवस्यन्तप्रतिरूपकमव्ययमिदम्। रजो रेणुः। रजः क्लीबङ्गुणान्तरे। आर्त्तवेचपरागेचरेणुमात्रेपिदृश्यते इति मेदिनी। राम·
धत्रर्थकप्रत्ययेतु अकारान्तोप्ययम्। रजोयं रजसा सार्द्धं स्त्री पुष्पगुणधूलिषु इत्यजयकोशः। विरजा नदी मा विरजा दीक्षामिति। चन्देः। छन्दः। छन्दः पद्यप्रभेदेपि स्वैराचाराभिलाषयोरिति २७७
मेदिनी॥ नतियमार्थत्वे मानमिति। एवञ्चाङ्घोरङ्घः इत्यपि साध्येवेति। इतिचतुर्थःपादः॥

मू०॥ अकारान्तोपि। कुद्दावभिप्रायवशाविल्यमरद्विरूपकोशौ। पविवचिभ्याम्। पयः। पयसी। पयांसि। अनीका। अधिकरणे पूर्वोत्तरे इदुपलक्षा इति शबरस्वाम्यादयः। माधवस्तु पयपरिग्र
हे इत्यस्मादसुन्। पयः कुदिः संवत्सराइत्येत्याह। वहिहा। अत्र पूर्वसूत्रात्तुटमनुवर्तयतां उज्ज्वलदत्तादीनां मतेनोदाहरणमाह। वक्षा इत्यादि। प्राञ्च इति। सकलं दलितं कृतः
प्रकाद्दकारादयश्चेत्यर्थः। एतच्चायुक्तम्। उक्तोदाहरणानि हन्तावल्लोके दृश्यन्ते। नत्वासंभवन्ति। छन्दसीति सूत्रात्॥ वेदे तु विपरीतमेवास्तीत्याह। वस्तुतस्त्विति। वेदभाष्यकाराश्च ह
सासिणुइत्यवधेयम्। मिथुने सि। सुपयाः सुश्रोताः इत्याद्युदाहरणम्। विधाञः। वेधाः पुंसि हृषीकेशे बुधे च परमेष्ठिनि इति मेदिनी। नोधा इति। सद्यो भुवद्वीर्याय नोधा इति मन्त्रे
नोधा ऋषिर्भवतीति निरुक्तम्। नवन्द्धातीतिनु नैरुक्तं व्युत्पत्त्यन्तरं बोध्यम्। अत्र स्वरसूत्रम्। गतिकारकयोः पूर्वपदप्रकृतिस्वरत्वञ्चेति। कृदुत्तरपदप्रकृतिस्वरापवादोयम्। च
न्द्रे त्वं चन्द्र रजतममृतं च। तदिव मीयते चन्द्रमा इति वा। मीयतेर्द्विदाशी भारादिःयुत्पादने हरदत्तः। उरसि च। पुरोधास्तु पुरोहित इत्यमरः। पुरूरवाः बुधसुतः राजर्षिश्च पुरुरवा इत्य
पि। विद्यान्पुरुरवः शब्दे रुकारस्यापि दीर्घतामिति द्विरूपकोशः। नृचक्षाः इति। चिञ्चेत्युक्ते सार्वधातुकसंज्ञा। अतः ख्याञ् न। उषः कित्। दशपाद्यां तु वसः किदिति पाठः वसन्ति
सूर्येण सह इत्युषा। अपो भि इति तले उषसः इष्यते इति वार्त्तिकस्य समुषद्भिरित्युदाहरणं विवरणवद्भिर्हरदत्तादिभिरयं पाठः पुरस्कृतः। दमेरुनसिः। सप्तार्चिर्दमुनाः शुक्र इत्यमरः। पक्षे अ
न्येषामपि दृश्यत इति दीर्घः। जुष्टो दमूनाः। दमूनसं गृहपतिं वरेण्यम्। त्वं पाद्योन्तु सूत्रे एव दीर्घः पठ्यते तन्मते पक्षे ह्रस्वो बाहुलकाद्बोध्यः। प्रायेणेति। स्त्रियां बहुष्वप्सरस इत्यमरः
स्त्रियां बहुष्वप्सरसः स्यादेकत्वेप्सरा अपीति शब्दार्णवः। अप्सरस्त्वप्सराः प्रोक्ताः। सुमनाः सुमनः सुवेति द्विरूपकोशः। एकाक्षरः प्रार्थितयोर्विवाद इति रघुः। विदिभुजिभ्यां विश्वे
शब्दस्वरूपपरत्वात्सिन्नादेशो न कृतः। उदाहरणं विश्ववेत्ति विन्दति भुङ्क्ते वा इति विग्रहः। अग्निर्ज्वलदत्तेन विश्ववेदाः अग्निः विश्वभोजाः इन्द्रः। तत्पुरुषे कृतीति सप्तम्या अलुगित्यु
क्तम्। तन्नास्मिन्नादेशस्य दुर्वारत्वात्। सुमृडीको भवतु विश्ववेदाः। पूषा भगः प्रभृथे विश्वभोजा इत्यादिमन्त्रेषु सुपो लुक एव दर्शनात्। इत्यन्तरेषु तथैवोदाहरणाच्च। वशेः। उश
ना भार्गवः कविरित्यमरः॥ इत्युणादिषु चतुर्थः पादः॥ अद्भुतमिति। अत इत्यस्य यमाकस्मिकार्थे। नास्मिन्नुपपदे भुवः प्रत्ययः। गुह्यते परितो वेष्ट्यते प्राणिभिरिति। गोधू
मो नागरङ्गे स्यादोषधीव्रीहिभेदयोरिति मेदिनी। मसेः। मसी परिणामे। मसूरो मनुष्य इति। मसूरस्य गायो रहतो पपीशो इति मन्त्रे तु मोगपुरस्कारान स्थिरस्य इत्यर्थः॥

टी०।शिफावद्धमूलम्।पर्शुकाणे पार्श्वास्थिसमूहे।इति पञ्चमः ॥ मू० ॥ रमसकोशस्थमाह।वातिरिति। व जलुटि।यद्यपि सानसि वर्णसीति सूत्रेण तड्डलश ब्दोऽपि पा
तितस्तथापि प्रत्ययस्वरेण मध्योदात्तः स्यः।अपन्तु वित्स्वरेणान्तोदात्त इति विवेकः।दसेः नः नकारस्य।दासः शूद्रे दानपात्रे भृत्यधीवरयोरपीति विश्वः।दंशेश्चाके वर्त्ते दाशधीवरा विल्यमरः।भ्रू
अः।भ्रूणं मनोज्ञेऽभिहितं तथा वृत्तस्तपसा भी भोरिति विश्वः।अर्तेः।मेढ़्रे रम्भोरणो ।ण्यामुमेष वृषमपण्डके इत्यमरः।डित्वनेः।मुखनिः सरणे वक्त्रे शास्त्रे च मपसोरिति विश्वः।संज्ञान्तरेनाट
कादेः शाके पि च नपुंसकमिति मेदिनी।अमेः सन्।स्कन्धो भुजशिरोऽसोऽस्त्रीत्यमरः।अंसः स्कन्धे विभागे वेति दन्त्यान्ते विश्वः।मुहेः।अज्ञे मूढ यथाजातमूर्खवैधेयबालिशा इत्यमरः।नहेः।
नखः करकहे गन्धद्रव्येन खं नखीति विश्वः।नखो ऽस्त्री क्लीबयोः शुक्तौ नखरे पुनपुंसकमिति मेदिनी।शीङः।हूस्वविधिसामर्थ्याद्गुणाभाव।शिखा शाखा बर्हि चूडालाङ्गलिक्य
ग्रमात्रके चूडमात्रे शिफायामग्न्यज्वाला यां प्रपदेऽपि चेति मेदिनी।माङः।मयूख स्त्विट्कर ज्वाला सिल्यमरः।गुल्फ इति।तद्ग्रन्थी गुटिके गुल्फावित्यमरः।तयोः पाद योग्रंथी इत्यर्थः।स्त्र
शेः।पार्श्वङ्ग सांधरे वक्रोपान्तोपशुमकेऽपि चेति विश्व मेदिन्यौ।श्मनि।नद्व ईरः श्मश्रु पुंमुखे इत्यमरः।पुरुषस्य मुखे नेधा राभ्यां इन्द्रो श्मश्रु शब्दो वर्त्तते इत्यर्थः ———— अश्माद
यश्च।अश।व्याप्तौ।रन्ध्रस्य यः।नञ्पूर्वात्त्वस्यते इन्वा।यत्तु भश्योते ईनरुट्ये युज्जलदने नौ क्रन्तन।धातुलोपापत्तेः।तद्भावोऽपि निपात्यत इति चेत्तर्हि डित्वोत्त्वे स्तर्णनिष्फलमिति दि
क्।जने इत्वलोपश्चेति।अलोन्त्यस्य।जटालग्नकचे मूले मांसीप्रक्षे पुनर्जटीति मेदिनी।कृन्तेः।चाद्व अभ्यासकार्यम् । ———— अभ्यासात्त्वे तिकुलम्।अमरोक्तिमाह।तस्मादि
ति॥जघनं स्त्रियाः श्रोणिपुरोभागे कटावपीति मेदिनी।क्लिशेः।केशः स्यात्पुंसि वरुणे ह्रीवेरे कुन्तलेऽपि चेति मेदिनी।फलेः।पलितं शैलजे तापे केशपाके च कर्दमे इति मेदिनी।पलि
तञ्जरसा शौक्ल्यं केशादावित्यमरः।कृजादिभ्यः।करकस्तु पुमान्पक्षिविशेषे दाडिमे पि च।द्वयोर्मेघोपले न स्त्री करके च कमण्डलौ इति मेदिनी।कटक इति।कुन् शिल्पि संज्ञयोरिति
कुनाप्ययं सिद्धः।गुणभाजः इहैवोदाहार्याः।गुणनिषेधभाजस्तु कुनि।उदासीनास्तु यत्र कुत्रापि दिति भावः।नृ नये।नरकः पुंसि निरये देवरातिप्रभेदयोरिति मेदिनी।उद्यनाचार्यस्तु
नवनरकान्वेषणवती तिक्लीबं प्रयुञ्जते तत्र मूलं मृग्यम्।सृगतौ।सरकोऽस्त्री शीधुपात्रे शीधुपाने स्तुघी धुनोरिति मेदिनी।कुरशब्दे।[illegible]रकोऽस्त्री कुड्मले स्यात्क कोलकमृणालयोरि
ति मेदिनी।।विधकारकोरकाणीनिमापः ॥

मू०।कीरकः पुमानिति अमरस्त्वप्रमादः । अपस्करः। वरकाद्योपीहेन वोद्व्याः
वीकयतेरिति।बाहुलकवलल ओ्यमर्थः।एवमनुपदं वक्ष्यमाणं पविमंच्योरिरस्पिबो द्धम्।कीचकोदैत्यभिद्वातहतसस्वनवंशयोः।पेचकोगजलाङ्गूलमूलोपान्तेचकौशिके।मेचकस्तु म
यूरस्य चन्द्रकेश्यामलेपुमान्।तद्युक्तेवाच्यवत् क्लीबंस्रोतोञ्जनान्धकारयोरिति मेदिनी।जनेः जठरः कठिने।पिस्यादित्यमरः।जठरोनस्त्रियांकुक्षौबद्धककूरवटयोस्त्रिषिति मेदिनी।वचिव
ठरःकुक्कुटेवण्ठेचेति मेदिनी। ऊर्ज्जि।नमूर्द्दरत्वष्टणतायनेनेतिमन्त्रः।हर्यतेः।हर्यगतिकान्त्योः।हिरण्यंरेतसिद्रव्येशान्तकुम्भवराटयोः।अक्षयेमानभेदेस्यादकुप्येचनपुंसकमितिमेदिनी।ज
नेः।तुडित्यविभक्तिकम्।तुप्रत्ययः।रेफ। स्यान्तादेशः।ऊर्णोतेः।ऊर्णामेषादिलोम्नि स्यादा । वर्त्तेवान्तराभुवाविस्मरः।भुवोर्मद्ध्येयआवर्त्तस्तत्रेत्यर्थः।अन्तराऽन्तरेणेतिद्वितीया।दधातेः।धा
न्यंव्रीहिषुधान्याकेइतिमेदिनी।तनोतेः।बालनीतितनुः पुमानित्यमरः।बालनन्तितउन्युक्तमितिकोशान्तरम्।तितउपरिपवनंभवेतीतिपस्यशायांभाष्यम्।स्याहास्वर्गे इ ङ्ः।तितउइतिपुंनपुं
सक वर्गत्रिकाण्डशेषः।अर्भकः।अर्भकः कथितोबालेमूर्खेपि चकृशेपिचाष्टपृथुकः पुंसिचिपिटेशिशौस्यादभिधेयवत्।पाकः परिणतौशिशौ।केशस्यजरसांशौ क्लीबेस्यात्तादौपचनेपिचेतिमेदि
नी।अवद्य।निकृष्टप्रतिकृष्टार्वरेफयाप्यावमाधमाःप्पपूयकुत्सितानवद्यखेटगर्ह्याणकाःसमाःइतिसर्वत्रामरः।अधमःस्यात्गर्ह्येऊनेपीति मेदिनी।अर्वातुरङ्गमेपुंसिकुत्सितेवाच्य
लिङ्गकः।रेफोरवर्णेपुंसिस्यात्कुत्सितेपुनरन्यवदितिचाली रीडनः।लिप्रलिप्तकाकभुक्तेचवाच्यवत्स्याद्विलेपितेइतिविश्वः।क्रिशेः।कीनाशःकर्षकःक्षुद्रोपांशुघातिषुवाच्यवत्।यमे
नादितिमेदिनी।ईश्वरइति।स्त्रियाम्नित्वान्ङीप।ईश्वरीमङ्क्षोदाना।वनिपीडीवन्त्रीरस्तुआयुदाना।पुंयोगलक्षणेङीषिअन्तोदात्ता।स्येशभासेतिवरजन्तादपिईश्वरेतिविवेकः।ईश्वरोमन्मथे
शंभौनाथेस्वामिनिवाच्यवत्।ईश्वरीवेश्वरोमायामितिमेदिनी।ईश्वरः शङ्करेधीरैतित्यामीश्वरीश्वरेतिवोपालितः।विन्यस्तमङ्गलमहौषधिरीश्वरायाइतिभारविः।दशपाद्यान्तुस्यूत्रान्तरम
पिहन्तेरमपश्चारनप्रत्ययः स्याद्घस्यादेशः।हम्यतेगम्यते तिथिभिः परः गृहम्प्राप्तानरिति।अतसातत्यगमने।प्रपूर्वः स्वरादिपाठादस्यपत्वम्।दहेः।नगोमहीरुहेशैले स्पंस्करेपत्रनाशनेइतिमेदिनी।
सिचेः।सिंहः कण्ठारवेराशौसत्तमेत्वोत्तरस्थितः।सिंहीस्वुद्राहर्षस्योःस्याहासकेराहुमातरीतिविश्वः।हिंसेवर्णव्यत्ययतःसिंहइतिमुक्तस्त्वन्तरम्।व्याडि।व्याघ्रःस्यात्पुंसिशार्दूलेरक्तैरण्डकरज्ज
योः।श्रेष्ठेतरापुत्तरस्यःकण्टकार्यांच्चयोषितातिमेदिनी।हन्तेः।घोरंभीमेहरेघोरइतिविश्वः।ग्रहेः।ग्रहणारुक्स्त्रवाहिकेत्यमरः।प्रथेः।प्रथमस्तुभवेदादौप्रधानेपिचवाच्यवदितिमेदिनी।प्रथमचरमे
तिसर्वनामत्वात्पक्षेजसःशी।प्रथमाः।चरेश्व।चरमो।चरमाः।प्रथिचरिभ्यामितिसुवचम्।मङ्गेः रलवउरववरवेत्यादिदण्डकेमगि पठ्यते।मङ्गलासिनदूर्वायामुमायांपुंसिभूमिजे।नपुंसकं [illegible] स्याणसवो
प्रथमे ?

टी०॥ भावे तुमुनिति। अत एव तुमर्थे सेसेनिति सूत्रे तुमर्थ इति चरितार्थम्। अत्र च भावो मत्वभूत एव। अन्यथार्थे लिङ्गाद्यभावेन प्रत्ययार्थे वैलक्षण्यान्ननु भवान्। भाव
मू०॥ जीर्विः पशुः। शीर्विर्हिंस्रः। स्तीर्विरध्वर्युरिति च न तदुन्ये भूदाहृतम्। स्तृ इत्यस्य दीर्घान्तत्वे एव हि स्तृ इत्यादौ नो रितो त्वं लभ्यते न तु ह्रस्वान्तत्वेपि तस्मात् यथाकार
मेव गृहीतुमुचितमिति दिक्। ग्लाज्याहात्वरिभ्यो निरित्यप्यनाकरम्। वीज्याग्रिभ्यो निरिति पठितत्वात् सूत्रे हयानन्तरं वहिश्रोनिसूत्रे ग्लाहात्वरिभ्यो निरिति सूत्रितत्वात्। तूर्णा
ण्यः सदानवदुत्वादावाद्युदात्तदर्शनाच्च न चास्मि माङ्कि नित्यधिकारस्थं वार्तिकमेवेदं प्राचोदाहृतं न तूणादिस्थमिति वाच्यम्। एवमपि त्वरतेः पाठस्यानुचितत्वात्। नह्य
सौ वार्तिकेऽस्तीति दिक्। एवं संस्त्यायतेड्ड्रडिति प्राचोदाहृतमप्यनाकरम्। स्त्यायतेड्ड्रडित्येव सूत्रस्याकरे पञ्चपाद्यां दशपाद्यां च उपलम्भात्। संस्त्याने स्त्यायते ड्रट्
स्त्री सूते सप्रसवे पुमान् इति तु भाष्ये श्लोकपाठः स एव माधवेनोपन्यस्तः। ननु सूत्रपाठस्य न यात्वं दृश्यते। एतदन्यव्याख्यातॄणामपि प्रमादात्कर्तृह्यः। यथापाणिन्या
दिमुनीनिति व्याचक्षाणेरुक्तम्। मनेरुच्चोपधाया इति। नन्वेवं विधं सूत्रं पञ्चपाद्यादावप्यस्ति। अत इत्यनुवर्तमाने मनेरुच्चेति सूत्रितत्वात् इति दिक्॥ इति चतुर्थः प्राचः
प्रमादाः॥ उणादयो बहुलम्। वर्तमाने लडित्यतो वर्तमानग्रह[illegible] पूर्वः संज्ञायामित्यतः संज्ञाग्रहणस्यानुवर्तनेन दाह। एते इति। बहुलग्रहणस्य फलमाह।
केचिदिति। हृषेरुलजुक्तः शङ्केरपूह्यते शङ्कुलेति दर्शनात्। चाफि डफिड्डौ कृत्वापि न विहितौ। अर्तेरुह्यते ऋफिडः ऋफिड्ड इति। संज्ञास्विति। अनादिष्व
पुक्तास्त्वेव न तु सर्वत्रेत्याहुः। कार्याद्गुणप्रतिषेधादिकात् अनु[illegible]ड्कारादिकं विधानात्। तेन फिडफिड्डौ किनावृत्त्याविति भावः। अनूबन्धस्थित्यत्र उपसर्ग
स्य घञीति दीर्घः। एतदुणादिषु शास्त्रं शामितव्यम्। भूतेपि दृश्यन्ते। नन्वेवं वर्तमानग्रहणमेव निवर्त्यताम्। इदं ज्ञोत्तरं च सूत्रं त्यज्यताम्। विशेषात् कालत्रये
प्रत्ययलाभादिति चेत् सत्यम्। बाहुल्येन वर्तमाने क्वचिदेव भूतभविष्यतोरिति विवेकप्रदर्शनायेदमित्याहुः। तुमुन्ण्वुलौ। क्रिया[illegible]र्थः प्रयोजनं यस्याः सा-
क्रियार्था तस्याम्। अत्र अयं सिद्धान्तः। तुमुन्ण्वुलोः कृत्वा विशेषेपि अव्ययकृतो भावे इति वचनात् भावे तुमुन्। ण्वुल् तु कर्तरि। ॥
वचनाश्चेत्यनेन मलभूते भवेद्यमादीनामत्र विधानाच्चेति भावः ॥

टी॰॥ प्रत्ययद्योत्यमिति। उभयत्रापीतिभावः॥ मतभेदेनेति। अर्थाध्याहारवादे संसर्गः शब्दाध्याहारवादे तु प्रकार इत्यर्थ इत्येके। कर्मप्रवचनीय[illegible]द्योतकत्वे[illegible] ।इवद्योतक
म॰ श॰ प्रकृत्यर्थस्य उद्देश्यत्वन्तु प्रत्ययद्योत्यम्। नञ्संसर्गः प्रकारो वा मतभेदेन। लिङ्धीभाष्ये क्रियादीनां वाच्यत्वमिति पक्षस्य[illegible]या न द्रष्ट
३८० त्यादिनोद्देश्यत्वं प्रत्ययार्थः। प्रकृत्युपपदार्थयोः समानकर्तृकत्वमपीदाभिधानबललभ्यं प्रयोगोपाधि। तुमुन्प्रकृत्यर्थस्तु उपपदार्थस्य[illegible]
विशेषणम्। ण्वुलि प्रकृत्यर्थो ण्वुलर्थे ल्युकारकद्वारा उपपदार्थे विशेषणम्। कृष्णन्द्रष्टुमिति। कृष्णकर्मकं क्रिष्यद्दर्शनार्थमित्यर्थः।
दर्शकोयातीति। भविष्यद्दर्शनकर्तृकर्तृकान्तद्देश्यकं गमनमित्यर्थः। क्रियायामाङ्किम्। भिक्षिष्य इत्यस्य जटाः। इह भिक्षार्थी जटाः तास्विदं न तु
क्रिया। भिक्षितुञ्जटा इति प्रयोगस्तु धारयतीत्यध्याहारेण बोध्यः। क्रियार्थायामाङ्किम्। धावतस्ते पतिष्यति दण्डः। अस्त्यत्र धावनं इति क्रिया
न त्वसौ दण्डपातनार्थो उद्देशेन हि तादर्थ्यं विविच्यते न हेतुत्वमात्रेण। समानकर्तृकेषु तुमुन्। अक्रियार्थेति। भोक्तुमिच्छतीत्यत्र हि भोज
नविषयिणीच्छा प्रतीयते न तु भोजनार्था। तदुद्देशेना[illegible]प्रमानत्वात्तादर्थ्यम्। उद्देश्यश्चेच्छा। न च भोजनेच्छापितये[illegible]नुष्ठीयते आत्माश्र
यात्। अतः पूर्वेणाप्राप्तिरिति भावः। यत्तु वदन्ति समानकर्तृकेष्विति विशेषं समर्थयितुमयमारम्भः। तेन देवदत्तेन भोक्तुमिच्छति यज्ञ
दत्त इति न भवतीति। अत्रेदं वक्तव्यम्। तुमुन्ण्वुलाविति विधिरपि भिन्नकर्तृकेषु नेष्यते। पुत्रं भोजयितुं माता गच्छतीति वृक्तव्ये पुत्रेण
भोक्तुमित्यप्रयोगात्। सेयं व्यवस्था शब्दशक्तिस्वाभाव्यात् बहुलग्रहणाद्वा सिद्धेत्यन्यदेतत्॥ एवं स्थिते प्रकृतसूत्रेण तादर्थ्याभावेपि विध्य
र्थमित्येव ज्यायः ॥ ७ त्वे प्रकार इत्यर्थ इत्यन्ये। प्रकारस्त्वेवेति पक्षस्त्वेव युक्त इत्याह॥ लिङ्विधाविति॥ अभिधानेति॥ प्रयोगस्वभावबलं लभ्य इत्यर्थः॥ अनभिधानादन्यत्र प्रयो
गो नेति यावत्। प्रयोगोपाधिरिति। समुदायशक्य इत्यर्थः। विविच्यते। गम्यते। तदुद्देश्यकं हि तदर्थो भवत्युक्तं तेन तज्जनकमात्रमित्याशयः। न तु भोजनार्थेति। दर्शनेच्छायामपि यादर्शनमनु श॰ म॰
ष्ठेयं न तथा भोजनेच्छा याद इच्छानुष्ठेयेत्यर्थः। इत्येव ज्याय इति। समानकर्तृकेष्विति स्पष्टार्थमेवेति भावः ॥ ३८०

अयमपीति। अनएवायंस्वाभिक इति भूवादिसूत्रे कैयटः। बाधेप्राप्तेवचनमिति। यद्यप्ययंभावः सलभ तो घञादिनाप्यस्तु सलभूतस्तथाप्यस्यैव विषयविभागसंसूचबोधनायेम
द्दिनाः। कर्तृत्वविवक्षेति। तेनायहूर्नेमीतिभावः। इत्यादाविवेति। मितांह्रस्व इत्यत्रवेत्यनुवर्त्यव्यवस्थितविभाषयेतिभावः। नधालिनि। अन्यथेत्यादि। परिच्छित्तिरिति। इत्ति
अमप्यः क्रियार्थोपपदार्थारम्भः। भोक्तुंशक्नोति। धृष्णोति जानातीत्यत्र भुजस्यार्थोविषयतयासंबध्यते। प्रावीण्यञ्चगम्यते। ग्लायतीति नदशक्तिः। घटते अर्हतीति योग्यता
आरभते क्रमते उत्सहते भोक्तुमिति भुजेरव्यावस्था। लभतेइत्यप्रत्याख्यानम्। अस्तीत्यादौतुसंभवमात्रम्। भाववचनाश्चक्रियार्थोपपदेविशेषविहितेनतुमुनास्वविषयेघञा
दीनांबाधेप्राप्तेवचनम्। याप्यायेति। यष्टुमित्यर्थः। तुमर्थाच्चभाववचनात्चतुर्थी। पदरुज। पद्यतेसाविति। करणस्यात्रकर्तृविवक्षाबोध्याः। स्थिरः। सर्तेरिति। भ्वादि ह्वादे
श्वग्रहणम्। स्थिरेकर्तरीति। एतेनास्थिरग्रहणंप्रत्ययार्थस्यकर्तुर्विशेषणम् ननूपदमितिदर्शयति। अद्धर्चादिषुसारशब्दस्यपाठश्चेह प्रमाणम्। व्याधीत्यादि। अस्थिरा
र्थम्। विसारोमत्स्यइति। विविधंसरतीतिकृत्वा। सारोबलमिति। ... तेर्भावितण्यर्थोधातुः। सारयतिचेष्टयतीतिकृत्वा। बलवान्हिचेष्टते। अपाणिनीयमिति। श्र
मेः शुद्धाद्धुञिवृद्धेर्दुर्लभत्वादितिभावः। यदितुधुर्य्यान्विश्रामयैत्यादाविवणिचिवृद्धिमाश्रित्यणिजन्तादेरचक्रियतेतदारूपंसिद्ध्यत्येव। अर्थस्तुभिद्यतइतिभावः। निवृत्तप्रे
षणाद्धातोः प्राकृतेर्थेणिजितिविवक्षायान्तुनदोषइत्यवधेयम्। अवोद इति। उन्दीक्लेदने अवपूर्वः घञ्नलोपोनिपात्यते। एध इति। इन्धेर्घञिनलोपोगु
णश्चनिपात्यते। नथातुलोपइतिप्रतिषेधःस्यात्। ओद्म इति। उन्देरौणादिकेमन्प्रत्ययेनलोपोगुणश्च। ऋन्येति। प्रपूर्वस्यहिमपूर्वस्यचरूपमितिबोध्यम्। प
रिमाणाख्यायांसर्वेभ्यः। परिमाणंपरिच्छित्ति आख्यानमाख्या उक्तिः परिच्छित्तेरुक्तौसत्यामित्यर्थः। कस्यपुनः परिच्छित्तिः प्रत्ययार्थस्यातण्डुलानिचायइति। निची
यतेराशीक्रियतेइतिनिचायः। अत्रएपकत्वेनसमुदायिनांपरिच्छित्तिर्गम्यते। एरचिप्राप्तेघञ् ॥ ७ परिच्छित्तिरिति। तदुक्तिश्चोदाहरणेएकादिशब्दैःस्पष्टैव। समुदायिनामिति। त
ण्डुलपदेनकर्माधारयइतिसमुदायिनएवप्रत्ययार्थइतिभावः। तत्परिच्छित्तिश्चैकगशिविषयत्वेनेतिबोध्यम्। एरचीति। निश्वायइतिपाठेग्रहवृदइत्यपोबाधइतिबोध्यम्। नत्रपरिमाण

प.श. अक्षेषु पीति। अक्षकरणकद्यूतसाधनेषु पीत्यर्थः। अयमेव घञिति। राजसमीपे भिन्नाप्यगायनस्य पर्यायइत्यर्थके राजोपशाय इत्यादाविति भावः। अग्न्यादीति। आदिनाइकाः॥ अ

३८२ अपादाने स्त्रियामिति। घञनुक्रमणमजपोर्विषये इति वचनात्। स्त्रियामप्राप्तो घञ् विधीयते। उपाध्यायेत्यादि। यास्वयमध्यापयति तस्यामित्यर्थः। पद्रूपम्। युयोगे वुद्धेष

आनुमानमप्यासिद्ध इत्युक्तम्। अकृतनीशार इति। उपसर्गस्य घञ्यतिदीर्घः। अथ कथं प्रदक्षिणप्रसव्यगामिनां शारणामिति अत्राहुः। अत एव वार्तिकप्रयोगात् अक्षेषु

परिणायेर्घञिति। समि स्तुवः। अधिकरणे ल्युटोऽपवादो घञ्। प्रथने। विस्तार इत्यर्थः। गायतिः। छन्दोनाम्नि च। शब्दविषयत्वात् सूत्रेणाप्राप्ते वचनमिदम्। अत्र केचिद्वावितिनानु

वर्त्तयन्ति तेन प्रस्तारपङ्क्तिरित्यादि सिद्धम्। उदि ग्रहः। घञ् स्यात्। निस्रिगमन्यतिप्राप्तस्यापवादः। परिन्योः। परावनु। इहापि परिग्रहणमङ्क्तिपनो। सकृदेव तु कर्त्तव्य

म्। तथा हि। परौ नियो द्यूते। वृणोऽनुपात्यये। नावभ्रेषे इति सूत्ररचना। तथाऽकृतमित्येव। न्युपोः। ननु पूर्वसूत्रेण अनुपात्यये पर्यायशब्दोऽस्त्यादितः एवञ्चेह पर्याय

ग्रहणं त्वर्थ अनुपात्यय इत्यस्यानुवृत्तिसंभवात् इति चेत्। अत्राहुः। पर्यायग्रहणं पुनर्विधानार्थम्। तेनाभिविधिविवक्षायां परमपीनुणं बाधित्वा अयमेव घञ् भवतीति। आ

कायमिति। आचीयते अस्मिन्नग्न्यादि। अधिकरणे घञ्। अग्निस्य चित्त्वात् वचनेन निष्पादमेदिति श्रुत्यर्थः। संज्ञु च। उत्तरे च अधरे च उत्तराधराः। तेषां भाव औत्त

राधर्यम्। सूकरेति। स्तनयानायपदोनराधरभावेन सूकरीः शेरते न देवप्रत्युदाहरणम्। यदा तु भिक्षुवत गेनावतिष्ठन्ते तदेहापि भवत्येव घञ्। कर्मव्यतीहारे। अ

त्र वर्त्तमानाह्वानोरित्यर्थः। भावेण जिति। कर्त्तव्य जिने कारके तु न भवत्यनभिधानात् इत्याहुः। प्राचात भावादावित्युक्तत्वादुपेक्ष्यम्। कारविरोधात्। व्याक्रोशीति। क्रुश आह्वाने

।हसे हसने। णिजन्ताभ्यामण्। स च कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणमिति परिभाषया सोपसर्गाद्भवति। न डितत्त्वादादि वृद्धिः। नञ्स्वायामिति तु न कर्मव्यतिहार इति निषिद्ध

म्। स्यादेतत्। स्त्रियां क्तिन्निति प्रकरणे णच्विधेयः। एवञ्च स्त्रियामिति न वाच्यमिति लाघवमिति चेन्नैवम्। अस्त्रियामिति वासरूपविधिपर्युदासापत्तेः। दृश्यते हि व्यावक्रोशी

रिति क्तिन्नपि। ननु येन नाप्राप्तिन्यायेन क्तिन एवापवादोऽयं णच्। युज्जादयोऽप्येवम्। उभयप्रसङ्गे पवाद विप्रतिषेधाद्युजादयः प्राप्नुवन्ति। दृश्यते तु णजेव॥ अविस्थलविशेषमिति। राम:

अभ्याधारस्थलविशेषमित्यर्थः। दृश्यते हीति। ध्वनितञ्चेदं वासरूपसूत्रे भाष्यप्रक ध्वनन्यायाद्गृहीत न द्वाभ्यां विशेषादेकदेशयुक्तिरिति भावः॥ ३८२

१९५ वर्णानुकरणादिति। अनिपादस्यार्थकनिर्देशपदानुवृत्त्यावर्णस्यैवयत्रप्रतिपादनंनत्रैवायमिति भावः। चकार इति। सूत्रेचकारोविवक्षित इत्यादौसमुदायप्रतिपादनेतात्पर्यादिति भावः। उक्त
अकारकरणस्यप्रयोजनमिति विभाषामृगेतिसूत्रस्थभाष्यप्रयोग इत्यपिबोध्यम्। एतेनकरणंकारश्चस्वकार इतिसमासेनेदंसिद्धमित्यपास्तम्। नन्वाकारपरत्वात्तस्यालोपोनेत्याह। अपत्य
वर्णादिति। वर्णानुकरणादित्यर्थः। नतुवर्णादुच्चार्यमाणादिति। तथाहिसति अकार इत्यादावेवस्यात्। नतुककार इत्यादौसङ्घातस्योच्चारणात्। अनुकार्यन्त्विह वर्णमात्रम्। अकार
स्योच्चारणार्थत्वात्कथन्तर्हि एवकारश्चकार इत्यादि । ——— ऋतो कुः। कुवित्तङ्गानादपिवषट्कार इतिसूत्रनिर्देशात्। सर्वेचकाराः प्रत्यास्यायन्त इतिभाष्यात्। बहुलव
चनाच्चेति। वस्तुतस्तुविभाषाग्रेप्रथमपूर्वेष्वकर्तरिकृदित्यादौपुनःपुनर्भाष्यकारेणोक्तत्वात् एवकारःसाधुश्चकारश्च। इहकारप्रत्ययस्यधातो रविहितत्वेपिअधिकारबलात्कृत्त्व
स्यातेनकृदन्तत्वात्प्रातिपदिकत्वंप्रयोजनाभावान्मकारस्येत्सञ्ज्ञा। आर्द्धधातुकसञ्ज्ञाभावान्नेट्। अस्यच्चाविसादौनप्रत्ययोबाहुलकादेव। रादिफः। वासरूपविधिनाकारेपिरका
रादीनिमामानिस्युरेवचेममपावति। अकारस्तोपरूति। अतद्धितपरत्वाद्भेत्वाच्चयस्येतिलोपस्याप्राप्तिः। प्रातिपदिकत्वन्तुकृत्त्वात्पूर्ववद्बोध्यम्। बाहुलकान्नेहक्रुः। तसौमत्वर्थ इ
ति। बाहुलकादेवमतुबर्थग्रहणादपि। शैषिकामतुबर्थीयादिनिमयः। अन्येतुनेतन्तकृदन्तम्। किन्तुमतुबर्थेभाव इति विगृह्यगहादित्वाच्छेतद्धितान्तमेवेत्याहुः। इणजादिभ्यः। धात्व
र्थनिर्देशेण्वुलोपवादोयम्। एवमग्रेपि। आजिरिति। बाहुलकादजेर्वीभावोन। सञ्ज्ञायाम्। अधिकरणेण्वुलर्थआरम्भः। उद्दालकस्येपातकः। तस्यपुष्पाणि भज्यन्तेयस्याङ्क्रीडा
यांसातथा। विभाषाख्यानपरिप्रश्नयोरिञ्च। अत्यान्तरत्वेनसूत्रेआख्यानशब्दस्यपूर्वनिपातेपिआख्यानस्यप्रश्नपूर्वकतयाआर्थक्रममनुसृत्यव्याचष्टे। परिप्रश्नेआख्यानेचेति। परि
पाटीति। षटगतौ। परिपूर्वः। इणजादिभ्य इतीण्। कृदिकारादिति ङीष्। आक्रोशःशपनम्। नपुंसकेभावेक्तः। ननुतयोरेवकृत्यक्तखलर्था इत्येवसिद्धम्। आत्रा कुः। भूतेइत्यधिकृत्यवि
हितेतिसूत्रेणविहितस्यक्तस्यभावोऽस्तीतिनविहितः। अनेनतुकालसामान्येनपुंसकेभावेक्तोविधीयते। अतएवायंस्वविषयेपरत्वात्घञजपांबाधकः। परिशेषात्तेषांपुंविषयत्वंसि
ध्यतीत्युक्तम् ॥ ९७ ॥ चेति। गहादित्वाच्छइतिमत्वर्थीयस्याप्येवंसिद्धाविदंवचनंव्यर्थमित्यन्ये। नस्यपुष्पाणीति। नित्यङ्क्रीडेतिसमासः। इत्येवसिद्धमिति। एवञ्चासमभावे इतिव्यर्थमि
तिपाठ्ञ्जापायअतएवेति। कालसामान्येविधानादेवेत्यर्थः ॥

राम: ३८५

वैयर्थ्यापत्तेरिति। किञ्च चोपि व्यर्थः। यद्युनरञ्चशब्दस्तत्र दृशसमुच्चयाङ्गीकारेणोपपदसमुच्चयासंभवादित्यपि बोध्यम्। व्यर्थासङ्गतेरिति। अभूततद्भावस्य सत्वार्थस्य संभवो नतु प्रा
सर्थे। एवमघटो घटः करोतीत्यर्थे घटीकरोतीत्यस्यासंभव इति भावः। अव्यवहितप्राक्त्वमेवेति। उत्तराङ्ग विकलस्य तस्मादित्युत्तरस्येत्यस्याप्रवृत्तेरिति भावः। मुमः संभवादिति। ईषदा
नन्याले ईषदादीनामेवोपपदत्वात् खलः खित्त्वस्य वैयर्थ्यापत्तेः। मुमर्थं हि तत्। मुमश्चानव्ययस्य विधीयते। तस्मात्कर्तृकर्मणोरित्युपपदमेवान्वेतदाह। ईषदा
दिषु चेति। इह कर्तृकर्मणी हेभूकृञोश्चेहोतयोर्यथासंख्यं प्राप्तं स्वीकृतञ्च तथैव वृत्तिकृता। अनुमतञ्च तदेव न्यासकारहरदत्तमाधवादिभिः। एवञ्च प्राचापि तथैवोक्तम्।
नव्यास्त्वान्मिस्तथैवानुमोदितन्नेदितत्त्वेनादृतं वामिति ध्वनयन्नाह। यथासंख्यं नेष्यत इति। एतच्च यथासंख्यसूत्रे भाष्य एव स्पष्टमिति भावः। स्यादेतत्। व्यर्थयोरिति तावतद्
हैव सूत्रे भाष्यवार्तिकयोः स्पष्टम्। एवञ्च यथासंख्यनिराकरणस्य फलं दुर्वचम्। नहि भवतेः कर्मणि संभवः प्रायेणाकर्मकत्वात्। प्राप्यनुभवादिषु सकर्मकत्वेपि व्यर्थासङ्गतेः। नापि
करोतेः कर्तरि संभवः। व्यर्थासङ्गतेरेवेति चेत्। तर्हि किं यथासंख्यसूत्रस्थं भाष्यादिकमपार्थकमिति ब्रूषे। ननु तस्य गतिं पृच्छामीति चेत् शृणु। अन्तर्भावितण्यर्थस्य भवतेः करोतिना
कर्मकर्तृविषयस्य करोतेश्च भवतिना तुल्यार्थतया भवतेः कर्मणि करोतेः कर्तरि चोपपदे खल्प्रत्ययसिद्धेरेव यथासंख्यनिराकरणस्य फलमित्यवधेहि। स्यादेतत्। उपपदयो
मध्ये पूर्वापरीभावव्यवस्था न सिध्यति। कर्तृकर्मणी हि भूकृञोरव्यवहिते इष्येते। विपरीतञ्च प्राप्नोति। नेत्याह्यातोरितिवचनेन सुदुरोः प्राक्त्वावश्यंभावान्न व्यवहितेपि प्राक्त्वम
ध्येवेति वाच्यम्। छन्दसि परेपि व्यवहिताश्चेति सूत्रारम्भेणेहाव्यवहितप्राक्त्वमेवार्थ इति स्वीकारात्। नन्वेवं खलः खित्त्वस्य वैयर्थ्यं स्यादिति वाच्यम्। कृद्ग्रहणे गतिकारकपूर्वस्या
ग्रहणमिति सुदुर्भ्यां विशिष्टस्य खिदन्ततया तत्र पूर्वस्याकूलमुद्रुजादाविव मुमः संभवात्। किंच ईषच्छब्दस्य गत्यादिसञ्ज्ञाराहित्येन ते प्राग्वित्येन तत्र भाविषमत आव्य
वहितप्रयोगसंभवेन तत्र मुमर्थं खित्त्वमस्तु ॥ ७ ॥ स्वंभवद्वित्यादौ ईषत्पूर्वपदे स्यस्य खलोनभिधानमिति नेत्याह्यातोरिति सूत्रस्य भाष्यस्वरसः। गत्यादीति। आद्येनोपसर्गस्तम्
नव्यवहिताश्चेति योगविभागात्तत्र छन्दसीत्यननुवृत्त्या लोकेपि क्वचिद्व्यवहितप्रयोगः प्रयोगस्य नासङ्केतः। अत एव सञ्ज्ञानियमप्रयोगनियमपक्षयोर्न फलभेद इत्याहुः ॥

टी०। शाखान्तरइतिपाठःशाखान्तरमानइत्यपपाठः। इतिसप्तमः ॥ मू०॥ ननुदेवाञ्जिगातीतिप्रत्युदाहरणमङ्गःह यविकल्पयजुषिकाठकइत्यशाद्वयस्याभावत
आभावादित्याशयेनाह। बहूनामस्तीति। तन्नेदं दृष्टमितिभावः। काठकइतिकिम्। यजुर्वेदेपिशाखान्तरमन्त्रेमाभूत्। अत्रसुम्नयुरिदमस्ति। कव्यध्वर। कविअध्वर
मूलनाएषामन्त्यस्यलोपःस्यात्क्विपरेऽन्नचिविषये। गमन्वादिगणेप्यध्वर्युशब्दःपठ्यतेतद्युत्सत्यन्तरंबोध्यम्। वसुधितमिति। वसूनामाधातारंप्रदातारमित्य
र्थइतिवेदभाष्यम्। समुषद्भिरिति। वसतीत्युषसः। सहवासिनः। तैःसंभूयेत्यर्थः। वेदभाष्येतुउषद्भिर्ज्वलद्भीरश्मिभिः। उषदाहे। लटःशत्रादेशेशपिप्राप्तेव्यत्ययेनश
इत्युक्तम्। बहुपाध्यान्तरंबोध्यम्। नकवतेरिति। अनुवर्त्यर्थेउपन्यासः। कृषेश्छन्दसि। लोकेतुवरीकृष्यतेकृषीवलः। आद्यास्त्ययइति। धडः। शपःश्लुःअभ्यासस्यदीर्घः
परस्मैपदत्वंनिपात्यते। तस्यैवयङ्लुकिरुगभावमात्रमितिवा। तच्चपक्षेमाभूदित्येतदर्थंदर्दर्त्तीतिरुक्निपातितः। दर्दर्षीत्यत्रतुयङ्लुक्पक्षेनकिंचिन्निपात्यम्
किंतुसावेत्राधारयतेस्तुणिलुक्श्लुः आद्येअभ्यासदीर्घः इतरत्ररुगागमश्चनिपात्यते। इतिसप्तमः। प्रसमुपोदः। पादपूरणेकिम्। प्रदेवन्देव्याधिया। छन्दसीरः। कथन्त
र्हिश्रुतनोअध्वरंइष्टिमन्तम्। योअग्निंमाउदनिमादयतीति। छन्दसिसर्वेविधयोविकल्प्यन्तेइत्यदोषः। अक्षण्वन्तइति। अक्षिशब्दात्मतुप्। छन्दस्यपिदृश्यतइत्यन
ङेनुटोऽसिद्धत्वात्पूर्वंनलोपश्चभूतपूर्वगत्यानुट्नतुतस्यैवबलप्रसङ्गः। णत्वंप्रत्यसिद्धत्वात्यदिपूर्वत्रा[illegible]क्रियेतणत्वंनस्यात्। तस्मान्नुडेवोचितः। नन्वेवंअवग्रहे
दोषःस्यात्। अक्षण्वन्तइतिणान्तंह्यवगृह्णन्ति। अक्षेसकारान्तंअवग्रहेतुसुवितमितिचेत्सत्यम्। नलक्षणेनपदकाराअनुवर्त्याः। पदकारैर्नामलक्षणमनुवर्तनीयम्। त
स्मात्यथालक्षणंपदंकर्तव्यमेतिमहाभाष्येस्थितम्। किंचदेवपत्नःदीदिवांसमित्यादौपदत्वंविनापिविकलमवग्रहः। किमनेपूर्वेभिरग्निनेत्यादौसत्यपिपदत्वेनक्रियतइ
तिप्रयोगेवोत्तम्। भूरिदावत्तरइति। आतोमनिन्निति वनिप्। अत्राप्यवग्रहःप्राग्वत्। रथीतरइति। रथशब्दान्मत्वर्थेइनिःतदन्तात्तरप्। नकारलोपेकृतेईकारः। यदितुनलो
पमकृत्वैवनकारस्यस्थानेईद्विधीयेततदातस्यासिद्धत्वात्सवर्णदीर्घोनलभ्येत। एतेननकारस्यइकारादेशेसतिसवर्णदीर्घत्वमितिन्यासग्रन्थःप्रत्युक्तः। रथीतममिति। इहतु
पदकाराःत्रुत्वास्वमवगृह्णन्ति। अन्येषामपीतिसंहितायांदीर्घइतितदाशयः ॥

साधारणप्रकृतिप्रत्ययसमासतिङन्तविषयकृतया पञ्चभिः प्रकरणैरुदात्तादिस्वरान्व्युत्पादयितुं साधारणस्वरांस्तावदाह। अनुदात्त
मिति। एकवर्जमिति। द्वितीयायां चेति णमुल्। ननु तत्र परीप्सायामित्यनुवर्त्तते इति चेत्सत्यम्। इहाप्यस्ति परीप्सा। तथा हि। अत्रोदात्तादि
र्विधीयते। तत्र तत्समकालमेव शिष्टमनुदात्तं कर्त्तव्यं न विलंबितव्यमिति। एतच्च द्वितीयायां चेति सूत्रे हरदत्तादिभिरुक्तम्। यद्वा परीप्सायामि
ति प्रासंगिकम्। एतच्चात्रैव सूत्रे हरदत्तादिग्रन्थे स्पष्टम्। परिभाषेयमिति। अधिकारत्वे तु यद्यपि षाष्ठसूत्रे न कश्चिद्दोषः तथापि स्थलान्तरवर्त्ति
षु दोष एव। अनुदात्तत्वेवमादिषु हि अस्यानुपस्थानाच्च पदनिघातो न लभ्येत। किंच एकवर्जमिति ल्यप् स्यात्। ततश्च तत्सूत्रविधेयानां वचनसाम
र्थ्यादेव निघातप्रवृत्तिरिति भावः। परिभाषायां लिङ्गमपेक्षायामाह। स्वरविधीति। एकवर्जमित्यनेन हि अनुदात्तस्य वर्जनं व्यर्थम्। अतः परिशे
षादुदात्तस्वरितावेव वर्ज्येते इति तद्विधावेवास्योपस्थानमिति भावः। तमेकमचमिति। एकग्रहणं तत्र विधीयमानस्योपलक्षणम्। तेन तवैवान्तस्व
पुरुषपर्यायादयोर्वर्जनम्। इन्द्राबृहस्पती इत्यत्र देवताद्वन्द्वे चेति सूत्रेण पदद्वयस्यापि प्रकृतिस्वरविधेये त्र्याणां वर्जनम्। बृहस्पतिशब्दो हि व
नस्पत्यादिषु चेत्युदात्तद्वय इति बोध्यम्। गोपायतमिति। गुपू इत्यस्य धातोरित्यन्तोदात्तः। तत आयप्रत्ययः प्रत्ययस्वरेणाद्युदात्तः। ततो धातुत्वे यकारात् आकार उदा
त्तः सन् प्रागुक्तयोरुदात्तयोः सतोः पश्चात्प्रवृत्तत्वात्सतिशिष्टः अतो बलवान्। तस्य शबकारे यकाराल्लादनुदात्तस्येति स्वरितः। स्यादेतत्। तमिति स्व
रितमाश्रित्य शेषनिघातो तु न च सन्निपातपरिभाषया निर्वाहः। तस्याः अनित्यत्वेन स्वरविधावप्रवृत्तेः। अन्यथा चौदात्तादुत्तरपदादन्यतरस्यां ह्रस्वनुड्भ्या
म्मतुपित्यादिभिरपि स्वरे कृते शेषनिघातो न प्रवर्तेतेति बहु व्याकुली स्यात्। किंच अयमर्दिकरिष्यतीत्यादौ स्यप्रत्ययादीनां निघातः केन वार्यते। नहि
तत्र सन्निपातपरिभाषाया उक्तिसंभवोऽस्ति अपि च सदेवा एह वसतीत्यत्र एकादेश उदात्तेनोदात्त इति कृते हकारात् आकारो निहन्येत एवमुदात्तस्वरितं

स·

यो ऽर्यण इति स्वरिते कृते ऽन्याग्निज्जातवेदस मित्यत्राग्निशब्दस्यैवाद्युदात्तत्वेनिहन्येति चेत्। अत्रोच्यते। यथोद्देशपक्षाश्रयणेनेयं परिभाषा त्रिपाद्यां न प्रव स्वरः
र्त्तते। तत्रत्यतस्मिन्संयतो नाव इति सूत्रस्थ इह ज्ञापकम्। परिभाषान्तराणि तु कार्यकालपक्षाश्रयणात्प्रवर्त्तन्त एव। अतो न कश्चित्प्रागुक्तदोषः। सतिशि
ष्टेति। एतच्च न्यायसिद्धं तथा हि। यथोद्देशपक्षमवलम्ब्य प्रवृत्ताया अप्यस्याः उदात्तस्वरितविधिभिः सह वाक्यैकवाक्यतास्त्येव। उत्सर्गस्यापवादस्य
वा यस्यैव यत्र बरमाप्नोति स्ल देकवाक्यतापन्नयानया लक्ष्यं व्यवस्थाप्यते। अत एव औप्रगर्भत्व मित्यत्राण्प्रत्यये च आवृत्त्याद्युदात्तस्येति प्रवर्त्तमानं
सतिशिष्टस्वरं प्रथमप्रवृत्तिबाधेन द्वितीयप्रवृत्त्या लक्ष्यं परिनिष्ठापयतीति दिक्। अन्यत्रेति। अत्र ज्ञापकं तासेः परस्य लसार्वधातुकस्य निघातविधा
नम्। अन्यथा लकारमात्रापेक्षत्वादन्तरङ्गत्वेन परत्वेन च तिबादिषु कृतेषु क्रियमाणस्य तासेः प्रत्ययस्य सतिशिष्टत्वाच्छेषनिघातेनैव सिद्धेरनर्थकं
स्यात्। गृणीतेति। अन्तोदात्तं पदम्। अत्र लसार्वधातुकनिघातो नास्ति। अदुपदेशादिति। तपरकरणात्। श्ना प्रत्ययस्यादन्तत्वाभावात्। तिङः इ
ति निघातस्तु न भवति। यद्वृत्तान्नित्यमिति निषेधात्। स हि व्यवहितेपि प्रवर्त्तत इति वक्ष्यते। इह च स होता यस्य रोदसी इति पूर्वचरणे यद्वृत्तम
स्तीति स्थितम्। देवीमिति। पचादिषु देवडिति टित्करणान्ङीप्। चौ उदात्तनिवृत्तीति। कृदुत्तरपदप्रकृतिस्वरेण उदात्तस्याञ्च्यकारस्य च इ
ति लोपे सति। अनुदात्तस्य चेति सूत्रेणोदात्तः प्राप्तः तस्यायमपवाद इत्यर्थः। इममिति। मेदशब्दात्परत्वमाश्रित्य गङ्गे प्रभृतीनाञ्च पाणामनुदा
त्तः। स च पदपाठे स्पष्ट एव। संहितायां तु स्वरितात्संहितायामिति वक्ष्यमाणा प्रचया परनामधेया एकश्रुतिः प्रवर्त्तते। नामन्त्रिते। सामान्यवचनं
परं व्याचष्टे। विशेष्यमिति। विशेष्यसमर्पकमित्यर्थः। अग्ने त्रातरिति। अग्निरिह विशेष्यः। त्राणकर्त्तेति तु विशेषणम्। अग्ने भ्रातः सहस्कृतेति मन्त्रे राम:
तु भुविभ्रन्नेति विशेष्यत्वेन विवक्षितम्। अतो ऽग्न इत्यस्य अविद्यमानवत्त्वाद्भ्रातरित्यस्य निघातः। एवं तत उत्तरेषामिति बोध्यम्। देवीः षडि १

ति। अग्रदेवी रित्यामन्त्रितत्वादविद्यमानवत् तेन षडित्यस्य निघातः। अव्ययीभावस्य लिति। एतच्च अव्ययीभावश्चेति सञ्ज्ञासूत्रे भाष्ये स्पष्टम्। अ
भ्यभीति॥ उपसर्गाश्चाभिवर्जमित्युक्तेरभिशब्दोऽन्तोदात्तः। तस्य नित्यवीप्सयोरिति द्वित्वम्। अनुदात्तं चेति परस्यानुदात्तत्वं यणि कृते उदात्तयणः
परत्वात्स्वरितः खलपूशब्दः कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः ततः सप्तम्येकवचनस्य उदात्तयणो हल्पूर्वादिति प्राप्तस्योदात्तस्य नोङ्धात्वो
रिति निषेधः ततोऽनेन स्वरितः। तस्य यणि ततः परस्य आशाशब्दाकारस्यानेनैव स्वरितः आशाशब्दोऽप्यन्तोदात्तः। आशाया अदिगाख्या चेदिति
फिट्सूत्रात्। असेति। आशाशब्दप्रथमाकारस्यानिकस्येत्यर्थः। शेषेति। शाशब्दस्य निघातोऽनेनेत्यर्थः। स्यादेतत्। यणादेशं प्रति स्वरितस्यासिद्ध
त्वात् स्थानिन्येव यणप्रवृत्तः। तथा औजढदित्यत्र हत्शब्दे द्वित्वं प्रवर्तते। न तु ढशब्दे। न च स्वरितयणः परस्येत्याश्रयणात्सिद्धत्वं शङ्क्यं अतिप्रस
ङ्गात्। उदात्तादनुदात्तस्य स्वरितः इत्यनेन यत्र क्रियते तत्रापि ह्यसिद्धत्वं न स्यात्। न चेष्टापत्तिः। लक्ष्यविरोधात्। प्रत्यग्निरुषसामग्रमख्यदित्या
दौ स्वरितादर्शनात्। न च नोदात्तस्वरितोदयमिति निषेधः शङ्क्यः। अनन्तरस्येति न्यायेनोदात्तस्यानुदात्तस्येति यत्र प्राप्तिः तन्मात्रस्य निषेधात्।
अन्यथा खलप्वाशा। न्याऽग्निमापाह्यस्मान्। इत्यादावपि निषेधापत्तेः। तस्मादिह समाधानान्तरमेव वाच्यमिति चेत्। अत्राहुर्भाष्यकाराः॥ योग
विभागः कर्तव्यः। उदात्तयणः परस्यानुदात्तस्य स्वरितः स्यात्। ततः स्वरितयणः। इह पूर्वमनुवर्तते। उदात्तयण इत्येव योऽभिनिर्वृत्तस्वरितस्तद्यणः
परस्येत्यर्थः। एवञ्चाशेषैव आश्रयात्सिद्धत्वं नान्यस्य। यद्वा स्वरितग्रहणं न करिष्यते खलप्वाशेत्यादावपि उदात्तयणः परत्वादेव सिद्धत्वात्। न च
स्वरितयणामवधानं शङ्क्यम्। स्वरविधौ व्यञ्जनस्याविद्यमानवद्भावादिति। यत्तु काशिकायामुक्तं व्यञ्जनस्य ह्यविद्यमानवद्भावो नत्वचः इह तु
स्थानिवद्भावादजेव। न च स्वरविधौ तन्निषेधः। स्वरदीर्घयलोपेषु लोपाजादेश एवेति सिद्धान्तात्। तस्मात्स्वरितग्रहणं न करिष्यत इत्यसङ्गतम्।

म. योगविभागपक्षः परमवशिष्यते। सोपि न उदात्तादनुदात्तस्येति यः स्वरितः तस्यानिकायणः परस्यापि स्वरितत्वदर्शनात्। पठ्यते हि तैत्तिरीये। पास्ते स्वरः
२ म्निना समिधः स्वस्य ग्र इति। तस्माद्भाष्यस्थपक्षद्वयमपि न सङ्गच्छत इति। सोयं वृत्तिकृतो महान्व्यामोहः। भाष्योक्तपक्षद्वयस्यापि सो दसमतात्
त आहि। योगविभागपक्षे सत्स्यग्रहणस्य नानुपपत्तिः। सकाराकारमाश्रित्य उदात्तादनुदात्तस्येत्यनेनाग्निशब्दाकारस्य स्वरितसिद्धेः। न च स्थानिव
द्भावादवाव्यवधानं पूर्वस्माद्विधाविति पञ्चमीसमासं स्वप्रत्यास्थानात्वीकारेपि वान्निष्ठासमसेद्धमिति ज्ञापकेनानित्यत्वात्। सार्वत्रिकत्वाभ्युपग
मेपि पूर्वत्रासिद्धीये तदभावात्। अत एव प्रत्ययस्वरिसादौ स्वरितत्वं न प्रवर्तते नोदात्तस्वरितोदयमादिना निषेधात्। यदि हि संलग्न इत्यत्र प्रक्रमसूत्रं
प्रवर्तेत तर्हि निरर्थकवादलाभात् ह्यस्थानि तन्मध्ये प्रत्ययस्वरितत्वं ज्ञापितस्य प्रवृत्तिर्द्धौ वा स्येता स्वरितग्रहणप्रत्याख्यानपक्षोपि साधुरेव पूर्वत्रा
सिद्धीयेन स्थानिवद्भ्यस्यजामरूकत्वेन वृत्तिकृद्भोक्तदोषस्य निरवकाशत्वादिति मात्तमेमुत्तार्थं सुधीभिराकलनीयम्। एतेन दध्याशयति इ
त्याह। इति स्वरितेयणः स्वरितत्वे उदाहरणद्वयं वदन्न यथाश्रुतं वृत्तिग्रन्थं चामेडयन्कुरमञ्जरीकारः प्रत्युक्तः लोपाजादेशः एव न स्थानिवदि
ति निषेधो हि स्वरविधौ नेति प्रतिपदोक्तस्यैव निषेधस्य न तु पूर्वत्रासिद्धीयत्वप्रयुक्तस्यापि एकादेश उदात्तेनोदात्तः उदात्तयोरेव स्थानित्वे आ
न्तरतम्यादेव सिद्धम्। अन्यतरस्य अनुदात्तत्वे स्वरितत्वे वा सिद्धं स्तूभयान्तर्यादिति न्यायेनान्तरतम्यात् स्वरिते प्राप्ते विधिरयमिति ध्वनयन्नु
मु दाहरणद्वयमाह। वीम्या इत्यादि। अत्र व इत्यनुदात्तम्। बहुवचनस्य वस इन सा वित्यत्रानुदात्तं सर्वमपादादाविल्यधिकारात्। अम्ब शब्द आद्यु
दात्तः अरीःकृनिकुत्सादितत्वात्। केति। किमोन तित्स्वरितम्। अवरशब्दात्स्वाङ्गशिटामित्याद्युदात्तः। स्यादेतत्। काबरमित्युदाहरणमयुक्तम्। रामः
एकादश उदात्तेनोदात्त इति सूत्रे पूर्वसूत्रादनुदात्तस्येत्यस्यानुवृत्तेः काशिकायामुक्तत्वात्। तस्मादितइतिसूत्रे स्वरितोक्षातार्थस्मे तिवार्त्तिकस्य त २.

अभाष्यकैयटादीनाम्मतमेवस्वरसादिति चेत्सत्यम्। इह सर्वे प्राचाङ्गन्याः अभ्युच्चयमात्रपरतया कथञ्चिन्नेयाः। वस्तुतस्तु अनुदात्तग्रहणंना
नुवर्त्तत एव निष्फलत्वात्। लक्ष्यविरोधाच्च क्वावरमित्यादौ बह्वृचानां उदात्तपाठस्य निर्विवादत्वात्। तैत्तिरीयाणामपि। याज्ञ्यैवेनमेतयाप्यापय
तीत्यत्राङ्प्रश्लेषे हितीयास्वरस्योदात्तत्वात्। अतएव बह्वृचप्रातिशाख्ये उदात्तवत्येकीभाव उदात्तं संध्यमक्षरम्। अनुदात्तोदये पुनः स्वरितं
स्वरितोपधे इति श्लोके पूर्वार्द्धे अनुदात्तग्रहणं न कृतम्। किंतु तत्र वत्तस्य पूर्वान्वयभ्रमं वारयितुं पुनःशब्दः प्रयुक्तः। शौनकीये स्वराष्टकेप्येका
दिष्टमुदात्तेन नत्वमेव न येत्स्वरमित्युक्तमिति दिक्॥ इकारयोरिति। ह्रस्वयोरेवेत्यर्थः। अस्य श्लोकस्य त्वत्र तु ई यत इति दीर्घस्य प्रदेशान्तस्वरितः।
इयञ्च बह्वृचानां व्यवस्थोक्ता। अन्येषामपि तदीयप्रातिशाख्यानुसारेण बोध्या। नोदात्तः। उदयशब्दः परशब्देन समानार्थः प्रातिशाख्येषु प्रसिद्धः।
लाघवार्थं परशब्दे प्रयोक्तव्ये मङ्गलार्थमुदयशब्दः प्रयुक्तः। तथाच भाष्यम्। मंगलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्त इत्यादि
। संवत्सरं ह्रिरित्यादौ शिवशमिति मध्ये स्वरितोदयमिति चान्ते पाणिनीये मङ्गलं कृतम्। यद्यपि अस्य इयन्तस्य व्याख्या गार्ग्यादीनामेवेति विपरीतन्निय
मशङ्कान्तारयितुमन्त्र इयानन्तर्भावः। आगच्छ भो इति। अत्र माणवकशब्दस्य टेः प्लुतो वैकल्पिकत्वान्न कृतः। पक्षे सोपि बोध्यः। सचोदात्तः प्लुत उदा
त्त इत्यधिकारात् एकश्रुतिप्लुताभ्यां अवयवभेदेन वाक्ये समुच्चिताभ्यां दूरात्संबोधनं द्योत्यते। विभाषा छन्दसि। अत्र तन्त्रेण आवृत्त्या वा अच्छन्दसि
ति नञ् प्रश्लिष्य भाषायामपि ऐच्छिको विकल्पो बोध्यः। तथाच दाण्डिनायनादिसूत्रे भाष्यम्। एकश्रुतिर्हि स्वरसर्वनामेत्यादि अतएवाभियुक्तानां
निरुद्धाः स्वरकत्सुरुषबह्वीहीत्याद्याश्रयणेन श्लिष्टकाव्यादिनिर्माणं सङ्गच्छते। यस्य शान्तेश्वेतो धावति अलं त्रुसानां यातेति ह्यर्थं वाक्यमिति
भाष्यञ्च। तथाच काव्यप्रकाशे वेद इव लोके स्वरो न विशेषावसायहेतुरित्युक्तम्। एकश्रुत्या व्यवहारादिति तस्याशयः। किमर्थं तर्हि इतल्युपो।

म० तममितिप्रक्रम्य विभाषा।भाषायामिति सूत्रितमिति चेत् तत्रैस्वर्येण प्रक्रमे पाक्षिकानुदात्तलाभायेति गृहाण। वेति प्रकृते विभाषाग्रहणं कुर्वन्सू स्वरः
३ त्रकारो पितन्मादिकमभिप्रैति। एतेन भाषायां स्वरानुरोधो नास्त्येवेति भ्राम्यन्तः परास्ताः। स्वरविधिषु छन्दोधिकाराभावात्। ए ह स्य चा वा भाषाया
म्। इति फिट्सूत्रस्य ह्रस्व्युपोन मम्। विभाषा भाषायामिति षाष्ठस्य। एवंविधानामन्येषामपि निर्विषयत्वापत्तेश्च। किमर्थं तर्हि वैदिकप्रक्रिया
यां स्वर[illegible]दनं प्रक्रान्तमिति चेत् वेदे तस्यावश्यकत्वात्। न तु लोके सर्वथानुपयोगादिति गृहाण। इममेदूति। ननु मेदूति स्वरितस्य विधायकत्वं पा
दोस्यसादसिद्धस्यात्। न च स्वरितादित्याश्रयात् सिद्धत्वम्। क वः सुम्नेत्या दौ चरितार्थत्वादृ इति चेत्। न तस्यादितद्व्यारभ्यनवसूत्र्याः स्वस्थानादुत्क
र्षणा त्वान्ते भाष्यवार्तिकयोर्निवेशितत्वात्। न सुब्रह्मण्यायामिति सूत्रे स्वरितस्य तूदात्त इति वेद [illegible] काण्डो लक्षस्य ज्ञापितत्वाच्च। न च सुब्रह्मण्यो
मिति सिद्धः स्वरितो स्तीति वाच्यम्। तत्र एकादश उत्सृष्टेनेति सूत्रप्रवृत्तेरावश्यकत्वात्। तत्र ह्यनुदात्तग्रहणं नानुवर्तत इत्यवोचाम॥ प्राचां रीत्या तु
देव ब्रह्मणोरनुदात्त इति सूत्रं ज्ञापकमिति दिक्। सत्त्व मर इति। सत्त्वोनुदात्तः तदाह। अनुदात्ततरः स्यादिति। इति साधारणस्वरप्रकरणं प्रथमम्॥
प्रकृतिर्द्विधा धातुः प्रातिपदिकं च। तत्र धातुस्वरमाह। धातोरिति। अदाद्यन्त गण इति। आ गणान्तादिति भावः। अभ्यस्तानामादिः आदिरित्यनु
वर्तमाने पुनरादिग्रहणं नित्यार्थम्। अचीति किं स्याद्यात्। अनिटि किं जक्षिषा। अनुदात्ते च। बहुव्रीहिरयम्। तेन माहिरम्मदधात्। दधात्यत्र इत्यादौ लो
पयणादेशयोः कृतयोरपि आद्युदात्तः सिद्ध्यतीत्याशयेनाह। अविद्यमाने निभीहि। प्रत्यये इत्येवं च कम्ये पूर्वं ग्रहणं ज्ञापयति। सोऽव्यर्थः सप्तम्यस्त
दन्तसप्तम्य इति। ज्ञापके च मतद्वयम्। सामान्यापेक्षं विशेषापेक्षं चेति। आद्ये त्रित्यादिर्नित्यमित्यादावपि तदन्तसप्तम्येव। द्वितीये तु पत्र तदन्त रामः
ग्रहणं सत्त्वाभ्यां फले भेदः तत्रैव तदन्तसप्तमी। भीह्रीत्यत्र हि पूर्वग्रहणाभावे तदन्ततस्य कार्यित्वे प्रत्ययान्तानां भ्यादीनाममलोन्त्यस्य भवन्नुदात्तः प्र ३

त्ययान्तस्यस्यात्।सप्तम्यर्थपुरस्कारे तु पेतमपहाय भ्यादीनामेव उदात्तः स्यादिति स्पष्टफलभेदः।उपोत्तमं रितिचङन्यतरस्यामित्यत्राप्येवमेव।ञ्नित्या
दिर्नित्यमित्यपथिमथोः सर्वनामस्थाने इत्यादौ तु नास्ति फलभेदः।तदन्तग्रहणे सत्यसति च प्रकृतेरादेरेव उदात्तत्वात्।अतस्तत्र परसप्तम्येवेति दिक्।लो
लूयन्तो लूपमिति।लो इत्युदात्तः लू इति स्वरितः ततश्चत्वारः प्रचयाः।लित्स्वर इति।अत्राम्रेडितान्तर्गतस्य लूशब्दस्योदात्तः न च तस्मिन्कर्त्तव्ये ल्लोप
स्यस्थानिवद्भावः शङ्क्यः स्वरितविधौ तन्निषेधात्।शेषनिघातः।अचः कर्त्तृयकि।इह कीर्यत इत्यादौ इत्त्वे रपरत्वे च सति अयं स्वर इष्टः।तन्निर्वाहार्थं
त्तास्यनुदात्तेतिसूत्रे समासैकदेशोऽप्युपदेशशब्द इहानुवर्त्यते।सप्तम्या च विपरिणम्यते तदाह।उपदेशे जन्तानामिति।नन्वेवं एवं द्वादशधाज
से इत्यादाविवान्तर्भूतण्यर्थात्कर्तृकर्मविषयात् जनेर्लटि जायते स्वयमेवेत्यत्र एष स्वरो न स्यादिति चेन्नैवम्।यदिति विषयसप्तमीमाश्रित्य प्र
त्ययोत्पत्तेः प्रागेव आत्वप्रवृत्तेरित्याहुः।लूपत इति।आदिमध्यौ पर्यायेणोदात्तौ।माह्विषीकरतामिति।अदुपदेशात्परत्वेन लसार्वधातुकानुदात्त
त्वे कृते चङ एव स्वरे प्राप्ते पक्षे धात्वकार उदात्तः उपोत्तमग्रहणानुवर्तनात् द्वयोर्न।माहिदधत्।इदं निघातस्वराः।ते च प्रायेण कृत्तद्धितबले नैव
ज्ञेयाः।उणादिषु तु उणादिप्रत्यये अव्युत्पत्तिपक्षेऽपि फिट्सूत्रैः।क्वचित्तु विशिष्य विधानादिति विवेकः।अत एव कर्मण्यणिति सूत्रे मांसशब्दस्यन
विषयस्येति फिट्स्वरमाशङ्क्य मनेर्दीर्घश्चेत्यौणादिकसप्रत्ययान्तत्वात् दन्तोदात्तता कैयटेनोक्ता।मांसमेकः।पिंशतीत्यादौ तल्लभ्यमपि तथैव।प
त्तु आज्यशब्दव्युत्पादनावसरे कैयटेन न विषयस्येति सूत्रारिनन्तत्वौढिवादमात्रम्।स्वरनिर्वाहस्तु ण्यत्पक्षं परित्यज्य आङ्पूर्वात्क्यनिति पक्षस्य
सिद्धान्तितत्वादेवेति दिक्।कर्षात्वतः।ञ्नित्यादिर्नित्यमित्यस्यापवादः स्थानिवत्त्वादिति।स्वरविधौ नेति निषेधस्तु नास्ति।लोपाजादेश एवेति निय
मात्।झल्युपोत्तमम्।षट्त्रिचतुर्भ्यो हलादिरित्यस्यापवादः।सर्वस्य सुपि।सर्वशब्द उक्वादिषु न्तोदात्तो निपातितः।सर्वस्य विकारः सार्व इत्यत्र अ

म॰ नुदात्तादिप्रकृतिकसुबन्तलक्षणोऽन्यथास्यादिति ङ्याप्सूत्रे भाष्ये स्थितम्। श्रवणन्तु सर्वत्रैव आद्युदात्तस्यैव। प्रत्ययलक्षणेनापि सर्वस्वरस्येष्यमा
४ णत्वात्। पश्चिमथ्योः। पश्चिमथिशब्दौ उणादिषु इनिप्रत्ययान्तौ आद्युदात्तौ इति॥ गमेरिनिरित्यधिकारे मन्थः। पतस्थ च इति सूत्रितत्वात्। तत्र प्रत्ययस्वरेणा स्वरः
न्तोदात्ते प्राप्ते विधिरयम्। क्षेष्य इति। क्षि निवासगत्योः। अस्मादधिकरणे घः। निवासे किम्। आधेः क्षयः। क्षि क्षये। एरजन्तः। जयोऽस्य इति। जयतेर्घः
करणे किम्। जयो ब्राह्मणानाम्। भावे एरच्। वृषादीनाञ्च। वृषु सेचने इगुपधलक्षणः कः आकृतिगण इति। फिट्सूत्रे तु ग्रामादीनाञ्चेति सूत्रितम्।
ग्रामादिरप्याकृतिगणः। एवञ्च अविहितलक्षणस्याद्युदात्तस्य वृषादित्वङ्ग्रामादित्वं वा बोध्यम्। अन्तोदात्तत्वस्य तु उञ्छादित्वं घृतादित्वञ्चेति दि
क्। एवञ्च द्वाभ्यामेव सूत्राभ्यां सर्वसिद्धौ इतरसूत्रद्वयप्रणयनम् कर्तृभेदान्न दोषायेति बोध्यम्। आशितः कर्ता कर्तृवाचीति सकर्मकादप्यश्नोतेः
कर्तरि क्तः। उपधादीर्घश्चानेनैव सूत्रेण निपात्यत इति भाष्ये स्थितम्। अत एव कृषन्निति मन्त्रस्य वेदभाष्ये कृषन् कृष्टिं कुर्वन् फालः कृषीवलस्योपकार
करोतीति व्याख्यातम्। वृत्तिकारस्तु। अशेः राङ्पूर्वादविवक्षितकर्मत्वेनाकर्मकत्वात्कर्तरि क्तः। तत्र थाथघञ्क्तेति प्राप्तः स्वरोऽनेन बाध्यत इत्याह। त
क्लिष्टम्। अविवक्षितकर्मकेभ्योऽपि कर्तरि क्ते दत्तवान् पक्ववानित्यर्थे दत्तः पक्व इत्यापत्तेः। आशित इत्यवग्रहापत्तेश्च। अपर आह। कर्मत्वेनेन भूत
पूर्वगत्या अणौ कर्ता णौ कर्मीभूत एव विवक्षितः। तथा च ण्यन्तात्कर्मण्येवायं क्तः इति। जुष्टार्पिते। जुषी प्रीतिसेवनयोः। श्वीदितो निष्ठायामिति इट्
प्रतिषेधः। अर्त्तेर्णिच्। अर्त्तिह्रीत्यादिना पुक्। न केवलं गतार्थत्वमात्रं किन्तु आरभ्यमाणे सूत्रे दोषोऽप्यस्तीत्याह। अर्पिता। षष्टिरित्यादिना युष्मदस्मदोर्ङसि।
ङे॰ यि च। इत्यग्योगकरणं यथासंख्यशङ्कानिरासार्थम्॥ ईड वन्द। पूर्वसूत्रे ह्यनुबन्धकस्याग्रहणात् ण्यन्ते तु नित्स्वर एव प्राप्ते वचनम्। विभाषा रामः
वेः। वेणुशब्दो नित्स्वरेण नित्यमाद्युदात्तः प्राप्तः। स्योऽजुरित्यनुवर्तमाने अजिवृरीभ्यो निच्चेति णुप्रत्ययादित्वात्। इन्धानशब्दो यदि चानशन्तः तदा चित्वा ४

दन्तोदात्तः। अपयानजन्तः। तर्हि लसार्वधातुकानुदात्तत्वे कृते उदात्तनिवृत्तिस्वरेण मध्योदात्तः। अश्नोरल्लोप इति अश्नो आकारस्य उदात्तस्य लोपात्। सर्व
थापि अप्राप्तमाद्युदात्तत्वं पक्षे विधीयते। त्रपः पचाद्यजन्ता इति। कुह विस्मापने। ष्वठ असम्यग्भाषणे। चौरादिकावदन्तौ। कथ हिंसायाम्। मतोः पू
र्वमिति। शब्दरूपापेक्षया नपुंसकस्य आदित्यस्य विशेषणम्। केचित्तु सूत्रे पूर्वशब्दं पुल्लिङ्गमेव पठन्ति। उदाहरणे चाग्रुरर्थिको नद्यां मतुप्। क्लैब
हूचौ नजिरादीनां शरादीनां चेति दीर्घः। अहीवतीति। सञ्ज्ञायामिति वत्वम्। उत्तरो ग्रन्थः स्पष्टार्थः। क्वचित्तु विशेष उच्यते। द्वितीयपादे तृणधा
न्यानाम्। तिला इति। यत्तु अलाबूतिलोमेति रजसि कट ज्विधो हर इत्येनोक्तं तिलशब्दो घृतादित्वादन्तोदात्त इति तच्चिन्त्यम्। तिलाश्च मे इत्य
त्र आद्युदात्तस्यैव पठ्यमानत्वात्। प्राणिनम्। कुपूर्वम्। यत्तु कुपूर्वाणामिति पाठमुपन्यस्य कवर्गात् ये पूर्वे तन्मध्य आदिरिति न्यासकार हरद
त्तौ तस्य समूह इति सूत्रे प्रोचतुः तच्चिन्त्यम्। सर्वनामत्वेन सुटि सति कुपूर्वेषामिति प्रयोगापत्तेः। सौत्रत्वं वा शरणीकर्तव्यम्। लघावन्ते द्वयो
श्च। इह आदि शब्देन संबध्यते। तेनादेरपि गुरोरुदात्तः अत एव वृषाकपीति शब्दस्य गुरुरुदात्त इति वृषाकप्यग्नीति सूत्रे वृत्त्यादिग्रन्थेषु वि
भाविकेन च गुरूणां मध्ये य आदिः इत्यर्थोऽस्त्विति वाच्यम्। अन्यतो ङीषिति सूत्रे सारङ्ग कल्माष शब्दौ लघावन्त इत्यादिना मध्योदात्ताविति हर
दत्तादिग्रन्थविरोधात्। कल्याण इति। पर्यायेण आदिमध्यावुदात्तौ॥ चतुर्थपादे॥ उपसर्गाश्चाभिवर्जम्। इह। नाभिरित्येव सुवचम्। इतरेषां पूर्वेण
सिद्धत्वात्। वस्तुतस्तु तदपि मास्तु। एवमादिषु अभेः सुपठत्वात्। आत्वेति मन्त्रे उपसर्गाश्चाभिवर्जमिति वचनात्प्रातिपदिकान्तोदात्तत्वमित्युक्त्वा।
मानो मर्ता अभिद्रुहन्निति मन्त्रे एवमादीनामन्त इति वदंता —— वेदभाष्यकृता ध्वनितमेतत्। यथेति पदान्ते। यत्तु स्वरमञ्जरीकृता पुराजीवगृभो
यथाभाजन्तौ अग्नयोऽपेत्युपन्यस्य लित्स्वरमाशङ्क्य आख्यायिकप्रसिद्धिमात्रेणात्र सर्वानुदात्तत्वमित्युक्तम्। फिट्सूत्रेषु तुरीयः पादः। इति प्रकृति

म· ५ स्वरविषयकंद्वितीयंप्रकरणम्।अथप्रत्ययस्वराःकर्त्तव्यमिति।तत्रस्वयःतस्तुतित्वात्स्वरितोवस्यनेननुतस्यापिआद्युदात्तेशेषनिघातेकृते
उदात्तादनुदात्तस्येतिस्वरितोभवत्येवेतिचेत्सत्यङिन्त्वयनसिद्धःनित्स्वरस्तुसिद्धइतिशेषनिघातप्रवृत्त्यप्रवृत्तिभ्यांमहान्कलेविशेषः।तस्मतस्ति स्वरः
त्वमेवन्त्वशेषनिघातपरिभाषायायथोद्देशंप्रवृत्तौज्ञापकमितिध्येयम्।युच्छतीति।युच्छप्रमादे।अन्यकेइति।अकच्ततःपरश्चिदुदात्तः।एवंपकेत
कादिष्वन्यपि।अकचश्चित्त्वमेवचचितःप्रकृतेरित्युक्तेर्थेलिङ्गम्।अन्यथातस्यैकाच्त्वादनर्थकन्तत्स्यात्।कोञ्जायनाइति।कुञ्जस्यापत्यानिबहूनि।गो
त्रेकुञ्जादिभ्यश्च्फञ्।व्रातच्फञोरस्त्रियामितिञ्यः।ञ्यादयस्तद्राजाः।बहुत्वेलुक्।इहच्फञ्ञश्चकारोव्रातच्फञोरितिविशेषणेचरितार्थः।ञका
रोवृद्धौ।ततश्चचित्स्वरंबाधित्वापरत्वात्ञित्स्वरःप्राप्तःसोनेनबाध्यते।तिसृभ्योजसः।अर्थगतंबहुत्वंशब्देआरोप्यबहुवचननिर्देशः।अन्तोदात्तस्य
त्रिशब्दस्यआदेशस्तिसृशब्दोपितथातस्यअचिरऋतइतिकृतेउदात्तस्वरितयोर्यणइतिजसःस्वरितत्वंप्राप्तम्अनेनबाध्यते।अन्तोदात्तात्।नित्य
शब्दःस्वर्यतेतेनाधिकारगतिर्भवतीत्याशयेनाहनित्याधिकारेति।अनित्यसमासेकिम्।अग्निचिता।उपपदसमासः।कृदुत्तरपदप्रकृतिस्वरेण
चिच्छब्दउदात्तः।अधिकारग्रहणंकिम्।विग्रहाभावमात्रेणयोनित्यसमासस्तत्रपर्युदासोमाभूत्।अवाचाब्राह्मणेन।बहुव्रीहौनैञ्सुभ्यामित्युत
रपदान्तोदात्तत्वम्।अत्रविभक्तेर्वैकल्पिकउदात्तोभवत्येव।दधीवइति।दध्यंचतिदध्यङ्।तस्यऋत्विगादिनाक्विन्।ग्रासःपरिग्रहार्थमिति।शशादिरि
त्येवतुनोक्तम्।नपुंसकेशसिमाभूत्।सुटिचयथास्यादिति।ऊठीतिउपधाभूतऊठगृह्यतेनत्वन्त्यइत्यर्थः।पञ्चमीनिर्देशादन्तस्यैवग्रहणेप्राप्तेवच
नम्।माभ्यामिति।पूर्वार्द्धेचैवभुशब्देनोक्तयोरिहइद ——— मापरामर्शोप्यन्वादेशोस्त्येव।अन्वादेशश्चकथितानुकथनमात्र रामः
मानत्विदमाकथितस्येदमैवानुकथनमितिभाष्योक्तेः।नन्वेवमपिस्तावेकाचइतिस्वरःप्राप्नोति।नचेहान्तोदात्तादित्यस्यानुवृत्तिसामर्थ्यात्सोपिनप्र ५

४ मन्यथाऽन्तोदात्तं

वर्त्तन इति वाच्यम्। एसोऽस्मारत्या सामर्थ्योपिपस्त्यात्। न हि शसि साबेकाच इति प्राप्नोति। इष्यते च तत्रानुदात्त एव यदीमे नां उपतो अभ्यवर्षीत् ह
मामैनाँ इति लघ्ठापदब्रवीत्। अन्यैरेवान्कन्यानामभिः स्परत्। इत्यादौ तथैव पाठात् तस्मादाभ्यामित्यादेरन्वादेशे कथं सर्वानुदात्तत्वेति चेत्। उच्य
ते। ऊडिदमिति सूत्रे एकाच इत्यनुवर्त्तते। पदादिविशेषणार्थम्। अतएव निश्पर्यन्ताः षडेव गृह्यन्ते न तु ततः परे पि। तेषामनेकाच्त्वात् तेन न
ग्रीवायांबद्धो पिकस्त आसनि मत्स्यन दीन उदनि क्षियन्त मित्यत्र आसन्नुदतीति मध्योदात्तं स्यात्। न चान्तोदात्तात्परत्वमेवेत्वविभक्तेर्दुर्लभमि
ति वाच्यम्। स्थानन्तरतम्येनादेशानामप्यन्तोदात्तत्वात्। आस्यशब्दस्यण्यदन्ततयानित्स्वरेण स्वरितान्तत्वेपि पद्न्नोमासित्यादिसूत्रे पदाद्यादेशाना
मन्तोदात्तता निपातनाश्रयणात्। एवं स्थिते शसि एनादेशस्यापि एकाज्ग्रहणेनैव वारितत्वादन्तोदात्तग्रहणस्य सामर्थ्यं निर्बाधम्। तेनाभ्यामित्या
दौ सर्वानुदात्तता सुस्थेति। पद्मासावेकाच इति सूत्रे अन्तोदात्तादित्यपकृष्यताम्। तथा च अशादेशे कृते प्रसङ्ग एव नास्तीति दिक्। अष्टनो दीर्घात्।
अष्टन्शब्दोपन्त्यदित्यादन्तोदात्तः। तेनोत्तरार्थतयानुवर्त्तमानस्यान्तोदात्तादित्यस्येहापि नान्वयः मण्डूकप्लुतिर्वास्तु। दीर्घात्किं अष्टभिः। इह झल्यु
पोत्तममिति स्वरः। शतुरनुमो नद्यजादी। अशासं त्वाविदुषी। अस्मिन्नहन् यस्यैवं विदुषोग्निहोत्रं जुह्वति। अत्र वस्वादेशस्य स्थानिवद्भावेन शतृत्वा
त्ततः परयोर्नदीविभक्त्योरुदात्तः प्राप्तः स नेष्यते। तथा च स्थानिवत्सूत्रे वार्त्तिककृता स्वरे च वस्वादेश इति निषेधः पठितः। उदात्तयणो हल्पूर्वा
त्। उदात्तस्वरितयोरिति स्वरिते प्राप्ते आरम्भः। ह्रस्वनुड्भ्याम्। अप्त एवन्त इति। छन्दस्यपि दृश्यत इत्यनड्। अतो नुडिति नुट्। पूर्वनकारस्य लो
पः नेष्यत इति। हल्स्वरप्राप्ताविति भाष्योक्तेरिति भावः। रेवानिति। रयिरस्यास्तीति मतुप्। रयेर्मतौ बहुलमिति संप्रसारणं पूर्वत्वम्। आद्गुणः
नतो ह्रस्वाभावाद्वचनम्। नामन्य। अग्नीनामित्यादौ। परत्वान्नित्यत्वाच्च दीर्घे कृते ह्रस्वाभावान्नेदं स्यात्। वचनन्तु तिसृणां चतसृणामित्यादौ।

मं.
६

सावकाशम्। अत आह मतुपीति। प्रथमान्तमनुवृत्तम्। सप्तम्या विपरिणम्यत इति भावः। षट्त्रि। हलादिः किं। चतस्रः पश्य। नगोश्वन्। इह्यान स्वरः
न्तरस्य प्रतिषेधासंभवात् सर्वस्यैव षाष्ठिकस्वरस्यायं प्रतिषेध इत्याह। प्रागुक्तमिति। एवञ्च वीरवत्तममित्यत्र ह्रस्वनुड्भ्यां मतुबिति न भवति।
मतुस्वरमञ्जर्यान्तु तीयादिविभक्तेरुदात्तत्वं न भवतीति नगोश्वन् सूत्रं विवृतं तदनेन प्रत्युक्तं लक्ष्यविरोधात्। उदात्तनिवृत्तिस्वरस्याप्रति
षेधो नेष्यते। देवी कुमारीत्यादिनामन्तोदात्तत्वस्य भाष्ये तत्र तत्र दर्शितत्वात्। वेदेपि दर्शनाच्च। तन्निर्वाहार्थं नगोश्वन्निति सूत्रे अनुदात्तस्य चे
त्येतदितरेषामेषानुवृत्त्या निषेधसङ्कोचो व्याख्येयः। अनुदात्तस्येत्यंशो वाक्यभेदेन पुनर्विधानार्थ इति व्याख्येयम्। शुनश्शेपमिति। अत्र वि
हितिपदसंहितापाठे बाहुलकात् शुनःशेपशब्दस्य मध्ये प्रसिष्यते। उक्तञ्च प्रातिशाख्ये। शुनश्शेपं निदिवेन राया शंसम्पूर्षणम्। नराशंस
न्द्रे वं चेत्यतानुपूर्व्यसंहिता इति। पदकाले तु शुनःशेपं चिद् इति पठ्यते। शेपपुच्छलाङ्गूलेषु शुन इत्यलुक्। वनस्पत्यादित्वादुभयपदप्रकृति
स्वरः। प्रथमैकेति। नन्विह सावेकाच इत्यत्रैव सुपो ग्रहणम्। तत्र यत्तदोस्त्रियामवर्णान्तत्वेपि लिङ्गान्तरे एकारान्तत्वादिति भावः। राट्। राजा। पर
मराजा। अडि। अञ्चतेः क्विबन्तस्य सनकारस्य ग्रहणं विषयावधारणार्थम्। यत्र नलोपो नास्ति तत्रैव प्रतिषेधो यथा स्यात्। प्राचा प्राङ्भ्याम्। गतौ तु वि
भक्तुदात्तः स्यादेव। प्राचा प्राचे। क्रुङ्। क्विन्नन्त एव। क्रुञ्चा परमक्रुञ्चा। कृत्। करोतेः। कृन्ततेर्वा क्विबन्तः। यत्त्विह काशिकायां सुगुना सुगुग्भ्यामित्यु
दाहृतम् अन्तोदात्तादुत्तरपदादिति प्राप्तः प्रतिषिध्यत इत्युक्तं तद्भाष्यवार्तिकविरुद्धं स्थानिवत्सूत्रशेषे हि गोः पूर्वणित्वात्वस्वरेष्विति वार्तिकेन
द्भाष्ये च स्वरे कर्तव्ये निषेध्यमेव। गोशब्दस्यादेशो न स्थानिवदिति निर्णीतम्। द्युभिरिति। सावेकाच इति ऊडिदमिति वा प्राप्तः स्वरो निषिध्यते। नृ रामः
चा। अत्र झलादिरिति प्राचां रीत्या झल इत्यस्यानुवृत्तिमाश्रित्योक्तम्। वस्तुतस्तु झलीति नानुवर्तते। तेन य एक इन्न मेःपीसीत्यत्र नरीत्यस्याद्युदात्तत्वं ६.

तइकारोप्युदात्तः। चित्रेति। श्रूयत इति श्रवः कीर्तिः। चित्रं श्रवो यस्य चित्रश्रवाः। ततस्तमप्। तमप इति तमशब्दः त्वत्तमस्तिमेत्यत्र त्वानीति फि
ट्सूत्रेणानुदात्तः हरदत्तस्त्वाह। मुञो डमविति। पादशब्दो वृषादित्वादाद्युदात्तः। मन्दपदैश्वमिति। मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु। ण्यन्ताल्लेट्।
शप्यादेशः तस्यच्छन्दस्युभयथेत्यार्द्धधातुकत्वेन शबभावादुपदेशादिति निघातो न। अतः प्रत्ययाद्युदात्तत्वमेव णेरनिटीति णिलोपस्तु न। तं प्र
ति सार्वधातुकत्वाश्रयणात्। नचैवं परीत्समापादनीयम्। छन्दसि दृष्टानुविधानात्। पूर्वमेदृपकब्दो नोदात्तः। तत्पुरुषइति। स्यादेतत्। परमकु
रकं परमकारकेण परमकारके इत्यत्रातिप्रसङ्गः। द्वितीयातृतीयासप्तम्यन्तपूर्वपदत्वात्। नहि विशेषणसमासः। प्रथमान्तानामेवेति निय
मोऽस्तीत्युक्तत्वात्। सत्यन्त लक्षणप्रतिपदोक्तपरिभाषया तृतीयादिशब्दोच्चारणपूर्वकं विहितस्यैव समासस्येह ग्रहणान्नोक्तदोषः। अ
व्यये इति। निपातत्वादेवसिद्धेऽव्ययग्रहणं परस्यापि बाधनार्थम्। तेन अकरणिरित्यादौ कृत्स्वरो न। अन्यथा तत्रापि एवं स्यात्। किं च अतिसद्वत्येति स
भ्योजस इति शिष्टोपि विभक्तिस्वरो नञ्स्वरेण बाध्यते। अपि च। अचत्वारः। अनड्वाहः इत्यत्र सति शिष्टोपि आमुदात्तो बाध्यत इति बोध्यम्। कुग्र
हणन्तु बादिषु पाठाभावाद्दस्तु न स्तुत्वादिष्वकुः पाक्यः इह तु न पाक्यः। एवञ्चान्ययत्वमपि तस्य सिद्ध्यति। स्यालेति। मयूरव्यंसकादिरयम्। न
न्वेवं तत्रैवाद्युदात्तत्वं निपात्यतामिति चेन्नैवम्। सामिकृतस्वयंधौतमित्यादिवारणायेह परिगणनस्यावश्यकत्वात्। सदृशप्रतिरूपयोः। न
नु पित्रा सदृश इति विग्रहे तृतीयान्तं पूर्वपदं तत्र तत्पुरुषे तुल्यार्थेत्येव सिद्धम्। न च तुल्यार्थयोगे षष्ठ्या अपि विहितत्वेन षष्ठीसमासार्थमिद
मिति वाच्यम्। तत्रानभिधानात् षष्ठीसमासो नेत्यपि सुवचत्वादिति चेत्। मैवम्। अनुक्तसमासानुरोधेन षष्ठीसमासस्वीकारावश्यकत्वात्। तद्यथा॥
दास्याः सदृशः वृषल्याः सदृशः षष्ठ्या आक्रोशे इत्यलुक्। दासीवृषलीशब्दयोरन्तोदात्तयोरुदात्तयणो हल्पूर्वादिति विभक्तिरुदात्ता। नसा दृश्य

मिति। यत्र हि प्रतियोगिविशेषसमर्पणार्थम्पूर्वपदम्। तेनैव सादृश्यस्य समासार्थतेति सादृश्यग्रहणसामर्थ्यादाश्रीयत इति भावः। गृहपतिरिति। गे
हि क इति कप्रत्ययस्वरेण गृहशब्दोऽन्तोदात्तः। पञ्चारत्निरिति। पञ्च अरत्नयः प्रमाणमस्येति तद्धितार्थे द्विगुः। प्रमाणे लो द्विगोर्नित्यमिति मात्रचो लो
पः। संख्यादिहराजन्यबहुवचनेति पूर्वसूत्रात् द्वन्द्व इत्यनुवर्त्तते। कार्त्त। कुरुभूमिः तत्र जाताः कुजाः तान्याति कुजपः। कृतस्य कुजपस्य च अपत्यमित्य
र्थे ऋष्यण्णन्तावेतौ। कुरुगार्हपतम्। इह पण्यकम्बलान्ताः सप्त समासाः। तत्राद्ये द्वयोः षष्ठ्याः सौत्रो लुक्। इतरेषां पञ्चानां षष्ठ्याः स्थाने प्रथमैक
वचनम्। दासीभाराणामिति बहुवचननिर्देशादाद्यर्थोऽवगम्यते न द्वाह। एषामिति। कुरूणां गार्हपतम्। कुरुशब्दोऽन्तोदात्तः। कृग्रोरुश्चेत्युप्रत्यया
न्तत्वात्। रिक्तगुर्वादयः कर्मधारयाः। श्रीरस्यास्तीति श्लीलम्। सिध्मादेराकृतिगणत्वाल्लच्। कपोरोल इत्यत्र कपिलकादीनामुपसंख्यानाल्लत्वम्।
न श्लीलेति नञ्समासे अश्लीलशब्दः। अश्लीला चासौ दृढरूपा च। लावण्यरहितापि कुजत्वादिरहितत्वात् स्थानमात्रेण दृढेत्यर्थः। पारेव
डवेवा। निपातनादिवार्थे समासः विभक्त्यलोपश्च। पारशब्दो घृतादिः। तिलशब्दान्मत्वर्थीय इति। पृषोदरादित्वात्ति शब्दस्य द्विर्वचनम्। तितिलिनो
ऽपत्यम्। अन्यन्तस्तद्धित इति टिलोपः। तैतिलानां कद्रूः। पण्यशब्दोऽवद्यपण्येति तदन्तत्वादाद्युदात्तः। न च द्वितीयोक्तत्वादित्येव सिद्धमिति
वाच्यम्। प्रतिपदोक्तेकतमतुल्याख्या अजात्येति समासे तत्प्रवृत्तेः। इह तु विशेषणं विशेष्येणेति समासः। ननु अजात्येति प्रतिषेधसामर्थ्याद्दुर्लभो
साविति चेत्। अत्राहुः अजात्येति न जातिप्रतिषेधार्थं किं तु न्यायसिद्धार्थानुवादमात्रम्। न चानुवादस्य सर्वथा नैष्फल्यं गुणक्रियावाचिनां सति
संभवे न पूर्वनिपातप्रसङ्गे कृतमात्रस्य पूर्वनिपातार्थं सूत्रमिति। स्तुत्यादनेन च रितार्थत्वात्। दास्या भारो दासीसभारः। यूपदार्विति। यूपशब्द आद्यु
दात्तः। कुयुभ्यां चेत्यत्र नित्यनुवृत्तेः। त्वोनास इति। त्वया ऊताः रक्षिताः त्वोनासः। श्रृत्वयोरन्तरपदयोश्चेति मपर्यन्तस्य त्वादेशे दकारलोपश्छान्द

म.
८

तः अवसेः क्तः। ज्वरत्वरेत्यूठ्। एरुस्यैव त्यूठ् स्विति वृद्धैरिडागमस्याभावश्छान्दसः। पूर्वपदप्रकृतिस्वरे कृते एकादेश उदात्तेनोदात्तः। ततः स्वरितं प्र
वर्तते गतिरनन्तरः। गतिशब्दः क्तिजन्तः नतु क्तिन्नन्तः। अनन्तर इति पुल्लिङ्ग निर्देशात् निपातनाच्चानुनासिकलोपः। पुरोहितमिति। अत्र समासान्त
दुत्तत्वं अव्ययपूर्वपदप्रकृतिस्वरत्वं कृत्स्वरः थाथादिस्वरः इत्येतेषु प्राप्तेषु पूर्वपदप्रकृतिस्वरोनेन विधीयते। पूर्वपदं च्चेहान्तोदात्तत्वम्। पूर्वाधरावरा
णामसीति असिप्रत्ययसंयोगेण। अनन्तर इति किम्। अभ्युद्धृतः। इहहृतशब्दस्य उच्छब्देन समासे पुरोहितमित्यत्रेव गतिस्वरेण आद्युदात्तः। उद्धृत श
ब्दः तस्य पुनरभिशब्देन समासः। तत्र यद्यपि ग्रहणे गतिकारकपूर्वस्यापि ग्रहणमिति परिभाषया उद्धृतशब्दः क्तान्त उत्तरपदम्। एवं स्थिते समासोन्तोदा
त्तत्वे प्राप्ते तदपवादे कृत्स्वरे तदपवादस्याथादिस्वरः प्राप्तः तमपोपाभेगतिस्वरः स्यात् सोनन्तरग्रहणेन वार्यते। नन्वनन्तरग्रहणे च्चामिदुर्भोरोसे
कृद्ग्रहणपरिभाषया उद्धृतशब्दस्य क्तान्तत्वे अभेस्तदानन्तर्यस्य सत्वादिति चेन्नैवम्। अनन्तरग्रहणसामर्थ्याद्धि धातोरनन्तरो गतिराश्रीयते। अ
भिश्चानन्तर्येति। नन्वेवमप्यभ्युद्भे स्वरः इष्टसिद्धि स्तु कथम्। अभ्युद्धृतशब्दे हि उच्छब्दस्य स्वर इष्यते। संसृष्टश्चन भुभयं समाकृतम्। इति मन्त्रे समा
सकृतशब्दे आङः स्वरदर्शनात्। न चासौ प्रकृतसूत्रेण सिध्यति। प्रथमसमासे तत्प्रवृत्तावपि द्वितीयसमासे थाथादिस्वरस्य प्राप्तेरुक्तत्वात्। न च तं
बाधित्वा गतिस्वरः प्रवर्तत इति वाच्यम्। द्वितीयसमासे उदः पूर्वपदत्वाभावात्। अत्रोच्यते। धातोरनन्तर इति व्याख्यानादेव पूर्वपदत्वं विनापि स्वरो
यं प्रवर्तते न हि कामप्रकृतिभूतं धातुं प्रतिपूर्वपदत्वङ्गतेः संभवति। तस्मादभ्युद्धृते समाकृतमित्यादितावत्सुस्थम्। इदं त्ववशिष्यते। उक्तरीत्या दूरा
दागत इत्यादौ कारकपूर्वेपि गतिस्वरः स्यात्। इष्यते तु थाथादिस्वरः। तदर्थं कारकाद्दत्तश्रुतयोरिति सूत्रे कारकादिति योगो विभज्यते। क्तग्रहणञ्च ति राम:
ग्रहणञ्चानुवर्तते। कारकात्परं क्तान्तं सगतिकमुत्तरपदं अन्तोदात्तं स्यादित्यर्थः। तत्र दूरसहूत इत्यादौ थाथादिसूत्रेणैव सिद्धत्वात्। दूरादागत इत्यादौ ८

गतिरनन्तर इत्यस्य बाधनार्थमेवेदं सूत्रमिति दिक्। तादौ च। ननु क्तीतिच्यर्थम्। तथाहि। गतेरयं स्वरो विधीयते। गतिसञ्ज्ञा च धातुमाक्षिपति स
च प्रत्ययविशिष्ट एव प्रयोगार्हः। प्रत्ययश्चेह परिशेषात् कृत एवेति। चेत्सत्यम्। कृद्ग्रहणं तु लुप्तप्रकृतिकालोपलक्षणम्। तेन कृदुपदेशे तादि
त्वलाभात् प्रलपिता इत्यादि सिद्ध्यति। स्वरप्रवृत्तिवेलायां तादित्वाभावेऽपि पूर्वं तत्त्वलाभात्। आदिग्रहणं तु शक्यमकर्त्तुम्। यस्मिन्विधिस्तदादावल्ग्रहणे
। अतौ वितिकिम्। आगन्तुः। स्यादेतत्। अतौ विति पर्युदासः क्तिन एवोचितः। न बिभ्ये अस्य सुष्टुतिम्। सुहवा सुष्टुती हुवे॥ वृष्णो अस्य सुष्टुतिम्। या
लोकेषु मतयः इत्यादौ गतिस्वरादर्शनादिति चेत्। मैवम्। उदाहृतः प्रयोगेषु। उपायान्तरस्यैवानुसर्त्तव्यत्वात्। न ह्यतौ विति पर्युदासमात्रेण तन्नि
र्वाहः। कृदुत्तरपदप्रकृतिस्वरेण धातोरुदात्ततापत्तेः। अन्तोदात्ततायाश्च तत्रेष्टत्वात्। किं च। अतौ विति क्तिनः पर्युदासे प्रभृतौ सङ्गतिमित्यादौ गतिस्व
रो न सिद्ध्येत्। तस्मात्तु न एवायं पर्युदासः इति स्थितम्। कात्तर्हि सुष्टुतेर्गतिरिति चेत् शृणु। स्तोत्रकरणीभूता यास्त्वचः साध्वस्ति छिन्नीति वक्तर्त्तव्य वि
वक्षायां क्तिजन्तमिदं न तु क्तिन्नन्तम्। यत्तु केचित्। मन्क्तिन्व्याख्यानेत्यादिना अन्तोदात्तमित्याहुस्तच्च। तत्रैकारकेऽकृतिस्वरवृत्तिकृतानुव
र्त्तितत्वात्। प्रभृतावित्यादि सिद्ध्ये तदनुवृत्तेर्न्याय्यत्वाच्चेति दिक्। तवैव। कृत्स्वरापवादोऽयम्। अन्त उदात्त इति यद्यपि उदात्तग्रहणं नानुवर्त्तते। त
थापि गतिः प्रकृत्या भवतीत्युक्ते उदात्तो बुद्धिमारोहतीति स एवान्तस्य भवतीति भावः। प्रत्ययश्च इति। कृदुत्तरपदप्रकृतिस्वरः परत्वादिति। चुकर
स्यावकाशः साकद्रीची अस्यावकाशः। ये पराञ्चा। उभयप्रसङ्गे परत्वादयमित्यर्थः। ननु तु स्वरः सतिशिष्टः। भसञ्ज्ञायामल्लोपे च कृते प्राप्तत्वात्
प्तानायं तन्निप्रतिषेधः किं तर्हि इष्टिरेवेति हरदत्तः। चोरं निगतो ऽन्नतावप्रमयद् इति वार्त्तिकग्रन्थोऽपि इष्टिपरतयैव व्याख्येय इति तदाशयः इहास्मि
न्परत्वादित्यस्य इष्टत्वादित्यर्थः। न्यङ्ङ्ः ति। उदात्तस्वरितयोर्यण इति स्वरितः। दिवोदासायेति। दिवश्च दासे इति षष्ठ्या अलुक्। नञो जरमरमित्रमृ

म ताः। नञ्सुभ्यामित्यस्यापवादः। जरणं ज्वरः। ज्वृ दोरप्। मरणं मरः। अस्मादेव निपातनादप्। जिमिद्रोत्ले हने। क्त्रः। मित्रम्। मृङो नपुंसके भाषितः। स्वर
६ सूत्रे तु शब्दपरत्वात्पुंस्त्वम्। अमित्रमिति। मध्योदात्तोयम्। एतेन अमित्रस्य मर्ययामन्युमिन्द्र इत्यादि व्याख्यातम्। अमेर्द्विषतीति इत्यत्र त्वयं त्वन्तु अ
७ न्तोदात्त उक्तः। नञ्तत्पुरुषेणाद्युदात्तोपि। न च तस्य परवल्लिङ्गतापत्तिः। भन्त्रामित्रवृत्रमेष्टाः। पुंसीति लिङ्गानुशासनसूत्रात् स्ववक्तृस्वाक
त्वादिशब्दवदमित्रशब्दोपि त्रिविधः। यत्तु द्विषोऽमित्र इति सूत्रे हरदत्तेन दोषद्वयमुक्तं क्लीबत्वमाद्युदात्तत्वञ्चस्यादिति। तदापातत एवेत्यवधेय
म्। सोमेर्मनसी। सुकर्माण इत्यादि। यद्यपि आद्युदात्तं द्व्यच्छन्दसीत्यनेन सिद्धमिदम्। तथापि सुप्रथिमेत्यादि बहुजर्थमस्य त्वेयम्भ्यसनमिति बोध्यम्। आग
ति कारकोपपदात्कृतः। इह शिते नित्यं बहुव्रीहावभसृतं। इति पूर्वसूत्रस्थं बहुव्रीहिग्रहणं नानुवर्तते स्वरितत्वात्। किन्त्वव्यवहितमपि त
त्पुरुषग्रहणं तत्पुरुषे शालायां नपुंसक इति सूत्रादनुवर्तत इत्याह। तत्पुरुष इति। प्रकारक इति। कुगतीति समासः। लित्स्वरेणोत्तरपदमाद्यु
दात्तम्। नृवाहसेति। नॄन्वहतः इति विग्रहः। वहेर्णिदिति सूत्राण्णिदित्यनुवृत्तेः असुनो णित्वादुपधावृद्धिः। णित्स्वरेणोत्तरपदमाद्युदात्तम्।
उच्चैःकारमिति। णमुल्विभाषोच्चैरित्युपपदम्। इह कृद्ग्रहणमाकरे प्रत्याख्यातम्। तथा च वार्त्तिकम्। गत्यादिभ्यः प्रकृतिस्वरत्वे कृद्ग्रहणान
र्थक्यमन्यस्योत्तरपदस्याभावादिति। तत्रेदं विचार्यते। तिङन्तसमासे अयं स्वरो भवति न चेति। आद्यो यथा। शं नरम्। शारद्यन्वविन्दत यो जातः प
र्यभूषणत इत्यादि। प्रयोगाणां सौष्ठवेपि। यत्रानरो देवयन्तो युगानि वितन्वते इत्यत्र श्रूयमाणमन्तोदात्तत्वं न सङ्गच्छते कृद्ग्रहणं कुर्वतां सूत्रकृ
तां विरोधश्च। सहेति योगं विभज्य तत्पुरुषसंज्ञातः प्रागेव तिङ्समासं कृतवतो भाष्यकृतोपि प्रतिकूलमिदमिति दोषत्रयम्। द्वितीये तु समा पुमः
सान्तोदात्तत्वेन वितन्वत इत्यस्य सिद्धावपि। अन्वविन्दत्। पर्यभूषत इत्यादौ उत्तरपदाद्युदात्तत्वं न सिध्येत। कृद्ग्रहणं प्रत्याचक्षाणेन तत्पुरुषाधिका ६

रितिङ् समासं विदधता कात्यायनेन विरोधश्चेति द्वौ दोषौ। किंच कैयटहरदत्तादयोप्यत्र उत्तरपदप्रकृतिस्वरस्य वार्त्तामप्यकृत्वा समासान्तोदात्तत्व
मात्रं भवति न वेति संदिग्धमेवमवजग्मुः। तथा च सहसुपेत्यत्र कैयटः। अनुव्यचलदित्यत्र समासमुक्त्वा शाकलप्रतिषेधं तत्फलमभिधाय समा
सान्तोदात्तत्वं तु न भवति तिङ्ङतिङ इति निघातेन बाधितत्वादिति केचिदाहुरित्युक्त्वा। एवं सति अनुप्राविशदित्युदाहरणेऽप्युक्तं निष्फलं
स्यात्। तस्मात् सतिशिष्टत्वात् समासान्तोदात्तत्वेन भाव्यमित्यपरे इत्युक्त्वा तत्र तिङ एकत्वस्योक्तत्वात् प्रातिपदिकत्वेपि सुबनुत्पत्तिरित्युक्त्वा अन्ये
त्विति पक्षमप्यवचनग्रहणादुक्तेप्येकत्वे सोरुत्पत्तिं हल्ङ्यादिलोपं चाविधाय तदुपष्टंभार्थम्। अत एवैकपद्यादामनुप्राविश देवदत्तेत्यामए
[illegible]र मामन्त्रितमिति निघातप्रतिषेधः सञ्ज्ञायाः प्रयोजनमस्त्येवेति तिङन्तनिघातवादिन आहुरित्युपसञ्जहार। हरदत्तोप्येवं कैयटोक्ति
मात्रमन्ववादीत्। एवं हि वदता किं परत्वान्निघातः उत सतिशिष्टत्वात् समासान्तोदात्त इति नावधारितम्। तदापि अनुव्यचलदित्यादौ यथा तथा
स्तु। यो जात इत्यादौ नुयद्वृत्तान्नित्यमिति निघाते निषिद्धे समासान्तोदात्तत्वं केन वार्यताम्। किंच द्वितीयपक्षे अस्याया हि शम्बतो वयम् इत्यत्र आ
ङ उदात्तः कथं निर्वाह्यः। अपि च युधेयदिण्णान आयुधान्यघायमाणो निरिणातीत्यत्र वनि शब्दो निहन्यते वितन्वत इत्यत्र वि शब्दश्चेति तात्व
न्निर्विवादम्। समासान्तोदात्तत्वं तु रिणातीत्यत्र नातन्वत इत्यत्र तु भवतीति वैषम्यं दुरुपपादमिति महत्सङ्कटम्। अत्रेदं तत्त्वम्। वार्त्तिकमतेता
वदायमेव पक्षः कृद्ग्रहणस्य प्रत्याख्यानात्। तत्पुरुषत्वाभ्युपगमाच्च। वितन्वत इत्यत्र तु त्रिचक्रादित्वादन्तोदात्तत्वं कल्प्यम्। अस्याया हीत्यत्र
तु तिङ्ङतिङ इति निघाते आङा समासः उत्तरपदस्योदात्तशून्यतया गतिस्वराभावादव्ययपूर्वपदप्रकृतिस्वरेण आङ् उदात्तः। ततो अभि शब्दे व
समासे कृते कृद्ग्रहणप्रत्याख्यानात् उत्तरपदप्रकृतिस्वरेणेष्टसिद्धिः निरिणातीत्यत्र तु यच्छब्दयोगे निघातनिषेधात् पूर्ववदेवेष्टं सिद्धम्। भाष्यम

ष्टिहत्ययेति। मुष्ट्या हननं मुष्टिहत्या। हनस्त चेति सबन्त उपपदे क्यप्। कृदुत्तरपदस्वरोऽत्र प्राप्तः। क्विक इति। बहुव्रीहित्वात्पूर्वपदप्रकृतिस्वरः प्रा-
प्तः। विष्वायुरिति। विष्वमायुर्यस्मिन्ननेनेति बहुव्रीहिः विष्वशब्दः कन्प्रत्ययान्तः। पूर्वपदप्रकृतिस्वरे आद्युदात्तत्वमिह प्राप्तम्॥ इति समासस्व-
रप्रकरणम्॥ तिङ्ङ्. तिङः। अतिङः किम्। पचति भवति। पाको भवतीत्यर्थः। वस्तुतस्तु अतिङ्ग्रहणं व्यर्थम्। समासवाक्याधिकारस्य वार्त्तिकोक्तस्य
वश्यकत्वात्। निपातैः। यदि त्वादीनां यत्रेत्यन्तानां द्वन्द्वे तृतीयायाः सौत्रो लुक्। न तु युक्तशब्देन समासः। निपातैरिति विशेषणस्य अन्यथा पत्ते।
यद्यपद्यार्थे चदहेतौ च विचारे यदि वेञ्चणः। हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः। कुचित्प्रश्ने नेन्निषेधे प्रशंसायां कु विल्मतः। यत्रेलाधारे तत्र
मूले के[illegible]दाहृताः। अन्येप्यूह्याः यथा। हन्त करोति। कथं तर्हि हन्ताहं ——— पृथिवीमिमां निदधानीह वेह वा। अत्र दधानीति तिङन्तस्य निघात
निषेधः प्राप्नोति। सत्यं बाहुलकान्निघातः एतेन हन्तो नु किमासत्से इति व्याख्यातम्। हन्तो इत्यखण्डनिपातो वा बोध्यः। तथैव पदकारैः पाठात्। नेच्वे
च्छब्दौ तनिपातसमाहारात्मकौ नेद्देवमायुजन्नत्र देवाः। अन्यश्चेन्नाभिगच्छति। अत्र नञ् चाभ्यां विच्छिद्य इच्छब्दस्य पदकाले पाठात्। चणिति। चेद-
र्थे चणिति। समुच्चयादौ त्वणित्। इन्द्रश्च मृळयाति नः। इन्द्रश्चेदस्मात्सुखयेदित्यर्थः। त्वञ्च सोम नो वशो जीवातुं न मरामहे। हे सोम त्वञ्चेन्नो जीवातुं
विष्वः वश्यः कामयेथा इत्यर्थः। निपातैः किम्। यत्कूजति शकटम्। एतीति यत्। इणः शतरि इणो यणिति यण्। ननु प्रातिपदोक्तत्वात् यदादिभिः साह-
चर्याच्च निपात एव ग्रहीष्यते सत्यम्। ज्ञापनार्थमिदम्। अत्र प्रकरणे उक्तरीत्या सङ्कोचो नेति तेन यावद्यथाभ्यामिति सूत्रे यत्तदेतेभ्य इति वलन्तो
पि यावच्छब्दो गृह्यते। तथा च प्रयुज्यते। तावद्दुषो राधो अस्मभ्यं रास्व यावत्स्तोतृभ्यो अरदो गृणाना। अत्रारद इति लट् स्वरेणाद्युदात्तम्। यत्तु ग्रहणङ्किम्।
अन्यान्विते मा भूत्। यत्र क्व च ते मनो दक्षं दधस उत्तरम्। इह यत्रेत्यस्योत्तरमित्यनेन सा सा सात्त्वं बन्धः दप्रधारणे अनुदात्तेत्। भोस्य स इति। अदुपदेशात्

स्व॰ रत्वात्तेइत्यस्यानिघातः।मद्योदात्तंपदम्।किंवृत्तञ्च।इहजात्वपूर्वमितिपूर्वसूत्रादपूर्वग्रहणमनुवर्त्ततेतद्व्याचष्टेअविद्यमानेति।तेनेहन।देवदत्तः स्वरः
१ किंचिदस्यविति।नान्येरिति।यदिहन्तोस्यादिभिरित्यर्थः।उत्तरवाक्ययोरिति।दिवोवापार्थिवादधि।इन्द्रंमहोवारजसः।इत्येतयोरित्यर्थः।इन्द्रंप्रतिसातिम्ध
नशानंअधीमहे।आधिक्येनयावामहे।वैदिकनिघण्टौयाच्ञाकर्मसुईमहेइतिपाठात्।कस्माल्लोकादित्याकाङ्क्षायामाह।इतोस्मात्पार्थिवात्वादिवो
वामहोमहतः।ओदाद्रजसोरञ्जकात्।अन्तरिक्षलोकादितिमन्त्रार्थः।ननुश्रुतस्यैवतिङन्तस्योत्तरत्रानुषङ्गः।तत्कथंप्राधान्यमितिचेत्।अनुषक्तस्या
पिओपाधिकभेदंपुरस्कृत्यप्राधान्यारोपणेननिघातनिषेधस्यछन्दसिबहुशोदृष्टत्वात्।एतदेवैवमन्यत्रनियममुष्टिहत्ययेतिमन्त्रेचवेदभाष्येस्पष्ट
त्वात्।इन्द्रवाजेषुनोवेति।अवेतितिङन्तस्येहनिघातः।निघातभावस्तुउदाहरणान्तरंवोद्यम्।यद्वृत्तान्नित्यम्।यद्वृत्तात्परमिति अव्यवधानांशस्तुनेहा
पेक्षते।येनसोजातएव पर्यभूषत् इत्यादौनिघातनिषेधःसिध्यति।अत्रप्रमाणन्तुपूजनात्पूजितमितिसूत्रेपूजितग्रहणम्।तथाहि।पूजनात्पू
जितमनुदात्तमितिसूत्रेणकाष्ठादयःदारुणाध्यापकः परमाध्यापक इत्यादौअनुदात्तताविधीयतेतत्रकाष्ठादिभ्यइतिवार्त्तिकम्।वृत्तिकृता
सूत्रावयवत्वेनपठितम्।कल्लहरगेग्रुमपूर्वंमसकादित्वात्समासइतिवृत्तिमतम्।असमासेएवक्रियाविशेषणीभूतानांदारुणमित्यादीनांमलोपो
निपात्यतइतिभाष्यवार्त्तिकयोःस्वरसः । —— कैयटादयोप्येवम्।उभयथापिपूजनादित्येवपूजितपरिग्रहेसिद्धेपूजितग्रहणम
नन्तरप्रतिपत्त्यर्थंसत्ज्ञापयति।इहप्रकरणेपञ्चमीनिर्देशेप्यानन्तर्यंनाश्रीयतइति॥इतितिङन्तस्वरनिरूपणप्रकरणंपञ्चमम्॥संहितायामिवि
ति।तयोर्य्वावचिसंहितायामितिसूत्रेसंहिताग्रहणस्याधिकारसमाप्तेरधिकृतत्वात्।स्वरितविधेस्तुतदन्तर्भूतत्वादितिभावः।नन्वसंहितायांकाल रामः
व्यवायादेवस्वरितोनभविष्यतितत्किमुक्तेनसंहिताधिकारेणेतिचेत्।मैवम्।संहिताधिकारबहिर्भूतानांकालव्यवायेपिप्रवृत्तिंज्ञापयितुन्तदार ११

स्मात्। तेनाम्नाविष्णू इत्यस्माविष्णू इत्यादाववग्रहेऽपि आनङादयः पदविभागे च स [illegible] स्यादयः। अग्निमीळ इत्यत्र पदविभागेऽपि निघातश्च सिध्य
ति। संहिताधिकारस्थं त्वनुपणादिकं स्वरितप्रचयादिकं न चेति विवेकः। नन्वेवं पुरः अहितमिति विग्रहे हि शब्दस्य स्वरितत्वं न स्यादुच्चैः पठ्यमानत्व
सिद्धेरिति चेन्नैवम्। तदीयप्रातिशाख्ये विशिष्य विधानात्। उक्तं हि यथा सन्धीयमानानामनेकीभवतां स्वरः। उपदिष्टस्तथा विद्यादक्षराणाम
विग्रह इति। नन्वेवं सुपत्नैभ्यो न वा इत्यादीनामवग्रहे उत्तरखण्डाद्यवर्णस्य प्रचयः स्यादिति चेन्न। पद्यादींस्तु द्युदात्तानामसंहितवदुत्तरा
निति विशेषवचनात्। स्वरितधातमम। भललाभवन्ती इत्यादीनां क्रमकाले इति शब्दोत्तरभागे प्रचयो न प्रवर्त्तते। परिग्रहे त्वनार्षान्तात् इतेनैवेका
र्षिकृतात् परेषाम्। समाचारं व्यालिस्तौ चेत्त्वरौ पराविति वचनात्। इत्थमन्यत्रापि मुनित्रयवचांसि तत्तत्प्रातिशाख्यानि तद्व्याख्यातृगिरो नि
रुक्तादिग्रन्थांश्च पर्यालोच्य तत्त्वनिर्णयम्। तदाह। यथा शास्त्रमु [illegible] ह्नेयमिति। अखण्डमपि यत्सर्वं द्वैतं तद्वित परं परम्। अशेषशास्त्रसंवेद्यमस्तु
तन्नदुपास्महे ॥१॥ सिद्धान्तकौमुदीव्याख्या सेयं प्रौढमनोरमा। भट्टोजीदीक्षितकृतिर्भूयाद्विश्वेशतुष्टये ॥२॥ इति पदवाक्यप्रमाणज्ञश्रीलक्ष्मी
धरसूरेः सूनुना भट्टोजिदीक्षितेन रचितायां प्रौढमनोरमायामुत्तरार्द्धं समाप्तम् ॥

॥ संवत् १९२१ ॥

॥ विद्योदयो निराकुर्यादविद्यातिमिरं सदा ॥
॥ सहस्रांशुरिवाशेषं मुद्राकिरणराजिभिः ॥

॥ शुभं भूयात् ॥

